## तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनात्मत्वोपासनस्य नित्यशः कार्यत्वसमर्थनादस्ति शास्त्रसङ्गतिः । स्वस्वामिभावसम्बन्धस्य नित्यमुपास्यत्वाभावे वेदानां तत्र महातात्पर्यमयुक्तं स्यादिति समर्थनीयमेतत् । प्रकृतात्मत्वं विषयः । नित्यश उपास्यं न वेति सन्देहः । उपासनस्य नित्यशः कर्तव्यत्वं गुणान्तरसाम्यप्रतीतिश्च सन्देहबीजम् । तत्रात्मत्वं न सर्वथा सदोपास्यमिति पूर्वः पक्षः । हरेर्जगत्स्वामित्वस्य शश्वदतिप्रसिद्धत्वात् । शश्वदतिप्रसिद्धस्य नित्यमुपासनं व्यर्थमेव किं त्वप्रसिद्धगुणोपासनस्य ज्यायस्त्वेन तदेव नित्यशः कर्तव्यम् । अतः स्वामित्वस्य नित्यमनुपास्यत्वाद्वेदानां तत्र महातात्पर्यं व्यर्थमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ।। **आत्मेति** ।। विष्णुरात्मेत्युपासनं सदा सर्वथा कार्यमेव । तस्यैव मोक्षसाधनत्वात् । अन्यथा तदसिद्धेः । न केवलं तथोपासनमावश्यकं किं तु तथोपदेशश्च कर्तव्यः । तदभावेऽपि मोक्षासिद्धेः । न केवलमात्मत्वोपासनोपदेशान्वयव्यतिरेकित्वात्तस्य सर्वदा सर्वथोपास्यत्वं किं तर्हि 'नान्यं विचिन्तये' इति तस्य सर्वथोपास्यत्वोपदेश्यत्वयोः श्रुतिसद्भावाच्चेति भावः । आत्मा हि ममैप भवतीत्याद्यविद्यमानोपासनं नैतदिति वक्ति । उपगच्छन्त्युपासते । ग्राहयन्त्युपदिशन्ति । न च शश्वदतिप्रसिद्धत्वात्सदा सर्वथोपास्यत्वाभावः । उपासनस्य फलार्थस्य प्रसिद्ध्यप्रसिद्धिभ्यां कर्तव्यत्वाद्यसिद्धेः । आत्मत्वोपासनस्य मुक्तिहेतुत्वात्तत्सर्वथा कर्तव्यमित्येतत्कुत इत्यत आह ।। **आत्मेति** ।। विष्णुरात्मतया जीवत्वेनोपास्य इत्यहङ्ग्रहं केचनात्र वर्णयन्ति तदयुक्तमिति भावेनाह ।। **आत्मेति** ।। आत्मत्वं विष्णुविशेषणमित्येवोपासनं कार्यं न तु तज्जीवत्वविधानेनेति भावः । अतो विष्णोः सर्वस्वामित्वस्य सर्वदा सर्वथोपास्यत्वाद्युक्तं तत्र वेदानां तात्पर्यमिति सिद्धम् ।।

## गुर्वर्थदीपिका

सर्वगुणसाधारण्येन श्रवणाद्यावृत्तिमुक्त्वा पुनरात्मत्वाख्यगुणस्य ततोऽप्यवश्यापेक्षितत्वज्ञापनायोत्तराधिकरणमिति भावेनाह **आत्मत्वोपासनस्येति** ।। उपासनस्य फलार्थस्येत्यत्र राजमन्दिरगमनादेः राजप्रसादाख्यफलार्थिभिस्सर्वदा करणदर्शनादिति भावः ।।

## भावबोधः

**आत्मत्वोपासनस्येति** ।। पूर्वमज्ञानादिनिवृत्त्यर्थं श्रवणाद्यावृत्तिः कर्तव्येत्युक्ते तथा सत्यात्मत्वस्य शश्वदतिप्रसिद्धत्वेन तद्विषयकाज्ञानाभावान्न तदुपासनं नित्यशः कर्तव्यमित्याक्षेपोत्थाना-

दनन्तरसङ्गतिरिति भावः । यद्वा पूर्वाधिकरणे सामान्यतः श्रवणाद्युपासनस्य नित्यशः कर्तव्यत्वं समर्थ्यात्र तद्विशेषस्यात्मत्वोपासनस्य नित्यशः कर्तव्यत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **नित्यश इति** ॥ अत्रात्मशब्दोदितस्वामित्वोपासनं किं नित्यशो न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं स्वामित्वस्य शश्वदतिप्रसिद्धिर्नित्यमुपास्यत्वप्रयोजिका न भवत्युत भवतीति । तदर्थमात्मत्वस्य नित्यश उपास्यत्वे प्रमाणं नास्त्युतास्तीति । शश्वदतिप्रसिद्धत्वादात्मशब्दोदितस्वामित्वं न नित्यश उपास्यमिति न्यायविवरणानुसारेण पूर्वपक्षमाह तथात्मत्वं न सर्वथेत्यादिना । 'स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा' इत्यनुव्याख्यानानुसारेण आत्मेत्युपासनमित्यादिभाष्यं व्याचष्टे– **विष्णुरात्मेत्युपासनमिति** ॥ अनेन सौत्रात्मशब्दस्यावृत्तिः । तत्रैकस्याविवक्षितावयवार्थस्य विष्णुवाचकत्वम् । एकस्य स्वामित्वार्थकत्वमित्युक्तं भवति । तस्यैव मोक्षसाधनत्वादित्यादिना तदभावेऽपीत्यन्तेन च मोक्षार्थिभिः सर्वथेत्येतदुक्ततात्पर्यकम् । अन्वयव्यतिरेकित्वादिति । मोक्षार्थिभिः सर्वथेत्यादिना तस्योक्तत्वादिति भावः ॥ **अविद्यमानोपासनं नैतदिति** ॥ 'हि' यस्मादेष विष्णुर्ममात्मा स्वामीति विष्णौ स्वामित्वस्य श्रुतावुपासने हेतुत्वेनोक्तेरिति भावः ।

सूत्रभाष्ययोः श्रुतिसमानार्थत्वायाह– 'उपगच्छन्त्यु'पासते । 'ग्राहयन्त्यु'पदिशन्तीति । अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्येति न्यायविवरणाभिप्रायमाह– **उपासनस्य फलार्थस्येत्यादिना** ॥

## भावदीपः

**आत्मत्वेति** ॥ स्वामित्वेत्यर्थः ॥ **नित्यशः कर्तव्यत्वेति** ॥ कर्तव्यत्वमात्रस्यानन्दादय इत्यत्रैव सिद्धत्वादिति भावः । चिन्ताफलमाह ॥ **स्वस्वामीति** ॥ **महातात्पर्यमिति** ॥ समन्वयसूत्राद्यभिमतं सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यमित्यादिश्रुत्याद्युक्तमिति भावः । पूर्वसङ्गतिं सूचयन्विषयमाह ॥ **प्रकृतेति** ॥ आत्मा वा अर इत्यादिश्रुतौ यदात्मज्ञानार्थं श्रवणादिकर्मावर्तनीयमित्युक्तम् । तदात्मत्वमत्र चिंत्यत इति सङ्गतिरिति भावः ॥ **उपासनस्येति** ॥ श्रवणादेः ॥ **गुणेति** ॥ ज्ञानादिगुणान्तरेत्यर्थः । उपासनं सर्वथा कार्यमेवेति भाष्यव्यावर्त्यं स्वामित्वं न नित्यश उपास्यमित्यन्यत्रोक्तप्रतिज्ञांशमाह ॥ **तत्रात्मत्वमिति** ॥ एवं सन्देहे सतीत्यर्थः । सर्वथा गुणान्तरप्रहाणेनापीत्यर्थः । नित्यश इत्यस्यार्थः **सदेति** ॥ नानाक्लेशयुक्ततादशायामपीत्यर्थः । अन्यत्रोक्तमेव हेतुमाह ॥ **हरेरिति** ॥ हेतोरप्रयोजकत्वं निराह ॥ **शश्वदिति** ॥ चित्ते

(भावदीपः)

स्थिरीकरणार्थं ह्युपासनम् । तच्च प्रसिद्धतया प्रागेव सिद्धमिति विपक्षे फलाभावो बाधकमिति भावः । एवं तर्हि उपासनैव न स्यादित्यत आह ॥ **किंत्विति** ॥ **ज्यायस्त्वेनेति** ॥ चित्ते स्थिरीकरणरूपफलवत्त्वादिति भावः ॥ **अत इति** ॥ अतिप्रसिद्धतया तदुपासनस्य व्यर्थत्वादित्यर्थः ॥ **व्यर्थमिति** ॥ आध्यानाय प्रयोजनाभावादित्युक्तदिशा महातात्पर्येण स्वामित्वप्रतिपादनस्योपासनार्थत्वादिति भावः । आत्मा विष्णुरिति ध्यानमिति स्मृत्यनुरोधेन भाष्यं व्याचष्टे ॥ **विष्णुरिति** ॥ आत्मा स्वामीत्यर्थः । नास्य हानेन कस्यचिन्मोक्ष इति स्मृतिशेषपर्यवसानलब्धं मोक्षार्थिभिरिति भाष्यसूचितं हेतुमाह ॥ **तस्यैवेति** ॥ नञ्द्वयार्थ एवेति । हेतोरसिद्धिं निराह ॥ **अन्यथेति** ॥ उपदेशश्च तादृश इति स्मृत्यनुरोधेनैव भाष्यखण्डं व्याचष्टे ॥ **न केवलमिति** ॥ चशब्दो भिन्नक्रम इति भावः । स्मृतिशेषोक्तमेव हेतुमाह ॥ **तदिति** ॥ नान्यमित्यादि भाष्यशेषं व्याचष्टे ॥ **न केवलमिति** ॥ अन्वयव्यतिरेकौ च सर्वेषां च मुमुक्षूणामिति स्मृतिसिद्धाविति भावः । श्रुतिशेषोक्तेरुपयोगमाह ॥ **आत्मा हीति** ॥ आदिपदेन आत्मा ह्येष भवतीति वाक्यग्रहः । सौत्रपदानुकारिभाष्यपदयोः प्राप्त्याद्यर्थकत्वभ्रमनिरासाय श्रुत्यनुसार्यर्थमाह ॥ **उपगच्छन्तीति** ॥ प्रागुक्तहेतुद्वयमनूद्य निराह ॥ **न चेति** ॥ अतिप्रसिद्धत्वात्तत एव वैयर्थ्याच्चेत्यपि ध्येयम् । फलार्थस्येति हेतुगर्भम् । अकर्तव्यत्वादीत्यादिपदेन व्यर्थत्वग्रहः । अहङ्ग्रहं प्रत्यगर्थस्यात्मत्वग्रहमित्यर्थः ॥ **न तु तज्जीवत्वविधानेनेति** ॥ आत्मशब्दश्च न स्वरूपपर इत्यनुभाष्ये प्रपञ्चितमिति भावः ॥ **अत इति** ॥ अन्वयव्यतिरेकाभ्यां तस्यैव मोक्षहेतुत्ववचनात् । श्रुतिबलाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

**आत्मत्वोपासनस्येति** ॥ उपलक्षणमेतत् । उपदेशस्येत्यपि ग्राह्यम् । एवमेव सन्देहे पूर्वपक्षे च द्रष्टव्यम् ।

**पूर्वपक्षस्तु** न नित्यश आत्मत्वस्य उपदेश उपासनं च कार्यम् । अतिप्रसिद्धत्वात् । किं तु अप्रसिद्धस्यैव कस्यचिद्गुणस्य । ततश्च न तत्र वेदस्य महातात्पर्यं युक्तमिति ।

**सिद्धान्तस्तु** विष्णुरात्मेत्युपदेश उपासनं च, नित्यशः कार्यं मोक्षसाधनाभिज्ञैस्तथानुष्ठीयमानत्वात् । तत्कुत इति चेत्, 'नान्यं विचिन्तय' इत्यादिश्रुतेः । 'आत्मेत्युपासनं कार्यम्' इति स्मृतेश्च । न च प्रसिद्धत्वादनुपास्यत्वं, उपासनस्य फलहेतुतायाः प्रामाणिकत्वेन प्रसिद्धेर-

(अभिनवचन्द्रिका)

प्रयोजकत्वात् । न हि राजप्रीतिसाधनमतिसिद्धत्वात् राजप्रीत्यर्थिभिः न वर्ण्यते । येनेह तथा स्यात् । अतो विष्णोः स्वामित्वस्य सदा सर्वथोपास्यत्वात् युक्तं तत्र वेदानां तात्पर्यमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**वेदानामिति ॥** वेदानां सर्वोत्कर्षे साधनं न स्यात् । उपासनार्थं खलु ऐतदात्म्यमिदं सर्वमित्यादावभ्यासेन सर्वस्वामित्वोक्तिरिति भावः **॥ प्रकृतेति ॥** असकृदुपदेशादित्यत्रोपदेश्यतया प्रकृतमैतदात्म्यमिदं सर्वमात्मेत्युक्तमात्मत्वमित्यर्थः । तथा चानन्तरसङ्गतिरिति भावः । यद्वा सामान्येन भगवद्गुणविषयकश्रवणादित्रयस्य नित्यशः कर्तव्यत्वोक्तत्वाद्गुणमध्ये प्रसक्तात्मत्व-मित्यर्थः। तथा च प्रकृतात्मतोपासनं नित्यं न कर्तव्यमित्याक्षेपादनन्तरसङ्गतिरिति भावः ॥ **नित्यशः इति ॥** आत्मत्वं नित्यशो नोपास्यमुतोपास्यमिति चिन्ता । तदर्थमात्मत्वापरपर्याय-स्वामित्वस्य प्रसिद्धत्वात्तदुपासनं व्यर्थमुत सार्थकमिति **॥ उपासनस्येति ॥** नित्यशः श्रवणं चैवेत्युक्तप्रकारेणोपासनस्य नित्यशः कर्तव्यत्वमित्यर्थः **॥ गुणान्तरेति ॥** आनन्दबलादिगुणानां नानाक्लेशेन चित्तविक्षेपेऽपि स्मरणनियमाभावादात्मत्वस्यापि तत्साम्यमिति प्रतीतिरित्यर्थः **॥ न सर्वथा सर्वदेति ॥** सर्वदा सर्वप्रकारेण चित्तक्षोभादिप्राप्तावपि नियमेनोपास्यं न भवतीत्यर्थः । मोक्षार्थिभिः इत्याद्युत्तरभाष्ये नित्यशः कर्तव्यत्वे महाफलस्यैव प्रयोजकत्वात् प्रसिद्धेश्चाप्रयोजकत्व-वर्णनात् सूचितं शश्वदतिप्रसिद्धिरित्युक्तन्यायं व्यनक्ति **॥ हरेरिति ॥** आत्मशब्द आवर्तते । आद्यस्य रूढ्या विष्णुपरत्वम् । द्वितीयस्य आदत्ते स्वीयतया भृत्यमिति स्वामित्वार्थकत्वम् । चशब्दोऽवधारणे । उपासनं उपदेशश्च कार्य इत्यध्याहृतेन सम्बध्यते । सर्वदा सर्वथेति गुणान्तरोपासनावश्यकत्वद्योतनार्थश्च । तस्यैव मोक्षसाधनत्वादिहेतुसमुच्चायकोऽप्यर्थश्चेति भावेन प्रवृत्तमात्मेत्युपदेश इत्यादिभाष्यमाकाङ्क्षाक्रमेण विभज्य व्याचष्टे **॥ विष्णुरित्यादिना ॥** तथोपदेश इति व्याख्यानस्य शास्त्रावमर्शनरूपत्वे श्रवणाद्यन्तर्गतत्वात् । शिष्यस्य श्रवणार्थत्वाच्चेति भावः ।

उपगच्छन्ति **उपासते इति ॥** गुरूपदेशेन जानन्ति चेति द्रष्टव्यम् । अन्यथोपासत इति प्रसिद्धपदपरित्यागायोगाच्छतावात्मानमेवाहं विजानीयामात्मानमुपास इत्युभयाभिधानाच्च । उक्तं च सुधायां उपगच्छन्तीत्येतद् ज्ञानार्थमुपासनार्थं चेति । तत्र ज्ञानार्थत्वस्य स्पष्टमित्येक एवार्थो व्याख्यातः । अत एव प्रज्ञातव्ये उपासश्चेत्युक्तमिति । मोक्षार्थिभिरिति भाष्योक्त्यैव सूचितं

(वाक्यार्थमुक्तावली)

प्रविभक्ततेत्युक्तसिद्धान्तन्यायं व्यञ्जयन् पूर्वपक्षन्यायोऽप्यप्रयोजकतयाऽपोढव्य इत्याह ॥ **न च शश्वदिति** ॥ **फलार्थस्येति** ॥ मुक्तावपेक्षितानन्दबलादिफलकगुणान्तरोपासनफलाद्विविक्तं सर्वापेक्षितं बन्धनिवृत्तिलक्षणं यत् प्रधानफलं तदर्थस्येत्यर्थः ॥ **विष्णुरात्मतयेति** ॥ विष्णुः जीवेन स्वव्यतिरिक्ततयोपास्यः दुःख्यदुःखिनोरैक्येनोपासनायोगादिति प्राप्ते विष्णुरात्मेति जीव इत्युपास्यः 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादिमहावाक्यैः तत्वत आत्मत्वेनैव ब्रह्मोपगच्छन्ति गृह्णन्ति तथा तत्त्वमसीत्यादिमहावाक्यैः स्वशिष्यान् ग्राहयन्तीत्यपीत्यहङ्गृहमैक्योपासनं कर्तव्यतयाऽत्रोच्यते इति केचिद्वर्णयन्तीत्यर्थः । आत्मत्वमिति स्वामित्वमित्यर्थः ।

## वाक्यार्थविवरणम्

**उपासनस्येति** ॥ 'आत्मेत्युपासनं कार्यं सर्वदैव मुमुक्षुभिः ।' **आत्मेत्येवोपासीतेति** ॥ आत्मत्वोपासनस्य कर्तव्यताविधानादिति भावः ॥ **गुणान्तरेति** ॥ सम्भृत्यादिगुणानामनुपास्यत्वादस्यापि भगवद्गुणत्वेन साम्यादनुपास्यत्वमित्यर्थः ॥ **तज्जीवत्वविधानेनेति** ॥ तस्य विष्णोः जीवत्वविधानेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

॥ **स्वस्वामिभावसम्बन्धस्येति** ॥ आत्मशब्दोक्तस्येत्यर्थः ॥ **अयुक्तमिति** ॥ विष्णोः सर्वस्वामित्वस्योपास्यत्व एव एतदर्थं सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यमित्यादिना तत्र तात्पर्योक्तिः सार्थिका स्यादन्यथा व्यर्थेति भावः ॥

ॐ आत्मेति तूपगच्छन्ति ग्राहयंति च ॐ ॥ आत्मशब्दस्यावृत्तिः आद्यो रूढो विष्णुपरः अंत्य आदत्ते भृत्यानिति योगेन स्वामिवाचोतुरेव तथा चात्मा विष्णुरात्मा मम स्वामीत्येवोपगच्छन्त्युपासते ग्राहयन्ति शिष्येभ्य उपदिशन्ति च सज्जना इत्यर्थः ॥ **आत्मा हीति** ॥ यस्मादेष ममात्मा स्वामी भवत्यतो नाविद्यमानोपासनमेतदित्यर्थः ॥ **अहङ्गहमिति** ॥ अहमिति गृह्यमाणत्वेनोपासनमित्यर्थः ॥ **अयुक्तं स्यादिति** ॥ प्रतीकभूतनामादौ तस्य स्वामित्वासम्भवेन सर्वस्वामित्वायोगादिति भावः ॥ **नामब्रह्मेत्युपास्त इति** ॥ यो नाम ब्रह्मेत्युपास्ते तस्याधिकारिणो नाम्नो यावद्गतं गमनमस्ति तत्र लोके यथा योग्यतानातिक्रमेण कामतः संचारो भवतीत्यर्थः ॥

॥ इति आत्मोपगमाधिकरणम् ॥ २ ॥

## ३. नप्रतीकाधिकरणम्

### ॐ न प्रतीके न हि सः ॐ ॥ ४ ॥

'नाम ब्रह्मेत्युपासीत' इत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या । किन्तु तत्स्थत्वेनैवोपासनं कार्यम् । ब्रह्मतर्के च—

'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः ।
ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति ॥
नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।
सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता' इति ॥ ४ ॥

॥ इति नप्रतीकाधिकरणम् ॥ ३ ॥

### तत्त्वप्रदीपिका

न प्रतीके नहि सः ॥ शब्दभ्रान्त्या शब्दतो भ्रान्त्या । न प्रतीके विष्णोः प्रतिमात्मके नामादौ तद्भावदृष्टिः कार्या प्रतीकं ब्रह्मेति । न हि स भगवान् प्रतीकं भवति । अविद्यमानोपासने च महान् दोषः । उभयोः प्रतीकब्रह्मशब्दयोः प्रथमात्वतः ऐक्यदृष्टिर्विहितेति भ्रान्तिर्भवति । प्रथमात्वत इति सन्निकृष्टोपलक्षणम् । प्रथमात्वाद्द्वितीयात्वाद्वेत्यर्थः । शाखान्तरे प्रथमात्वाद्वा तथोक्तम् । ''षट्सु द्वितीया'' इति च सूत्रम् ॥

'प्राणमुद्गीथमित्याद्या द्वितीया सप्तमी मतेति' प्रध्याने ॥

'नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः ।
उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशय' इति सत्तत्त्वे ॥

नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः ।
तृतीयापञ्चमीषष्ठीचतुर्थ्यर्थाश्च सर्वशः ॥
शब्दैस्तैर्ब्रह्मशब्दस्तु सम्बध्येत यदा तदा ।
ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा ॥
यथा च यूप आदित्य एवमेष प्रकीर्तितः ।
सप्तसु प्रथमा यस्माद्भूयोभूयस्त्वतस्तथा ॥

(तत्त्वप्रदीपिका)

षट्सु द्वितीया यस्माच्च कारणत्वात्परस्य च ।
न ह्यन्यदन्यदित्येव ध्यानं स्यात्पुरुषार्थदम् ॥
अनर्थश्च भवेत्तस्माद्भृत्यो राजेति बोधवत्'' इति सामसंहितायाम् ॥

'विष्णोर्नामतया विद्यास्सर्वा नामेत्यतः स्मृताः ।
नामाभिमानिनी चोपा तस्यां ब्रह्म परं स्मरेत्' इति तत्त्वविवेके ॥

न चोपासनविधावेव तात्पर्यं श्रुतेः न वस्तुतथाभाव इति वाच्यम् । अविद्यमानोपासनस्यानर्थहेतुत्वात् ।

'अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित् ।
नोपासीत परोऽनर्थः स्यात्तथोपासनाकृत' इत्युपासनालक्षणे ॥

'नाविद्यमानं ब्रुवते वेदा ध्यातुर्न वैदिकाः ।
अविद्यमानं ध्यायन्तो यान्ति सर्वेऽधरं तमः ॥
तस्मात्सत्यार्थतां ब्रूयाद्वेदानामपि सर्वशः ।
य एवं वेद स ज्ञानी ज्ञानवान्नान्यथा भवेत्' इति वेदार्थविवेके ॥

'प्रतिमाद्यं हरित्वेन पृथिव्याद्यमथापि वा ।
इन्द्रियप्राणिजीवाद्यमथवा य उपासते ॥
मिथ्योपास्तिमतां तेषां निष्कृतिर्न कदाचन ।
अतिदुःखे पतन्त्यद्धा तमस्यग्नौ पतङ्गवत्' इत्युपासनानिर्णये ॥

प्रकाशितश्चायमर्थः प्रभूततरप्रमाणप्रद्योतप्रसरमुखरमुखेन्दुना सदानन्दनिष्यन्दिना भगवतैवानुव्याख्याने न हि स इति सूत्रावयवमनुव्याचक्षाणेन । यस्य खलु हन्त परमदयानिधेः परमपुरुषगुणगणमणिनिकरनिधानभूतयोर्भाष्यानुभाष्यामृतसमुद्रयोः कलिमलकर्दममपवर्जयितुं सज्जनमामज्जयतः समीचीनवचनसुस्वादुसुधारसास्वादप्रमोदनिर्भरहृदया विशदमतयः करतलविलसितामलकवदलमखिलपुरुषार्थसार्थकं सद्यः साधु समर्थयन्ति ।

## तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनस्य विष्णुप्रतीकैक्योपासनवर्जनस्याऽऽवश्यकत्वसाधनादस्ति शास्त्रसङ्गतिः । तथोपासने यदुक्तं सर्वस्वामित्वेनोपासनं कार्यमिति तदयुक्तं स्यादतः साधनीयमेतत् ।

(तत्त्वप्रकाशिका)

यन्नामवागादिकं भगवत्प्रतिमारूपं प्रकृतं तदत्र विषयः । ब्रह्मतयोपास्यं न वेति सन्देहः । श्रुतिरन्यत्वं च सन्देहबीजम् । ब्रह्मतयोपास्यमिति पूर्वः पक्षः । 'नाम ब्रह्मेत्युपासीत' इत्यादिश्रुतेः । न च ब्रह्मप्रतीकयोर्भिन्नत्वादभेदेनोपासनायोगः । यथा खलु पूर्वत्र प्रसिद्ध्यादेरप्रयोजकत्वमुक्त्वा फलमात्रस्योपासनाप्रयोजकत्वेनात्मत्वोपासनं समर्थितं तथात्रापि प्रतीके ब्रह्मत्वोपासनसम्भवात् । फलस्योपासनाप्रयोजकत्वेन भेदादेरप्रयोजकत्वात् । श्रूयते खलु प्रतीके ब्रह्मत्वोपासनस्य फलं 'नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति' इत्यादि । अतः प्रतीके ब्रह्मत्वोपासनस्य कर्तव्यत्वादुक्तमयुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ न प्रतीक इति ॥** नाम ब्रह्मेत्यादिना सामानाधिकरण्येन जातयाऽत्रैक्योपासनं विधीयत इति शब्दभ्रान्त्या यत्परेणोक्तं प्रतीके ब्रह्मदृष्टिः कार्येति न तद्युक्तम् । यतः स विष्णुः प्रतीकं न भवति । न हि भिन्नयोरभेदेनोपासनं युक्तम् । न च वाच्यं फलस्यैव प्रयोजकत्वाद्युक्तमुपासनमिति । अन्यथोपासनस्य निष्फलत्वात् प्रत्युतानर्थफलत्वाच्चेति भावः । ननु यदि नाभेदेनोपासनं युक्तं कथं तर्हि कार्यम् । न तु न कार्यमेव । श्रुत्यप्रामाण्यप्रसङ्गादित्याशङ्क्य परिहरति **॥ किं त्विति ॥** कार्यमेव श्रुत्युक्तमुपासनं तच्च ब्रह्मणः प्रतीकस्थितत्वेनैव । न च नैतच्छ्रुतिर्वक्तीति वाच्यम् । अपवादेन प्रथमादिविभक्तेरेव सप्तम्यर्थत्वोपपत्तेः । 'सप्तसु प्रथमा' 'षट्सु द्वितीया' इत्यादेरेवेति भावः । उक्तार्थे स्मृतिं चाह **॥ ब्रह्मतर्के चेति ॥** उभयोर्नामादिब्रह्मपदयोरैक्यदृष्टिरत्र कर्तव्यतयोच्यत इति भ्रान्तिः । कस्मादियं भ्रान्तिरिति तत्राह **॥ नामादीति ॥** प्रथमायास्तर्हि का गतिरित्यत आह **॥ सर्वेति ॥** न च वाच्यं क्षत्तरि राजदृष्ट्या फलदर्शनादत्राप्येवं स्यादिति क्षत्तैव राजेत्यस्योपचारत्वात् । तथा ज्ञानेऽनर्थदर्शनाच्चेति । अतः प्रतीके ब्रह्मत्वोपासनस्यायोगादुक्तं युक्तमिति सिद्धम् ॥

## गुर्वर्थदीपिका

मरुमरीचिकायां जलत्वोपासनेन तृट्परिहाराख्यफलादर्शनात् । प्रत्युत तावत्पर्यन्तं धावने सति कण्ठशोषणाख्यविपरीतफलदर्शनाच्चेति भावेनाह **॥ अन्यथोपासनस्येत्यादि ॥** ''सप्तसु प्रथमा'' इत्यादिवैदिकानुशासनात् सप्तम्यर्थे सम्भवति सति बलादविद्यमानोपासनार्थकथने परस्याकौशलप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । त्वमिन्द्रस्त्वं चन्द्र इति राजप्रशंसायामपि गौण्या वृत्त्या त्वमिन्द्रवदैश्वर्यवान् त्वं चन्द्रवदाह्लादकर इत्येवार्थः प्राज्ञैरप्यनुसन्धीयते न तु साक्षादिन्द्रत्वं साक्षाच्चन्द्रत्वम् । अहल्याजारत्वस्य ताराजारत्वस्य चावद्यस्याप्युद्घाटनेन कोपजनकत्वात् । यद्यपि 'नाम

(गुर्वर्थदीपिका)

ब्रह्मोपास्व' 'वाचं ब्रह्मोपास्व' इत्यारभ्य प्राणपर्यन्तवाक्येषु वादानुवादयोरैकविध्यनियमात् सर्वत्र द्वितीयैवास्ति न प्रथमा तथापि 'मनो हि ब्रह्म मन उपास्वेति' मनआख्यप्रतीकविषयवाक्ये मनो हि ब्रह्मेति मनोब्रह्मपदयोरुभयोरपि प्रथमान्तत्वदर्शनात् तत्प्रायपाठबलात् नाम हि ब्रह्म वाग्घि ब्रह्मेत्यादिवाक्यानां सर्वत्रोहे क्रियमाणे नामादिपदानां ब्रह्मपदस्य च सर्वत्र प्रथमान्तत्वमस्तीति भावेनोक्तं 'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वत' इति । एवमेव शाखान्तरे पाठोऽप्यस्तीति सम्प्रदायविदो विदुः ॥

## भावबोधः

**विष्णुप्रतीकैक्योपासनवर्जनस्येति** ॥ पूर्वाधिकरणे यत्सर्वस्वामित्वमुपास्यमित्युक्तं तदयुक्तम् । 'नाम ब्रह्मेत्युपासीत' इति वाक्यबलाद्ब्रह्मप्रतीकैक्योपासनस्य विहितत्वेन सर्वस्वामित्वस्यैवा-सम्भवादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । यद्वा न्यायविवरणोक्तरीत्या फलविशेषवत्वेनात्मत्वोपासनस्येव ब्रह्मप्रतीकैक्योपासनस्यापि फलविशेषवत्वादेव कर्तव्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । यदुक्तं सर्वस्वामित्वे-नोपासनमिति– 'आनन्दादयः प्रधानस्य' इत्यादावुपास्यत्वेनोक्तं स्वामित्वं सङ्कोचे कारणाभावात् सर्वस्वामित्वमेव तदेव च 'आत्मेति' इत्यत्र विवक्षितमिति भावः । अत एव टीकायां वेदानां तत्र महातात्पर्यमयुक्तं स्यादित्युक्तम् । न हि कतिपयस्वामित्वे महातात्पर्यम् किं तु सर्वस्वामित्व एवेति बोध्यम् । तदयुक्तं स्यादिति । प्रतीक एव तस्य स्वामित्वासम्भवेन सर्वस्वामित्वायोगादिति भावः ॥ ब्रह्मतयेत्यादि ॥ अत्र नामवागादिकं ब्रह्मतयोपास्यं भवत्युत न भवतीति चिन्ता । तदर्थं तदैक्योपासनं किं मोक्षफलकमुतानर्थफलकमिति । तदर्थं नामादिप्रतीकस्य ब्रह्मैक्यमस्त्युत नास्तीति । तदर्थम् 'नाम ब्रह्म' इति श्रुतौ सामानाधिकरण्यं किं निरवकाशमुत सावकाशमिति । 'नाम ब्रह्म' इत्युपासीतेत्यादिना शब्दभ्रान्त्येति भाष्यानुसारेणाह– **नाम ब्रह्मेतीति** ॥ कुतो न योग इत्यतस्तर्हि विशेषफलत्वादेव प्रतीकमीश्वर इत्युपास्यमिति न्यायविवरणोक्तमुपपादयति– **यथा खल्वित्यादिना** ॥ इत्यादिना 'शब्दभ्रान्त्येति' भाष्ये शब्दभ्रान्त्येति समासकरणादेवेत्या-देवेत्यादिना इत्येतन्न शब्दविशेषणमित्यभिप्रेत्य तद्यथावद्व्याचष्टे– **अत्रैक्योपासनं विधीयत इत्यादिना ॥ प्रतीके ब्रह्मदृष्टिः कार्येति** ॥ अनेन' सूत्रे ''प्रतीक'' इति विषयसप्तमी, पूर्वसूत्रात्

(भावबोधः)
'आत्मा इति' इत्यस्यानुवृत्तिः 'दृष्टिः' इत्युत्तरसूत्रस्थस्यापि सम्बन्ध इत्युक्तं भवति । 'न च विष्णुः प्रतीकं यत्' इत्यनुव्याख्यानानुसारेण सूत्रगतो हिशब्दो हेत्वर्थ इत्यभिप्रेत्य 'न हि सः' इति सूत्रांशं व्याचष्टे– **यतः स विष्णुरिति ।**

यत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात् । अन्यस्येश्वरत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेरिति न्यायविवरणाभिप्रायमाह– **अन्यथोपासनस्येत्यादिना ॥** न्यायविवरणे 'सन्धिग्रहणे' इत्यनुव्याख्यानगतसन्धिपदमुपादायोपपत्तिरिति व्याख्यानमिति ज्ञातव्यम् । **प्रतीकसंस्थितत्वेनैवेति ॥** अनेन सूत्रे प्रतीक इत्यस्यावृत्तिः । अधिकरणत्वं सप्तम्यर्थः । पूर्वसूत्रात् ''आत्मा'' इत्यस्यात्रापि सम्बन्ध इत्यभिप्रेत्य किं तु तत्स्थत्वेनैवेति भाष्यं प्रवृत्तमित्युक्तं भवति ॥

ननु न वयं ब्रह्मणि प्रतीकत्वोपासनं कार्यमिति ब्रूमः, येन ब्रह्म कुपितमनर्थं प्रयच्छेत् । किं तु प्रतीके ब्रह्मत्वोपासनं ततः पुरुषार्थप्राप्तिदर्शनादित्याशङ्क्य निषेधति– **न च वाच्यमिति ॥** कुतो न वाच्यमिति चेत्, क्षत्तरि राजदृष्टेरेवाभावात् । ननु दृष्टेरभावे तथा व्यवहारः कथमित्यत आह– **क्षत्तैव राजेत्यस्येति ॥** ननु कुतो दृष्टिर्नास्तीत्यतः–

'पुरतो नरदेवस्य चण्डालो यदि पूज्यते ।
राजवत् किं न कोपः स्यात् राज्ञो लोकेऽभिपश्यति ॥'

इत्यनुव्याख्यानं मनसि निधायाह– **तथा ज्ञात इति ॥**

## भावदीपः

**विष्णुप्रतीकेति ॥** विष्णुतत्प्रतिमयोरैक्योपासनस्य मिथ्योपासनत्वेन अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्या मित्युक्त्या तद्वर्जनस्यैव ज्ञानसाधनत्वमिति भावः । अलौकिकज्ञानानन्दादिगुणोद्रिक्ततया उपासनोक्त्यैव पूर्वत्रैक्योपासनवर्जनं सिद्धमित्युपेत्याह **॥ आवश्यकत्वेति ॥** समर्थनफलमाह **॥ तथेति ॥ तदयुक्तमिति ॥** एतेन पूर्वाक्षेपेणात्र पूर्वपक्षोत्थानात्पूर्वसङ्गतिरपि सूचिता । हरेः प्रकृतत्वात् गौणं तत्प्रतिमाख्यमपि हरे रूपं प्रकृतमेवेति भावेनाह **॥ यन्नामवागादिकमिति ॥** यद्वा आत्मशब्दस्य शरीरप्रतिसम्बन्धिनि जीवात्मनि आत्मपदप्रयोगवत् पूर्वत्र चिदचित्प्रतिसम्बन्धितया तच्छरीरकत्वेन तदन्तःप्रविष्टस्यैव विष्णोः सर्वस्वामितयात्मपदेन ग्रहणा-

(भावदीपः)

तत्प्रतिमाख्यं रूपमपि प्रकृतमेवेत्युपेत्याह ॥ **यन्नामवागादिकमिति** ॥ यद्वा इयदामननादित्यत्र प्रकृतमित्यर्थः । छान्दोग्ये सप्तमे नाम ब्रह्मेत्युपास्ते वाचं ब्रह्मेत्युपास्त इत्यादिना नामवाङ्मनस्सङ्कल्पचित्तध्यानविज्ञानबलान्नाप्तेज आकाशस्मराशाप्राणशब्दितानि । उषास्वाहापर्जन्यमित्राग्निवरुणविधुप्राणप्रवहानिरुद्धेन्द्रोमारुद्र वाणीमारुताख्यानि प्रतिमारूपाणि विषय इत्यर्थः ॥ **श्रुतिरिति** ॥ नाम ब्रह्मेति सामानाधिकरण्यश्रुतिः पृथगुपदेशादित्यत्रोक्तभेदश्चेत्युभयदृष्टिरित्यर्थः । न प्रतीक इत्यादिभाष्यव्यावर्त्यं प्रतीकमीश्वर इत्युपासनमित्यन्यत्रोक्तरीत्या भाष्यप्रतिज्ञार्थमाह ॥ **ब्रह्मतयेति** ॥ भाष्योक्तहेतुमाह ॥ **नाम ब्रह्मेत्युपासीतेत्यादीति** ॥ यद्यपि छान्दोग्ये नामोपास्स्व नाम ब्रह्मेत्युपास्त इत्यादिरेव पाठो न तूपासीतेति । तथाप्यर्थतोऽनुवादो वा शाखान्तरपाठो वेत्यदोषः । पृथगुपदेशादित्यनेन पूर्वपक्षानुदयमाशङ्कते ॥ **न चेति** ॥ कुतो वाऽयोग इत्यतः तर्हि विशेषवत्त्वाद्वेत्यन्यत्रोक्तं हेतुं तर्हीतिशब्दार्थं वदन्नेव विवृणोति ॥ **यथेति** ॥ एतेन पूर्वन्यायेनाप्यत्र सङ्गतिः सूचिता । भेदादेरित्यादिपदेन ध्येयस्य सत्यत्वग्रहः । फलासिद्धिं निराह ॥ **श्रूयते खल्विति** ॥ यो नाम ब्रह्मेत्युपास्त इत्यर्थः । गतं व्याप्तिरित्यर्थः । आदिपदेन यावद्वाचो गतमित्यादिग्रहः ॥ **अत इति** ॥ सामानाधिकरण्यश्रुतेर्भावात् फलवत्त्वाच्चेत्यर्थः ॥ **उक्तमिति** ॥ स्वामित्वोपासनमित्यर्थः ॥ **भाष्यं योजयति** ॥ **नामेति** ॥ कुत इत्यतः प्रतीकं नैव विष्णुर्यदित्यनुभाष्यदिशा सूत्रखण्डस्यार्थमाह ॥ **यत इति** ॥ हिर्हेताविति भावः । हेतोरप्रयोजकत्वं निराह ॥ **न हीति** ॥ अन्यस्येश्वरत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेरित्यन्यत्रोक्तहेतुं व्यनक्ति ॥ **अन्यथेति** ॥ मिथ्योपासा ह्यनर्थदा इत्याद्यनुभाष्योक्तेराह ॥ **निष्फलत्वादित्यादि** ॥ न कार्यमेवेति तु नेत्यत्र हेतुः श्रुतीत्यादि ॥ **न च नैतदिति** ॥ एतत् प्रतीकस्थत्वेन ब्रह्मदृष्टिरित्येतत् नाम ब्रह्मेत्यादि श्रुतिर्न वक्तीत्यर्थः ॥ **अपवादेनेति** ॥ 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापम्' इत्यादिमिथ्योपासनानिषेधकवचनरूपापवादेनेति वा पृथगित्यत्र प्रमितरूपभेदरूपापवादेनेति वार्थः । यद्वा तमेवापवादं सप्तसु प्रथमा यस्माद्भूयो भूयस्त्वतस्तथा । षट्सु द्वितीया यस्माच्चेति छान्दोग्यभाष्योक्तमाह ॥ **सप्तस्विति** ॥ वाचं ब्रह्मेत्यादेरुपयोगायाह ॥ **षट्स्विति** ॥ षड्विभक्त्यर्थेष्वित्यर्थः ॥ **उक्तार्थ इति** ॥ तत्स्थत्वेनैवोपासनं कार्यं न त्वभेदेनेत्युक्तार्थ इत्यर्थः । स्मृतौ प्रथमात्वत इत्यस्य द्वितीयात्वादित्यस्याप्युपलक्षकत्वस्य तत्वप्रदीपोक्तेरत्र टीकायामनुक्तिः । अत उभयोरित्यस्य नामादिब्रह्मपदयोरित्युक्तिर्युक्तेति ध्येयम् । निष्फलत्वा-

(भावदीपः)

दित्याद्युक्तहेत्वोरसिद्धिमाशङ्कते ॥ **न च वाच्यमिति** ॥ किं क्षत्तरि राजगुणारोपेण स्तवनमभिमतमुत तथा ज्ञानं वा । आद्ये तस्योपचारत्वेन प्रकृतानुपयोगात् । द्वितीयं त्वसदेव । नैष्फल्यादित्याह ॥ **तथेति** ॥ घातयंति हि राजानो राजाहमिति वदन्तमित्यादितत्वनिर्णयोक्तेरिति भावः ॥ **अत इति** ॥ तयोर्भेदात् अन्यथोपासनस्यानर्थफलत्वाच्चेत्यर्थः । उक्तं स्वामित्वोपासनम् ॥

## अभिनवचन्द्रिका

**भगवज्ज्ञानसाधनस्येति** ॥ यद्यपि प्रतीकैक्योपासनवर्जनं न भगवज्ज्ञानसाधनम्, किंतु श्रवणादिकमेव । तथापि प्रतीकैक्योपासनस्य भगवद्दर्शनविरोधित्वात् तदभावस्य कारणमात्रत्वात्, कारणमात्रे तस्मिन् साधनत्वोपचारः कृत इति बोध्यम् ॥ **यथा खल्विति** ॥ यथा आत्मत्वोपासनं समर्थितं, तथा प्रतीके ब्रह्मभेदे विद्यमानेऽपि ब्रह्मत्वोपासनसमर्थनसम्भवादित्यर्थः । एतेन यथा समर्थितं तथा सम्भवादित्यस्यानन्वय इति परास्तम् ।

भाष्ये **नामब्रह्मेत्त्युपासीतेति** ॥ अयं शाखान्तरस्थः पाठो बोध्यः । एतेन छान्दोग्ये 'नामोपास्व' इति पाठदर्शनात् 'ब्रह्मोपासीत' इत्यभिधानमयुक्तमिति परास्तम् ॥ **नामब्रह्मेत्यादिनेति** ॥ भाष्यानुसारेण शाखान्तरस्थवाक्यग्रहणमिदमिति बोध्यम् ॥ **प्रथमादिविभक्तेरिति** ॥ यद्यपि शाखान्तरे 'नाम ब्रह्मेत्युपासीत' इति प्रथमान्ततया पाठोऽस्ति, तथापि तत्समानार्थक 'नामोपास्व' इति छान्दोग्यवाक्यव्याख्यानायाऽऽदिग्रहणम् । अत एव 'सप्तसु प्रथमा' इत्येव सूत्रे उदाहर्तव्ये षट्सु द्वितीयेति सूत्रान्तरमुदाहृतमिति द्रष्टव्यम् ॥ **उभयोर्नामादिब्रह्मपदयोरिति** ॥ शाखान्तरपाठाभिप्रायेण नामादिपदानां प्रथमान्तत्वमुक्तमिति बोध्यम् । एतेन छान्दोग्ये 'नामोपास्व, वाचमुपास्व' इत्यादीनां विस्पष्टं द्वितीयान्तत्वात् प्रथमान्तत्वाभिधानमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** प्रतीकं ब्रह्मतयोपास्यं 'नामोपास्व' इत्यादिविधीनां 'सयो मनो हि ब्रह्म' इति पर्यालोचनया 'नाम ब्रह्मेत्युपासीत' इति शाखान्तरवाक्यपर्यालोचनया च प्रतीके ब्रह्मदृष्टिरिति तात्पर्यावगमात् । न च प्रतीकब्रह्मणोर्भेदात्तथोपासनासम्भवः । उपासनायां फलस्यैव प्रयोजकत्वेन वस्तुतथात्वस्याप्रयोजकत्वात् । अतः प्रतीके ब्रह्मत्वोपासनस्य कर्तव्यत्वात् उक्तं स्वामित्वोपासनमयुक्तमिति ॥

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु** न प्रतीके ब्रह्मदृष्टिः कार्या । 'नामोपास्व' इत्यादिविधीनां प्रतीके ब्रह्मदृष्ट्यविधायकत्वात् । प्रतीकस्याब्रह्मत्वेन मिथ्योपायोपप्रसङ्गाच्च । न हि मिथ्योपासा फलहेतुः । अनर्थहेतुत्वेन प्रमाणसिद्धत्वात् । कथं तर्हि उपासना कार्येति चेत् तत्स्थत्वेनेति गृहाण । द्वितीयाश्रवणात् कथमस्यार्थस्य लाभ इति चेत् महाव्याकरणमूलक 'सुपां सुपो भवन्ति' इति कात्यायनवचनेन द्वितीयायाः सप्तम्यर्थत्वात् । अतः प्रतीके ब्रह्मत्वोपासनस्यायोगादुक्तं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

॥ **आवश्यकत्वसाधनादिति** ॥ इयदामननादित्यत्र नामादित्यत्र नामादिप्राणपर्यन्तं तारतम्यमुक्त्वा अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवदित्यत्र प्राणस्य सर्वोत्तमत्वे प्राणपरमात्मनोर्भेदानुपपत्तिरित्याशङ्क्य श्रुतौ प्राणादुत्तमत्वस्योपदिष्टत्वात् तदनुसारेण भेदोपपत्तेरित्यभिधाय व्यतिहार इत्यादि सूत्रे तत्समर्थनेन सर्वस्वामित्वेनैवोपासनं कार्यं न तु नामादिप्राणांतप्रतीकभेदेनेति यत् प्रतीकैक्योपासनं त्याज्यमित्युक्तं तस्यावश्यकत्वसमर्थनादित्यर्थः ॥ **यदुक्तमिति** ॥ इयदामननात् व्यतिहार इत्यत्रेत्यर्थः । यद्वा आनन्दादय इत्यत्र स्वामित्वेनोपासनमुक्त्वा भूम्नः क्रतुवदित्यत्र पूर्णत्वस्याविशेषेण तथोपास्यत्वं चोक्तम् । स्वामित्वस्य भूमत्वं नाम सर्वस्वामित्वमेवेत्यर्थ इति भावः । यद्वा अनन्तराधिकरण एवात्मपदेन सर्वस्वामित्वमुक्तम् । तथा चाक्षेपिक्यनन्तरसङ्गतिरिति भावः । यद्वा फलविशेषेणात्मत्वोपासनस्यैव ब्रह्मप्रतीकैक्योपासनस्यापि फलविशेषवत्वादेव कर्तव्यत्वमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **प्रकृतमिति** ॥ इयदामननादित्यादावित्यर्थः । नामाद्यभेदेन ब्रह्मोपास्यं न वेति चिन्ता । तदर्थं तथोपासनं फलप्रदं न वेति ।

नामब्रह्मेत्यादिना शब्दश्रांत्येत्यनुसारणपूर्वपक्षमाह **नामब्रह्मेति श्रुतेरिति** ॥ नामब्रह्मेत्युपासीतेति भाष्योपात्तशाखान्तरीयसामानाधिकरण्यश्रुतेरित्यर्थः । छान्दोग्ये नामेत्येवोपास्वेत्येव पाठश्रवणात् । द्वितीयांतत्वेन सामानाधिकरण्याभावाच्च । स यो नाम ब्रेह्मेत्युपास्त इति फलकथनवाक्ये श्रूयते सामानाधिकरण्यमिति चेत्तत्रापि नामपदस्य द्वितीयात्वात् उक्तानुवादत्वात् । वाचमुपास्व स यो वाचं ब्रह्मेत्युपास्त इत्यारभ्यासामुपासनाविषयकाणां स ब्रह्मेत्युपास्त

(भावदीपः)

दित्याद्युक्तहेत्वोरसिद्धिमाशङ्कते ॥ **न च वाच्यमिति** ॥ किं क्षत्तरि राजगुणारोपेण स्तवन-मभिमतमुत तथा ज्ञानं वा । आद्ये तस्योपचारत्वेन प्रकृतानुपयोगात् । द्वितीयं त्वसदेव । नैष्फल्यादित्याह ॥ **तथेति** ॥ घातयंति हि राजानो राजाहमिति वदन्तमित्यादितत्वनिर्णयोक्तेरिति भावः ॥ **अत इति** ॥ तयोर्भेदात् अन्यथोपासनस्यानर्थफलत्वाच्चेत्यर्थः । उक्तं स्वामित्वोपासनम् ॥

## अभिनवचन्द्रिका

**भगवज्ज्ञानसाधनस्येति** ॥ यद्यपि प्रतीकैक्योपासनवर्जनं न भगवज्ज्ञानसाधनम्, किंतु श्रवणादिकमेव । तथापि प्रतीकैक्योपासनस्य भगवद्दर्शनविरोधित्वात् तदभावस्य कारणमात्रत्वात्, कारणमात्रे तस्मिन् साधनत्वोपचारः कृत इति बोध्यम् ॥ **यथा खल्विति** ॥ यथा आत्मत्वोपासनं समर्थितं, तथा प्रतीके ब्रह्मभेदे विद्यमानेऽपि ब्रह्मत्वोपासनसमर्थनसम्भवादित्यर्थः । एतेन यथा समर्थितं तथा सम्भवादित्यस्यानन्वय इति परास्तम् ।

भाष्ये **नामब्रह्मेत्त्युपासीतेति** ॥ अयं शाखान्तरस्थः पाठो बोध्यः । एतेन छान्दोग्ये 'नामोपास्व' इति पाठदर्शनात् 'ब्रह्मोपासीत' इत्यभिधानमयुक्तमिति परास्तम् ॥ **नामब्रह्मेत्यादि-नेति** ॥ भाष्यानुसारेण शाखान्तरस्थवाक्यग्रहणमिदमिति बोध्यम् ॥ **प्रथमादिविभक्तेरिति** ॥ यद्यपि शाखान्तरे 'नाम ब्रह्मेत्युपासीत' इति प्रथमान्ततया पाठोऽस्ति, तथापि तत्समानार्थक 'नामोपास्व' इति छान्दोग्यवाक्यव्याख्यानायाऽऽदिग्रहणम् । अत एव 'सप्तसु प्रथमा' इत्येव सूत्रे उदाहर्तव्ये षट्सु द्वितीयेति सूत्रान्तरमुदाहृतमिति द्रष्टव्यम् ॥ **उभयोर्नामादिब्रह्मपदयोरिति** ॥ शाखान्तरपाठाभिप्रायेण नामादिपदानां प्रथमान्तत्वमुक्तमिति बोध्यम् । एतेन छान्दोग्ये 'नामोपास्व, वाचमुपास्व' इत्यादीनां विस्पष्टं द्वितीयान्तत्वात् प्रथमान्तत्वाभिधानमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** प्रतीकं ब्रह्मतयोपास्यं 'नामोपास्व' इत्यादिविधीनां 'सयो मनो हि ब्रह्म' इति पर्यालोचनया 'नाम ब्रह्मेत्युपासीत' इति शाखान्तरवाक्यपर्यालोचनया च प्रतीके ब्रह्मदृष्टिरिति तात्पर्यावगमात् । न च प्रतीकब्रह्मणोर्भेदात्तथोपासनासम्भवः । उपासनायां फलस्यैव प्रयोजकत्वेन वस्तुतथात्वस्याप्रयोजकत्वात् । अतः प्रतीके ब्रह्मत्वोपासनस्य कर्तव्यत्वात् उक्तं स्वामित्वोपासन-मयुक्तमिति ॥

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु** न प्रतीके ब्रह्मदृष्टिः कार्या । 'नामोपास्व' इत्यादिविधीनां प्रतीके ब्रह्मदृष्ट्यविधायकत्वात् । प्रतीकस्याब्रह्मत्वेन मिथ्योपासाप्रसङ्गाच्च । न हि मिथ्योपासा फलहेतुः । अनर्थहेतुत्वेन प्रमाणसिद्धत्वात् । कथं तर्हि उपासना कार्येति चेत् तत्स्थत्वेनेति गृहाण । द्वितीयाश्रवणात् कथमस्यार्थस्य लाभ इति चेत् महाव्याकरणमूलक 'सुपां सुपो भवन्ति' इति कात्यायनवचनेन द्वितीयायाः सप्तम्यर्थत्वात् । अतः प्रतीके ब्रह्मत्वोपासनस्यायोगादुक्तं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

॥ **आवश्यकत्वसाधनादिति** ॥ इयदामननादित्यत्र नामादित्यत्र नामादिप्राणपर्यन्तं तारतम्यमुक्त्वा अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवदित्यत्र प्राणस्य सर्वोत्तमत्वे प्राणपरमात्मनोर्भेदानुपपत्तिरित्याशङ्क्य श्रुतौ प्राणादुत्तमत्वस्योपदिष्टत्वात् तदनुसारेण भेदोपपत्तेरित्यभिधाय व्यतिहार इत्यादि सूत्रे तत्समर्थनेन सर्वस्वामित्वेनैवोपासनं कार्यं न तु नामादिप्राणांतप्रतीकभेदेनेति यत् प्रतीकैक्योपासनं त्याज्यमित्युक्तं तस्यावश्यकत्वसमर्थनादित्यर्थः ॥ **यदुक्तमिति** ॥ इयदामननात् व्यतिहार इत्यत्रेत्यर्थः । यद्वा आनन्दादय इत्यत्र स्वामित्वेनोपासनमुक्त्वा भूम्नः क्रतुवदित्यत्र पूर्णत्वस्याविशेषेण तथोपास्यत्वं चोक्तम् । स्वामित्वस्य भूमत्वं नाम सर्वस्वामित्वमेवेत्यर्थ इति भावः । यद्वा अनन्तराधिकरण एवात्मपदेन सर्वस्वामित्वमुक्तम् । तथा चाक्षेपिक्यनन्तरसङ्गतिरिति भावः । यद्वा फलविशेषेणात्मत्वोपासनस्यैव ब्रह्मप्रतीकैक्योपासनस्यापि फलविशेषवत्वादेव कर्तव्यत्वमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **प्रकृतमिति** ॥ इयदामननादित्यादावित्यर्थः । नामाद्यभेदेन ब्रह्मोपास्यं न वेति चिन्ता । तदर्थं तथोपासनं फलप्रदं न वेति ।

नामब्रह्मेत्यादिना शब्दश्रांत्येत्यनुसारणपूर्वपक्षमाह **नामब्रह्मेति श्रुतेरिति** ॥ नामब्रह्मेत्युपासीतेति भाष्योपात्तशाखान्तरीयसामानाधिकरण्यश्रुतेरित्यर्थः । छान्दोग्ये नामेत्येवोपास्वेत्येव पाठश्रवणात् । द्वितीयांतत्वेन सामानाधिकरण्याभावाच्च । स यो नाम ब्रह्मेत्युपास्त इति फलकथनवाक्ये श्रूयते सामानाधिकरण्यमिति चेत्तत्रापि नामपदस्य द्वितीयात्वात् उक्तानुवादत्वात् । वाचमुपास्व स यो वाचं ब्रह्मेत्युपास्त इत्यारभ्यासामुपासनाविषयकाणां स ब्रह्मेत्युपास्त

(वाक्यार्थमुक्तावली)

इत्यन्तविधिवाक्ये फलवाक्ये च सर्वत्र द्वितीयाश्रवणेन पाठविरोधश्च । भेदसूत्रैः गतार्थतां परिहरति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतो विशेषेत्युक्तन्यायं फलविशेषसद्भावादभेदोपासनं युक्तमेवेत्याशयेन व्यनक्ति ॥ **यथा खल्विति** ॥ नाम्नो यावद्गतं व्याप्तिस्तत्रोपासकस्य कामचार इति श्रुत्यर्थः । इत्यादिनेत्यस्य भ्रान्त्येत्यनेन स्त्रीलिङ्गेनान्वयायोगादध्याहृतम् ॥ **अत एवेति** ॥ नामब्रह्मेत्यस्य भ्रमजनकत्वं कथमित्यत उक्तं **सामानाधिकरण्येनेति** ॥ शब्दस्वरूपे भ्रान्त्यभावादुक्तं **ऐक्येति** ॥ सूत्रे ब्रह्मदृष्टिरित्यनुकृष्यते । प्रतीक इति विषयसप्तमी । स इत्यात्मपरामर्शः । हिशब्दो यस्मादित्यर्थ इति भावेन 'प्रतीकविषयत्वेन विष्णुदृष्टिः न तद्भवेत् । नैव विष्णुः प्रतीकं यत्' इत्यनुव्याख्यानं मनसि निधाय व्याचष्टे ॥ **यर्हीति** ॥ ब्रह्मप्रतीकतया नोपास्यं तद्भिन्नत्वादित्यत्राप्रयोजकत्वं परिहरति ॥ **तर्हीति** ॥ **फलस्यैवेति** ॥ भेदादेरप्रयोजकत्वादित्येवार्थः । कुतो न वाच्यमित्यतो हिशब्दसूचितं सम्बन्धिग्रह इत्युक्तन्यायं यत्र सम्बन्धिरुपपत्तिः विद्यते तस्यैव ग्राह्यत्वादिति न्यायविवरणानुसारेणोपपत्तिकथनेन व्यनक्ति ॥ **अन्यथोपासनस्येति** ॥ सूत्रे प्रतीके इत्यधिकरणसप्तमी । ब्रह्मदृष्टिरित्यनुकृष्यते । तथा च नामाद्यधिकरणस्थत्वेनैव ब्रह्मदृष्टिः कार्येति भावेन सूत्रखण्डस्यार्थान्तरं भाष्यमवतार्य प्रतीके विष्णुरित्येव तस्मात्कार्या ह्युपासनेत्यनुव्याख्यानुसारेण व्याचष्टे ॥ **नन्वित्यादिना** ॥ **नैतच्छुतिरिति** ॥ नामब्रह्मेत्युपासीतेति शाखान्तरीयसामानाधिकरण्यश्रुतेरेतत्प्रतीकस्थत्वेन ब्रह्मोपासनं न वक्तीत्यर्थः । कुतो न वाच्यमित्यतो हि शब्दसूचितोपपत्तिं महाव्याकरणसंमतिं चाह ॥ **अपवादेनेति** ॥ बाधकेनेत्यर्थः ॥ **प्रथमादिविभक्तेरिति** ॥ शाखान्तरे प्रथमाविभक्तेः छान्दोग्ये द्वितीयाविभक्तेरित्यर्थः । **उभयोर्**नामादिब्रह्मपदयोरिति । उभयोरित्यनुवादे न नामादिब्रह्मपदयोरिति व्याख्याप्रतीकवाचकनामादिपदजातस्य ब्रह्मशब्दस्य च सर्वत्रानुवृत्तस्येत्युभयोरित्यर्थः । भाष्ये प्रथमात्वत इति शाखान्तराभिप्रायेण । छान्दोग्यानुसारेण प्रथमात्त्वत इति द्वितीयात्वादित्यस्योपलक्षणम् । द्वितीयात्वेऽपि देवदत्तं सिद्धं विद्धीत्यादि विधिबलेनैक्यप्रतीतेः । उक्तं च तत्वप्रदीपे उभयोः प्रतीकब्रह्मपदयोः प्रथमात्वतः ऐक्यदृष्टिर्विहितेति भ्रान्तिर्भवति । प्रथमात्वत इति सन्निकृष्टोपलक्षणम् । प्रथमात्वात् द्वितीयात्वादित्यर्थः । शाखान्तरे प्रथमात्वात् । यथोक्तं षट्स्तु द्वितीयेति सूत्रमिति । केचित्तु स यो नाम ब्रह्मेत्युपास्त इति छान्दोग्ये प्रथमैव । स यो वाचमित्यादौ द्वितीया । प्रथमात्वत इति द्वितीयोपलक्षणमित्याहुः । अन्ये तु प्रथमयोः पूर्वसवर्ण इत्यत्रेव प्रथमात्वत इत्यस्यैव, प्रथमा च द्वितीया च प्रथमे तयोर्भावः प्रथमात्वं तस्मादित्यर्थमाहुः । तदेतत्पक्षद्वयं तत्वप्रदीपविरुद्धम् ।

(वाक्यार्थमुक्तावली)

ननु ब्रह्मणि प्रतीकत्वोपासने च मताज्ञानेन ब्रह्मकोपेन फलाभावेऽपि प्रतीके ब्रह्मत्वोपासने प्रतीकं फलं यच्छति क्षत्तरि राजदृष्टौ क्षत्तेवेत्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमिति चेदुपचरितव्यवहारमात्रत्वेन क्षत्तरि राजदृष्टेरभावादित्याह ॥ **क्षत्तैवेति** ॥ अङ्गीकृत्याप्याह ॥ **तथेति** ॥ उक्तं च अनुव्याख्याने 'नीचस्य स्वात्मताज्ञाने कुप्यति ब्रह्मलोकवत्' इत्यादिना ॥

## वाक्यार्थविवरणम्

यदुक्तं **सर्वस्वामित्वेनेति** ॥ प्रतीकस्य नामादेर्जडस्य सर्वस्वामित्वाभावेन तदभिन्नस्यापि विष्णोस्तदसम्भवादिति भावः । न कार्यमेवेति चेत्तत्राह ॥ **न त्विति** ॥ किन्तु कार्यमेवेत्यर्थः । अकार्यत्वे बाधकमाह ॥ **श्रुत्यप्रामाण्येति** ॥ एतत्प्रतीकस्थितत्वम् । द्वितीयेयम् ॥ **अपवादेनेति** ॥ अभेदेनोपासने अन्यथोपासनप्राप्त्या तस्यानर्थहेतुत्वरूपापवादेनेत्यर्थः । षट्सु विभक्तिषु । तथा च न केवलं नाम ब्रह्मेत्युपासीतेत्यादिविधिवाक्यगतप्रथमाविभक्तेः सप्तम्यर्थत्वम् । किं नाम समो नाम ब्रह्मेत्युपास्त इत्यादिफलवाक्यगतद्वितीयाविभक्तिरपि सप्तम्यर्थेति भावः ॥ **उक्तमिति** ॥ विष्णोः सर्वस्वामित्वमित्यर्थः ।

## वाक्यार्थमञ्जरी

प्रतीके नामादिप्रतिमाविषये ब्रह्मत्वेनोपासना न कार्या कुतः हि यस्मात्कारणात् स विष्णुः प्रतीकं न भवतीत्यर्थः । प्रथमादित्यादिपदेन नामोपास्वेत्यादिद्वितीया ग्राह्या ॥ **सप्तस्विति** ॥ प्रथमाविभक्तिः **सप्तसु** प्रथमाविभक्त्यादिसप्तविभक्त्यर्थेषु वाचकतया प्रवर्तत इत्यर्थः ॥ **षट्स्विति** ॥ द्वितीयाविभक्तिः द्वितीयादिषड्विभक्त्यर्थेषु वर्तत इत्यर्थः । ननु न वयं ब्रह्मणि प्रतीकोपासनं ब्रूमः येन ब्रह्म कुपितमनर्थं प्रयच्छेत् किं तु प्रतीके ब्रह्मत्वोपासनं ततः पुरुषार्थप्राप्तिदर्शनादित्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ कुतो न वाच्यमिति चेत् क्षत्तरि राजदृष्टेरभावात् । ननु दृष्ट्यभावे तथा व्यवहारः कथमित्यत आह ॥ **क्षत्तैव राजेत्यस्येति** ॥ क्षत्तरि राजदृष्टिः कुतो नेत्यत आह ॥ **ज्ञानेनेति** ॥ **ब्रह्मत्व इति** ॥ पूर्णत्व इत्यर्थः । **भूम्नः**पूर्णत्वस्य ॥ **विशेषहेतुरिति** ॥ मोक्षस्य तदन्वयव्यतिरेकानुविधायित्वरूप इत्यर्थः ॥

॥ इति नप्रतीकाधिकरणम् ॥ ३ ॥

## ४. ब्रह्मदृष्ट्यधिकरणम्

### ॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ५ ॥

ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् ।

‘ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।
महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ।
सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेत् ॥
आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ।
कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत्’ इति ब्रह्मतर्के ॥ ५ ॥

॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

### तत्त्वप्रदीपिका

यथाऽऽत्मदृष्टिः सर्वदा सर्वेषां कार्या ब्रह्मदृष्टिश्च तथा कार्या परमेश्वरे । उत्कृष्टत्वात्, तस्य ब्रह्मशब्दस्य चोत्कर्षार्थत्वात् । भूमगुणस्य सर्वगुणेषु भावनीयत्वमुक्तम् । तदशक्तावप्यत्यन्तायामापदि गुणिनि तद्ब्रह्मत्वं न परित्याज्यमित्युच्यते । अत उत्कृष्टः स्वामी विष्णुरिति न क्वचिदपि विस्मर्तव्यमित्यर्थः । अपि च–

‘ब्रह्मत्वं पूर्णता प्रोक्ता तदस्य स्वत एव तु ।
स ब्रह्माऽत्मा समुद्दिष्टो वासुदेवः सनातन’ इति हरिवंशेषु ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मदर्शनसाधनब्रह्मत्वोपासनस्यावश्यकत्वसमर्थनादस्ति शास्त्रसङ्गतिः । अन्यथा भूम्नो ज्यायस्त्वमित्युक्तहानिप्रसङ्गात् समर्थनीयमेतत् । भूम्न इत्यत्र प्रकृतं ब्रह्मत्वमेव विषयः । किं सदा सर्वथोपास्यं न वेति सन्देहः । उभयथापि दर्शनं सन्देहबीजम् । न ब्रह्मत्वं सदा सर्वथोपास्यमिति पूर्वः पक्षः । भगवत्प्रसादाय हि तदुपासनं कर्तव्यम् । स च प्रतिदिनं विविधगुणोपसंहारेणोपासने सिध्यति । तथा च किं ब्रह्मत्वस्यैकस्यैव विशिष्य सदोपासने कारणमस्ति । तदुपासनमपि भगवत्प्रसादजनकमिति चेत्तथापि गुणान्तरसाम्यमेव स्यात् । न चात्मत्ववद्गुणत्वाविशेषेऽपि

(तत्त्वप्रकाशिका)

नित्योपास्यत्वे विशेषहेतुरस्ति । अतो ब्रह्मत्वस्य नित्योपास्यत्वाभावादुक्तं ज्यायस्त्वमयुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **ब्रह्मेति** ॥ परमेश्वरे सदा सर्वथा ब्रह्मत्वोपासनं कार्यम् । तत्र सर्वगुणान्तर्भावेन भगवदुत्कृष्टत्वसिद्धेः । भगवदुत्कृष्टत्वं हि ब्रह्मत्वम् । तथा च ब्रह्मत्वोपासनं नाम उत्कृष्टत्वोपासनमेव । सर्वोत्कृष्टत्वोपासनं चान्योपासनेभ्योऽतिशयेन भगवत्प्रसादहेतुरिति भावः । ब्रह्मदृष्टिः प्रतीके कार्येति केचित्तदतीतसूत्रेणैव निरस्तमिति भावेनोक्तं परमेश्वर इति । अत्र स्मृतिं चाह ॥ **ब्रह्मेति** ॥ शब्दोऽयं यत इति शेषः । सर्वतो महत्त्वज्ञानमित्यन्वयः । गुणान्तरोपासनादाधिक्येनेति वा । आत्मत्वोपास्तिवत् ब्रह्मत्वोपासनं विनापि मोक्षासम्भवाच्च तत्कार्यमिति भावेनाह ॥ **आत्मेति** ॥ ब्रह्मत्वस्याप्यावश्यकत्वे चतुर्गुणोपासननियमभङ्गः स्यादित्यतो वाह ॥ **आत्मेति** ॥ आत्मत्वविशेषणत्वेनोपासनाददोष इति भावः । अतो ब्रह्मत्वस्य विशिष्योपास्यत्वादुक्तं युक्तमिति सिद्धम् ॥

## गुर्वर्थदीपिका

ब्रह्मत्वोपासनमिति वदता ब्रह्मदृष्टिः सर्वोत्कृष्टत्वोपासनमिति सूत्रार्थस्सूचितः । आत्मत्वं स्वस्वामित्वं ब्रह्मत्वं सर्वोत्कृष्टत्वमित्यतो न पौनरुक्त्यम् ॥

## भावबोधः

**ब्रह्मत्वोपासनस्येति** । पूर्वाधिकरणे प्रतीके ब्रह्मदृष्टिर्नकार्येत्यत्र हेतुतया ''न हि सः'' इत्युक्तभेदाभावे हेतुभूतब्रह्मत्वरूपव्यावर्तकधर्मोपासनस्यात्र विचारादनन्तरसङ्गतिरिति भावः । **उक्तहानिप्रसङ्गादिति** ॥ ''भूम्नः'' इत्यधिकरणे सर्वोपास्यत्वे हेतुत्वेनोक्तज्यायस्त्वं भूमगुणस्य मोक्षान्वयव्यतिरेकवदुपास्तिविषयत्वेन साधितम् । भूमशब्दोक्तब्रह्मत्वस्यावश्यकत्वासमर्थने मोक्षान्वयव्यतिरेकायोगेन ज्यायस्त्वहानिप्रसङ्गादित्यर्थः ॥ **किमिति** ॥ अत्र ब्रह्मत्वं किं सदा सर्वथोपास्यं न भवत्युत भवतीति चिन्ता । तदर्थं ब्रह्मत्वोपासनं विनापि मोक्षजनकीभूतेश्वरप्रसादो न भवत्युत भवतीति । तदर्थं न भवतीति पक्षे ब्रह्मत्वोपासनायाम् ''आनन्दादयः प्राधनस्य'' इत्युक्तविरोधः प्राप्नोत्युत न प्राप्नोतीति । प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह— **भगवत्प्रसादाय हीत्यादिना** ॥ न्यायविवरणगत''न्यास''शब्दार्थ उपसंहारेणोपासन इति न्यायविवरणगत'नियम'पदस्यार्थमाह— **तथापि**

(भावबोधः)

**गुणान्तरसाम्यमिति** ॥ अत्र सूत्रे ''ब्रह्मदृष्टिः'' कर्तव्येत्युच्यते । कुत्रेत्याकाङ्क्षायां सन्निधानात् प्रतीक इति प्राप्नोति । तच्च योग्यताविरहात् प्रागेव निराकृतम् । अतः साकाङ्क्षं प्रतिज्ञावाक्यमित्यतो भाष्ये परमेश्वर इत्युक्तमित्यभिप्रेत्याह– **परमेश्वर इति** । तथा च ''आत्म''इति सूत्रादात्मशब्दोऽर्थवशात् सप्तम्यन्तोऽत्रानुवर्तत इत्युक्तं भवति ।

ननु सूत्रे 'उत्कर्षात्' इति हेतुरुच्यते । तत्र न ज्ञायते कस्योत्कर्षात् इत्यतः 'उत्कृष्टो ब्रह्मशब्दार्थः' इत्यनुव्याख्यानानुसारेण तद्व्याचष्टे ॥ **भगवदुत्कृष्टत्वं हि ब्रह्मत्वमिति** ॥ ब्रह्मत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यर्थः । तथा चोत्कर्षादुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादिति सूत्रार्थ इति भावः । कथं भगवदुत्कृष्टत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यत अशेषगुणान्तर्भावेनेति न्यायविवरणं संयोजयति– **तत्र सर्वगुणान्तर्भावेनेति** ॥ अन्तर्भावितसर्वगुणत्वमेव सर्वोत्कृष्टमिति भावः ॥

ननु भगवदुत्कृष्टत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वं परमेश्वरे ब्रह्मदृष्टिः कार्येत्यत्र कथं हेतुरित्यत आह– **तथा चेति** ॥ ननु विविधगुणोपासनेनैव भगवत्प्रसादसम्भवे किमुत्कृष्टत्वोपासनेनेत्य-तस्तस्यैवाधिकसाधनत्वादिति न्यायविवरणं योजयति– **सर्वोत्कृष्टत्वोपासनं चेति** ॥ **सर्वतो महत्त्वेति** ॥ लक्ष्म्यादिभ्यः सर्वेभ्य इति पञ्चम्यन्तात्तसिरिति भावः । गुणान्तरोपासनाधिक्येनेति ॥ **आधिक्येनेत्येतदध्याहृतम्** ॥ तत्कार्यमिति भावेनाहेति । अनेन ''अत्मेत्येव'' इति स्मृतिवाक्यस्य यदात्मेत्युपासा मोक्षसिद्ध्यर्थं कार्या तदा ब्रह्मत्वोपासनाभावेऽपि मोक्षाभावात् ब्रह्मत्वसंयुताप्युपासा कार्यैवेति तात्पर्यमुक्तं भवति ॥ **आत्मत्वविशेषणत्वेनेति** ॥ अनेनात्मेत्युपासा ब्रह्मत्वसंयुतात्मत्व-विशेषणत्वेन ब्रह्मत्वविषयिणीति व्याख्यातं भवति ॥

## भावदीपः

**ब्रह्मत्वेति** ॥ पूर्णत्वेत्यर्थः । भूम्न इत्यत्रैव तदुपासनस्य सिद्धेराह ॥ **आवश्यकत्वेति** ॥ एतेन नामब्रह्मेत्यादौ नामादिप्रतीकस्थतयोपास्यत्वेन प्रकृतस्य ब्रह्मणस्तत्त्वेनोपासनस्यात्रावश्यकत्वोक्तेः पूर्वसङ्गतिरपि सूचिता । चिन्ताफलमाह ॥ **अन्यथेति** ॥ आवश्यकत्वानुक्तौ पूर्णत्वाख्यभूम-गुणस्योपास्यसर्वगुणसाधारण्येन ज्यायस्त्वशब्दितं सर्वगुणेभ्यः श्रैष्ठ्यं न स्यादित्यर्थः । पूर्वसूत्रेऽ-प्रकृतत्वेऽपि भूम्न इत्यस्य प्रपञ्चनपरत्वमस्य सूचयितुं भूम्न इत्यत्र प्रकृतमित्युक्तम् ॥ **उभयथेति** ॥

(भावदीपः)

आत्मत्वोपासने भगवद्गुणान्तरोपासने चावश्यकत्वानावश्यकत्वदृष्टिरित्यर्थः । प्रतिदिनं विविध-गुणाभ्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इत्यन्यत्रोक्तप्रतिज्ञाहेत्वोः साक्षादनन्वयान्मध्ये तद्दृष्टेर्भगवत्प्रीत्यर्थत्वादिति हेतुं संयोज्य तस्यान्यथासिद्ध्युक्तिपरत्वेनान्यत्रोक्तं हेतुं योजयति ॥ **न ब्रह्मत्वमित्यादिना** ॥ अभ्यासेनेत्यस्यार्थ **उपसंहारेणेति** ॥ भगवत्प्रीतेरन्यथोपपत्तावपि कारणान्तरादस्तु तस्य नियमेनोपासनमित्यतः सौत्रहेतुमाह ॥ **तथा चेति** ॥ नियमपदतात्पर्यं विवृण्वन्नुक्तहेतोरेव ब्रह्मत्वदृष्ट्योपपत्तिमाशङ्क्य निराह ॥ **तदिति** ॥ **गुणेति** ॥ ज्ञानादिगुणान्तरसाम्यमेव न त्वत्यावश्यकत्वमित्यर्थः । भाष्यस्थचशब्दव्यावर्त्यं गतार्थत्वमाशङ्क्य निराह ॥ **न चेति** ॥ गुणान्तरदृष्ट्या भगवत्प्रीत्युपपत्तावपि विना मोक्षायोगेन हेतुना आत्म-त्वोपासनं यथावश्यकं तथा ब्रह्मत्वदृष्टिरप्यस्तु । तदभावेऽपि मोक्षायोगात् । एवं चात्मेत्यनेनैव गतार्थत्वान्नात्र पूर्वपक्षोदय इति न शङ्क्यम् । मानाभावेन मोक्षायोगरूपविशेषहेतोरभावादित्यर्थः ॥

भाष्यं व्याचष्टे ॥ **परमेश्वर इति** ॥ उत्कृष्टत्वादित्यत्र ब्रह्मत्वस्येत्यन्वयमुपेत्य तत्कथ-मित्यतोऽशेषगुणान्तर्भावेनेत्यन्यत्रोक्तदिशोपपादयति ॥ **तत्रेति** ॥ ब्रह्मत्व इत्यर्थः । ततश्च किमित्यतस्तस्यैवाधिकसाधनत्वादित्यन्यत्रोक्तदिशा भाष्यभावमाह ॥ **तथा चेति** ॥ ब्रह्मत्वे उत्कृष्टत्वरूपे सतीत्यर्थः । ननु भाष्ये ब्रह्मत्वोपास्तिः कार्येत्येवोक्तौ पूर्वन्यायेनान्यत्र तथोपास्तेरप्रसक्ते ब्रह्मणीत्येव लाभात्परमेश्वर इत्युक्तिर्व्यर्थेत्यत आह ॥ **भगवदिति** ॥ **निरस्त-मिति** ॥ न हि स इति सूत्रांशेनेति भावः ॥ **इति भावेनेति** ॥ अत्र सूत्रे पूर्वत्रानुषक्तमात्मपदमेव सप्तम्यन्ततयाऽनुवर्तते । न तु प्रतीकपदमिति भावः । स्मृतिं व्याचष्टे ॥ **शब्द इति** ॥ न चात्मत्ववदित्यादिप्रागुक्तचोद्यनिरासकतया स्मृतिशेषं व्याचष्टे ॥ **आत्मत्वेति** ॥ सा यथा मुक्तिहेतुरेवं ब्रह्मत्वोपास्तिरपि मुक्तिहेतुरित्यस्य स्मृतौ साक्षादप्रतीतेराह ॥ **इति भावेनेति** ॥ ब्रह्मत्वसंयुतेत्युक्त्या एवं तात्पर्यं गम्यत इति भावः । अत एव इत्यतो वेत्यर्थान्तरोक्तिः । एतेन ब्रह्मत्वदृष्टिं विना मोक्षाभावेनोत्कृष्टसाधनत्वादात्मनि ब्रह्मत्वदृष्टिः कार्यैवेति सूत्रस्यार्थान्तरं सूचितम् ॥ **चतुर्गुणेति** ॥ आनन्दादय इत्यत्रोक्तेति भावः ॥ **अत इति** ॥ अतिशयेन भगवत्प्रीतिहेतुत्वादित्यर्थः ॥ **उक्तमिति** ॥ भूम्न इत्यत्रोक्तं ज्यायस्त्वमित्यर्थः ॥

## अभिनवचन्द्रिका

**पूर्वपक्षस्तु** ब्रह्मत्वं सदा सर्वथा नोपास्यम् । उपासनं भगवत्प्रसादार्थम् । स च प्रतिदिनं विविधगुणोपासनेनैव भवेदिति व्यर्थं ब्रह्मत्वोपासनम् । अतो ब्रह्मत्वस्य सदोपास्यत्वाभावादुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** कार्यमेव सदा सर्वथा ब्रह्मत्वोपासनम् । यतस्तथोपासने एव हि ब्रह्म प्रसन्नं भवति । ननु ब्रह्मत्वोपासनयोग्यानां तथोपासनमस्तु । चतुर्गुणोपासकानां कथमिति चेत्, तैरपि आत्मत्वादिविशेषणतया ब्रह्मत्वोपासनं कार्यम् । 'आत्मेत्येव यदोपासा तदा ब्रह्मत्व संयुता' इति वचनात् । अतः ब्रह्मत्वस्य विशिष्योपास्यत्वादुक्तं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**अन्यथेति** ॥ ब्रह्मत्वोपासनस्यानावश्यकत्वे भूम्नः क्रतुवदित्यत्र ब्रह्मत्वापरपर्यायभूमत्वस्यानन्दादय इत्याद्युक्तसर्वगुणविशेषणतयानुवृत्योपास्यत्वम् । यदुक्तं तद्धानिप्रसङ्गादित्यर्थः । तथा च ब्रह्मत्वस्यानन्दादिविशेषणतयानुपास्यत्वे स्वामित्वविशेषणत्वेनाप्यनुपास्यत्वात् पूर्णस्वामित्वापरपर्यायसर्वस्वामित्वनिर्वाहाय प्रतीकैक्योपासनवर्जनमावश्यकमित्यतीताधिकरणोक्तं न सिध्येदित्याक्षेपादनन्तरसङ्गतिरपीति भावः ॥ **किमिति** ॥ अत्र ब्रह्मत्वं सदोपास्यं न भवत्युत भवतीति । तदर्थं ब्रह्मत्वोपासनं विना मोक्षजनकीभूतेश्वरप्रसादो भवत्युत न भवतीति । महत्वज्ञानमेव सर्वतः प्रीतिजनकमित्युत्तरभाष्ये गुणान्तरोपासनादाधिक्येन ब्रह्मत्वोपासनस्य प्रसादहेतुत्वोक्त्या व्यवच्छेद्यं विन्यास इत्युक्तपूर्वपक्षन्यायं प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेः न ब्रह्मतादृष्टिनियमः इति न्यायविवरणानुसारेण व्यनक्ति ॥ **भगवत्प्रसादायेति** ॥ आत्मेत्येव यदोपासेत्युत्तरभाष्यव्यवच्छेद्यं हेतुमाह ॥ **न चेति** ॥ सूत्रे आत्मेत्यत आत्मशब्दः सप्तम्यन्ततया विपरिणम्य अनुवर्तते । तत्रत्यतुशब्दो अनुवर्तते । स च सर्वदा सर्वथेति गुणान्तरोपासनाविशेषस्य द्योतकः तस्यैवावधारणार्थस्य कार्येत्यध्याहृतेनान्वयः । चशब्दार्थस्य न केवलमात्मेति दृष्टिर्ब्रह्मदृष्टिश्चेत्यप्यन्वयः इति भावेन प्रवृत्तं ब्रह्मदृष्टिश्चेति भाष्यं व्याचष्टे ॥ **परमेश्वर इति** ॥ उक्तं च तत्त्वप्रदीपे यथाऽऽत्मदृष्टिस्तथा ब्रह्मदृष्टिश्चेति । परमेश्वर इत्यादेरन्तर्भविनेत्यन्त टीका-

(वाक्यार्थमुक्तावली)
वाक्यस्यायमर्थः । सर्वथाऽऽधिव्याधिनिमित्तकमनोविक्षेपेण पृथग्गुणानां स्वयोग्यानां स्मरणाशक्तावपि ब्रह्मत्वे सर्वगुणान्तर्भाविन पूर्ण इत्येवंरूपेण सततं परमेश्वरे ब्रह्मत्वोपासनं कार्यमिति । यद्वक्ष्यति आधिव्याधिनिमित्तेनेत्यादि । तत्र सर्वगुणान्तर्भाविनेत्येतदुत्तरवाक्येन वा सम्बध्यते । तथा हि । उत्कर्षादित्यस्य प्रतिपदं भाष्ये उत्कृष्टत्वादिति ।

ननु कथमिदं ज्ञायते सूत्र इति । उत्कर्षादित्यनेन ब्रह्मशब्दार्थस्योत्कर्षात् उत्कर्षसत्वात् कोऽर्थः उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादित्युक्तम् । भाष्ये तु भगवतः उत्कृष्टत्वादित्युक्तं कथमेकार्थ्यमित्यतः आह । तत्र सर्वगुणानामन्तर्भाविन भगवदुत्कृष्टत्वसिद्धेः । भगवदुत्कृष्टत्वं हि ब्रह्मत्वमिति । अत्रैवं तावद्योज्यम् । भाष्योक्तं भगवदुत्कृष्टत्वं खलु ब्रह्मत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तसूत्रोत्कर्ष इति । तथा चोत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादित्युक्ते (उत्कर्षवानुत्कृष्टो) ब्रह्मशब्दार्थ इत्यभिहिते चैक एवार्थः इति भावः । कथमुत्कर्षो ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यत उक्तम् ॥ **तत्र सर्वगुणेति** ॥ ब्रह्मशब्दप्रवृत्तिनिमित्तब्रह्मत्वे सर्वगुणान्तर्भाविन गुणोत्कर्ष एवोत्कर्ष इति कृत्वा भगवदुत्कृष्टत्वं हि ब्रह्मशब्दप्रवृत्तिनिमित्तं भवत्येवेति भावः । उक्तं चानुव्याख्याने

ब्रह्मेति च सदा ध्येयो भगवान् विष्णुरञ्जसा ।
उत्कृष्टो ब्रह्मशब्दार्थः पूर्णत्वं ब्रह्मता यतः ॥ इति ।

सुधायां चेत्थमेवानुव्याख्यामवतार्य व्याख्यायोपपादितम् । वृध्द्यर्थात् बृहतेर्धातोरन्येभ्योऽपि दृश्यत इति मनिन्प्रत्ययः । दृशि ग्रहणसामर्थ्याद्धातोः अमागमश्च । वृद्धिः पूर्णत्वमित्येक एवार्थः । ब्रह्मशब्दप्रवृत्तिनिमित्तं पूर्णत्वमेव चोत्कर्षः । हेतुहेतुमद्भावश्च भाष्य एव समर्थित इति । नन्वेवं सति पूर्णत्वापरपर्यायभगवदुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादिति हेत्वर्थः संपन्नः कथमयं परमेश्वरे ब्रह्मदृष्टिः कार्येति साध्यस्योपपादक इत्यत आह ॥ **तथा चेति** ॥ उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वे तस्य च भगवति सत्वे ब्रह्मत्वोपासनं चोत्कृष्टत्वोपासनमेवेति तदुपासनं कार्यमिति भावः ।

ननु विविधगुणोपासनेनैव भगवत्प्रसादसम्भवे किमुत्कृष्टत्वोपासनेनेत्यतः सर्वोत्कृष्टत्वोपासनस्य गुणान्तरोपासनादतिशयेन प्रसादहेतुत्वेनोत्कृष्टत्वादिति सूत्रखण्डस्य वृत्यन्तरमभिप्रेत्य तत्सूचितं साधनमित्युक्तसिद्धान्तन्यायं व्यनक्ति ॥ **सर्वोत्कृष्टत्वोपासनं चेति** ॥ न तादृशी प्रीतिरिति

(वाक्यार्थमुक्तावली)

श्रुतेरिति भावः । तथा च स्वामित्वेनानुपासने स्वस्वामिसम्बन्धाज्ञानेन मोक्षाभावेन यथा तदवश्यमुपास्यमेवमात्मनि परमेश्वरे ब्रह्मदृष्टिश्च सर्वदा कार्यैव । कुतः । उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वात्तदपि कुतः । उत्कर्षात् । अन्तर्भावितसर्वगुणत्वेन ब्रह्मत्वस्योत्कर्षरूपत्वात् । उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वेऽपि भगवतस्तथोपास्यत्वं कुतः उत्कर्षात् भगवत उत्कर्षात् भगवत उत्कृष्टत्वात् । भगवतः सर्वोत्कर्षसत्त्वेऽपि गुणान्तरोपासनपरित्यागेनैतदुपासनं कुत उत्कर्षाद् गुणान्तरोपासनादुत्कर्षेण भगवत्प्रसादसाधनत्वेनैतदुपासनस्योत्कर्षादिति सूत्रार्थः ॥ **केचिदिति** ॥ प्रतीके ब्रह्मदृष्टिः कार्या कस्मादुत्कर्षात् । एवमुपासने हि तत्र प्रतीकमुत्कर्षेण ज्ञातं भवति । तथा चोत्कर्षमपेक्ष्य ब्रह्मत्वोपासनं तत्र कार्यमिति केचित् सूत्रार्थमाहुरित्यर्थः ॥ **अतीतसूत्रेणैवेति** ॥ प्रतीकविषये ब्रह्मदृष्टिर्न कर्तव्या । स विष्णुः प्रतीकं न हीति पूर्वसूत्र एव निराकृतत्त्वादिति भावेनाव्यवहितस्य प्रतीक इत्यस्यानुवृत्तिमनभिधायात्मेति त्वित्युक्त्वाऽऽत्मशब्दस्य सप्तम्यन्ततानुवृत्तिमभिप्रेत्य परमेश्वर इत्युक्तमिति भावः ।

ननु न प्रतीक इत्यस्य प्रतीके आत्मेति स्वात्मेति बुद्धिं जह्यात् स उपासकः प्रतीकं न हीत्यर्थस्ततो न विरोध इति चेन्न । तत्रात्मशब्दस्य परमात्मपरत्वात् । द्युभ्वाद्यधिकरणे आत्मशब्दं हेतूकृत्य प्राणभृच्चेति जीवनिराकरणात् । अत एव भाष्ये सप्तम्यन्ततयानुवृत्तस्य परमेश्वर इति व्याख्यानमिति भावः । **अत्र स्मृतिं चेति** । न केवलं परकीयार्थस्य पूर्वसूत्रविरुद्धत्वं प्रत्युत स्मृतिविरुद्धत्वं चेति भावेनास्मदीयेऽर्थे स्मृतिं चाहेत्यर्थः । तेनेति च ब्रह्मतर्क इति चशब्दो युज्यते इति ज्ञेयम् । ब्रह्मदृष्ट्या सदोपास्य इत्यस्य विष्णुः पूर्ण इति शास्त्रोपदेशादिना ज्ञात्वा निदिध्यासितव्यः इत्यर्थः । तेन ब्रह्मेत्युपासनेति वाच्यम् । सूत्रे दृष्टिग्रहणेन तथोपासनेऽभ्यासपाटवाय तथैव श्रवणादिना ज्ञानपाटवं सम्पाद्यमिति रुचितमिति ज्ञातव्यम् । उत्कर्षादिति हेत्वंशे प्रमाणत्वस्फोरणायात इत्यस्यापेक्षितमध्याहरति शब्दोऽयं यत इति शेष इति । शब्दोऽयमित्यतः परं यत इति शेष इत्यर्थः ॥ **सर्वतः महत्त्वेति** ॥ ब्रह्मादिभ्यः सर्वेभ्यः इति पञ्चम्यंतात्तसिरिति भावः । आधिक्येनेत्यध्याहृत्य क्रमान्वयमाह ॥ **गुणान्तरोपासनादिति** ॥ यथाऽऽत्मदृष्टिस्तथाऽऽत्मदृष्टिश्चेत्युक्तार्थे प्रमाणतया प्रवृत्तमात्मेत्येवेत्यादिकमवतारयति ॥ **आत्मत्वेति** ॥ यदात्मेत्युपासा सर्वथा कार्या तदभावे मोक्षासिद्धेः तदा ब्रह्मत्वसंयुता तद्विषयिण्युपासना कार्यैव

(वाक्यार्थमुक्तावली)

समानन्यायत्त्वादिति स्मृत्यर्थ इति भावः । **आत्मत्वविशेषणत्वेनेति** ॥ एतेन यदा आत्मेत्युपासा वर्तते तदा ब्रह्मत्वसंयुता आत्मत्वविशेषणत्वेन ब्रह्मत्वविषयिणी कार्येति व्याख्यातं भवति । विरोधस्त्वन्यत्राप्राकृतोऽनुसन्धेयः ॥

## वाक्यार्थविवरणम्

**ब्रह्मत्वोपासनस्येति** ॥ पूर्णत्वोपासनस्येत्यर्थः ॥ **उभयथेति** ॥ आत्मत्वं सर्वथोपास्यं सम्भृत्यादिकं तु न सर्वथोपास्यमित्युभयथाऽपीत्यर्थः ॥ **साम्यमेव स्यादिति** ॥ न तु नित्योपास्यत्वमित्यर्थः । ननु गुणत्वाविशेषेण साम्येऽपि आत्मत्ववदावश्यकतया नित्योपास्यत्वं किं न स्यादित्यत आह ॥ **न च आत्मत्ववदिति** ॥ **विशेषहेतुरिति** ॥ आत्मत्वस्य नित्यदोपास्यत्वस्य श्रुतिसिद्धत्वेन श्रुतेरेव विशेषहेतुत्वादिति भावः ॥

## वाक्यार्थमञ्जरी

ब्रह्मत्वस्य पूर्णत्वस्य दृष्टिरुपासना कार्यैव कुतः उत्कर्षात् उत्कर्षस्य भगवदुत्कर्षस्य ब्रह्मपदप्रवृत्तिनिमित्तत्वादित्यर्थः । ब्रह्मत्वं ब्रह्मपदप्रवृत्तिनिमित्तत्वं तत्कथमित्यत उक्तम् ॥ **अत्र सर्वगुणान्तर्भाविनेति** ॥ अन्तर्भावितसर्वगुणत्वमेव सर्वोत्कृष्टत्वमिति भावः । ननु भगवदुत्कृष्टत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वं परमेश्वरे ब्रह्मदृष्टिः कार्येत्यत्र कथं हेतुरित्यत आह ॥ **तथा चेति** ॥ **सर्वतः** सर्वेभ्यः ।

॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

## ५. आदित्यादिमत्यधिकरणम्

**॥ ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ ६ ॥**

'चक्षोः सूर्यो अजायते'त्याद्युपासनं च देवानां कार्यमेव । स्वोत्पत्तिस्थानत्वात्स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वाच्चोपपन्नं तेषां तथोपासनम् ।

नारायणतन्त्रे च—

'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ॥
स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत् ।
अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते ॥
स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ॥
तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः' इति ॥ ६ ॥

॥ इति आदित्यादिमत्यधिकरणम् ॥ ५ ॥

### तत्त्वप्रकाशिका

अत्र भगवदपरोक्षसाधनस्याङ्गाश्रितत्वेन देवतोपासनस्यावश्यकत्वसमर्थनादस्ति शास्त्रसङ्गतिः । अन्यथा तन्न्यायेनात्मत्वस्याप्यावश्यकत्वाभावप्रसङ्गात्समर्थनीयमेतत् । भगवदङ्गाश्रितत्वेन देवतोपासनं देवानामुक्तम् । तत्र स्वस्य स्वोपत्त्यङ्गाश्रितत्वेनोपासनं विषयः । सदा सर्वथा कार्यं न वेति सन्देहः । द्विविधोपास्तिदर्शनं सन्देहबीजम् । न सदा सर्वथा तथोपासनं देवैः कार्यमिति पूर्वः पक्षः । सूर्यादीनां विविधस्थानेषु सञ्चरणेन सदा भगवच्चक्षुराद्याश्रितत्वाभावात् । सदा चक्षुराद्याश्रितत्वाभावेऽपि तथोपासनस्यानर्थफलत्वात् । गुणान्तरेषु सत्सु भगवदङ्गाश्रितत्वेन विशिष्य स्वचिन्तने कारणविशेषाभावाच्च । अतः सत्यप्याश्रयिभावसम्बन्धे तस्य सर्वथोपास्यत्वाभावात्तद्वत्स्वस्वामिभावे सत्यपि नात्मत्वोपासनमावश्यकमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ आदित्यादीति ॥** 'चक्षोः सूर्यो अजायत' इत्यादिना यदुक्तं स्वाश्रयत्वेन भगवदङ्गोपासनं

(तत्त्वप्रकाशिका)

**तदादित्यादिदेवैः सदा सर्वथा कार्यमेव । को विशेषहेतुः । मुक्तौ तत्र लयस्यापेक्षितत्वात् । उपासनस्य फलसाम्येन कार्यत्वात् । मुक्तौ तत्र लय एव कुतः । स्वोत्पत्तिस्थानत्वात् । यतो यस्योत्पत्तिस्तत्र तस्य लयनियमात् । न चान्यथोपासनप्रसङ्गादेतदयुक्तम् । नित्यं रूपान्तरेणाङ्गानां स्वाश्रयत्वादिति भावः । अतीताधिकरणसहितैतदधिकरणार्थे स्मृतिं चाह ॥ नारायणेति ॥ स्वोत्पत्त्यङ्गं स्वाश्रयत्वेन चिन्त्यम् । अत एतदुपासनस्यावश्यकत्वादुक्तमपि युक्तमिति सिद्धम् ॥**

## भावबोधः

**अङ्गाश्रितत्वेनेति ।** आत्मत्ववद्गुणत्वाविशेषेऽपि ब्रह्मत्वस्य नित्योपास्यत्वे विशेषहेत्वभावात्, ब्रह्मत्वं नोपास्यमिति पूर्वाधिकरणपूर्वपक्षवदत्रापि गुणान्तरेषु सत्सु भगवदङ्गाश्रितत्वेन विशिष्य चिन्तने कारणाभावादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । **तन्न्यायेनेति ॥** अङ्गाश्रितत्वस्यापि स्वस्वामिभावविशेषरूपत्वादिति भावः । (स्वस्य स्वोत्पत्त्यङ्गाश्रितस्यापि स्वस्वामिभावविशेषरूपत्वादिति भावः ।) **सदेति ॥** अङ्गाश्रितत्वेनोपासनं देवैः सर्वथा न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं देवानां तथोपासने फलं नास्त्युतास्तीति । तदर्थं देवानां तथोपासनं किं मिथ्योपासनमुत सदुपासनमिति । तदर्थं जगत्प्रकाशनादौ विनियुक्तानां सूर्यादीनां नित्यं भगवदङ्गाश्रितत्वं नास्त्युतास्तीति । विविधस्थानेष्वादित्यादीनां चरणाद्विष्ण्वङ्गेषु आदित्यादिमतिनियमो 'नास्तीति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **सूर्यादीनामिति ॥** तथोपासनस्येति सूर्यादीनां चक्षुराद्याश्रयत्वेन उपासनस्येत्यर्थः । स्वोत्पत्तिस्थानत्वादित्यादिभाष्यनिवर्तनीयमाह– **गुणान्तरेष्विति ॥ इत्यादिना यदुक्तमिति ॥**

'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा'

इति स्मृतिबलाद्गुणप्रतिपादकवाक्यानां ध्यानार्थत्वं सिद्धमिति भावः । 'कृत्यानां कर्तरि वा' इत्युक्तेर्भाष्ये देवानामिति षष्ठ्युपपत्तिरिति भावेनोक्तमादित्यादिदेवैरिति । आकाङ्क्षाक्रमेण स्वोत्पत्तिस्थानादित्यादिभाष्यं योजयन्नादौ मुक्तौ तत्र लयस्यापेक्षितत्वादिति भाष्यं तावद्योजयति– **मुक्ताविति ॥ नित्यं रूपान्तरेणेति ॥** स्वाश्रयत्वादिति भाष्यव्याख्यानपरेणानेन तत्कृतावेतत्कृत्यस्य प्राप्तत्वादादित्यादीनामिति न्यायविवरणमुक्ततात्पर्यकं भवति । तदक्षरार्थस्तु आदित्यादीनां तत्कृतौ विविधस्थानसञ्चरणलक्षणकृत्यकृतावपि रूपान्तरेण विष्ण्वङ्गस्थितिरूपकृत्यस्य प्राप्तत्वादिति । स्मृतावित्थंभावप्रतीतेराह– **स्वाश्रयत्वेनेति ॥**

## भावदीपः

अङ्गेषु यथाश्रयभाव इत्यत्रैव सिद्धत्वादाह ॥ **आवश्यकत्वेति** ॥ **आत्मत्वस्यापीति** ॥ एतेन यद्विशेषणतया ब्रह्मत्वदृष्टिः कार्या तदेवात्मत्वमनावश्यकमिति पूर्वोक्ताक्षेपेण शङ्कोदयात्पूर्व-सङ्गतिरपि सूचिता ॥ **देवानामुक्तमिति** ॥ अङ्गेषु यथाश्रयभाव इत्यत्रोक्तमित्यर्थः ॥ **द्विविधेति** ॥ पूर्ववज्ज्ञेयम् । विविधस्थानेष्वादित्यादीनां चरणाद्विष्ण्वङ्गेष्वादित्यादिमितिनियमो नास्तीत्यन्यत्रोक्त-प्रतिज्ञाहेतू व्यनक्ति ॥ **न सदेति** ॥ **तथेति** ॥ स्वस्य स्वोत्पत्त्यङ्गाश्रिततत्वेनेत्यर्थः । हेतोर-प्रयोजकत्वं निराह ॥ **सदा चक्षुरादीति** ॥ **अनर्थेति** ॥ न प्रतीक इत्यत्र तथोक्तेरिति भावः । उपपत्तेरिति सौत्रहेतुव्यावर्त्यं चाह ॥ **गुणान्तरेष्विति** ॥ **अत इति** ॥ उक्तहेतुद्वयादित्यर्थः ॥ **नात्मत्वेति** ॥ ननु तदाश्रितत्वस्य सर्वदा तत्राभावेन मिथ्योपासनापत्त्या अङ्गाश्रितत्वेनोपासना-योगेऽपि स्वामित्वस्य नित्यं भावात्कथं तदुपासनस्याप्यनावश्यकत्वमिति चेन्न । तदाश्रित-त्वस्याभावदशायां स्वस्वामिभावस्याप्ययोगादिति तात्पर्यात् ॥ अत्राङ्गेष्वित्यत्रोक्तोपासनं न कार्यमित्येकः पूर्वः पक्षः । तस्य कार्यत्वेऽपि न सदा सर्वथा कार्यमित्यपरः । तत्रान्त्यनिवर्तकतया भाष्यं व्याचष्टे ॥ **चक्षोरिति** ॥

**उपासनमिति** ॥ तस्यां श्रुतावुपासनापदाश्रवणेऽपि 'तमेवं विद्वानमृत इह भवति' इत्यग्रे तदपरोक्षज्ञानेन फलोक्तेरपरोक्षस्य चोपासनसाध्यत्वादर्थादुपासनं प्राप्तमिति वा आध्यानाय प्रयोजना-भावादित्युक्तदिशोपासनलाभाद्वेति भावः । उपपत्तेरिति सौत्रहेतुविवरणपरभाष्यं व्यनक्ति ॥ **को विशेषहेतुरित्यादिना** ॥ हेतोरप्रयोजकत्वं निराह ॥ **उपासनस्येति** ॥ 'तं यथा यथोपासते' इत्यादेरर्थसामान्यादित्युक्तेश्चेति भावः । हेतोरसिद्धिनिरासकतया भाष्यशेषं व्यनक्ति ॥ **मुक्ता-विति** ॥ उक्तार्थे हेतुत्वमस्य व्यनक्ति ॥ **यत इति** ॥ **नियमादिति** ॥ समाहारादित्यत्राङ्गैः पराद्ये हि देवा विसृष्टा इत्यादिभाष्योक्तश्रुतौ तथोक्तेरिति भावः । प्रागुक्ताद्यपूर्वपक्षनिरासकतया भाष्य-शेषोपयोगमाह ॥ **न चेति** ॥ प्रकृतोपयोगायार्थमाह ॥ **स्वोत्पत्तीति** ॥ **अत इति** ॥ मुक्तौ भगवदङ्गेषु प्रवेशान्यथानुपपत्तिरूपोपपत्तिबलादित्यर्थः ॥ **उक्तमपीति** ॥ आत्मत्वोपासनमपीत्यर्थः ॥

## अभिनवचन्द्रिका

**अन्यथेति** ॥ सूर्यादीनामितस्ततः सञ्चारेऽपि भगवदङ्गाश्रितत्वमेवेत्यर्थस्य समर्थनद्वाराऽङ्गाऽऽश्रितत्वेनोपासनानियमसमर्थनाभावे भगवन्तमपहाय इतस्ततः सञ्चारादेव न सर्वदा भगवन्नियम्यत्वमिति भ्रमापत्त्या प्रागुक्तमात्मत्वोपासनमयुक्तं स्यादिति शङ्का स्यादित्यर्थः ॥ **अतः सत्यपीति** ॥ कदाचिदाश्रयाश्रयिभावे सत्यपि तस्य सदातनत्वाभावेन तस्य सर्वथोपास्यत्वाभावात् तद्वत् कदाचित् स्वामिभावे सत्यपि सदातनत्वाभावान्नात्मत्वोपासनमावश्यकमित्यर्थः ॥

**पूर्वपक्षस्तु** न सदा सर्वथा तथोपासनं देवैः कार्यम् । सूर्यादीनामितस्ततः सञ्चरणेन सदा भगवदङ्गाश्रितत्वाभावात् । तथापि उपासनेऽन्यथोपासनत्वेनानर्थप्रसङ्गात् । सत्स्वपि गुणान्तरेषु स्वाश्रयत्वेन भगवदुपासने विशेषकारणाभावाच्च । अत आश्रयाश्रयिभावस्यासदातनत्वेन सर्वथोपास्यत्वाऽभावात्, तद्वत् सदातनत्वाभावेन नाऽऽत्मत्वोपासनमावश्यकमिति ।

**सिद्धान्तस्तु** 'चक्षोः सूर्योऽजायत' इत्यादिना यदुक्तं स्वाश्रयत्वेन भगवदङ्गोपासानं, तत्, आदित्यादिदेवैः सर्वथा कार्यमेव । मुक्तौ तत्र लयस्याऽपेक्षितत्वात् । न च मिथ्योपासनाप्रसङ्गः । रूपान्तरेणाङ्गानां स्वाश्रयत्वात् । अतस्तदुपासनस्यावश्यकत्वादुक्तमात्मत्वोपासनं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**अन्यथेति** ॥ सूर्यादिभिः स्वोत्पत्त्यङ्गानां स्वाश्रयत्वेनानुपासने भगवदङ्गानां देवतास्वामित्वस्यानुपासितत्वात् तन्न्यायेन यद्भगवतो ब्रह्मत्वसंयुतमात्मत्वं पूर्णस्वामित्वं उपास्यमित्यतीताधिकरणोक्तं तदसत् स्याद्यावद्विशेषबाधे सामान्यायोगादित्यनन्तरसङ्गतिरिति भावः ॥ **सदेति** ॥ देवैः स्वोत्पत्त्यङ्गाश्रितत्वेनोपासनं सदा न कार्यमुत कार्यमिति चिन्ता ॥ **तदर्थं तन्मिथ्योपासनमुत सत्योपासनमिति** । तदर्थमङ्गपरित्यागेन विविधस्थानेषु चरणमस्त्युत नास्तीति । उपपत्तेः स्वाश्रयत्वादिति सूत्रभाष्यखण्डं निरस्य दूषणान्तरमाह ॥ **गुणन्तरेष्विति** ॥ सूत्रे चशब्दो ब्रह्मदृष्ट्या समुच्चयार्थः अवधारणे च । कार्या एवेत्यध्याहृतेनान्वयः । अङ्गे प्रस्तुतभगवदङ्गविषये आदित्यादिमतय आदित्याद्याश्रयत्वेनोपासना आदित्यादिभिर्देवैः कार्या एवेति प्रतिज्ञार्थमाह **चक्षोरिति** ॥

(वाक्यार्थमुक्तावली)

स्वपक्षसाधनानन्तरं बाधकोद्धारावसर इति स्वपक्षसाधकमुपपत्तेरित्यंशं व्याकुर्वन्मुक्तौ तत्रेति भाष्यमादाववतार्य व्याचष्टे ॥ **को विशेष इति** ॥ हेतुसाधकतयाऽप्युपपत्तेरित्यंशं व्याकुर्वत्स्वोत्पत्तीति भाष्यं व्याचष्टे ॥ **कुत इति** ॥ बाधकपरिहारकतयोपपत्तेरित्येतद्व्याकुर्वन् स्वाश्रयत्वादित्यंशं व्याचष्टे ॥ **न चेति** ॥ ध्यानस्यापि ज्ञानविशेषत्वात् सङ्कल्प्योक्तमिति सुधायामुक्तमतो मतयो दृष्टिरित्याद्युक्तिः । मतय इति बहुवचनं तु यदङ्गे यस्य निवेशस्तेन तेन तथा मतिः कार्येत्यनेककर्तृकत्वद्योतनाय । अङ्ग इत्येकवचनं स्वोत्पत्यङ्गमिति स्मृत्यनुरोधेनाङ्गानामभेदसूचनाय वेति ।

## वाक्यार्थविवरणम्

**विविधस्थानेष्विति** ॥ सर्वप्राणिनां चक्षुष्षु ह्यन्तरिक्षादिस्थानेष्वित्यर्थः ॥ **स्वस्वामिभावेति** ॥ स्वस्वामिभावसम्बन्धे ॥ **उक्तमपि** ॥

## वाक्यार्थमञ्जरी

**तन्न्यायेनेति** ॥ अङ्गाश्रितत्वस्यापि स्वस्वामिभावविशेषरूपत्वादिति भावः ॥ **उक्तमङ्गावबद्धास्त्वित्यनेन** ॥ **ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ** ॥ **अङ्गे** भगवदङ्गे आदित्यादिमतयः आदित्यादेरुपासनाश्च कार्याः कुतः **उपपत्तेः** मुक्तौ तत्प्रवेशरूपफलस्यापेक्षितत्वेन तासामुपपन्नत्वादिति भावः । स्मृतावित्थंभावाप्रतीतेराह ॥ **स्वाश्रयत्वेनेति** ॥

॥ इति आदित्यादिमत्यधिकरणम् ॥ ५ ॥

## ६. आसनाधिकरणम्

**॥ ॐ आसीनस्सम्भवात् ॐ ॥ ७ ॥**

सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात् । तदा विक्षेपाल्पत्वेन सम्भवात् ॥ ७ ॥

### तत्त्वप्रदीपिका

सर्वदोपास्तिः कार्येत्युक्तम् । अनुव्याख्यायां च–

'श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित् ।
अत्यशक्ये तु निद्रादौ पुनरेव समारभेत्' इति ॥

अतः स्थितिगत्यासनादिष्वविशेष इत्यत आह– आसीनस्सम्भवात् ॥ आसनानामपि पद्मस्वस्तिकादीनां यथासम्भवं ग्रहणम् । यत्रैकाग्रतेत्युच्यमानन्यायस्यात्राप्यनुसर्तव्यत्वात् ॥

### तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनध्याने आसनादिनियमसमर्थनादस्ति शास्त्रसङ्गतिः । अन्यथा तदुपदेशानर्थक्यप्रसङ्गात्समर्थनीयमेतत् । प्रकृतभगवदुपासनार्थमासनाद्युच्यते 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इत्यादौ । तदासनमत्र विषयः । सर्वथापेक्षितं न वेति सन्देहः । द्विविधसाधनदर्शनं सन्देहबीजम् । नासनं सर्वथाऽपेक्षितमिति पूर्वः पक्षः । तत्कृत्याभावात् । भगवत्संदर्शनार्थं हि सर्वमुपासनाद्यन्वेष्टव्यं प्रयोजनान्तराभावात् । तस्य च ज्ञानस्य मनसो भगवद्विषयत्वमात्रेण सम्भवात्किमस्त्यासनादिना कृत्यम् । न च वाच्यं मनसः सम्यग्भगवद्विषयत्वस्यैव ज्ञानसाधनत्वेऽपि तदर्थमेवासनमिति । आसनं विना मनसो भगवति निवेशनासम्भवे 'स्मर्तव्यः सततं विष्णुः' इत्यादिविधीनामनुपपत्तिप्रसङ्गात् । तस्मादासनादेरावश्यकत्वाभावात्तदुपदेशाप्रामाण्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आसीन इति** ॥ जिज्ञासुरासीन एवोपासनं विशेषतः सर्वथा कुर्यात् । उपासनस्यैव ज्ञानसाधनत्वेऽपि तस्यासने सत्येव सम्भवादन्यथाऽसम्भवात् । आसीनस्य चित्तविक्षेपासम्भवादन्यस्य तन्नियमात् । नन्वासीनस्योपासने सर्वदोपासनाभावः । मैवम् । सदोपासनं कार्यम् । आसनं चापेक्षितमेवेति भावः ॥

## भावबोधः

**आसनादिनियमसमर्थनादिति ॥** पूर्वाधिकरणेषु प्रधानस्य ध्यानस्यावश्यकत्वमुक्त्वा इदानीं तदङ्गरूपासनादिनियमसमर्थनादनन्तरसङ्गतिरिति भावः । यद्यपि 'आ प्रायणात्' इत्येतदनन्तरमेतद्भवेत्; तथापि यथा जिज्ञासूनामासनादिनियमस्य चित्तविक्षेपनिवारकत्वेन ध्यानस्य ज्ञानजनकत्वापादकत्वं न तथा ज्ञानिनां तेषां चित्तविक्षेपाभावादिति विशेषप्रदर्शनाय ततः पूर्वमेतत्करणमिति भावः । अत एव वक्ष्यते जिज्ञासुरासीन एवेति । आसनादिनियमेत्यादौ 'स्मरन्ति च' इत्यादिसूत्रानुरोधेन 'आदि'पदप्रयोग इत्यवधेयम् । अत एव न्यायविवरणे आसनादिनेत्यादिपदप्रयोग इति ज्ञेयम् ॥ **आत्मविशुद्धय इत्यादाविति ॥** 'अत्रादि'पदेन 'कायशिरोग्रीवम्' इत्युदाहरिष्यमाणवाक्यसङ्ग्रहः । तदासनमत्र विषय इत्यादौ आसनपदमन्यविषयोपलक्षणमिति बोद्धव्यम् ॥ **सर्वथेति ॥**

अत्रासनादिसर्वथापेक्षितं न भवत्युत भवतीति चिन्ता । तदर्थमासनं विना मनसः सम्यग्भगवद्विषयत्वं सम्भवत्युत न सम्भवतीति । तदर्थमासनस्य सर्वापेक्षितत्वे 'स्मर्तव्यः सततं विष्णुः' इत्यादिविधयो विरुध्यन्ते उत न विरुध्यन्त इति । तदर्थमासनादिनियमग्राहकप्रमाणस्य सर्वदोपासनविधीनां किमेकविषयत्वमुत भिन्नविषयत्वमिति । भिन्नविषयत्वेऽपि प्रत्याहारादिनैवासननियमसाध्यत्वेनाभिमतश्चित्तविक्षेपपरिहारो भवत्युत न भवतीति । तदर्थमासनादीनामावश्यकत्वे प्रमाणं नास्त्युतास्तीति । तदर्थमासनादिनियमप्रतिपादकप्रमाणस्य देशकालादिनियमप्रतिपादकप्रमाणसमानयोगक्षेमत्वमस्त्युत नास्तीति ।

ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **तत्कृत्याभावादित्यादिना ॥** 'ज्ञानस्य' इत्यनन्तरम् 'मनसः' इति पदमध्याहृत्योदाहृतं न्यायविवरणं योजयति– **तस्य च ज्ञानस्येति ॥** अध्याहाराभावे ज्ञानस्य सम्यग्भगवद्विषयत्वं ज्ञानपूर्तिहेतुत्वेन प्रतीयते । तच्चानुपपन्नमिति भावः । सर्वदोपासनं कुर्वन्नपीत्यादिभाष्याद्यनुरोधेनाह– **आसनं विनेति ।**

'असीनस्य भवेत्तत्तु न शयानस्य निद्रया ।
स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवात् ॥'

(भाववोधः)

इति स्मृत्यनुसारेण तदा विक्षेपाल्पत्वेनेति भाष्यं व्याचष्टे– **आसीनस्य चित्तविक्षेपाभावादन्यस्य तन्नियमादिति** ॥ ध्यानविरोधिबहुचित्तविक्षेपाभावादित्यर्थः । आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेरिति न्यायविवरणं यदि निश्चलत्वं मनसो विवक्षितं तदासीनस्य चित्तविक्षेपाभावादित्यनेन व्याख्यातमिति द्रष्टव्यम् । तत्र निश्चलत्वादीत्यादिपदेनासनादिपदोक्तस्वनासिकाग्रावलोकनादिनिबन्धनान्यदर्शनाभावादिग्रहणम् । यदि निश्चलत्वपदेन शरीराचलत्वं विवक्षितं तदा तच्चासने सत्येवेति तदावश्यकमित्यनेन व्याख्यातं भवति । अस्मिन् पक्षे न्यायविवरणगतं द्वितीयादिपदेन मनसो निश्चलत्वमपि ग्राह्यम् । सर्वदोपासनं कुर्वन्निति भाष्याभिप्रायमाह– **सर्वदोपासनं कार्यमिति** ॥

## भावदीपः

**ध्यान इति** ॥ स्मरणोपासनं चेति स्मृत्योपासनस्य द्वैविध्यात्तत्र स्मरणरूपोपासने आसनानियमेऽपि ध्यानरूपोपासने आसनादिनियमसमर्थनादित्यर्थः । सूत्रे आसनमात्रोक्तिरुपलक्षणम् । स्मरन्ति चेत्यत्र तथोक्तेरिति भावः । एतेनातीतनयैरुक्तमविवेचितनित्योपासनमुपजीव्येहासनादिनियमाक्षेपेण शङ्कोदयाद्वा प्राङ्नित्यशः कार्यत्वेनोक्तोपासनस्येह ध्यानस्मरणभेदेन विवेकपूर्वमितिकर्तव्यताकथनाद्वा पूर्वसङ्गतिरिति सूचितम् । समर्थनफलमाह ॥ **तदुपदेशेति** ॥ नन्वेतावता प्रागुक्तप्रमेयाविरोधाद् व्यर्थेयं चिन्तेति चेत् । न । **'उपविश्यासने युञ्ज्यात्'** इत्याद्युपदेशानर्थक्ये प्रागुक्तेतिकर्तव्यतोपदेशोऽप्यनाश्वासप्रसङ्गादिति तात्पर्यात् । षष्ठगीतावाक्यमाह ॥ **उपविश्येति** ॥ **द्विविधेति** ॥ आत्मत्वाद्युपासनं सर्वथापेक्षितम् । गुणान्तरोपासनं तु न तथा दृष्टमिति भावः । ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमित्यन्यत्रोक्तप्रतिज्ञामुक्त्वा तत्र हेतुमध्याहृत्य तदुपपादकत्वेन तत्रोक्तहेतुं योजयति ॥ **नासनमित्यादिना** ॥ **भगवत्सन्दर्शनार्थं हीति** ॥ प्रकाशश्च कर्मण्यभ्यासात् तन्निर्धारणार्थनियम इत्यादौ तथोक्तेरिति भावः ॥ **तस्येति** ॥ दर्शनस्येत्यर्थः । तस्य सम्भवादिति पूर्तेरित्यस्यार्थः ॥ **मनस इति** ॥ एतेन ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदेन मनसो ग्रह इति सूचितम् । सौत्रहेतुव्यावर्त्यमन्यत्रोक्तमुक्त्वा ध्यानाच्चेति सूत्रव्यावर्त्यं शङ्कापूर्वं व्यनक्ति ॥ **न च वाच्यमित्यादिना** ॥ 'स्मर्तव्यः सततं विष्णुः' इत्यादिसदाचारस्मृत्युक्तवचनम् ॥ **तस्मादिति** ॥ कृत्याभावादित्यर्थः । उपासनं कुर्वन्नित्यस्यार्थं वदन् भाष्यं

## भावबोधः

**आसनादिनियमसमर्थनादिति ॥** पूर्वाधिकरणेषु प्रधानस्य ध्यानस्यावश्यकत्वमुक्त्वा इदानीं तदङ्गरूपासनादिनियमसमर्थनादनन्तरसङ्गतिरिति भावः । यद्यपि 'आ प्रायणात्' इत्येतदनन्तरमेतद्भवेत्; तथापि यथा जिज्ञासूनामासनादिनियमस्य चित्तविक्षेपनिवारकत्वेन ध्यानस्य ज्ञानजनकत्वापादकत्वं न तथा ज्ञानिनां तेषां चित्तविक्षेपाभावादिति विशेषप्रदर्शनाय ततः पूर्वमेतत्करणमिति भावः । अत एव वक्ष्यते जिज्ञासुरासीन एवेति । आसनादिनियमेत्यादौ 'स्मरन्ति च' इत्यादिसूत्रानुरोधेन 'आदि'पदप्रयोग इत्यवधेयम् । अत एव न्यायविवरणे आसनादिनेत्यादिपदप्रयोग इति ज्ञेयम् ॥ **आत्मविशुद्धय इत्यादाविति ॥** 'अत्रादि'पदेन 'कायशिरोग्रीवम्' इत्युदाहरिष्यमाणवाक्यसङ्ग्रहः । तदासनमत्र विषय इत्यादौ आसनपदमन्यविषयोपलक्षणमिति बोद्धव्यम् ॥ **सर्वथेति ॥**

अत्रासनादिसर्वथापेक्षितं न भवत्युत भवतीति चिन्ता । तदर्थमासनं विना मनसः सम्यग्भगवद्विषयत्वं सम्भवत्युत न सम्भवतीति । तदर्थमासनस्य सर्वापेक्षितत्वे 'स्मर्तव्यः सततं विष्णुः' इत्यादिविधयो विरुध्यन्ते उत न विरुध्यन्त इति । तदर्थमासनादिनियमग्राहकप्रमाणस्य सर्वदोपासनविधीनां किमेकविषयत्वमुत भिन्नविषयत्वमिति । भिन्नविषयत्वेऽपि प्रत्याहारादिनैवासननियमसाध्यत्वेनाभिमतश्चित्तविक्षेपपरिहारो भवत्युत न भवतीति । तदर्थमासनादीनामावश्यकत्वे प्रमाणं नास्त्युतास्तीति । तदर्थमासनादिनियमप्रतिपादकप्रमाणस्य देशकालादिनियमप्रतिपादकप्रमाणसमानयोगक्षेमत्वमस्त्युत नास्तीति ।

ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **तत्कृत्याभावादित्यादिना ॥** 'ज्ञानस्य' इत्यनन्तरम् 'मनसः' इति पदमध्याहृत्योदाहृतं न्यायविवरणं योजयति– **तस्य च ज्ञानस्येति ॥** अध्याहाराभावे ज्ञानस्य सम्यग्भगवद्विषयत्वं ज्ञानपूर्तिहेतुत्वेन प्रतीयते । तच्चानुपपन्नमिति भावः । सर्वदोपासनं कुर्वन्नपीत्यादिभाष्याद्यनुरोधेनाह– **आसनं विनेति ।**

'असीनस्य भवेत्तत्तु न शयानस्य निद्रया ।
स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवात् ॥'

(भावबोधः)

इति स्मृत्यनुसारेण तदा विक्षेपाल्पत्वेनेति भाष्यं व्याचष्टे– **आसीनस्य चित्तविक्षेपाभावादन्यस्य तन्नियमादिति ॥** ध्यानविरोधिबहुचित्तविक्षेपाभावादित्यर्थः । आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेरिति न्यायविवरणं यदि निश्चलत्वं मनसो विवक्षितं तदासीनस्य चित्तविक्षेपाभावादित्यनेन व्याख्यातमिति द्रष्टव्यम् । तत्र निश्चलत्वादीत्यादिपदेनासनादिपदोक्तस्वनासिकाग्रावलोकनादिनिबन्धनान्यदर्शनाभावादिग्रहणम् । यदि निश्चलत्वपदेन शरीराचलत्वं विवक्षितं तदा तच्चासने सत्येवेति तदावश्यकमित्यनेन व्याख्यातं भवति । अस्मिन् पक्षे न्यायविवरणगतं द्वितीयादिपदेन मनसो निश्चलत्वमपि ग्राह्यम् । सर्वदोपासनं कुर्वन्निति भाष्याभिप्रायमाह– **सर्वदोपासनं कार्यमिति ॥**

## भावदीपः

**ध्यानं इति ॥** स्मरणोपासनं चेति स्मृत्योपासनस्य द्वैविध्यात्तत्र स्मरणरूपोपासने आसनानियमेऽपि ध्यानरूपोपासने आसनादिनियमसमर्थनादित्यर्थः । सूत्रे आसनमात्रोक्तिरुपलक्षणम् । स्मरन्ति चेत्यत्र तथोक्तेरिति भावः । एतेनातीतनयैरुक्तमविवेचितनित्योपासनमुपजीव्येहासनादिनियमाक्षेपेण शङ्कोदयाद्वा प्राङ्नित्यशः कार्यत्वेनोक्तोपासनस्येह ध्यानस्मरणभेदेन विवेकपूर्वमितिकर्तव्यताकथनाद्वा पूर्वसङ्गतिरिति सूचितम् । समर्थनफलमाह ॥ **तदुपदेशेति** ॥ नन्वेतावता प्रागुक्तप्रमेयाविरोधाद् व्यर्थेयं चिन्तेति चेत् । न । **'उपविश्यासने युञ्ज्यात्'** इत्याद्युपदेशानर्थक्ये प्रागुक्तेतिकर्तव्यतोपदेशेऽप्यनाश्वासप्रसङ्गादिति तात्पर्यात् । षष्ठगीतावाक्यमाह ॥ **उपविश्येति** ॥ **द्विविधेति** ॥ आत्मत्वाद्युपासनं सर्वथापेक्षितम् । गुणान्तरोपासनं तु न तथा दृष्टमिति भावः । ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमित्यन्यत्रोक्तप्रतिज्ञामुक्त्वा तत्र हेतुमध्याहृत्य तदुपपादकत्वेन तत्रोक्तहेतुं योजयति ॥ **नासनमित्यादिना** ॥ **भगवत्सन्दर्शनार्थं हीति** ॥ प्रकाशश्च कर्मण्यभ्यासात् तन्निर्धारणार्थनियम इत्यादौ तथोक्तेरिति भावः ॥ **तस्येति** ॥ दर्शनस्येत्यर्थः । तस्य सम्भवादिति पूर्तेरित्यस्यार्थः ॥ **मनस इति** ॥ एतेन ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदेन मनसो ग्रह इति सूचितम् । सौत्रहेतुव्यावर्त्यमन्यत्रोक्तमुक्त्वा ध्यानाच्चेति सूत्रव्यावर्त्यं शङ्कापूर्वं व्यनक्ति ॥ **न च वाच्यमित्यादिना** ॥ 'स्मर्तव्यः सततं विष्णुः' इत्यादिसदाचारस्मृत्युक्तवचनम् ॥ **तस्मादिति** ॥ कृत्याभावादित्यर्थः । उपासनं कुर्वन्नित्यस्यार्थं वदन् भाष्यं

(भावदीपः)

व्याचष्टे ॥ **जिज्ञासुरिति** ॥ अपिपदार्थं वदन्नेव भाष्यशेषं व्याचष्टे ॥ **उपासनस्यैवेत्यादिना** ॥ सर्वदेति पदतात्पर्यं शङ्कापूर्वं व्यनक्ति ॥ **आसीनस्येति** ॥

## अभिनवचन्द्रिका

**सर्वथाऽपेक्षितं न वेति** ॥ सर्वथापेक्षितमेव वा, उत कृताकृतमितिसंदेह इत्यर्थः ॥ **द्विविधेति** ॥ द्विविधानि लोके साधनानि दृश्यन्ते । कानिचिदवश्यंभावीनि । तद्यथा पाककर्तुर्धान्यादीनि कानिचित्कृताकृतानि । तद्यथा तस्यैव दर्विपिठरादीनि, तदुभयदर्शनं सन्देहबीजमित्यर्थः । **नासनमिति** ॥ नासनं सर्वथाऽपेक्षितम् । अपि तु कृताकृतमित्यर्थः ॥ **तत्कृत्याभावादिति** ॥ तदावश्यकत्वापादकानन्यसाध्यकृत्याभावादित्यर्थः ॥ **तदुपदेशाप्रामाण्यमिति** ॥ पाक्षिक-मनुपादानलक्षणमप्रामाण्यं स्यादित्यर्थः । स्थातव्यमित्युपलक्षणमिति ॥ यस्मिन्काले यस्मिन्नासने मनः प्रसादः स एव कालादिराश्रयणीय इत्यपि ग्राह्यमिति भावः ॥

## वाक्यार्थमुक्तावली

आदित्यादिमतानां सर्वदा कर्तव्यत्वे ध्यानार्थं शास्त्रोक्तासननियम इत्याक्षिप्य तदविरोधे-नासननियमसाधनादनन्तरसङ्गतिः ॥ **आसनादीति** ॥ अत्रासनादीत्यादिपदेन दृष्टेरचलत्वादि ग्रहणम् । उक्तं च तत्त्वप्रदीपे । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इत्यादेर्दृष्टेरचलत्वमप्यपेक्षितमिति ॥ **सर्वथेति** ॥ आसनादिर्नावश्यकं उत आवश्यक इति चिन्ता । तदर्थमासनं विनापि भगवति मनोनिवेशः सम्भवत्युत न सम्भवतीति । तदर्थमासनस्य सर्वथा अपेक्षितत्वे स्मर्तव्यः सतत-मित्यादिस्मृतयो विरुध्यन्त उत नेति । सिद्धान्ते आसनस्य सार्थक्योक्तेस्तद्व्यवच्छेद्यं तद्वैय्यर्थ्यं पूर्वपक्षे हेतुमाह ॥ **तत्कृत्याभावादिति** । तत्कथमित्यतः किमासनस्य ज्ञानातिरिक्तं फलमुत ज्ञानम् । द्वितीयेऽपि किं साक्षादासनस्य न हेतुत्वमुतोपासनाङ्गतया । उपासनाङ्गतयेत्यत्रापि वक्तव्यम् । आसनस्य तदङ्गत्वमुपासनेन ज्ञाने जनयितव्ये प्रयाजादिवत्फलोपकारितया । उत मनसस्सम्यक् तद्विषयत्वरूपोपासनोत्पत्तावेव व्रीहिप्रोक्षणादिवत्साधनोपकार्यङ्गत्वमिति विकल्पान् हृदि निधायाद्यं दूषयति ॥ **भगवद्दर्शनार्थमिति** ॥ साङ्गस्योपासनादिकलापस्यैव भगवद्दर्शनार्थमेव द्रष्टव्य इति दर्शनानुवादेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति विहितत्वेन प्रयोजनान्तरा-

(वाक्यार्थमुक्तावली)

भावात् सुतरामासनस्येति भावः । एतेन द्वितीय आद्येऽपि निरस्तः । आसनस्य साक्षात्कारजनकत्वायोगात् । प्रथमायाः प्रमाणत्वात् । उपासनाङ्गतयेत्यत्राप्याद्यं पराचष्टे ॥ **तस्य चेति** ॥ **भगवद्विषयत्वमात्रेणेति** । न त्वासनेनेत्यर्थः । एतेन सम्भवादिति सूत्रखण्डेनासनस्य सार्थक्योक्त्या व्यवच्छेद्यः संज्ञेत्युक्तन्यायो ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना कार्यमिति न्यायविवरणानुसारेण स्पष्टितो भवति । तत्र ज्ञानस्य करणव्युत्पत्या मनसस्सम्यक् तद्विषयत्वमात्रेण ज्ञानस्यापरोक्षस्य पूर्तेर्लाभादावृत्य योज्यम् ।

द्वितीयमाशङ्क्य निराकरोति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतस्सर्वदोपासनं कुर्वन्नप्यासीनो विशेष्यत इति भाष्येण ध्यानाच्चेति सूत्रेण निरस्यं हेतुमाह ॥ **आसनमिति** ॥ उपासनं कुर्वन्नित्यस्य ज्ञानाय विचारं कुर्वन्नित्यर्थमभिप्रेत्याह ॥ **जिज्ञासुरिति** ॥ एतेन जिज्ञासुत्वान्नासनस्य ज्ञानातिरिक्तं फलमित्युक्तं भवति । आसनस्य नियमार्थमुक्तमासीन एवेति । भाष्ये कुर्यादित्यत्राप्युपासनमित्यन्वेतीति भावेनोपासनं विशेषतः कुर्यादित्युक्तम् । नन्वासनस्य ज्ञानसाधनत्वं न साक्षात् किं तु उपासनाङ्गतया अङ्गत्वमिति नोपासनापूर्तिमतः फलोपकारितयोपासनापरिपाकवत आसनव्यतिरेकेण फलव्यभिचाराभावादित्यतः फलोपकारित्वाभावेऽप्युपासनोत्पत्तावेवोपयोगित्वमिति भावेन प्रवृत्तमपि तदसम्भाव्यम् । अत्र अपीत्यस्योपासनस्यैव ज्ञानसाधनत्वेऽपीत्यर्थः । तस्येति शेषः । तदेत्यस्यासने सत्येवेत्यर्थ इत्यभिप्रेत्य व्याचष्टे **उपासनस्येति** ॥ एवकारव्यावर्त्यमाह ॥ **अन्यथेति** ॥ आसने सत्येव ध्यानसम्भवः कथमित्यतो भाष्ये तदा चित्तविक्षेपाल्पत्वेनेत्युक्तं तद्व्याचष्टे ॥ **आसीनस्य चित्तविक्षेपासम्भवात्** ॥ ध्यानविरोधिबहुचित्तविक्षेपाभावादित्यर्थः । स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवादिति स्मृत्यनुसारेणाह ॥ **अन्यथेति** ॥ एतेन विशेषकार्यमित्युक्तन्यायोऽपि सूत्रभाष्यारूढो दर्शितो भवति । सर्वदोपासनं कुर्वन्नप्यासीन इति भाष्यं सर्वदोपासनस्योपासनार्थमासनस्य सर्वथापेक्षितत्त्वस्याविरोधप्रतिज्ञारूपमिति भावेन तद्व्यावृत्त्य शङ्काप्रदर्शनपूर्वं व्याचष्टे ॥ **आसीनस्येति** ॥

## वाक्यार्थविवरणम्

**तदुपदेशेति** ॥ आसनादिनियमप्रतिपादकयोगशास्त्रेत्यर्थः ॥ **द्विविधेति** ॥ ब्राह्मणानां पञ्चमहायज्ञरूपं साधनमपेक्षितम् । कृष्यादिरूपसाधनमनपेक्षितमित्यर्थः ॥ **तदर्थमेवेति** ॥ मनसो

(वाक्यार्थविवरणम्)

भगवद्विषयत्वार्थमेवेत्यर्थः ॥ **आसीन एवेति** ॥ आसने उपविष्ट एवेत्यर्थः । शङ्कते ॥ **आसीनस्येति** ॥ एतदित्यस्य विवरणं सर्वदेत्यादि ॥

## वाक्यार्थमञ्जरी

**तदुपदेशेनेति** ॥ आसनप्रतिपादकागमवैय्यर्थ्यप्रसङ्गादित्यर्थः ॥ **उपविश्येति** ॥ आसने उपविश्यात्मविशुद्धये योगं युञ्ज्यादित्यन्वयः ॥ **अनुपपत्तीति** ॥ सर्वदा आसनस्थत्वासम्भवेन मनसो भगवति निवेशनासम्भवादिति भावः ॥ ॐ आसीनः सम्भवात् ॐ ॥ आसीनः आसने उपविष्ट एवोपासनं कुर्यात् कुतः सम्भवात् तस्यैवोपासनासम्भवादित्यर्थः ॥ **चित्तविक्षेपासम्भवादिति** ॥ ध्यानविरोधिबहुचित्तविक्षेपाभावादित्यर्थः ॥ शङ्कते ॥ **आसीनस्येति** ॥

## सूत्रभाष्यम्

**॥ ॐ ध्यानाच्च ॐ ॥ ८ ॥**

**'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।**
**स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥**
**नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ।**
**आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥**
**स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।**
**स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशय' इति नारायणतन्त्रे ॥**

**अतो ध्यानत्वाच्च ॥**

## तत्त्वप्रदीपिका

**ध्यानाच्च ॥ स्मरणं सर्वदा योग्यम्, स्मरणं विच्छेदेन मनसो वृत्तिः सर्वदा स्थितिगत्यादिष्वपि योग्यम् । यस्य तु भावनासंस्कारबलान्न मनस्ततो व्यावर्तते तस्य सर्वदाऽपि न दोषः । परवशतयैव तत्प्राप्तेः । तस्य च तदन्यत्रासक्तचित्तस्याप्यासने सोपास्तिः सातिशया भवति । तच्चाह– सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यादिति ॥**

## तत्त्वप्रकाशिका

**नन्वेतद्विरुद्धं सर्वदोपासनमासनस्य सर्वथापेक्षितत्वं च । तत्र सर्वदोपासनमेवोपादेयं विहितत्वात् । अतो नासनमावश्यकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य सप्रमाणकं व्याचष्टे ।। ध्यानाच्चेति ।। न सर्वदोपासनासननियत्योर्विरोधादासनस्य नावश्यकत्वम् । उपासनं हि द्वेधा भवति । स्मरणं ध्यानमिति तत्र स्मरणस्य सर्वदा योग्यत्वात्सर्वदोपासनविधेस्तद्विषयतयोपपत्तेः । उपासनविशेषस्य च ध्यानत्वात्तस्य चासनमन्तरेणासम्भवादासनस्यावश्यकत्वं सिध्यति । न च स्मरणेनैवालम् । ध्यानस्य ततोऽधिकत्वात् । कुत एतत् । यतः स्मृतावुक्तमत एवेति भावः ।।**

## भावबोधः

'ध्यानाच्च' इति सौत्रनिर्देशो भावप्रधान इत्यभिप्रेत्य भाष्ये ध्यानत्वाच्चेत्युक्तम् । तद्व्याचष्टे– **उपासनाविशेषस्य ध्यानत्वादिति** । अनेन सूत्रभाष्ययोरुपासानाविशेष इत्युक्तं भवति । अत इति भाष्यं तदुक्तहेत्वाकाङ्क्षोत्थापनपूर्वकं व्याचष्टे– **कुत एतदित्यादिना** ।। एतत् उपासनं हि द्वेधा भवतीत्यादिनोक्तमित्यर्थः ।। **यतः स्मृतावुक्तमिति** ।। **उपासनं द्वेधा भवतीत्यादिना** ।। एवं स्मृतियोजनां सूचयति– **स्मरणेति** ।। लिङ्गव्यत्ययोऽविभक्तिकं वा । उपासनं स्मरणं ध्यानात्मकं चेति, द्विधैव । तत्र स्मरणमेव सर्वदा योग्यम् । ध्यानरूपोपासनमासन एव भवति । ध्यानस्वरूपप्रदर्शनपूर्वकं तस्यासनादिनियमसापेक्षत्वस्यान्वयव्यतिरेकाभ्यामुपपादनम् । **नैरन्तर्यमित्यादिना** ।। सुशकेन स्मरणेनैवालम्; किं ध्यानेनेत्यत उक्तम्– **स्मरणात् परममिति** ।।

## भावदीपः

**विहितत्वादिति** ।। यद्यपि 'उपविश्यासने युञ्ज्यात्' इत्यादावपि युंज्यात् उपासीतेति यत् तदासने उपविश्येति योगानुवादेनासनमपि विहितमेव तथाप्युपासनस्य श्रुतिविहितत्वात्तस्य स्मृतिविहितत्वात् श्रुतिस्मृत्योर्विरोधे श्रुतिविहितमेवोपादेयम् । न तु स्मार्तम् । विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति जैमिनिसूत्रादिति भावः । यद्वा आसीतेति स्पष्टविधेरभावादिति भावः । चशब्दः शङ्कानिरासक इति भावेन चशब्दार्थं वदति ।। **न सर्वदेति** ।। अध्याहारो वा आसीन एवोपासीतेत्यनुवृत्तस्य भावार्थो वा । स्मृत्युक्तेर्भावमाह ।। **उपासनमिति** ।। आसीनस्येत्यादि-

(भावदीपः)

स्मृतिशेषभावमाह ॥ **तस्य चेति** ॥ स्मरणादित्यादिस्मृतिशेषोपयोगमाह ॥ **न चेत्यादिना** ॥ **कुत एतदिति** ॥ प्रागुक्तं सर्वं कुतो मानादित्यर्थः । भाष्यं योजयति ॥ **यत इति** ॥ उपासनस्य द्वैविध्यं यतश्च स्मरणोपासनं नित्ययोग्यमपि ध्यानमासनं विना न युक्तम् । यतश्च स्मरणात् ध्यानमधिकं अत आसनापेक्षयोच्यमानस्य ध्यानत्वादासनमावश्यकमिति भाष्यार्थ इति भावः ॥

## वाक्यार्थमुक्तावली

भावप्रधाननिर्देशः । आसीनेन क्रियमाणस्योपासनाविशेषस्येति शेषः । आसीन एवोपासनं कुर्यादित्यविरुद्धमित्यविरोधसमुच्चयार्थं चशब्दः । यद्वा सर्वदा कर्तव्यस्मरणत्वादुपासनाविशेषस्य च ध्यानत्वादिति समुच्चयार्थः । यद्वा ध्यानस्य स्मरणाधिक्यप्रतिपादनादित्यर्थः । 'समुच्चये तथाधिक्ये न्यूनत्वे च प्रयुज्यते' इति वचनात् स्मृतिसूचनार्थश्चेति भावेन व्याचष्टे ॥ **न सर्वदेत्यादिना** ॥ अत इति भाष्यं तदुक्तहेत्वाकाङ्क्षोत्थापनपूर्वं व्याचष्टे ॥ **कुत इति** ॥ एतत् ध्यानस्य स्मरणभेदे-नोपासनाद्वैविध्यं ध्यानस्याधिक्यमित्यादिकम् । स्मृतौ स्मरणेति भिन्नं पदम् । लिङ्गव्यत्यास-श्छान्दसः । तथा चोपासनं स्मरणात्मकं ध्यानात्मकं चेति द्विधेति योज्यम् । स्मरणं विच्छेदेन सर्वदा गत्यासनादिष्वपि योग्यम् ।

## वाक्यार्थविवरणम्

ननु उभयोर्विरुद्धत्वे तन्मध्ये किमावश्यकतयोपादेयं किं नेत्यत आह ॥ **तत्रेति** ॥ कुतो नालमित्यत आह ॥ **ध्यानस्येति** ॥

## वाक्यार्थमञ्जरी

तर्ह्यासनमेव कुत इत्यत आह ॥ **तत्रेति** ॥ ॐ ध्यानाच्च ॐ ॥ आसीनेन क्रियमाणस्य ध्यानत्वादविरोध इत्यर्थः ॥ **एतदिति** ॥ उपासनं हि द्विविधा भवतीत्यादिनोक्तमित्यर्थः । भाष्ये उपासनं स्मरणं ध्यानात्मकं चेति द्विविधैवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥ ९ ॥**

(सूत्रभाष्यम्)

'अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् ।
चलने तु शरीरस्य चञ्चलं तु मनो भवेत्' इति ब्रह्माण्डे ॥ ९ ॥

## तत्त्वप्रदीपिका

निरन्तरमनोवृत्तिरूपं हि ध्यानम् । तन्मनसश्चलने न सम्भवति । तच्च सवृत्तिकस्य मनसोऽचलत्वं शरीरस्याचलत्वमपेक्ष्यैव भवति । चकारादनिद्रत्वं च । तदुभयं चासीनस्यैव सम्भवति । तस्मादासनापेक्षत्वादचलत्वादेरासीन एवोपासनं विशेषतः कुर्यात् । तच्चाचलत्वं शरीरस्य समत्वमपेक्ष्यैव भवति ।

## तत्त्वप्रकाशिका

ननु ध्यानार्थमपि नासनमावश्यकं प्रत्याहारादिना चित्तविक्षेपपरिहारादित्याशङ्कां परिहरत्सूत्रं पठित्वा स्मृत्यैव व्याचष्टे ॥ **अचलत्वं चेति** ॥ न केवलं प्रत्याहारादिना विक्षेपाभावो भवति किं तु शरीराचलत्वं चापेक्ष्य । तच्चासने सत्येवेति तदावश्यकमिति भावः ॥

## भावदीपः

उपासनेमासनसापेक्षं ध्यानरूपत्वात्तस्येत्युक्त हेतोरप्रयोजकत्वशङ्कानिरासकतयोत्तरयोगमवतारयति ॥ **नन्विति** ॥ प्रत्याहारो नाम इन्द्रियाणां विषयेभ्य उपसंहारः । धैर्यादिरादिपदार्थः । चशब्दार्थोक्तिपूर्वं सूत्रार्थमाह ॥ **न केवलमिति** ॥ अपेक्ष्य भवतीत्यन्वयः ।

## वाक्यार्थमुक्तावली

प्रत्याहारादिनेत्यादिपदेन दुर्जनसङ्गवर्जनं गृह्यते । अचलत्वं मनसो विक्षेपाभावः न केवलं प्रत्याहारादिना भवति किन्तु शरीरस्याचलत्वमपेक्ष्य भवति । शरीराचलत्वं चासनमपेक्ष्य भवति । अत आसीन एवोपासनं कुर्यादित्यावृत्या सूत्रार्थमाह ॥ **न केवलमिति** ॥

## वाक्यार्थविवरणम्

प्रत्याहारो नाम विषयेभ्यो मनसः समाकर्षणम् ॥

## वाक्यार्थमञ्जरी

**प्रत्याहारेति** ॥ इन्द्रियाणां विषयेभ्य आहरणेत्यर्थः । न केवलं प्रत्याहारादिना किन्तु शरीरस्याचलत्वं चापेक्ष्य चित्तविक्षेपाभावो भवतीत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ स्मरन्ति च ॐ ॥ १० ॥**

**'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्'** इत्यादि ॥

## तत्त्वप्रदीपिका

**तं च विशेषं स्मरन्ति कृष्णादयः । शरीरं समत्वेनाचलं धारयन्मनसि स्थिरो भवतीत्यर्थः । 'सम्प्रेक्ष्य नासिकाग्रं स्वम्' इत्यादेर्दृष्टेरचलत्वं चापेक्ष्यमित्यर्थः ॥**

## तत्त्वप्रकाशिका

**स्मृतिभिरप्यासनस्यावश्यकत्वं साधयत्सूत्रमुपन्यस्य ताः स्मृतीरुदाहरति ॥ स्मरन्ति चेति ॥ स्थिरः स्थिरमनाः । अस्योपविश्यासन इत्यनेन सम्बन्धाद्विवक्षितसिद्धिः ॥**

## भावबोधः

''कायशिरोग्रीवम्'' ''अचलम्'' ''समम्'' धारयन्नित्यनेनैव शरीरस्थैर्यात् स्थिर इति पुनरुक्तमित्यत आह– **स्थिरः स्थिरमना इति** ॥ नन्वत्र स्मृतावासनस्यावश्यकत्वानुक्तेः कथमेत-दुदाहरणमित्यत आह– **अस्येति** ॥ ''दिशश्चानवलोकयन्'' ''उपविश्यासने युञ्ज्यात्'' इति सम्बन्धादित्यर्थः ।

## भावदीपः

सौत्रबहुवचनानुरोधादाह ॥ **स्मृतिभिरिति** ॥ चशब्दार्थोऽपीति ॥ **ताः स्मृतीरिति** ॥ भाष्यस्थादिपदेन स्मृत्यन्तराण्यपि ग्राह्याणीति भावः । अपौनरुक्त्यायाह ॥ **स्थिर इति** ॥ स्मृतावासनस्य ध्यानाङ्गत्वस्याप्रतीतेराह ॥ **अस्येति** ॥ वाक्यस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

कायशिरोग्रीवमचलं समं यथा भवति तथा धारयन्नित्यनेनैव शरीरस्थैर्यलाभात् स्थिर इति पुनरुक्तमित्यत आह ॥ **स्थिरः स्थिरमना इति** ॥ नन्वत्र स्मृतावासनस्यावश्यकत्वानुक्तेः कथमेतदुदाहरणमित्यत आह ॥ **अस्य चेति** ॥ 'दिशश्चानवलोकयन् । उपविश्यासने युञ्ज्यात्' इति सम्बन्धादित्यर्थः । ननूपविश्यासने युञ्ज्यादिति स्मृतेरेव विषयवाक्यत्वेन सन्दिग्धार्थत्वात् कथमत्रास्यैव प्रमाणत्वेनोदाहरणमिति चेन्न । स्थिरमनस्त्वेन हेतुतया शरीरस्य समत्वेन धारण-मुक्त्वा शरीरस्य चाञ्चल्यपरित्यागेन समतया धारणार्थमुपविश्यासन इति सयुक्तिकमासनस्य स्मृतावुपपादितत्वान्नात्र पूर्वपक्षावकाश इति सूत्रकृतो विवक्षितत्त्वात् । न च पूर्वसूत्रेण गतार्थता । तस्य प्रत्याहारेणान्यथासिद्धिपरिहारे एव तात्पर्यात् । तत्त्वप्रदीपार्थस्त्वन्यत्र स्पष्टित इति ध्येयम् । आसनस्यावश्यकत्वे कृष्णादयः स्मरन्ति सर्वमर्थं बुद्ध्वा ग्रन्थं कुर्वन्तीत्यर्थः । **स्मरणं** ग्रन्थकृतिः । स्मरन्ति चेत्यादेरिति भागवततात्पर्यनिर्णये भगवत्पादैरेवोक्तत्वात् ।

## वाक्यार्थविवरणम्

ननु अस्यां स्मृतौ आसनस्यावश्यकत्वानुक्तेः कथमेतदुदाहरणमित्यत आह ॥ **अस्येति** ॥ सम्प्रेक्ष्य नासिकाग्रमित्यस्य तात्पर्यं दिशश्चेति । तथा च दिशश्चानवलोकयन् । आसने उपविश्य युञ्ज्यादिति सम्बन्धादासनस्यावश्यकत्वरूपविवक्षितसिद्धिरित्यर्थः ।

## वाक्यार्थमञ्जरी

कृष्णादय उक्तमर्थमुपविश्यासनेत्यादिना स्मरन्ति चेत्यर्थः । कायशिरोग्रीवमचलं समं धारयन्नित्यनेनैव शरीरस्थैर्यलाभात् स्थिर इति पुनरुक्तमित्यत आह ॥ **स्थिरः स्थिरमना इति** ॥ नन्वत्र स्मृतावासनस्यावश्यकत्वानुक्ते कथमुदाहरणमित्यत आह ॥ **अस्येति** ॥ दिशश्चा-नवलोकयन्' 'पविश्यासने युञ्ज्यात्' इति सन्धानादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ ११ ॥**

**देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् ।**

(सूत्रभाष्यम्)

'तमेव देशं सेवेत तं कालं तामवस्थितिम् ।
तानेव भोगान्भुञ्जीत मनो यत्र प्रसीदति ॥
न हि देशादिभिः कश्चिद्विशेषः समुदीरितः ।
मनः प्रसादनार्थं हि देशकालादिचिन्तना' इति वाराहे ॥

॥ इति आसनाधिकरणम् ॥ ६ ॥

## तत्त्वप्रदीपिका

तानेव भोगान्सेवेत येषु सेवितेषु मनः प्रसीदति कालुष्यं हित्वा ध्यातव्ये वर्तते, तावत एव सेवेत यावत्सु मनः प्रसीदति । 'नात्यश्नतस्तु योगोऽस्ति' इत्यादेः । या तु योगशास्त्रे हरिक्षेत्र-दिनादिदेशकालविशेषादिचिन्ता क्रियते सा हरेर्विशेषाभिव्यक्तिहेतुत्वेन तेषां मनः प्रसादकत्वेनैव नान्यविशेषहेतोः । तदाह– 'न हि देशादिभिः कश्चिद्विशेष' इत्यादिना ॥

## तत्त्वप्रकाशिका

आसनादिनियतिवदेव देशकालादीनामपि नियतिरस्ति । 'पर्वताग्रे नदीतीरे' 'ब्राह्मे मुहूर्ते चोत्थाय' इत्यादेरित्याशङ्कां निवारयितुं सूत्रं पठित्वा व्याचष्टे ॥ **यत्रेति** ॥ देशकालादीनां किमासनादिवद्ध्यानोपयोगितयाऽऽवश्यकत्वं स्यादुत पृथगेव ज्ञानोपयोगित्वात् । नाद्यः । नियत-देशकालादिना ध्याने विशेषाभावात् । अतो यत्र देशादौ ध्यानस्यैकाग्रताविशेषः स एव देशादि-राश्रयणीयः । नापि द्वितीयः । स्वतन्त्रदेशादिना ज्ञाने विशेषाभावादेवेति भावः । स्थातव्यमित्युपलक्षणम् । अस्मिन्नेवार्थे स्मृतिमाह ॥ **तमेवेति** ॥ अत्रापि पूर्ववद्विकल्पः । तमेवेति प्रथमस्य दूषणम् । तत्र हेतुर्न **हीति** ॥ नियतदेशादिना ध्याने न कश्चिद्विशेष इत्यर्थः । द्वितीयस्यापि न हीत्यनेन दूषणम् । केवलदेशादिना ज्ञाने न विशेष इत्यर्थः । तत्र हेतुर्मनः प्रसादनार्थमिति । प्रायेण मनःप्रसादनार्थत्वात्पर्वताग्राद्युक्तिः । अवस्थितिरासनं तच्च वीरं पद्ममेवेति न नियतिरिति भावः । अत आसनस्यावश्यकत्वात्तदुपदेशावैयर्थ्यमिति सिद्धम् ॥

## गुर्वर्थदीपिका

स्थातव्यमित्युपलक्षणमित्यस्य ध्यातव्यमित्यस्यापि सङ्ग्राहकमित्यर्थः ।

## भावबोधः

'तमेव' इति स्मृतौ 'मनः प्रसादनार्थम्' इत्यादिवाक्यस्वारस्याय 'न हि देशादिभिः' इत्येतत्तावत् द्वेधा व्याख्येयम् । ततस्तदनुसारेण सौत्रा'विशेष' पदमपि द्वेधा व्याख्याति– **नियतदेशकालादिनेति** ॥ स्वतन्त्रदेशादिनेति च । भाष्ये 'अवस्थादेः' इति आदिपदेन भोगादेरपि ग्रहणादाह– **स्थातव्यमित्युपलक्षणमिति** ॥ देशकालादिव्यतिरिक्तामवस्थामाह– **अवस्थितिरासनमिति** ॥

नन्वेवं सत्यासनस्यापि देशकालादिवदनियमे प्रागुक्तविरोधः स्यादित्यत आह– **तच्चेति** । पद्ममेवेति ॥ एवकारस्य वीरमेवेत्यपि सम्बन्धः । आसनसामान्यस्यावश्यकत्वेऽपि न तद्विशेषनियम इति भावः । अत्राद्ये आसनस्यावश्यकत्वे उपासनकारणत्वरूपहेतूक्तिः । द्वितीये– आसननियमस्य 'स्मर्तव्यः सततम्' इत्यादिसर्वदोपासनविधिविरोधपरिहाराय नोपासनमात्रे आसननियमः किं तु ध्यानरूपोपासनविशेष एवेत्यभिप्रेत्यासनादिनियतिमत उपासनस्य ध्यानत्वोक्तिः । तृतीये आसननियमफलस्य चित्तविक्षेपाभावस्य प्रत्याहारादिनान्यथासिद्ध्युद्धारः । चतुर्थे आसनस्यावश्यकत्वे प्रमाणोक्तिः । पञ्चमे प्रमाणस्यानियतदेशकालादिसापेक्षत्वप्रतिपादकप्रमाणसमानयोगक्षेमत्वोद्धार इति सूत्रक्रमः ॥

## भावदीपः

**ब्राह्मेति** ॥ ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरणः स्वात्मानं तमसः परम्' इत्यादि दशमस्कन्धे । 'ब्राह्मे मूहूर्त उत्थाय धर्मार्थावनुचिन्तयेत्' इति मनुस्मृतौ चोक्तेः । भाष्ये सौत्रहेत्वंशस्याव्याख्यानेऽपि स्मृत्युक्त्यैव व्याख्यातत्वं द्वेधा दर्शयत् भाष्यवाक्यं व्याचष्टे ॥ **देशेति** ॥ **अत इति** ॥ अविशेषादित्यर्थः । भाष्ये यत्रेति सौत्रपदानुवादो देशेत्यादि तु व्याख्यानमिति दर्शयति ॥ **यत्र देशादाविति** ॥ ध्यानपदस्य विपरिणामेनानुवृत्तिं मत्वाह ॥ **ध्यानस्येति** ॥ तत्रैवेति देशमात्रोक्तिरुपलक्षणमित्युपेत्याह ॥ **स एव देशादिरिति** ॥ स्मृत्यनुरोधाद्देशेत्यादिपूर्वभाष्यानुरोधाद्वाऽऽह ॥ **स्थातव्यमितीति** ॥ त एव भोगाः सेव्याः । स एव कालो ग्राह्यः । सैवावस्था ग्राह्येत्यर्थः । पर्वताग्र इत्याद्युक्तेः का गतिरित्यत आह ॥ **प्रायेणेति** ॥ प्रकृतोपयोगायार्थमाह ॥ **अवस्थितिरिति** ॥ वीराद्यासनेषु यस्मिन्नासने मनः प्रसीदति तदेवासनं ग्राह्यमित्यर्थः ॥ **अत इति** ॥ प्रयोजनसद्भावादित्यर्थः ।

## अभिनवचन्द्रिका

**अस्मिन्नेवार्थ इति ॥** देशकालादिभिर्न ध्याने विशेषो भवति । नापि तेन ज्ञाने विशेषो भवति । अतो यत्रैकाग्रता तत्रैव स्थातव्यमित्यस्मिन्नेवाऽर्थे स्मृतिमाहेत्यर्थः । स्मृतित एव सर्वस्यास्य लाभं दर्शयितुमाह **अत्रापि पूर्ववदिति ॥** देशकालादीनां किमासनादिवत् ध्यानोपयोगितया आवश्यकत्वम् । उत प्रथममेव ज्ञानोपयोगित्वादित्यत्रापि विकल्प इत्यर्थः ॥

**पूर्वपक्षस्तु** नाऽऽसनं सर्वापेक्षितं किं तु कृताकृतं, भगवद्दर्शनार्थं हि उपासनाद्यन्वेष्टव्यम् । उपासनादिकं च विनाप्यासनं सिध्यति । न च मनसः सम्यग्भगवद्विषयत्वसिध्यर्थमासनं, तेन विनापि तत्सिद्धेः । कथमन्यथा 'स्मर्तव्यः सततं विष्णु'रिति सर्वदोपासनाभिधानं युज्यते । ततश्चासनस्याऽनावश्यकत्वात् तच्छास्त्रं पाक्षिकमनुपादनलक्षणाऽप्रामाण्यं प्राप्नोतीति ॥

**सिद्धान्तस्तु** आसनयुक्तेनैव जिज्ञासुना विशेषत उपासनं कार्यम् । सत्येवासने उपासनस्य सम्यक्सम्भवात् । न चैतावता सर्वदोपासनाभाव इति मन्तव्यं, ध्यानार्थमेवोपासननियमाभिधानात् । उपासनं द्विविधं स्मरणं ध्यानं चेति । तत्र स्मरणं सर्वदा योग्यं विज्ञेयं, ध्यानोपासनं तु आसन एवेति । ननु न ध्यानार्थमप्यासननियमः । तत्साध्यस्य चित्तविक्षेपपरिहारस्य प्रत्याहारादिनापि सम्भवादिति चेत् न, चित्तविक्षेपपरिहारस्य आसनसाध्यशरीराचलत्वमपेक्ष्यैव प्रत्याहारादिना साध्यत्वात् । समं कायशिरोग्रीवम्' इति स्मृतेश्च । नन्वेवं तर्हि पर्वताग्रे नदीतीर' इत्यादि वचनात् देशकालादिनियमोऽप्यङ्गीकार्य इति चेत्, न मनः प्रसादार्थत्वाद्देशकालादिनियमस्य यत्रैकाग्रता तत्रैव स्थातव्यं 'तमेव देशं सेवेत' इत्यादेः । अत आसनस्याऽऽवश्यकत्वात् तदुपदेशावैयर्थ्यमिति ॥

## वाक्यार्थमुक्तावली

**ध्यानस्येति विपरिणम्यास्ति ॥** यत्र देशकालादौ ध्यानस्यैकाग्रता स्यात् तत्र ध्यानं कार्यं, न तु तत्र देशादिविशेषनियतिरिति प्रतीतार्थं वक्ष्यन्नविशेषादिति हेत्वंशं द्वेधा व्याकुर्वन् विकल्प्य दूषयति ॥ **देशकालादीनामित्यादिना ॥** भाष्ये वीरपद्मासनप्रकारस्य भोगानामपि ग्रहणादाह ॥ **स्थातव्यमित्युपलक्षणमिति ॥** देशकालादिव्यतिरेकावस्थामाह ॥ **अवस्थितिरासनमिति ॥**

(वाक्यार्थमुक्तावली)

नन्वेवमासनस्यापि देशकालादिवदनियमे आसीन एवेति प्रागुक्तविरोध इत्यत आह ॥ **तत्रेति** ॥ आसनसामान्यस्यावश्यकत्वेऽपि न तद्विशेषनियम इति भावः । अत्राद्ये आसनस्यावश्यकत्वे उपासनस्यासनान्वयव्यतिरेकविधायित्वरूपहेतूक्तिः । द्वितीये आसनव्यतिरेकेऽपि स्मर्तव्यः सततं विष्णुरित्यादिनोपासनदर्शनात् तयोर्विरोधाद्व्यतिरेकव्यभिचारमाशङ्क्योपासनाविशेषध्यानस्य तदन्वयव्यतिरेकित्वनियमोक्तिः । तृतीये आसनाभावेऽपि प्रत्याहरणे चित्तविक्षेपनिरासेन ध्यानस्याप्यन्यथासिद्धिमाशङ्क्य निरासः । चतुर्थे आसनस्यावश्यकत्वे युक्त्युपोद्बलितस्मृतिरूपप्रमाणोक्तिः । पञ्चमे प्रमाणस्य पर्वताग्रे नदीतीर इत्यादि नियतदेशकालादिसापेक्षत्वप्रतिपादकप्रमाणसमानयोगक्षेमत्वमाशङ्क्यासाम्योक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**नियतिरस्तीति** ॥ सापि कुतो नोक्ता सूत्रकारेणेति भावः ॥ **एकाग्रताविशेष इति** ॥ अचाञ्चल्येन ध्येयविषयकत्वमित्यर्थः । वक्ष्यमाणप्रमाणानुसारेणाह ॥ **स्थातव्यमित्युपलक्षणमिति** ॥ तथा स एव भोगो भोग्यः तदेवासनं स्वीकार्यमित्यपि ग्राह्यमित्यर्थः ॥ **पूर्ववद्विकल्प इति** ॥ देशकालादीनां किं आसनादिवत् ध्यानोपयोगितया आवश्यकत्वं उत पृथगेव ज्ञानोपयोगित्वादिति पूर्ववद्विकल्प इत्यर्थः ॥ **विशेष इति** ॥ अत्र ध्याने इति शेषः पूरितः । तेन तस्य तत्र हेतुत्वलाभ इति सूचितम् । द्वितीयपक्षदूषणलाभाय विशेष इत्यनन्तरं ज्ञान इति शेषः पूरणीय इति ज्ञातव्यम् । देशकालादिनियमप्रतिपादकोदाहृतवाक्यानां गतिमाह ॥ **प्रायेणेति** ॥

## वाक्यार्थमञ्जरी

यत्र देशकालादौ ध्यानस्यैकाग्रताऽन्यपरित्यागेन भगवन्मात्रविषयता स्यात् तद्देशादौ ध्यानं कार्यं कुतः अविशेषात् नियतदेशादिना ध्याने विशेषाभावादित्यर्थः । उपलक्षणं भोगादेः अवस्थादिष्वित्यादिपदेनारोग्यादेर्ग्रहणमिति भावः । पूर्ववत् देशकालादीनामित्यादिरीत्या ॥ **प्रथमस्य दूषणमिति** ॥ तत्र देशादेः प्रसादहेतुत्वोक्त्या ध्यानोपयोगितानिषेधादिति भावः । तत्र ध्यानोपयोगित्वाभावे अवस्थितिरासनमिति देशकालयोः पृथगुक्तिरिति भावः । नन्वेवं सत्यासनस्यापि देशकालादिवदनियमे प्रागुक्तविरोधादित्यत आह ॥ **तच्चेति** ॥ आसनसामान्यस्यावश्यकत्वेऽपि न तद्विशेषनियम इति भावः ।

॥ इति आसनाधिकरणम् ॥ ६ ॥

## ७. प्रायणाधिकरणम्

**॥ ॐ आ प्रायणात्तत्रापि हि दृष्टम् ॐ ॥ १२ ॥**

यावन्मोक्षस्तावदुपासनादि कार्यम् ।

'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' इति हि श्रुतिः ॥

'सर्वदैनमुपासीत यावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासत' इति सौपर्णश्रुतिः ॥

'श्रुणुयाद्यावदज्ञानं मतिर्यावदयुक्तता ।
ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते ॥
दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यते ।
भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा ।
आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परम्' इति ब्रह्माण्डे ॥ १२ ॥

॥ इति प्रायणाधिकरणम् ॥ ७ ॥

### तत्त्वप्रदीपिका

यावन्नारायणं प्रति प्रयाणात्मको मोक्षः तावदुपासनार्चनादि कार्यम् । आदर्शनादिति वक्तव्ये आमोक्षादित्युक्तं दर्शनवतामपि यदा तद्विच्छेदस्तदाऽवश्योपास्तिकरणार्थम् । 'स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयति' इति प्रश्ने 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इत्यारभ्य तस्य परमध्यातुर्विरिञ्चलोकं नीतस्य 'स एतस्माज्जीवघनात्'' इत्यादेस्ततोऽप्युपदेशं प्राप्य पुनरभ्यस्यतः परं पश्यतोऽप्योङ्कारेणैवायनेनान्वेति विद्वान् । 'यत्तच्छान्तमजरममृतमभयं परं चे' इत्यामोक्षादुपास्तिकर्तव्यतायां प्रमाणदर्शनात् ।

### तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनध्यानस्य प्रायणान्तत्वसमर्थनादस्ति शास्त्रसङ्गतिः । अन्यथा ज्ञानिनां ध्यानफलाभावप्रसङ्गेन मुक्तौ तारतम्याभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतं ध्यानमेव विषयः । किं

(तत्त्वप्रकाशिका)

ज्ञानपर्यन्तमेवावश्यकमुत मुक्तिपर्यन्तमपीति सन्देहः । ज्ञानसाधनत्वं ज्ञानिनामपि तद्दर्शनं सन्देहबीजम् । ज्ञानपर्यन्तमेवावश्यकमिति पूर्वः पक्षः । दर्शनार्थमेव श्रवणादिविधानात् । ज्ञानार्थं विहितस्य मुक्तिपर्यन्तमनुष्ठाने कारणाभावात् । न च ज्ञानसाधनस्यापि ध्यानस्य मोक्षोपयोगित्वात्तावदावश्यकत्वमिति वाच्यम् । ज्ञानमात्रस्यैव मोक्षे सामर्थ्यात् । न चानन्दातिशयार्थं ध्याननियतिः । आनन्दातिशयार्थं श्रवणादिसाधनान्तरस्यापि कर्तुं शक्यतया तन्नियमायोगात् । ज्ञान एव ध्यानस्य प्राबल्यात् । न ह्येकत्र यस्य प्राधान्यं तस्य सर्वत्रापीति । अतो यावन्मोक्षं ध्यानस्य कर्तव्यत्वाभावाज्ज्ञानिनां शुकादीनां तद्व्यर्थमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आ प्रायणादिति** ॥ मुमुक्षुणा मोक्षपर्यन्तं ध्यानमवश्यं कर्तव्यमेव । ध्यानं विनाऽपरोक्षज्ञानाभावेन तावज्ज्ञानपर्यन्तमावश्यकत्वादिति भावः । तथापि मुक्तिपर्यन्तं तदनुवृत्तिः कुत इत्यतो दृष्टं हीति सूचितश्रुतिं दर्शयति ॥ **स इति** ॥ एतदेतेषु । ॐकारो हरिः । कैमुत्येनापि ध्यानस्य मुक्तिपर्यन्तत्वं साधयन्नाह ॥ **सर्वदेति** ॥ ज्ञानात्पूर्वं श्रवणादियुतध्यानस्य कर्तव्यत्वाज्ज्ञानानन्तरं च सम्यग्ध्यानालाभे श्रवणादित्यत उपासनादीत्यादिपदम् । उक्तं हि–

भोक्तव्यकर्मण्यक्षीणे जपेन कथयापि वा ।
वर्तयन्ति महात्मानस्तन्निष्ठास्तत्परायणाः ॥ इति ।

ज्ञानपर्यन्तं श्रवणादियुक्तं ध्यानम् । ततः प्रायेण केवलं कर्तव्यमेवेत्यत्र स्मृतिं चाह ॥ **श्रुणुयादिति** ॥ 'नेक्षा क्वचन बाध्यत' इति ॥ कादाचित्क्यपि मोक्षसाधनं भवतीत्यर्थः । दृष्टतत्त्वस्य च ध्यानं निरवधिकम् । ज्ञानोत्तरमपि निरवधिकं ध्यानं किं विहितत्वात्क्रियतेऽन्यथा वा । नाद्यः । मोक्षविरोधात् । न द्वितीयः । करणानुपपत्तेरित्यत आह ॥ **आविमुक्तेरिति** ॥ स्वत एव स्वभावेनेत्यर्थः । न च वाच्यं ज्ञानोत्तरध्यानस्य फलाभावादकर्तव्यत्वमिति । आनन्दातिशयफलत्वात् । न चोक्तदोषः । 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इति वचनादानन्दवृद्धौ ध्यानस्यैव प्रधानसाधनत्वात् । अतो मोक्षपर्यन्तं ध्यानस्य कर्तव्यत्वेन ज्ञानिनामपि तद्विचित्रफलेन मुक्तौ तारतम्यसिद्धिरिति सिद्धम् ।

## गुर्वर्थदीपिका

उक्तदोषः श्रवणादिसाधनान्तरस्यापि कर्तव्यत्वदोषः । शमः कारणमुच्यत इत्यत्र 'शमो मन्निष्ठता बुद्धेः' इति वचनाद्बुद्धेर्भगवन्निष्ठता ध्यानमिति यावत् । कारणं मुक्तावानन्दवृद्धेः कारणम् ॥

## भावबोधः

**अत्र भगवज्ज्ञानसाधनध्यानस्येति** ॥ भगवज्ज्ञानसाधनत्वेन विहिते यस्मिन् ध्याने पूर्वाधिकरणे आसननियम उक्तस्तस्य ध्यानस्य ज्ञानिनामाप्रायणान्तत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **ध्यानफलाभावप्रसङ्गेनेति** ॥ अपरोक्षज्ञानानन्तरकृतध्यानस्य आनन्दादिवृद्धिलक्षण-फलाभावप्रसङ्गेनेत्यर्थः ॥ **किमित्यादि** ॥ अत्र ध्यानं किं ज्ञानपर्यन्तमेव कर्तव्यमुत मुक्ति-पर्यन्तमपीति चिन्ता । तदर्थं ज्ञानिकृतध्यानस्य फलं नास्त्युतास्तीति । तदर्थं तत्फलत्वेनाभि-मतानन्दातिशयः किं श्रवणादिसाधनान्तरेणान्यथासिद्धो भवत्युत न भवतीति । यावन्मोक्ष-स्तावदुपासनादीति भाष्यनिवर्तनीयं पूर्वपक्षमाह– **ज्ञानपर्यन्तमेवेत्यादिना** । अन्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्ति ध्यानं कार्यमिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न चानन्दातिशयार्थमित्यादिना** ॥ ननु श्रवणादित्रयस्य ज्ञानसाधनत्वेऽपि यथाध्यानमेव प्रबलं साधनं तद्वदत्रापि ध्यानस्य प्राबल्यं किं न स्यादित्यत आह– **ज्ञान एवेति** ॥ यावन्मुक्ति ध्यानं न कार्यमिति वदता किं मुक्तेः पूर्वं कदापि ध्यानं न कार्यमित्युच्यते, उतापरोक्षज्ञानानन्तरमेवेति विकल्पं हृदि निधायाद्यपक्षनिराकरणपरत्वेन ध्यानं विनाऽपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेरिति न्यायविवरणं व्याचष्टे– **ध्यानं विनेति** ॥

द्वितीयमाशङ्क्य तन्निराकरणपरत्वेन स य इति भाष्यं व्याचष्टे– **तथापीति** ॥ **कैमुत्येनापीति** ॥ अनेन 'तत्रापि' इति सूत्रांशो विमुक्तावपीति, एतच्छ्रुत्युदाहरणेनोक्ततात्पर्यको भवतीति सूचितम् । भाष्योदाहृतश्रुतिद्वये उपासनामात्रस्य श्रुतत्वात् किमर्थं तत्पूर्वभाष्ये उपासनादि'' इति ''आदि''पदप्रयोग इत्यत आह– **ज्ञानात् पूर्वमिति** ॥ 'भक्तिश्चानन्तकालीना' इति उत्तरार्धानु-सारेणाह– **दृष्टतत्त्वस्य च ध्यानं निरवधिकमिति** ॥ अनेन दृष्टतत्वस्य पुंसः परमे ब्रह्मणि विषये ध्यानं निरवधिकं स्फुटा भक्तिश्चानन्तकालीना । तत्र हेतुर्यदा यस्मात् दृष्टिः फलत्वेन न विद्यते सिद्धत्वादिति स्मृतियोजना सूचिता भवति ॥ **मोक्षविरोधादिति** ॥ ज्ञानोत्तरं निरवधिकध्यानस्य विहितत्वेन करणे मोक्षेऽपि तथाकरणापत्या विधिबन्धवर्जितत्वरूपमोक्षत्वविरोधादित्यर्थः ॥ **करणानुपपत्तेरिति** ॥ मोक्षात् पूर्वमित्यर्थः ॥ **ध्यानस्यैवेति** ॥ ''शमः कारणम्'' इत्यत्र शम-शब्देन ध्यानस्यैव विवक्षितत्वादिति भावः ।

## भावदीपः

**प्रायणांतत्वेति** ॥ मोक्षपर्यन्तत्वेत्यर्थः । एतेन यस्मिन् ध्याने अविशेषादेशादिर्नादर्तव्य इत्युक्ततया तस्य ध्यानस्य मोक्षपर्यन्तकार्यत्वं नापेक्ष्यं मोक्षे तत्कृतविशेषाभावादिति शङ्कोदयात्पूर्वसङ्गतिरपि सूचिता ॥ **ज्ञानिनामिति** ॥ अपरोक्षिणां शुकादीनां यद्ध्यानं तस्य मुक्तावानन्दाभिव्यक्तिरूपफलाभावापातेन मुक्तानां यावत्स्वरूपसुखाभिव्यक्तौ यावदधिकारमवस्थितिरित्यादावुक्तशतगुणोद्रिक्तत्वादितारतम्यं न स्यात् क्लृप्तानन्दस्य मुक्तौ ह्रासादित्यर्थः । तद्दर्शनं ध्यानदर्शनम् । विश्वेदेवा उपासत इत्यादावित्यर्थः । अन्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्ति ध्यानं कार्यमित्यन्यत्रोक्तप्रतिज्ञाया ध्यानं च यावदीक्षेति सूचितं भावार्थमाह ॥ **ज्ञानपर्यंतमेवेति** ॥ शृणुयादित्यादिस्मृतिसूचितहेतुमाह ॥ **दर्शनार्थमिति** ॥ द्रष्टव्यः श्रोतव्य इत्यादौ श्रवणमननयोरप्युक्तेः श्रवणादीत्युक्तम् । ध्यानस्य विधानादित्यर्थः । तस्यैव प्रकृतोपयोगादिति ज्ञेयम् । हेतोरप्रयोजकत्वं निराह ॥ **ज्ञानार्थमिति** ॥ कारणाभावासिद्धिमाशङ्क्य निराह ॥ **न च ज्ञानेति** ॥ **ज्ञानमात्रस्यैवेति** ॥ विद्यैव त्वित्यादौ तथैवोक्तेरिति भावः ।

ननु ध्यानस्य ज्ञानोपयोगित्ववचनवत् ज्ञानसमकक्ष्यतया कृत्स्नमोक्षोपयोगित्ववचनाभावेन तदभावेऽपि मोक्षैकदेशोपयोगोऽस्तु । 'यावत्सेवा परे तत्वे तावत्सुखविशेषता' इत्युक्तेः । 'भावं तु बादरायणोऽस्ति हि' इत्युक्तेश्च । तथा च ज्ञानिनामपि वस्वादीनां ध्यानादावधिकारोक्त्यैवाप्रायणं कर्तव्यत्वसिद्धेर्नात्र पूर्वपक्षोदय इति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ कुत इत्यतः प्रागुक्तन्यायविवरणस्थहेतुं योजयति ॥ **आनन्देति** ॥ ज्ञानार्थं विहितस्यापि यावत्सेवेत्यादिवचनबलेनान्यार्थत्वमपि सम्भवतीति भावेनोक्तं **साधनान्तरेति** ॥ अत एव श्रवणादेरानन्दातिशयहेतुत्वे ज्ञानहेतुता नेति शङ्कानिरासाय प्राक् ध्यानविधानादिति वाच्ये श्रवणादीत्युक्तम् । तर्हि ज्ञानपर्यंतमपि नियमेन तन्न स्यादित्यत आह ॥ **ज्ञान एवेति** ॥ तन्निर्धारणार्थनियम इत्यादौ तथोक्तेरिति भावः । अस्तु मोक्षे आनन्दातिशयेऽपि प्राधान्यमित्यत आह ॥ **न हीति** ॥ कल्पकाभावादिति भावः ॥ **अत इति** ॥ ज्ञानार्थं विहितस्य यावन्मुक्तिकृतौ हेत्वभावान्मुक्तावानन्दातिशयस्यान्येनापि सिद्धत्वादित्यर्थः ॥ **तद्ध्यर्थमिति** ॥ तथा च देवादीनां देवतानयोक्ताधिकारो ध्यानादन्यश्रवणादावेव न ध्यान इत्युपासनापादे देवानामितरे त्वर्थसामान्यादित्यादौ ध्यानोक्तिरयुक्तेति भावः ।

(भावदीपः)

ननु सम्भवाच्च प्रकाशस्य परमेकमृते हरिमित्युक्त्या ज्ञानेऽतिशयार्थमपि ध्यानस्यावश्यकतया यावत्स्वयोग्यज्ञानपूर्तेर्ध्यानस्य कर्तव्यत्वात्तस्याश्चामुक्तेर्व्यक्त्यतिशयोपेतमित्युक्त्या मुक्तिपर्यन्तत्वाज्ज्ञानार्थमप्यामुक्तिकर्तव्यत्वं सिद्धमिति चेत् न । स्वयोग्यज्ञानपूर्त्यनन्तरमपि कियत्कालमवस्थितिसम्भवात् कादाचित्कज्ञानस्यापि मुक्त्यव्यभिचारेण ज्ञानातिशयस्यापि व्यर्थत्वमिति वा शङ्काभिप्रायात् । ज्ञानार्थं कर्तव्यत्वेऽपि सुखातिशयार्थं मास्त्विति शङ्कायां सुखातिशयेऽपि ध्यानस्य प्राधान्यं वक्तुं वाऽस्यारम्भात् । वक्ष्यति चानन्दवृद्धौ **ध्यानस्येत्यादीति** ॥ कर्त्रुक्तिपूर्वं भाष्यं व्याचष्टे ॥ **मुमुक्षुणेति** ॥ भाष्ये आदिपदोक्तावप्यन्यत्रोक्त्यनुरोधेन ध्यानस्यैवेह प्राधान्यसूचनाय तन्मात्रोक्तिः । तदर्थोऽग्रे व्यक्तः । कुतः कार्यमित्यतो ध्यानं विना परोक्षज्ञानस्य विशेषकार्यानुपपत्तेरित्यन्यत्रोक्तहेतुमाह ॥ **ध्यानं विनेति** ॥ यावत्स्वयोग्याज्ञानमित्यर्थः । प्रकृतानुपयोगात्कुत एतदुक्तिरित्यत आह ॥ **तावज्ज्ञानपर्यंतमिति** ॥ मुक्तिपर्यन्तमावश्यकत्वे हेतुं वक्ष्याम इत्यर्थः । एतच्च पूर्वोक्तप्रमेयस्मरणार्थमेवोक्तम् । न तु ज्ञानपर्यंतमपि न कर्तव्यमिति शङ्कानिरासार्थम् । तस्य प्रागेवावृत्तिनयसिद्धत्वेनात्र तथा शङ्काया एवानुदयादिति भावः । अत एव मुक्तिपर्यन्तं कार्यत्वे आवृत्तिनयसिद्धं ज्ञानपर्यन्तकार्यत्वं नेत्यपि भ्रांतिरपोढा । तथापि ज्ञानपर्यन्तं कार्यत्वेऽपीत्यर्थः । ॐमित्याक्रियते इत्योङ्कार इत्युपेत्याह । **ॐकारो हरिरिति** ॥ षट्प्रश्ने व्याख्यातैषा श्रुतिः ॥ **कैमुत्येनेति** ॥ मुक्ता अप्युपासते किमु प्राक् सर्वदा ज्ञानोत्तरमपीति कैमुत्येनेत्यर्थः । श्रुतौ स्मृतौ चाभिध्यायीत दृष्टतत्वस्य च ध्यानमिति ध्यानस्यैवोक्तेः भाष्ये कथमुपासनादीत्यादिपदेन श्रवणादेरप्युक्तिरित्यतः प्रायिकत्वेन ध्यानवदावश्यकत्वाभावात् श्रुत्यादौ तन्मात्रोक्तिरिति भावेनादिपदार्थमाह ॥ **ज्ञानादिति** ॥ इत्येतस्मात्कारणादित्यर्थः । कुत एवं तत्वप्रदीपरीत्या अर्चनादिरेवादिपदार्थोऽस्त्वित्यत आह ॥ **उक्तं हीति** ॥ षष्ठे गीताभाष्ये । वर्तयन्ति वर्तन्ते कालं नयन्तीति वार्थः । कथयापीत्यनेन श्रवणप्रतीतेरिति भावः । एवमादिपदस्य प्रायिकत्वाशयमुक्त्वा स्मृतिमवतारयति ॥ **ज्ञानेति** ॥ न बाध्यते अप्रमाणं न भवतीत्यर्थस्यानुपयोगादाह ॥ **कादाचित्कीति** ॥ स्मृतावनन्तकालीनेत्यग्रेतनपदं ध्यानमित्यत्राप्याकृष्यार्थमाह ॥ **दृष्टतत्वस्येति** ॥ उक्तार्थानुवादपूर्वमुत्तरार्धमवतारयति ॥ **ज्ञानेति** ॥ स्मृतौ यदा दृष्टिर्न विद्यते तिरोहिता । तदा दृष्टतत्वस्यापि पुनर्दृष्ट्यर्थं पुनः पुनर्ध्यानमावश्यकमित्युक्तम् । ईक्षा क्वापि न बाध्यत इत्यपि । तथा च व्यर्थं ध्यानमिति शङ्कते ॥ **न च वाच्यमिति** ॥ **फलत्वादिति** ॥ ज्ञानातिशयद्वारा साक्षाद्वेति भावः ॥

(भावदीपः)

**उक्तेति ॥** श्रवणादिसाधनान्तरस्यापि कर्तुं शक्यत्वादित्युक्तदोष इत्यर्थः । योगारूढस्य ज्ञानिनः । शमः ध्यानम् । शमो मन्निष्ठता बुद्धेः' इत्युक्तेरिति भावः । उक्तं च षष्ठे गीताभाष्ये । योगमारूढस्य अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणमिति ॥ **अत इति ॥** श्रुतिस्मृति-कैमुत्यन्यायसिद्धत्वात्फलवत्त्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**प्रायणां तत्वसमर्थनादिति ॥** ज्ञानात्पूर्वमिव ज्ञानोत्तरमपि प्रायणपर्यन्तमावश्यकत्व-समर्थनादित्यर्थः । **मुक्तौ तारतम्येति ॥** ध्यानफलप्रयुक्ततारतम्यभावाप्रसङ्गादित्यर्थः । एतेन ध्यानफलाभावेऽपि श्रवणादिफलेन तारतम्यसम्भवात्, तारतम्याभावप्रसङ्गादित्ययुक्तमिति परास्तम् ॥ **ज्ञानसाधनत्वमिति ॥** ज्ञानसाधनत्वश्रवणं ज्ञानिनामपि ध्यानदर्शनं संदेहबीजमित्यर्थः । न च **ज्ञानसाधनस्यापीति ॥** ज्ञानसाधनस्यापि ध्यानस्य ज्ञानेन मोक्षे जनयितव्ये सहकारित्वस्यापि भावात् मोक्षपर्यंतं ध्यानमावश्यकमिति न वाच्यमिति भावः ॥ **न चेति ॥** ज्ञानसाध्यावरण-निवृत्तिरूपमोक्षे तस्याजनकत्वेऽपि आनन्दातिशयरूपमोक्षजनकत्वात् ध्यानमावश्यकमिति न वाच्यमित्यर्थः । आनन्दातिशयसाधनेषु ध्यानस्य प्राबल्यात् ध्यानमावश्यकमित्यत आह – **ज्ञान एवेति ॥** ननु – ध्यानमानन्दातिशयसाधनेषु प्रधानं ज्ञानसाधनेषु प्रधानत्वादित्यनुमानादावश्यकत्व-सिद्धिरित्यत आह – **न हीति ॥** यस्य एकत्र प्राधान्यं तस्य सर्वत्र प्राधान्यमिति व्याप्त्य-भावादित्यर्थः । **ध्यानं विनेति ॥** ध्यानं तावत् ज्ञानपर्यन्तमावश्यकं, ज्ञानसाधनीभूतप्रसादहेतुत्वात् । यदि ज्ञानानन्तरं ध्यानमनावश्यकं स्यात् तर्हि ध्यानं न कुर्यात् । ततश्चेश्वरोऽबहुमानितः स्यात् । एवं च सति ईश्वरोऽपरोक्षज्ञानमेव न दद्यात् । न हि प्रेक्षावान् यद्दानानन्तरं स्वस्मिन् बहुमानो गच्छति तद्ददाति । येनेश्वरोऽपरोक्षज्ञानानन्तरं स्वस्मिन् बहुमानापगमेऽपि अपरोक्षज्ञानं दद्यात् । ददाति चापरोक्षज्ञानमिति प्रायणान्तं ध्यानस्याऽऽवश्यकत्वमवर्जनीयमिति भावः । एतेन ज्ञाना-त्पूर्वमावश्यकत्वस्य ज्ञानोत्तरमावश्यकत्वासाधकत्वात्, तत्सिद्धये ज्ञानात्पूर्वमावश्यकत्व-समर्थनमयुक्तमिति परास्तम् ॥ **तथापीति ॥** सत्यं, ज्ञानोत्तरध्यानस्यानावश्यकत्वे 'ईश्वरो ज्ञानमेव न दद्यात्' इति तर्कबलात् ज्ञानपर्यन्तमावश्यकत्वं ज्ञानोत्तरमावश्यकत्वस्य साधकं, तथापि मुक्तिपर्यन्तमावश्यकत्वमित्ययं विशेषः कुतः प्रमाणादवगम्यते । आगमसहकृतस्यैवानुमानस्याऽर्थ-

(अभिनवचन्द्रिका)

साधकत्वादिति भावः । एतेन श्रुतिबलाज्ज्ञानोत्तरं ध्यानस्यावश्यकत्वसिद्धावपि हेतोरप्रयोजकत्वा-परिहारात्तदुदाहरणमयुक्तमिति परास्तम् । तर्कस्य श्रुतिमूलत्वसिध्यर्थमेव श्रुत्युदाहरणस्याभिमत-त्वात् । सिंहावलोकनन्यायेन 'यावन्मोक्षस्तावदुपासनादि कार्यमेव' इति भाष्यगतादिशब्दस्य कृत्यमाह – **ज्ञानात्पूर्वमिति ॥** ज्ञानात्पूर्वं ध्यानालाभे तत्सिद्धये श्रवणादेः कर्तव्यत्वदर्शना-ज्ज्ञानोत्तरमपि ध्यानाऽलाभे तत्कर्तव्यता सिध्यतीति तत्सङ्ग्रहायाऽऽदि शब्दप्रयोग इत्यर्थः । एतेन ध्यानालाभे श्रवणादीत्यादिनैव पूर्णत्वात् शेषवैयर्थ्यमिति परास्तम् ॥ **मोक्षविरोधादिति ॥** निरवधिकध्यानस्य ज्ञानोत्तरं विहितत्वे मोक्षेऽपि विधिबन्धापत्त्या मोक्षत्वविरोधः स्यादित्यर्थः ।

**पूर्वपक्षस्तु** मुमुक्षुणा न मोक्षपर्यन्तं ध्यानं कार्यं ध्यानस्य ज्ञानसाधनत्वेनाभिहितत्वात् । न चाऽऽनन्दातिशयार्थं तदिति वाच्यम् । तस्य तद्धेतुत्वाभावात् । अस्तु वा तद्धेतुत्वम् । तथापि न नियमेन कार्यं, श्रवणादिनापि तत्सम्भवात् । ततश्च शुकादीनां ज्ञानिनां तदाग्रहवैयर्थ्यमिति ।

**सिद्धान्तस्तु** कर्तव्यमेव ज्ञानिना मोक्षपर्यन्तं ध्यानं, तस्य ज्ञान इवाऽऽनन्दातिशयेऽपि प्रधानसाधनत्वात् । तथा च श्रुतिः– 'स यो ह वै तद्भगवान् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' इति । 'शृणुयाद्यावदज्ञानम्' इत्यादिस्मृतेश्च । अतो मोक्षपर्यतं ध्यानस्य कर्तव्यत्वेन ज्ञानिनामपि तद्विचित्रफलेन मुक्तौ तारतम्यसिद्धिरिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

पूर्वाधिकरणेऽपरोक्षज्ञानस्य मनसस्सम्यग्भगवद्विषयत्वेन विनाऽयोगात्तस्य च ध्यानस्यासनं विनायोगादासनमावश्यकमित्यासनापेक्षध्यानस्य सर्वदा योग्यस्मरणवैशेष्येण ज्ञानान्तरङ्गसाधनत्व-मुक्तम् । तदयुक्तम् । ज्ञानान्तरङ्गसाधनत्वे ज्ञानानन्तरं मुक्तिपर्यन्तमनुष्ठानायोगात् । अनुष्ठीयते च शुकादिभिरतो न ज्ञानान्तरङ्गत्वमिति न तदर्थमासनस्यावश्यकत्वमित्याक्षेपपर्यवसानादनन्तर-सङ्गतिरिति भावेनाह **॥ अत्र भगवज्ज्ञानेति ॥** भगवज्ज्ञानान्तरङ्गत्वेऽपि प्रायणान्तत्वमुपपद्यत इति समर्थनादित्यर्थः ॥ **ध्यानफलाभावप्रसङ्गेनेति ॥** अपरोक्षज्ञानानन्तरं कृतध्यानप्रयुक्तानन्दाभि-वृद्धिलक्षणफलाभावप्रसङ्गेन यावदधिकारमित्याद्युक्तमुक्तितारतम्याभावप्रसङ्गादित्यर्थः । यद्वा समानयोग्यतावतामेव नृणां वृद्धिह्रासप्रयुक्ततारतम्याभावप्रसङ्गादित्यर्थः ॥ **किमिति ॥** अत्र

(वाक्यार्थमुक्तावली)

ज्ञानपर्यन्तमेव ध्यानमावश्यकमुत मुक्तिपर्यन्तमपीति चिन्ता । तदर्थं ज्ञानिना ध्यानस्य कार्यत्वे कारणं नास्त्युतास्तीति । तदर्थं कारणत्वेऽभिमते आनन्दातिशयः श्रवणादिसाधनान्तरेणान्यथासिद्धो भवत्युत न भवतीति । यावन्मोक्षस्तावदुपासनादीति सिद्धान्तप्रतिज्ञाभागव्यावर्त्यं प्रतिज्ञांशमाह ॥ **ज्ञानपर्यन्तमिति** ॥ दृष्टं हीत्यत्र विध्यन्तरबलेन प्रायणान्तत्वसमर्थनात्तद्व्यवच्छेद्ययुक्तिमाह ॥ **दर्शनार्थमिति** ॥ श्रवणमननोपोद्बलितनिदिध्यासनविधानादित्यर्थः ॥ **कारणाभावादिति** ॥ निदिध्यासनविधेरनेन चरितार्थत्वेन तदनन्तरमनुष्ठाने प्रमाकरणप्रमाणाभावादित्यर्थः । यद्वा विधिव्यतिरेकेण ध्याने प्रवर्तकाभावादित्यर्थः । ननु मोक्षलक्षणफलानुसन्धानमेव प्रवर्तकम् । न च तज्ज्ञानेनासिद्धमिति वाच्यम् । ज्ञानसाध्ये मोक्षे निदिध्यासनस्य सहकारितयोपयोगसम्भवादित्याशङ्क्यापाकरोति ॥ **न चेति** ॥ **ज्ञानमात्रस्यैवेति** ॥ अविद्यानिवृत्तिलक्षणमोक्षज्ञानमात्रस्यैव सामर्थ्यात् । विद्यैव तु निर्धारणादित्युक्तेरन्यसमुच्चयवादापत्तेरिति भावः । दृष्टं हीति सूत्रखण्डोपात्तषट्प्रश्नश्रुतौ ज्ञानिकृतध्यानस्यानन्दातिशयहेतुत्वोक्तेस्तद्व्यवच्छेद्यं नानावृत्तिरित्युक्तन्यायं दर्शयितुमानन्दातिशयलक्षणं फलमाशङ्क्य तस्यान्यथासिद्धिमाह ॥ **न चेति** ॥ **श्रवणादीति** ॥ श्रवणादिनानाविधसाधनेषु प्रवृत्त्युपपत्तेरिति भावः । आनन्दातिशयसाधनेषु प्रधानत्वात्तन्नियमः किं न स्यादित्यत आह ॥ **ज्ञान एवेति** ॥ ननु ध्यानमानन्दातिशयेऽपि प्रधानसाधनमन्यत्राप्राधान्येनैव क्लृप्तशक्तिकत्वादित्यत आह ॥ **न हीति** ॥ सूत्रे आङ् मर्यादायाम् । प्रायणं प्रकर्षेण नारायणं प्रत्ययनं गमनं मोक्षस्तत्पर्यन्तं प्रकृतं ध्यानं कार्यमित्यन्वयमभिप्रेत्य व्याचष्टे ॥ **मुमुक्षूणामिति** ॥ कथं मोक्षपर्यन्तं तदावश्यकत्वमित्यतो ज्ञानपर्यन्तमावश्यकस्य त्वयैवाङ्गीकारादर्धं तावदवसितं भारस्येति भावेनाह ॥ **ध्यानं विनेति** ॥

यद्वापरोक्षज्ञानानन्तरं प्रायणपर्यंतं कर्तव्यमिति ज्ञानं तद्युक्तम् । द्रष्टव्य इति दर्शनानुवादेन तत्फलतया विहितस्य तदनन्तरमनुष्ठेयत्वायोगादित्यतः प्रथमापरोक्षानन्तरमपि दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यत इति वक्ष्यमाणपुनर्ध्यानं विनाऽपरोक्षज्ञानाभावेन तावत्पर्यन्तं कर्तव्यत्वात् । यः पुनरेवं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीतेति ध्यानं विधाय स तेजसि सूर्यं सम्पद्यत इत्यादिना ज्ञानप्रतिबन्धकपापक्षयेन ससामभिरुन्नीयते ब्रह्मलोकमिति ब्रह्मलोकं गतस्य स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इति चतुर्मुखोपदेशेन पुनरभ्यस्यतो ध्यानफलत्वेना-

(वाक्यार्थमुक्तावली)

परोक्षविज्ञानाद्द्रष्टव्यो निदिध्यासितव्य इति सामान्यविधेः पुनरपरोक्षार्थं ध्यानं कर्तव्यमित्यप्यर्थसम्भवात् ध्यानं विना पुनरपरोक्षाख्य विशेषकार्यानुपपत्तेरिति भावः । उक्तं च न्यायविवरणे । ध्यानं विनापरोक्षाख्यविशेषकार्यनुपपत्तेरिति । उक्तं चानन्दमालायाम् । यदुत्तरोत्तरं सविशेषमुक्तमपरोक्षज्ञानं तदनेन ज्ञायत इति । भावबोधादौ तु प्रकारान्तरेण व्याख्यातं तत्रैव बोध्यम् ॥ **तथापीति** ॥ चतुर्मुखोपदेशानन्तरभाव्यपरोक्षपर्यन्तमावश्यकत्वेऽपीत्यर्थः ॥ **कुत इति** ॥ कस्माद्विधिवाक्यादित्यर्थः ॥ **श्रुतिमिति** ॥ प्रायणान्तमोङ्कारमभिध्यायीतेत्यपरोक्षज्ञानिनोऽपि ब्रह्मप्राप्तिपर्यन्तं ध्यानमुपक्रमे विधाय स एतस्माज्जीवघनात् परात्परमित्यपरोक्षज्ञानपर्यन्तं तदभ्यस्य तमोंकारेणैवेति विद्वान्यत्तच्छान्तमजरं इति विदुषोऽपि पुनरोंकारध्यानेनानन्दोत्कर्षसिद्धये सुखोत्कर्षसीमावधिभूतब्रह्मप्राप्तेरुक्तत्वेन द्रष्टव्य इति विधेर्दर्शिनोपरतत्वेऽपि प्रायणान्तमोङ्कारविधेर्मोक्षपर्यन्तं तदनुष्ठानप्रयोजकत्वादावश्यकं तत्पर्यन्तमुपासनमिति भावः । उक्तं च तत्वप्रदीपे । दर्शनवतोऽपि कतमं वाव स लोकं जयतीति प्रश्ने यः पुनरेतं त्रिमात्रेणेत्याद्यनुक्रम्य तस्य परमस्य ध्यातुर्विरिंचलोकं नीतस्य स एतस्माज्जीवघनादित्यादेस्तदाप्युपदेशं प्राप्य पुनरभ्यस्यतः परं पश्यतोऽपि ओंकारेणैवायनेनेति विद्वान्यत्तच्छान्तमजरममृतमभयं चेत्यामोक्षोपास्तिकर्तव्यतायां प्रमाणदर्शनादिति ॥ **कैमुत्येनापीति** ॥ एतेन तत्रापि मुक्तावपि ध्यानं कुर्वतः किमुत ततः प्रागित्यर्थः । तदेव कुतः यस्माद्दृष्टं तथा श्रुतमित्यर्थ उक्तो भवति । श्रुतिद्वये उपासनामात्रस्योक्तत्वाद्भाष्ये उपासनादीत्यादिपदं व्यर्थम् । श्रवणादेर्ध्यानसाम्यप्राप्त्या ध्यानस्यैव नियमेन कर्तव्यत्वमिति प्रकृतविरुद्धार्थत्वमित्यत आह ॥ **ज्ञानादिति** ॥ योग्यापरोक्षज्ञानात् पूर्वं श्रवणादियुतध्यानस्य कर्तव्यतया सिद्धत्वात् ज्ञानानन्तरमपरोक्षानन्तरानन्दातिशयाय सम्यग्ध्यानालाभ एव श्रवणादिकार्यमित्यतस्तादर्थ्येन श्रवणाद्युक्तये आदिपदमित्यर्थः ।

भोक्तव्यकर्मणीत्यस्य अज्ञानिनोऽपि ध्यानादिप्रतिबन्धप्रारब्धकर्मक्षीणे जपादिना स्वस्यास्थानं कल्पयन्तीत्यर्थः । मतिर्मननम् । ज्ञानस्याप्यावृत्तावेव मोक्षो न त्वावृत्त्यभावे इति न वाच्यमिति भावेनोक्तं ॥ **नेक्षा क चेति** ॥ तदर्थमाह ॥ **कदाचित्कापि मोक्षसाधनमिति** ॥ न केवलं ध्यानमनन्तकालीनं किं तु भक्तिश्चेति स्मृतियोजनामभिप्रेत्याह ॥ **ध्यानं निरवधिकमिति** ॥ अपरोक्षज्ञानकाले वासनामयध्यानायुक्तत्वादाह ॥ **यदा दृष्टिरिति** ॥ यद्वा यस्माद्दृष्टिर्न विद्यते

(वाक्यार्थमुक्तावली)

तस्मात्पुनः पुनर्दृष्ट्यर्थं मध्ये मध्ये ध्यानमपेक्षितं **तच्चानन्तकालीनमिति** ॥ भावबोधे तु ध्यानं निरवधिकं भक्तिश्चानन्तकालीना । तत्र हेतुः यदा यस्माद्दृष्टिः फलत्वेन न विद्यते असिद्धत्वा-दित्युक्तं मोक्षविरोधादिति । निरवधिकध्यानस्य विहितत्वेन कार्यत्वे मोक्षेऽपि विहितत्वेन कार्यतापत्या विधिबद्धत्वापत्तेः मोक्षत्वविरोधादित्यर्थः ॥ **करणानुपपत्तेरिति** ॥ मोक्षात्पूर्वमिति शेषः ॥ **न चोक्तेति** ॥ श्रवणादिना तदुपपत्तेः किं ध्याननियमेनेत्युक्तदोष इत्यर्थः । स्मृतौ शमशब्देन ध्यानस्य विवक्षितत्वात्प्रकृतोपयोगः ।

## तत्त्वसुबोधिनी

ॐ नानन्तरमेवेति विकल्प्याद्यं दूषयति ॥ **ध्यानं विनेति** ॥ द्वितीयमाशङ्क्य तन्निराकरण-परत्वेन स य इति भाष्यं व्याचष्टे ॥ **तथापीति** ॥ **कैमुत्येनापीति** ॥ अनेन तत्रापीति सूत्रांशस्य विमुक्तावपीत्यर्थ इत्युक्तम् । भाष्योदाहृतश्रुतिद्वये उपासनामात्रस्य श्रुतत्वात् किमर्थं तत्पूर्वं भाष्ये उपासनादीत्यादिपदप्रयोगः । वेदादिसाहित्यद्योतनार्थम् । तदवैयर्थ्यं ज्ञानानन्तरमेव तद्युतध्यानस्य कर्तव्यत्वे ज्ञानानन्तरं केवलध्यानस्यैव कर्तव्यत्वेन तद्युतध्यानस्याकर्तव्यत्वादित्यसत्यमेव वस्तुस्थितिः । तथापि ज्ञानोत्तरं सम्यक् ध्यानालाभे श्रवणादेरपि कार्यत्वात्तदभिप्रायेण आदिपदेन श्रवणादिग्रहणोपपत्तेरित्याह ॥ **ज्ञानात्पूर्वमिति** ॥ इत्यतः इत्यभिप्रायेणेति । ज्ञानोत्तरकालं सम्यक् ध्यानालाभे श्रवणादियुतध्यानं तस्याकर्तव्यत्वमाहेतिरयुक्तम् । अत्र वाक्यार्थाभिप्रायः न स्पष्टः । मीमांस्योयं विद्वद्भिः । भक्तिश्चानन्तकालीना इत्युत्तरार्धानुसारेणाह । दृष्टत्वस्य च ध्यानं निरवधिकमिति । अनेन दृष्टतत्वस्य पुंसः परमे ब्रह्मणि विषये ध्यानं निरवधिकम् । स्फुटा भक्तिश्चानन्तकालात् । तत्र हेतुपदे यस्माद्दृष्टिः फलत्वेन न विद्यते सिद्धत्वादिति योजना सूचिता भवति । ज्ञानोत्तरं निरवधिकध्यानस्य विहितत्वेन करणे मोक्षेऽपि तथाकरणापत्या विधिबन्ध-वर्जितत्वरूपमोक्षविरोधादित्यर्थः ॥ **करणानुपपत्तेरिति** ॥ मोक्षात्पूर्वमित्यर्थः । तर्हि श्रवणा-देरप्यानन्दातिशयार्थत्वेन न ध्याननियमः स्यादित्याशङ्क्य निषेधति ॥ **न चोक्तदोष इति** ॥ **ध्यानस्यैवेति** ॥ शमः कारणमित्यत्र शमशब्देन ध्यानस्यैव विवक्षितत्वादिति भावः ।

## वाक्यार्थविवरणम्

**अप्रायणान्तत्वेति** ॥ प्रायणं मोक्षः । तथा च मोक्षपर्यन्तत्वसमर्थनादित्यर्थः । मोक्षपर्यन्तं विहितित्वेन कर्तव्यत्वं तदनन्तरं भक्तिवत् स्वभावत एव निरवधिकतया कर्तव्यत्वं समर्थ्यत इति द्रष्टव्यम् ॥ **अन्यथेति** ॥ ध्यानस्यापरोक्षज्ञानसाधनत्वेन तत्पर्यन्तमेव कर्तव्यत्वमङ्गीकृत्य मोक्षपर्यन्तत्वानङ्गीकारे ज्ञानिनामपि शुकादीनां ध्यानदर्शनेन तत्कृतध्यानस्यानन्दाभिवृद्धिलक्षण-फलाभावप्रसङ्गेन व्यर्थत्वापत्त्या मुक्तौ सर्वेषामानन्दादिसाम्यापत्तेस्तारतम्याभावप्रसङ्ग इत्यर्थः ॥ **मोक्षोपयोगित्वादिति** ॥ लिङ्गभङ्गरूपमोक्षोपयोगित्वादित्यर्थः ॥ **तन्नियमेति** ॥ ध्याननियमेत्यर्थः । कुत इत्यत आह ॥ **ज्ञान एवेति** ॥ नानन्दातिशय इत्यर्थः ॥ **प्राबल्यात्** ॥ प्रधानत्वात् ।

ननु ध्यानस्य ज्ञानसाधने प्राधान्यादानन्दातिशयेऽपि प्राधान्यमस्त्वित्यत आह ॥ **न हीति** ॥ धान्यादौ प्रधानसाधनस्य कृष्यादेः स्वर्गादौ तदभावः ॥ **ततः ज्ञानानन्तरं** ॥ **प्रायेण** प्राधान्येन ॥ **तथापीति** ॥ ज्ञानपर्यन्तमावश्यकत्वेऽपीत्यर्थः । कर्तव्यमेव न परित्याज्यमित्यर्थः । उत्तरत्र ॥ **भक्तिश्च अनन्तकालीनेति** ॥ भक्तेरनन्तकाले कर्तव्यतया निरवधिकत्वस्योक्तत्वात् तदनुसारेण दृष्टतत्त्वस्य च ध्यानमनन्तकालीनमेव निरवधिकमेव कर्तव्यमित्यर्थमभिप्रेत्याह ॥ **दृष्टतत्त्वस्येति** ॥ अनेन दृष्टतत्त्वस्य पुंसः परमे ब्रह्मणि विषये ध्यानं निरवधिकं कर्तव्यम् । **स्फुटा** स्पष्टा । आविर्भूता भक्तिश्चानन्तकालीना कर्तव्या । ध्यानं भक्तिरिति द्वयमपि स्वभावत एव सर्वदा कर्तव्यमिति यावत् । तत्र फलाभावो हेतुः । ननु ज्ञानमेव फलं किं न स्यादिति मन्दाशङ्कां परिहरति ॥ **यदा दृष्टिरिति** ॥ यदा यस्मात् दृष्टिर्न विद्यते फलत्वेनेति शेषः । दृष्टिः फलं न भवति सिद्धत्वात् । अतः स्वभावतो निरवधिकमेव कर्तव्यमिति स्मृतियोजना द्रष्टव्या ॥ **मोक्षविरोधादिति** ॥ ज्ञानोत्तरं निरवधिकध्यानस्य विहितत्वेन करणे मोक्षेऽपि तथैव करणापत्त्या विधिबन्धवर्जितत्वरूप-मोक्षत्वविरोधादित्यर्थः ॥ **करणानुपपत्तेरिति** ॥ अविहितत्वादेव मोक्षात्पूर्वं करणानुपपत्तेरित्यर्थः ॥ **उक्तदोष इति** ॥ श्रवणादिसाधनान्तरेणानन्दातिशयसम्भवान्न ध्याननियम इत्युक्तदोष इत्यर्थः ॥ **ध्यानस्यैवेति** ॥ तत्र शमशब्दस्य ध्यानरूपत्वादिति भावः । तथा च योगारूढस्यापरोक्षज्ञानिनः शमो ध्यानमानन्दातिशयकारणमुच्यत इति गीतार्थो द्रष्टव्यः ॥ **तद्विचित्रफलवत्त्वादिति** ॥ तेन ध्यानानुसारेणानन्दातिशयरूपविचित्रफलवत्त्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

**ध्यानफलाभावप्रसङ्गेनेति** ॥ अपरोक्षज्ञानानन्तरं कृतध्यानस्यानन्दाभिवृद्धिलक्षणफलाभावप्रसङ्गेनेत्यर्थः । ननु श्रवणादित्रयस्य ज्ञानसाधनत्वेऽपि ध्यानमेव प्रबलं साधनमेवमत्रापि साधनस्य प्राबल्यं किं न स्यादित्यत आह ॥ **ज्ञान एवेति** ॥ ॐ आप्रायणात्तत्रापि हि दृष्टं ॐ ॥ आङ्मर्यादायां प्रकर्षेणायनं प्रायणं मोक्षः, ध्यानं आप्रायणं मोक्षपर्यन्तं कार्यं कुतः हि यस्मात् स यो हेति दृष्टं श्रुतिरस्ति । किञ्च तत्रापि मुक्तावपि ध्यानं कुर्वते किमुत ततः प्राक् । तदेव कुतः हि यस्मान्मुक्तावपीति दृष्टमित्यर्थः ।

**ॐकारो हरिरिति** ॥ ओमित्याक्रियमाणत्वादिति भावः । भाष्योदाहृतश्रुतिद्वये उपासनामात्रस्य श्रुतत्वात्किमर्थं तत्पूर्वभाष्य उपासनादीत्यादिपदप्रयोग इत्यत आह ॥ **ज्ञानात्पूर्वमिति** ॥ ज्ञानानन्तरं श्रवणादीत्यत्र गीताभाष्योदाहृतप्रमाणमाह ॥ **उक्तं हीति** ॥ वर्तयन्ति वर्तन्ते कालं नयन्तीति वार्थः ॥ **मोक्षविरोधादिति** ॥ ज्ञानोत्तरं निरवधिकध्यानस्य विहितत्वेन करणे मोक्षेऽपि तथा करणापत्या विधिबन्धवर्जितत्वरूपमोक्षत्वविरोधादित्यर्थः ॥ **कारणानुपपत्तेरिति** ॥ मोक्षात्पूर्वमित्यर्थः । कारणं आनन्दवृद्धेः ॥ **ध्यानस्यैवेति** ॥ शमशब्देन तत्र ध्यानस्यैव विवक्षितत्वादिति भावः । **उक्तव्याहतेरिति** ॥ अनियमः सर्वेषामित्युक्तव्याहतेरित्यर्थः ॥ **अनियतदेशेति** ॥ कर्मणां व्यवस्थितदेशकालयोः फलोन्मुखत्वाय परिपाकशून्यत्वादित्यर्थः । तथा च यौगपद्यमिति भावः ॥ **भगस्यापीति** ॥ योगसामर्थ्येन तन्निवारणोपपत्तेरिति भावः । जातु कदाचित् विप्रतिपत्तेः दृष्टान्ते प्रायश्चित्तेन कर्मक्षयाभावे तद्विधायकश्रुतिवैय्यर्थ्यमिति भावेनाह ॥ **ब्रह्महेति** ॥ ब्राह्मणहन्तेत्यर्थः ॥ **दग्धगेहेष्टिविधिवदिति** ॥ यथा गेहे दग्धे सति गृहस्थेन इष्टिविशेषो गृहदाहनिमित्तत्त्वमेव न तु तज्जातपापपरिहारार्थमित्यर्थः ॥ **अस्तु वेति** ॥ स्मृतेश्चाकृतप्रायश्चित्तविषयत्वमिति भावः ॥ **निष्कारणेति** ॥ संसारावस्थानेकर्मविनाकारणान्तराभावादिति भावः । विरम्य क्रमिकतया येनैकस्मिन्काले लब्धात्मनः कालान्तरे कर्मविनाशत्वं स्यादिति भावः ।

॥ इति प्रायणाधिकरणम् ॥ ७ ॥

## ८. तदधिगमाधिकरणम्

**॥ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ १३ ॥**

ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च ।

'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' ।
'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्त' इति तद्व्यपदेशात् ॥

### तत्त्वप्रदीपिका

एवं पृथुलतरप्रयत्नसञ्जातायां सम्यग्दृष्टौ तस्य को विशेष इत्यत आह– तदधिगम **उत्तरपूर्वाघयोरश्लेषविनाशौ तव्द्यपदेशात् ॥** ब्रह्मदर्शने सञ्जात उत्तरकाले यदघं क्रियते तस्याश्लेषः ।

'ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम्' इति चानुव्याख्याने ॥

### तत्त्वप्रकाशिका

अत्र प्रासङ्गिकं समाप्य भगवज्ज्ञानेन कर्मक्षयलक्षणफलसिद्धिसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मोक्षाभावप्रसङ्गेनोक्तव्याहतेः समर्थनीयमेतत् । प्रकृतं ज्ञानमेव विषयः । मोक्षं साधयति न वेति सन्देहः । उभयविधार्थदृष्टिः सन्देहबीजम् । न ज्ञानेन मोक्ष इति पूर्वः पक्षः । प्रागापादित-कर्मणां भावात् । न च तानि ज्ञानजन्मनि भुज्यन्ते । बहुशरीरफलकर्मणां भावात् । न च तानि क्रमेण भुज्यन्त इति वाच्यम् । तथा सति बहुकालान्तरितज्ञानस्य जीर्णबीजवदमोक्षहेतुत्वापातात् । न च युगपत्कायव्यूहेन भोगसम्भवः । अनियतदेशकालविपाकत्वात् । न च योगप्रभावेन तादृशा-नामपि भोगः । तथा सति भोगस्याप्यभावप्रसङ्गात् । तद्भोगकाले च पुनः कर्मान्तरसम्भवेना-समाप्तेश्च । न च ज्ञानी न करोति । 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादि-विरोधात् । न च वाच्यं ज्ञानेनैव प्राचीनकर्मणां क्षयः पश्चात्तनानामलेप इति । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधात् । न च प्रायश्चित्तेनेव ज्ञानेन कर्मक्षय इति । विप्रतिपत्तेः । 'ब्रह्महा द्वादशाब्दं व्रतं चरेत्' इत्यादेर्दग्धगेहेष्टिविधिवदुपपत्तेः । अस्तु वा प्रायश्चित्तेन कर्मक्षयो विशेषप्रमाणवलात् । न चात्र तथा प्रमाणमस्ति येन स्मृतिबाधः स्यात् । किं च ज्ञानेनैव कर्मक्षये

(तत्त्वप्रकाशिका)

**ज्ञानोदयानन्तरं मोक्षः स्यात् । अथ न ज्ञानानन्तरमेव मोक्षस्तर्हि कर्मक्षय एव न प्राप्नोति । निष्कारणावस्थानायोगात् । न च वक्तव्यमुत्पन्नं ज्ञानं न तदैव कर्म क्षिणोतीति । तथा सति कदापि कर्मक्षयाभावप्राप्तेः । न हि ज्ञानस्य विरम्य व्यापारः सम्भवति । अतो ज्ञानेन मोक्षासिद्धेरुक्तमयुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ।। तदिति ।। सम्भवत्येव ज्ञानेन मोक्षः । ब्रह्मदृष्टिरिति प्रकृतब्रह्माधिगमादेव पूर्वपापविनाशादुत्तरस्याश्लेषाच्च । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोध इति चेन्न । यथा खलु प्रायश्चित्तविधिबलादेतत्स्मृतेरकृतप्रायश्चित्तविषयत्वं कल्प्यते तथाऽज्ञविषयत्वस्यापि सम्भवात् । न चात्र बाधकाभावः । 'तद्यथा' इति श्रुतिसद्भावादेवेति भावः । यदप्युक्तं प्रायश्चित्तविधिर्दग्धगेहेष्टिविधिवदतत्परिहारार्थं इति तन्न । प्रयोजनान्तराभावेन तद्वैयर्थ्यप्रसङ्गात् । दग्धगेहपदेनाग्निनाशनिमित्तप्रत्यवायवत उपलक्षणात् ।।**

## गुर्वर्थदीपिका

विप्रतिपत्तेरित्यस्य प्रायश्चित्तस्यापि पापनिर्हरणे विप्रतिपत्तेरित्यर्थः । ब्रह्महा द्वादशाब्दव्रतं चरेदित्यस्य यथा गृहदाहे सति क्रियमाणेष्टिजनितपुण्येन पुनः करिष्यमाणगृहे संव्यवहार एव सम्पद्यते । न तु प्राचीनदग्धगृहस्यैव दाहनिवृत्तिः क्रियते । तद्वत् द्वादशाब्दव्रतचरणजनितपुण्येन स्वस्य लोके संव्यवहार एव भवति न तु ब्रह्महत्यादोषस्यैव निवृत्तिरित्यर्थः । निष्कारणावस्थानायोगादित्यस्य ज्ञानेन हि मोक्षार्थं कर्मक्षयः कार्यः । स चेन्नास्ति तर्हि अकिञ्चित्करकर्मक्षयावस्थानमेव नापादनीयमित्यर्थः । एवं सुकर्मणश्चापीति वदता सूत्रेऽप्येवमिति दृष्टान्तोक्त्या दार्ष्टान्तिकेऽप्यसंश्लेषपदं विनाशस्यापि सूचकमिति दर्शितम् ।

## भावबोधः

**अन्यथा मोक्षाभावप्रसङ्गेनेति** ।। यज्ज्ञानिनां ध्यानस्य विहिततया कर्तव्यत्वं मोक्षपर्यन्तमित्युक्तम्, तन्न; प्रागापादितकर्मणां प्रतिबन्धकानां सत्त्वेन ज्ञानेन मोक्षस्यैवाजननादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ।। **उक्तव्याहतेरिति** ।। 'अनियमः सर्वेषाम्' इत्युक्तव्याहतेरित्यर्थः ।। **मोक्षमित्यादिना** ।। अत्रापरोक्षज्ञानं किं मोक्षं जनयति उत न जनयतीति चिन्ता । तदर्थं प्रागुत्तरं चापादितकर्मणां मोक्षप्रतिबन्धकत्वं सम्भवत्युत न सम्भवतीति । तदर्थं तेषां पूर्वोत्तरकालं कृतानां ज्ञानेन विनाशाश्लेषौ न सम्भवत उत सम्भवत इति । विनाशाश्लेषपक्षेऽपि किं सर्वेषां

(भावबोधः)

विनाशाश्लेषावुत प्रारब्धानामेवेति । तदर्थं प्रारब्धानां भोगैकनाश्यत्वे प्रमाणं नास्त्युतास्तीति । अथवा ब्रह्मविषयकापरोक्षसम्यज्ज्ञानमिथ्याज्ञाने मोक्षान्धन्तमसी न साधयत उत साधयत इति चिन्ता । तदर्थं प्रागुत्तरमापादितसम्यज्ज्ञानिमिथ्याज्ञानिपापपुण्यकर्मणां मोक्षान्धन्तमस-प्रतिबन्धकत्वमस्त्युत नास्तीति । तदर्थं तेषां सम्यज्ज्ञानमिथ्याज्ञानाभ्यां विनाशाश्लेषौ न भवत उत भवत इति । विनाशाश्लेषपक्षेऽपि किं सर्वेषां विनाशाश्लेषौ उत प्रारब्धानामेवेति । तदर्थं सम्यग्ज्ञानिमिथ्याज्ञानिनोः पुण्यपापयोर्भोगैकनाश्यत्वे प्रमाणं नास्त्युतास्तीति ।

प्रागापादितेत्यादिना 'तदधिगमे' इत्यादिसूत्रसूचितपूर्वपक्षयुक्तिमभिधाय ज्ञानोदय अशेष-कर्मक्षये कृतकृत्यत्वात् तदैव मुक्तिः । अथ न ज्ञानानन्तरमेव मोक्ष इति न्यायविवरणोक्त-पूर्वपक्षयुक्तिमाह– **किं चेत्यादिना ॥ अथ न ज्ञानानन्तरमेव मोक्ष इति ॥** अनेन न्यायविवरणे न चेत्यत्रापि मुक्तिरिति सम्बध्यत इत्युक्तं भवति **॥ न च वक्तव्यमित्यादिना ॥** अनेन ज्ञानोदयेऽशेषकर्मक्षयो न चेत् कदापि कर्मक्षय इति न्यायविवरणवाक्यं प्रकारान्तरेण व्याख्यातं भवति । पूर्वपापविनाशादुत्तरस्याश्लेषाच्चेति । सूत्रभाष्यस्थक्रमोल्लङ्घनं कर्मक्रमानुसारेणेति ज्ञातव्यम् । स्तुत्यधिकरणे 'कामचारेण चैके' इति सूत्रेण ज्ञानिकृतपापानां मोक्षप्रतिबन्धकत्वं नास्तीत्युक्तम् । अत्राश्लेषपदेन ज्ञानिकृतपुण्यपापस्येह लोकेऽशुचित्वादिहेतुत्वं परलोके नरकाद्यनर्थहेतुत्वं नास्तीत्युच्यते । तत्रैव 'उपमर्दं च' इति सूत्रेण प्रारब्धजस्य फलस्यैव ज्ञानिनामल्पीयान् भोगो न त्वज्ञवद्यावद्भोग इति उक्तम् । इह तु विनाशपदेन प्रारब्धानामेव स्वरूपविनाश उच्यत इति न ताभ्यामस्य गतार्थतेति ।

'ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ॥
अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यते ।
प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव ॥
प्राप्तस्याप्यनिवृत्तस्य किञ्चिद्भुक्तस्य संविदा ।
उपमर्द इह प्रोक्तः... ..... ..... ॥'

इत्यनुव्याख्यान एवोक्तम् । उपपादितं च सुधायाम् । अतत्परिहारार्थ इतीति । यथा दग्धगेहेष्टेः गृहदाहनिमित्तमेव न तु तज्जनितपापपरिहारार्थत्वम् । दग्धस्य पुनः परावृत्त्यभावात् ।

(भावबोधः)

तथा प्रायश्चित्तस्यापि ब्रह्महननादिनिमित्तकत्वमेव; न तु तज्जनितपापपरिहारार्थत्वम् । ''नाभुक्तं क्षीयते कर्म'' इति स्मृतिविरोधादिति भावः ।

## भावदीपः

वृत्तानुवादपूर्वं वक्ष्यमाणं दर्शयन्नेवान्तर्भावसङ्गतिमाह ॥ **अत्रेति** ॥ समाप्येत्युक्त्याऽस्य पूर्वस्मादवसरसङ्गतिः सूचिता । अत्र भगवदित्युक्त्या शास्त्रे कर्मक्षयेत्युक्त्या पादे फलेत्युक्त्याऽध्याये सङ्गतिरुपपादिता ॥ **अन्यथेति** ॥ ज्ञानात्कर्मक्षयासिद्धावनियमः सर्वेषामित्युक्तव्याघात इत्यर्थः ॥ **प्रकृतमिति** ॥ एवं निरूपितान्तरङ्गात्यावश्यकसाधनजन्यतया प्रकृतमित्यर्थः । एतेन ज्ञानस्यांतरङ्गसाधनं निरूप्यात्र तत्फलं निरूप्यत इत्यपि सङ्गतिः सूचिता ॥ **उभयविधेति** ॥ कुण्ठिताकुण्ठितकुठारयोश्छिदिक्रियारूपफलासाधकसाधकयोर्दर्शनमित्यर्थः । न्यायविवरणे ज्ञानोदय इत्यादिनाऽनारब्धकार्ये एवेति सूत्रव्यावर्त्यमात्रस्योक्तेराद्यसूत्रादिव्यावर्त्यं स्वयं विवृण्वन् हेतुमाह ॥ **प्रागिति** ॥ सन्ति हि बहुतरशरीरफलानि कर्माणि सप्त जन्मानि विप्रः स्यादित्यादेरिति द्वितीयगीताभाष्योक्तं सौत्रविनाशपदव्यावर्त्यशङ्कापूर्वं व्यनक्ति ॥ **न च तानीति** ॥ यच्छरीरे ज्ञानोदयस्तद्देह एवेत्यर्थः ॥ **बह्विति** ॥ तानि कथमेकजन्मन्येव भुज्येरन्निति भावः । पाशुपतवैशेषिकादयस्तु अनेकशरीरफलानामपि कर्मणां कायव्यूहनिर्माणेन युगपद्भोगमाहुः । तन्निरासायोक्तं गीताभाष्ये न च कायव्यूहापेक्षेति । तद्धेतूक्त्या व्यनक्ति ॥ **न च युगपदिति** ॥ **अनियतेति** ॥ भिन्नदेशकालोपभोग्यानामेककालादावुपभोगायोगादिति भावः ॥ **तथा सतीति** ॥ योगप्रभावेन कर्मसामर्थ्यप्रतिबन्धे सतीत्यर्थः । सौत्राश्लेषपदव्यावर्त्यं व्यनक्ति ॥ **तद्भोगेति** ॥ गीतावाक्यविरोधमाह ॥ **न हीति** ॥ अनारब्धसूत्रसूचितहेतुव्यावर्त्यपूर्वमाह ॥ **न च वाच्यमिति** ॥ भोगं विनापि कर्मक्षयमाशङ्कते ॥ **न चेति** ॥ यदि प्रायश्चित्तेन कर्मक्षयो विप्रतिपन्नस्तर्हि प्रायश्चित्तशास्त्रस्य गतिरेव न स्यादित्यतो गतिमाह ॥ **ब्रह्महेति** ॥ यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदित्याहिताग्नेर्गृहदाहे सति क्षामवतीष्टिर्विधीयते । तत्र यथा क्षामवतीष्ट्या गृहदाहस्य क्षयो नास्ति किंतूपरागे स्नायादित्यादिवन्नैमित्तिकत्वेन विधानं तद्वदस्त्वित्यर्थः । चतुर्थाद्यपादे द्रव्यार्जनाधिकरणे गृहदाहेष्टेः भाट्टः फलार्थत्वोक्तावपि गृहदाहक्षयफलकत्वाभावात्प्राभाकरमते नैमित्तिकानामफलत्वोपगमाच्चेति भावः ।

(भावदीपः)

तद्व्यपदेशादित्येतद्व्यावर्त्यमाह ॥ **अस्तु वेति** ॥ अप्रारब्धापेक्षयाऽयमभ्युपगमः ॥ **स्मृतीति** ॥ नाभुक्तमिति स्मृतीत्यर्थः ॥ **स्यादिति** ॥ अङ्गीकार्यः स्यादित्यर्थः । ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिः न चेत्कर्माक्षय इति न्यायविवरणोक्तं अनारब्धकार्ये एवेति सूत्रव्यावर्त्यं व्यनक्ति ॥ **किं चेति** ॥ **अवस्थानेति** ॥ कर्मक्षये ज्ञानिनोऽवस्थानायोगादित्यर्थः । कर्मनिबन्धनत्वादवस्थितेरिति भावः । श्रुताविषीकतूलदृष्टान्तोक्तिव्यावर्त्यमाह ॥ **न चेत्यादिना** ॥ **तथा सतीति** ॥ ज्ञानात्क्रमेण कर्मक्षये सतीत्यर्थः । अप्राप्तिमेव व्यनक्ति ॥ **न हीति** ॥ **अत इति** ॥ कर्मक्षयायोगादित्यर्थः । पूर्वपक्षनिरसनहेतुतया भाष्यं व्याचष्टे ॥ **सम्भवत्येवेति** ॥ सौत्रतत्पदस्याप्रकृतपरामर्शित्वं निराह ॥ **ब्रह्मेति** ॥ पूर्वत्र दृष्टिपदस्योपासनार्थत्वेनापरोक्षज्ञानार्थत्वाभावादधिगम इत्युक्तिरिति भावः । अत्राश्लेषो नाम ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते । अशुचित्वादिकं वास्य न भवेदिति तत्फलमित्यनुभाष्योक्तदिशा बोध्यः । आनन्दह्रासकरत्वलेपस्तु विद्यत एव । अतो न स्तुतयेऽनुमतिर्वेत्यधिकरणविरोध इति भावः । 'तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् । करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम्' । करोतीत्यनुभाष्यदिशा पौर्वापर्यक्रममनुसृत्य भाष्यादिस्थक्रमत्यागः । तद्यथेति भाष्यशेषमस्तु वेत्यादिप्रागुक्तशङ्कानिवर्तकत्वेन व्याचष्टे ॥ **नाभुक्तमिति** ॥ **तद्वैयर्थ्येति** ॥ क्षामेष्टिवैयर्थ्येत्यर्थः ॥ **अग्निनाशेति** ॥ अग्निहोत्रगृहदाहे सति वैदिकाग्नेर्लौकिकाग्निसम्पर्केणाहितगार्हपत्यादिवैदिकाग्निनाशात् यस्य गृहान् दहतीत्यस्य यो गृहदाहनिमित्ताग्निनाशजन्यप्रत्यवायवानित्यर्थं विवक्षित्वा प्रत्यवायपरिहारार्थत्वस्य क्षामेष्टौ वाच्यत्वादित्यर्थः । तथा च ज्ञानस्यापि निषिद्धकरणादिजन्यप्रत्यवायनिवर्तकत्वं स्यादेवेति भावः । उक्तं च पूर्वतन्त्रे चतुर्थाद्यपादे द्रव्यार्जनाधिकरणे क्षामेष्टेः फलार्थत्वम् ।

## अभिनवचन्द्रिका

**उभयविधार्थदृष्टिरिति** ॥ लोकसाध्यत्वेनाभिमतस्य साधकाः केचनार्था दृष्टाः । अन्ये पुनरसाधका दृष्टाः इति दर्शनं सन्देहबीजमित्यर्थः ॥ **अनियतदेशकालेति** ॥ ननु अनियतकालविपाक एव युगपत्कायव्यूहविरोधी न त्वनियतदेशविपाकः । युगपदनेकदेशेषु कायव्यूहसम्भवात् । ततश्च देशग्रहणं व्यर्थमिति चेत् सत्यम्, अनियतकालविपाक एव

(अभिनवचन्द्रिका)

युगपदनेककायव्यूहविरोधी, तथापि छत्रिन्यायेन नियतदेशविपाकोऽपि युगपत्कायव्यूहविरोधित्वेनोक्त इति ध्येयम् ॥ **विप्रतिपत्तेरिति** ॥ दृष्टान्त इति शेषः। प्रायश्चित्तावध्यन्यथानुपपत्त्या कर्मक्षयनिश्चय इत्यत आह– **ब्रह्मेति** ॥ यथा गृहदाहानन्तरं गृहदाहेष्ट्यधिकारः, तथा ब्रह्महत्याप्राप्तौ द्वादशाब्दव्रताधिकार इत्यर्थकत्वात् न कर्मक्षयसिद्धिरिति भावः ॥ **न हि ज्ञानस्येति** ॥ आशु विनाशित्वादिति भावः ।

## वाक्यार्थमुक्तावली

यत्कर्मनाशाख्यप्रथमभाविफलार्थमियता प्रबन्धेन दर्शनार्थं तत्साधनश्रवणाद्यनुष्ठानं सप्रकारं प्रपञ्चितं तदधुना चिन्त्यत इत्यनन्तरसङ्गतिः । आप्रायणादित्यव्यवहितनये मोक्षस्य स्मारितत्वाच्च ॥ **उक्तव्याहतेरिति** ॥ अनियमः सर्वेषामित्युक्तस्य आप्रायणादित्युक्तस्य च व्याहतेरित्यर्थः ॥ **मोक्षमिति** ॥ ज्ञानं किं मोक्षं न साधयत्युत साधयतीति चिन्ता । तदर्थं प्रायश्चित्तवत्तस्य पूर्वोत्तर-भाविकर्मनाशकत्वसामर्थ्यमप्रामाणिकमुत प्रामाणिकमिति । तदर्थं ज्ञानेनैव कर्मक्षये उत्तरकाल एव मोक्षः स्यादिति तर्कबाधः । प्रमाणाभिमतस्य प्राप्नोति न वेति सङ्ग्रहः सूत्रोक्तसमाधानमेव पूर्वपक्षनिरसनक्षममिति भावेन वाद्यन्तरोक्तं भोगेन कर्मक्षयप्रकारमाशङ्क्य निराकुर्वन् पूर्वपक्ष-मुपोद्बलयति ॥ **न च तानीत्यादिना** ॥ कायव्यूहेन कायविभागेन वा । अनेककायैरिति यावत् ॥ **अनियतेति** ॥ विपाकः फलौन्मुख्यम् । अनियतौ देशकालौ यस्य सोऽनियतदेशकालः । स च विपाको येषां तान्यनियतदेशकालविपाकानि । तेषां भावस्तस्मादित्यर्थः । भवेदेतद्यदि कर्मणामेकस्मिन् काले देशे च फलप्रदत्वं स्यात् । न चैवं । फलदानाय देशकालनियमाभावादिति भावः । न च नियतकालविभाग एव युगपत् कायव्यूहविरोधी न त्वनियतदेशविपाकः । युगपदेक-देशेषु कायव्यूहसम्भवात् । न च व्यूहः समुदायः । अनियतदेशत्वं तद्विरोधितयोपात्तमिति वाच्यम् । युगपदनेकदेहैरेव कर्मक्षयस्यैव वक्तव्यत्वेन समुदायोक्त्यनुपयोगादिति चेन्न । वस्तुतः कर्मभोगस्य देशकालनियमो नास्तीति वस्तुस्थितिप्रदर्शनार्थत्वात् । तथा सतीति योगसामर्थ्यात् कर्मणां भिन्नकालौ फलार्जनतिरोधानस्वाभाव्ये सति पुण्यपापयोः फलदानेन नाशस्यैव सम्भवात् भोगस्याप्यभावः स्यादित्यर्थः । न चेष्टापत्तिः । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतिविरोधादित्यर्थः । सूत्रप्रतिज्ञाभागोक्तं समाधानमाशङ्क्य निषेधति ॥ **न च वाच्यमित्यादिना**

(वाक्यार्थमुक्तावली)

**॥ विप्रतिपत्तेरिति ॥** प्रायश्चित्तेन कर्मक्षये विप्रतिपत्तेरित्यर्थः । प्रायश्चित्तविधेर्नियामकस्य सत्वान्न विप्रतिपत्तिरित्यत आह **॥ ब्रह्महेति ॥ दग्धगेहेति ॥** दग्धगेहस्य यजमानस्य क्षामेष्टिर्विधीयते । तत्र गेहदाहनिमित्ते सतीष्टिः कर्तव्या । अन्यथा प्रत्यवायादित्येव तात्पर्यम् । न गेहदाहनिवृत्यर्थ-मिष्टिकरणेऽपि तदनिवृत्तेः । एवं ब्रह्महेति विधेरपि हत्यानिमित्ते सति द्वादशाब्दव्रतं चरेदित्यत्रैव तात्पर्यान्न प्रायश्चित्तविधिवैय्यर्थ्यमिति भावः । ननु ब्रह्महा द्वादशाब्दव्रतं चरेदित्यत्र गत्यन्तर-कल्पनेऽपि 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति' इत्यादौ साक्षात् पापनिवृत्तिश्रवणात् सेतुदर्शनस्येव ब्रह्मदर्शनस्यापि पूर्वकर्मनिवर्तकत्वं किं न स्यादित्यत आह **॥ अस्तु वेति ॥**

तद्यथा पुष्करफलाश इत्यादिप्रमाणसद्भावात् स कथं तदभाव इत्याशङ्क्य तर्कविरोधात् प्रमाणस्य ज्ञानप्राशस्त्ये तात्पर्यमिति भावेनारब्धकार्ये एव त्विति सूत्रनिरस्यं कृतकृत्येत्युक्तन्यायं न च ज्ञानोदये शेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिरिति न्यायविवरणानुसारेण व्यनक्ति **॥ किं चेति ॥** ज्ञानेनैवाशेषकर्मक्षयेऽङ्गीक्रियमाणे मोक्षाय यत्कर्तव्यं तस्य सर्वस्य कृतत्वात्तदैव ज्ञानोत्तर क्षण एव मुक्तिः स्यादित्यर्थः । ननु भवतु ज्ञानेन कर्मक्षयः, मा भूत् ज्ञानानन्तरं मोक्षः, अप्रयोजकस्तर्क इत्यतः कृतकृत्यता चेति न्यायमालायां चशब्दसूचितं न चेत्कर्माक्षय इति न्यायविवरणोक्तं न्यायमाह **॥ अथेति ॥** यदीत्यर्थः । ननु ज्ञानानन्तरं मोक्षाभावे कर्मक्षयाभावः कुत इत्यत आह **॥ निष्कारणेति ॥** कर्मक्षये सति ज्ञानानन्तरं देहादीनामवस्थानं न सम्भवति । तदवस्थाने कर्मणामेव हेतुत्वाद्वर्तते चावस्थानमतः कर्मक्षय एव नेति भावः । चशब्दसूचितं न्यायान्तरं ज्ञानान्तरमेव कर्माक्षयो न चेत्कदापि कर्मक्षय इति न्यायविवरणस्यार्थान्तरं व्यनक्ति **॥ तथा सतीति ॥ न हीति ॥** ज्ञानस्य विरम्यव्यापारेऽज्ञाननिवृत्तिरपि विलम्बेन स्यात् ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर ॥

इति श्रुतौ दृष्ट एवात्मनीश्वर इति स्मृतौ च संशयादिनिवृत्तिकर्मक्षययोस्तुल्ययोगक्षेमत्वे माना-भावादिति भावः । ज्ञानस्याशुतरविनाशित्वाद्विरम्य व्यापारायोग इति वा **॥ पूर्वपादेति ॥** अत्र सूत्रभाष्यक्रमोल्लङ्घनं ज्ञानेन भगवत्कार्यक्रमानुसारेण ज्ञेयम् **॥ अतत्परिहारार्थ इति ॥** यथा दग्धगेहस्य क्षामेष्टिविधिर्गेहदाहपरिहारार्थो न भवति तथा द्वादशाब्दविधिरपि ब्रह्महत्यादोष-

(वाक्यार्थमुक्तावली)

परिहारार्थो न भवतीति यदुक्तं तन्नेत्यर्थः । कुत इत्यत आह ॥ **प्रयोजनेति** ॥ द्वादशाब्द-वृतविधेर्ब्रह्महत्यादोषपरिहारार्थत्वाभावे प्रयोजनान्तराभावेन तद्वैय्यर्थ्यप्रसङ्गात् । व्यर्थविधेरनवधेय-त्वादिति भावः । ननु गेहदाहापरिहारकमोक्षेष्टिविधेः प्रयोजनान्तराभावेऽपि नाविश्वसनीयत्वम् । दाहाख्यनिमित्ते प्राप्ते तत्कर्तव्यमित्यत्रैव तात्पर्यात् प्रकृतेऽपि तथोपपत्तेरित्यत आह ॥ **दग्धगेहपदेन चेति** ॥ दग्धगेहः इष्टिं कुर्यादित्यत्र दग्धगेहपदेनाग्निहोत्रशालादाहे आहवनीयादिवैदिकाग्नेः-लौकिकाग्निसम्पर्केण तन्नाशे सति तन्निमित्तकप्रत्यवायवान् यजमान इति प्रत्यवायवत उपलक्षणात् । तत्प्रयुक्तप्रत्यवायपरिहारार्थत्वेन विधिपर्यवसानात् दृष्टान्ते प्रयोजनाभावो न सम्मत इति भावः । यद्यपि दग्धगेहपदं न तत्र श्रूयते तथापि यस्य गेहान् हन्तीति वाक्यस्य यो गृहदाहवान् भवतीत्यर्थकत्वात् दग्धगेहपदेनेत्यनुवादः कृतः ।

## तत्त्वसुबोधिनी

**अन्यथा मोक्षाभावप्रसङ्गेनेति** । यद्ज्ञानिनां ध्यानस्य विहिततया कर्तव्यत्वं मोक्षपर्यन्त-मित्युक्तत्वात्तत्र प्रागापादितकर्मणां प्रतिबंधकानां सत्वेन ज्ञानेन मोक्षस्यैवाजननादित्या-क्षेपोत्थानादनंतरसङ्गतिरिति भावः ॥ **उक्तव्याहतेरिति** ॥ एवं मुक्तिफलानियमेत्युक्तव्याहतेः । अनियमः 'सर्वेषामित्युक्तव्याहतेरित्यर्थः । कायव्यूहेन । अनेकशरीरनिर्माणेनेत्यर्थः । अनियत-देशकालविपाकत्वादिति । नियतकालदेशभोग्यत्वाभावादित्यर्थः ॥ **तथा सतीति** ॥ योग-प्रभावबलादिति भावः ॥ **विप्रतिपत्तेरिति** ॥ प्रायश्चित्ते कर्मक्षय इत्यत्र विप्रतिपत्तेरित्यर्थः । ननु प्रायश्चित्तेन कर्मक्षयाभावे ब्रह्महत्यारूपक्षयमुद्दिश्य प्रायश्चित्तविधानमनर्थकं स्यादित्यत आह ॥ **ब्रह्महत्येति** ॥ **दग्धगेहेष्टिवदिति** ॥ तत्र दग्धगेहे गेहदाहपरिहारार्थत्वं दग्धस्य प्रत्यावृत्ययोगात् । किंतु गेहदाहरूपनिमित्ते सति कर्तव्यत्वमात्रमित्यर्थः । स्मृतिबाधः स्यात् इति । नाभुक्तं क्षीयते कर्म इति स्मृतिबाधः स्यादित्यर्थः । ज्ञानानन्तरं मोक्षाभावे तदनन्तरं कर्मक्षयोऽपि न स्यादित्यत आह ॥ **न हीति** ॥ कुत इत्यतः किं ज्ञानं स्वोदयानन्तरमेव कर्म नाशयति किं वा किंचित्कालं तूष्णीं स्थित्वाऽनन्तरं नाद्य इत्याह ॥ **निष्कारणेति** ॥ सति हि ज्ञानानन्तरं कर्मक्षये अवस्थानकारणीभूतकर्मणः क्षीणत्वेन तदभावावस्थानमेव स्यात् । अस्ति च अवस्थानमिति तदन्यथानुपपत्या कर्मक्षय एव प्राप्नोतीत्यर्थः । ननु न ज्ञानोदयानन्तरमेव कर्मक्षयः किन्तु ज्ञानं

(तत्त्वसुबोधिनी)
किञ्चित्कालं विवृत्वा कर्म क्षिणोतीत्यङ्गीकारादितीदमाशङ्कते ॥ **न चेति** ॥ **न हीति** ॥ तस्य चेतनधर्मत्वादिति भावः । पूर्वपापविनाशादुत्तरस्याश्लेषाच्चेति सूत्रभाष्यस्य क्रमोल्लङ्घनं कर्मक्रमानुसारेणेति ज्ञातव्यम् ॥ एतत्स्मृतेरिति ॥ 'नाभुक्तं क्षीयते कर्म' इति स्मृतेरित्यर्थः । अतत्परिहारार्थ इतीति । यथा दग्धगेहेष्टेः गृहदाहनिमित्तत्वमेव । न तु तत्परिहारार्थत्वं दग्धस्य पुनः परावृत्यभावात् । कर्तुः तथा प्रायश्चित्तस्यापि ब्रह्महत्यादिनिमित्तकत्वमेव । न तु जनितपापपरिहारार्थत्वम् । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधादिति भावः ।

## वाक्यार्थविवरणम्

**उक्तेति** ॥ अनियम इत्युक्तेत्यर्थः ॥ **उभयविधेति** ॥ मोक्षसाधनासाधनेत्यर्थः ॥ **ज्ञानजन्मनीति** ॥ यस्मिन् जन्मनि ज्ञानमुत्पन्नं तस्मिन्नेव जन्मनीत्यर्थः ॥ **भावादिति** ॥ तानि चैकस्मिन्जन्मनि न भोक्तुं शक्यन्त इति भावः ॥ **बहुशरीरेति** ॥ बहुशरीरफलानां कर्मणां तस्मिन्नेकस्मिन् जन्मनि भोगासम्भवादिति भावः ॥ **क्रमेणेति** ॥ क्रमेण जन्मान्तरप्राप्त्येत्यर्थः ॥ **कायव्यूहेनेति** ॥ ज्ञानजन्मन्येवेत्यर्थः ॥ **विपाकत्वात्** ॥ फलजनकत्वात् । तथा च देशान्तरे कालान्तरे च फलजनकतया क्लृप्तानां कर्मणां कायव्यूहेनैकदा भोगासम्भवादिति भावः ॥ **योगप्रभावेण** योगसामर्थ्येन ॥ **तादृशानामपीति** ॥ अनियतदेशकालविपाकानामपीत्यर्थः ॥ **तथा सतीति** ॥ योगसामर्थ्येन भोगाभावेऽपि कर्मणां क्षपयितुं नाशयितुं शक्यत्वादित्यर्थः । भोगमङ्गीकृत्यापि दूषणमाह ॥ **तद्भोगकाले चेति** ॥ तेषां कर्मणां भोगकालेऽपीत्यर्थः । ननु ज्ञानी भोगकाले कर्माणि न करोतीति युक्ता भोगेन कर्मणां समाप्तिरित्याशङ्क्य निषेधति ॥ **न चेति** ॥ करोत्येवेत्यर्थः । ज्ञानी न करोतीत्यङ्गीकारे बाधकमाह ॥ **न हीति** ॥ अलेपः फलाभावः ॥ **नाभुक्तमिति** ॥ 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतिविरोधेन पश्चात्तनानामलेपो न युक्त इति भावः । ननु यथा प्रायश्चित्तेन कर्मणां भोगाभावेऽपि क्षयो भवति । एवं ज्ञानिनामपि कर्मणां भोगाभावेऽपि कर्मक्षयः सम्भवतीत्याशङ्क्य निषेधति ॥ **न च प्रायश्चित्तेनेवेति** ॥ **विप्रतिपत्तेरिति** ॥ प्रायश्चित्तेन कर्मणां क्षयो भवतीत्यस्यास्माकं विप्रतिपन्नत्वात् । तर्हि प्रायश्चित्तविधीनां वैय्यर्थ्यमिति चेन्न । अशुचित्वासम्भाष्यत्वादिपरिहारमात्रत्वादिति भावः । ननु ब्रह्महा द्वादशाब्दव्रतं चरेत्' इत्युक्तरीत्याकरे कपालास्थिमालाधारणादिना द्वादशवर्षव्रतरूप-

(वाक्यार्थविवरणम्)

प्रायश्चित्तचरणे ब्रह्महत्यानिवृत्तिर्भवत्येवेति कथं प्रायश्चित्तेन कर्मक्षये विप्रतिपत्तिरित्यत आह ॥ **ब्रह्महेति ॥ दग्धगेहेष्टिविधिवदिति ॥** यस्याहिताग्नेरग्निर्गृहान् दहेत्, तदा दग्धगेहे इष्टिं कुर्यादिति विधीयते । दग्धः गेहः यस्य असौ पुमान् दग्धगेहः । स काञ्चन इष्टिं कुर्यादिति तदर्थः । न हि इष्टिकरणेन गेहदाहो निवर्तते । दग्धस्य पुनरनिवृत्तेः । तथात्वे गृहोन्मज्जनप्रसङ्गात् । किन्तु तादृशेष्टिकरणे दग्धगेहः पुमान् अधिकारी सम्पद्यत इत्येव । न तु तेन तत्परिहारः । एवं द्वादशाब्दव्रतचरणे ब्राह्मणहननवानेवाधिकारी सम्पद्यते । न तु तेन ब्रह्महत्यापरिहारो भवति । 'नाभुक्तं क्षीयते कर्म' इति श्रुतिविरोधादिति भावः ।

**कर्मक्षय इति ॥** भोगाभावेऽपीत्यर्थः ॥ **विशेषप्रमाणेति ॥** ब्रह्महत्यादिविशेष-प्रमाणबलादित्यर्थः ॥ **अत्रेति ॥** ज्ञानेन भोगाभावेऽपि कर्मक्षये इत्यर्थः ॥ **स्मृतिबाधः स्यादिति ॥** नाभुक्तमिति स्मृतेः बाधः स्यादित्यर्थः ॥ **निष्कारणेति ॥** ज्ञानानन्तरमेव मोक्षाभावे ज्ञानिनोऽवस्थानं प्राप्तम् । न च देहेनावस्थानं कर्माभावे सम्भवति । निष्कारणमवस्थानायोगात् । तथात्वे कदापि मोक्षाभावप्रसङ्गात् । न च कर्मातिरिक्तं कारणमस्तीति । कर्माक्षय एव प्राप्नोतीति भावः ॥ **न तदैवेति ॥** अतोऽवस्थानं न युक्तमिति भावः ॥ **विरम्य व्यापार इति ॥** ज्ञानं स्वयमुत्पद्य किञ्चित्कालं स्थित्वा पश्चात् कर्म क्षिणोतीत्यङ्गीकारे ज्ञानस्य स्थित्वा स्थित्वा व्यापाररूपविरम्यव्यापारः स्यात् । न चासौ ज्ञाने वक्तुं युक्तः । तस्य चेतनधर्मत्वेन जडे ज्ञानेऽसम्भवादिति । ननु नाभुक्तमिति श्रुतेरज्ञविषयत्वं कल्प्यते । ज्ञानिविषयत्वेऽपि बाधका-भावादित्याशङ्क्य निषेधति ॥ **न चात्रेति ॥** ननु ज्ञानिविषयत्वे बाधकाभावः कुतो न चेत्यतो ज्ञानिविषयत्वे श्रुतेरेव बाधिकायाः सत्त्वादित्याह ॥ **तद्यथा इतीति ॥** भाष्ये प्रदूयते इति दूञ् परितापे । तप्तं नष्टं भवेदित्यर्थः ॥ **अतत्परिहारार्थ इति ॥** गेहदाहपरिहारार्थो न भवति । किं नाम । इष्टेर्गृहदाहनिमित्तकत्वमेव । एवं ब्रह्महेत्युक्तद्वादशाब्दव्रतचरणरूपप्रायश्चित्तस्यापि ब्रह्महनननिमित्तकत्वमेव । न तु तत्परिहारार्थत्वम् । नाभुक्तमिति स्मृतिविरोधादिति भावः ॥ **प्रयोजनान्तरेति ॥** ब्रह्महत्यापरिहाररूपप्रयोजनं विना प्रयोजनानन्तराभावादित्यर्थः ॥ **तद्वैय्यर्थ्येति ॥** द्वादशाब्दं व्रतं चरेदिति विधिवैय्यर्थ्यमेव स्यात् । अतो ब्रह्महत्यापरिहारफलकत्वमेवेति भावः । ननु यद्यपि द्वादशाब्दव्रतचरणस्य ब्रह्महत्यानिवृत्तिः प्रयोजनं सम्भवति । तथापि दग्धगेहेष्टेर्गृहदाह-

(वाक्यार्थविवरणम्)
निवृत्तिप्रयोजनकत्वं न सम्भवतीति चेत्तत्राह ॥ **दग्धगेहपदेनेति** ॥ तथा च दग्धगेहः गेहदाहेन तदन्तर्गताग्निनाशजनितप्रत्यवायवान् पुरुष इष्टिं कुर्यादित्यर्थः । तथा चेष्ट्या स प्रत्यवायो निवर्तत इति तदर्थो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

तस्य ब्रह्मण अधिगमे दर्शने सत्युत्तरपूर्वाघयोरश्लेषविनाशौ उत्तरपापस्याश्लेषः पूर्वपापस्य च विनाशो भविष्यति । कुतः । तद्व्यपदेशात् तयोरश्लेषविनाशयोः क्रमेण तद्यथा पुष्करपलाशे तद्यथैषीकातूलमग्नाविति श्रुतिद्वय उक्तत्वादिति भावः । परत्र च नरकाद्यहेतुत्वम् ॥ **तदिति** ॥ प्रायश्चित्तविधीत्यर्थः ॥ **अग्निनाशेति** ॥ आहिताग्निनाशेत्यर्थः । तथा च प्रत्यवाय-निवृत्तिफलहेतुत्वेन न वैय्यर्थ्यमिति भावः ।

## सूत्रभाष्यम्

**ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ १४ ॥**

**पुण्यस्याप्येवमसंश्लेपः पाते । तुशब्दोऽनुत्थानवाची ।**

**'यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।**
**एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम्' इति चाग्नेये ॥**

## तत्त्वप्रदीपिका

**इतरस्य भगवद्द्वेषिणः पुण्यस्याप्येवमुत्तरस्याश्लेपः पूर्वस्य विनाशः, अधः पात आसन्ने अन्यथाज्ञानपरिपूर्तौ । न च ब्रह्मदर्शिन एव पुण्यस्याप्यश्लेपोऽयमुच्यत इति युक्तम् । पात इति विशेपणात् ॥**

**''पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् । यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयादि''ति कौषारवश्रुतावानन्दोत्कर्षार्थं विहितत्वात्तस्य । 'अग्निहोत्रादि तु तत्कार्यायैव' इति वक्ष्यमाणत्वाच्च ॥**

## तत्त्वप्रकाशिका

**एवं ब्रह्मज्ञानिनो मुक्तिसिध्यर्थं ज्ञानादेवाघविनाशाश्लेषावुक्त्वा तत्समानन्यायत्वाद्भगवद्द्वेपिपुण्यस्यापि मिथ्याज्ञानादेव विनाशाश्लेषौ तमः सिध्यर्थं वदत्सूत्रमुपन्यस्य व्याचष्टे ॥ इतरस्यापीति ॥** भगवद्द्वेषिणः पाते प्रत्यासन्ने यथा ज्ञानिपापस्यैवं पुण्यस्याश्लेषो विनाशश्च भवतीति भावः । पातार्थमिति तादर्थ्ये वा सप्तमी । पाते प्राप्तेऽपि तदनुभवानन्तरं पुण्यभोगसम्भवात्किं तदश्लेपादिनेत्यत आह ॥ **तुशब्द इति** ॥ अनुत्थानपाते प्रत्यासन्ने तदर्थमावश्यकावेव भगवद्द्विषां पुण्याश्लेपविनाशाविति भावः । सूत्रार्थे स्मृतिं चाह ॥ **यथेति** ॥

## भावदीपः

भाष्ये सौत्रेतरशब्दस्य पूर्वप्रकृताघेतरस्येत्युपेत्य पुण्यस्येत्युक्तम् । कस्येत्याकाङ्क्षानिरासाय स्मृत्यनुरोधेन पूर्वप्रकृताघेतरस्येत्युपेत्य तदर्थं वदन् भाष्यं व्याचष्टे ॥ **भगवदिति** ॥ सामीप्ये सप्तमीमुपेत्याह ॥ **प्रत्यासन्न इति** ॥ एवंशब्दार्थो यथेत्यादि । असंश्लेष इत्युपलक्षणं मत्वोक्तं **विनाशश्चेति** ॥ तद्द्विषश्चैव पुण्यनाशोऽप्यसङ्गतेत्यनुभाष्योक्तेरिति भावः । तमः प्राप्त्यर्थमित्यध्याहारदोषनिरासायाह ॥ **तादर्थ्ये वेति** ॥ चर्मणि द्वीपिनं हन्ति' इत्यादाविवेति भावः ।

## वाक्यार्थमुक्तावली

**तत्समानन्यायत्वादिति** ॥ भगवद्द्वेषिपुण्यस्य मिथ्यात्वदार्ढ्यात् प्रागेवापादितस्य मिथ्याज्ञानजन्मनि भोगः बहुशरीरफलकत्वात् । नापि क्रमेण भोगः । जीर्णमिथ्याज्ञानस्य तमोहेतुत्वायोगात् । नापि कायव्यूहेन भोगो नियतदेशकालविपाकत्वात् । तद्भोगकाले पुनः पुण्यान्तरसम्भवाच्चेति ज्ञानिपापस्य मोक्षप्रतिबन्धकत्वे यो न्यायस्तत्समानन्यायापन्नत्वात्तमस्तेषां दुर्लभमित्याशङ्क्य तत्समानन्यायापन्नत्वात्तद्वदेव मिथ्याज्ञानवदेव विनाशाश्लेषौ तमःसिध्यर्थं वदत्सूत्रमित्यर्थः । सूत्रे इतरस्येति प्रकृतज्ञानीतरस्य द्वेषिण इत्यर्थः । स्मृतौ पततस्तमसीति व्याख्यातमित्यभिप्रेत्याह ॥ **भगवद्द्वेषिण इति** ॥ पाते इत्येतत्सामीप्ये सप्तमी । पाते आसन्ने पतनहेतुभूतमिथ्याज्ञाने पूर्णे सतीति यावदित्यर्थमभिप्रेत्याह ॥ **पात इति** ॥ एवमित्यस्यापेक्षितपूरणं यथेति । इतरस्य प्रकृताघादितरस्य पुण्यस्येत्यर्थान्तरकथनम् । अश्लेषशब्दो विनाशोपलक्षक इत्युक्तं **विनाशश्चेति** ॥

(वाक्यार्थमुक्तावली)

पूर्वं पात इत्येतदश्लेषविनाशसामग्रीसद्भावोपपादकत्वेन व्याख्यातमधुनाऽश्लेषविनाशानङ्गीकारे पातो न स्यात्तदर्थमश्लेषाद्यङ्गीकार्यमिति युक्तिकथनपरतया व्याख्यातुमर्थान्तरमाह ॥ **पातार्थमिति** ॥ ननु पातसामग्रीवशात् पातोऽस्तु न तदर्थमश्लेषादीति वक्तव्यम् । पाते प्राप्तेऽपि तदनुभावनानन्तरं पुनः पुण्यफलभोगसम्भवादित्यभिप्रेत्य शङ्कते ॥ **पाते प्राप्त इति** ॥ मुक्तस्य तु विकर्मण इत्यत्र मुक्तस्य जीवन्मुक्तस्यापरोक्षज्ञानिनो मुच्यमानस्येति वार्थः । तुशब्दः अश्लेषे विशेषं द्योतयति । अत्राश्लेषपदेनेह लोकेऽशुचित्वासम्भाव्यत्वादिरूपस्य परलोके नरकाद्यनर्थरूपस्य श्लेषस्याभाव एव न तु आनन्दह्रासलक्षणश्लेषस्याभाव इति । स्तुत्यधिकरणे विपरीते विपर्यय इत्यानन्दह्रासकत्वोक्तेः । उक्तं चानुव्याख्याने ।

ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ॥ इति ।

अत्र विनाशपदेनाप्यप्रारब्धानां स्वरूपनाश एव न तूपमर्दे चेत्युक्तरीत्या प्रारब्धानामिवाभोगाल्पत्वमिति च तुशब्देन सूच्यते । सुकर्मणश्चापीत्यत्र तमःस्थितत्वेऽपीत्यपिशब्दसम्बन्धः । ध्रुवं यथा तथा पतत इत्यनेन तुशब्दोऽनुत्थानवाचीत्येतदपि सूचितम् । यद्वा ध्रुवमश्लेष इति सम्बन्धः । तेन ज्ञानिपापस्याशुचित्वादिश्लेषानापादकत्वमेव न त्वानन्दह्रासरूपश्लेषानापादकत्वमिति । यथा श्लेषहेतुत्वे सङ्कोचोऽस्ति न तथा मिथ्याज्ञानिपुण्यस्य, तदानीं पावित्र्यस्वर्गादिरूपश्लेषानापादकत्वमेव । तमसि तु किंचिदानन्दसम्पादकत्वेन श्लेषकत्वमस्तीति सङ्कोचः कल्पनीयः । किं तु सर्वथा श्लेषकत्वमेवेत्यर्थः । अत एव सूत्रे इतरस्याप्येवमसंश्लेष इत्यतिदेशेनैव पूर्तेः पुनरसंश्लेषग्रहणं सिद्धे सत्यारम्भ इति न्यायात् । अत एवात्र समित्युपसर्गः । विश्लिष्यासंश्लेषस्य स्वपदेनोपादानं चेति ज्ञेयम् ।

## वाक्यार्थविवरणम्

**द्वेषिपुण्यस्येति** ॥ द्वेषिणां पुण्यस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

भगवद्द्वेषिणो मिथ्याज्ञानेन पाते तु अनुत्थानतम:पाते समीपकालवर्तिनि इतरस्य तत्कृत-पुण्यस्याप्येवं ज्ञानिकृतपापस्यैवाश्लेषविनाशौ भवत इत्यर्थः ॥ **पातार्थमिति** ॥ अन्यथा पुण्येन प्रतिबन्धात्पात एव न स्यादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ॥ १५ ॥**

अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः ।

'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत' इति तदवधेः ।

तुशब्दः स्मृतिद्योतकः ।

'यदनारब्धपापं स्यात्तद्विनश्यति निश्चयात् ।
पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः ।
द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः ॥
तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।
आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः' इति नारायणतन्त्रे ॥ १५ ॥

## तत्त्वप्रदीपिका

ब्रह्मदर्शिनः पूर्वस्य पापस्य विनाश उक्तः । द्वेषिणः पुण्यस्य । तत्रोभयत्र च विशेषमाह– अनारब्धकार्ये एवेत्यादिना । अनारब्धकार्ये एव ते नश्यतस्तयोरुभयोरपि ज्ञानिनो ब्रह्मसम्पत्ते-रारब्धकार्यविमोक्षावधिविलम्बश्रुतेः । न च तत्र शरीराद्विमोक्षो विवक्षितः । 'एवं मुक्तिफलानियम' इति शरीरपात एव ब्रह्मसम्पत्त्यनियमोक्तेः । विमोक्ष्ये विमोक्ष्यत इत्यर्थः । 'तस्य तावदेव चिरम्' इति परोक्षत्ववचनात् । "अथ सम्पत्स्यत" इति प्रथमपुरुषप्रयोगात् । "सुप्तिङुपग्रहलिङ्ग-नराणामि"त्यादि सूत्राच्च । इतरस्याप्यनारब्धकार्यमेव नश्यतीति कुत इत्यत आह– **तुशब्द इत्यादि** । तुशब्दो विशेषवाचकस्मृतिद्योतकः । अतो द्वेषिणोऽनारब्धकार्यस्यैव पुण्यस्य नाशः । अतः परमविद्वेषिणोऽपि प्रागधःपातात्कदाचिद्भोगान् भुञ्जत इति नाद्भुतम् ।

## तत्त्वप्रकाशिका

**नन्वेवं यदि ब्रह्मज्ञानिद्वेषिणोर्ज्ञानादिनैव पापपुण्यक्षये ज्ञानाद्युदय एव मोक्षादिप्रसङ्ग इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ अनारब्धेति ॥ नास्माभिः सर्वपापादिक्षयो ज्ञानादिनोच्यते येन तदैव मुक्त्यादिप्रसङ्गः किं तु यस्य पापस्य कार्यं दुःखं भोक्तुमनारब्धं तस्यैव ज्ञानेन विनाशो यस्य च पुण्यस्य कार्यं सुखं न भोक्तुमारब्धं तस्यैव मिथ्याज्ञानेन नाश इति भावः । ज्ञानानन्तरं प्रारब्धप्रतिबन्धकसद्भावः कुत इत्यत आह ॥ तस्येति ॥ अत्र यावत्प्रतिबन्धेन न विमोक्षेत तावदेव ज्ञानिनो मोक्षाय चिरमिति मोक्षस्य प्रतिबन्धनिवृत्त्यवधित्वश्रवणाज्ज्ञानोत्तरमपि कर्मसद्भावो ज्ञायत इति भावः । तथापि प्रारब्धकर्मसद्भावोऽत्र स्फुटं न प्रतीयत इत्यत आह ॥ तुशब्द इति ॥ चार्थस्तुशब्द इत्युक्तं भवति । कासौ स्मृतिरिति तामुदाहरति ॥ यदिति ॥ एतेन नाभुक्तमिति स्मृतिः प्रारब्धविषयेत्यपि लभ्यते ।**

## गुर्वर्थदीपिका

यस्य पुण्यस्येत्यत्र लक्षोपलक्षकसुतण्डुलेष्वेकैकमुष्टितण्डुलान्नभोजनेन यथा सर्वेषां प्रारब्धत्वं पुनर्बहुकालं भोगाच्च । एवं ब्रह्मादीनां ज्ञानोत्तरकालं बहुकालभोक्तव्यनानाकर्मणामीषदीषत्फलभोगे सति सर्वं प्रारब्धं भवति । तस्माज्ज्ञानोत्तरकालब्रह्मणः शतब्रह्मकल्पपर्यन्तं प्रारब्धभोगोऽपि न्यायप्राप्त एवेति भावः । न विमोक्षेतेति वदता टीकाकारेण ''व्यत्ययो बहुल''मिति सूत्राल्लकार-व्यत्यासः पुरुषव्यत्यासश्चेति सूचितम् । हीनं च ब्रह्म पश्यत इत्यस्य ब्रह्म हीनमाकारगुणादिरहितं पश्यतो ध्यानपरिपाके सति निर्धारयत इत्यर्थः ।

## भावबोधः

नास्माभिः सर्वपाप इत्यादिना प्रारब्धस्य कृतस्य यावद्भोगं संस्थितेरिति न्यायविवरण-मप्युक्ततात्पर्यकं भवति । ''चार्थः'' ''तु''शब्द इति । अनेन ''तदवधेस्तु'' इति ''तु''-शब्दसम्बन्ध इत्युक्तं भवति ।

## भावदीपः

किं चेत्यादिनोक्तदोष निरासकतयोत्तरसूत्रमवतार्य व्याचष्टे ॥ **नन्वेवमिति** ॥ एवकारव्यावर्त्यं वदन् भाष्यं व्याचष्टे ॥ **नास्माभिरिति** ॥ सद्भाव इति सूत्रभाष्यगतैवकारसूचित इति भावः ।

(भावदीपः)
विमोक्ष्ये इत्यस्य प्रतिपदं विमोक्ष्यते इति ॥ **एतेनेति** ॥ स्मृतिकथनेनेत्यर्थः ॥ **इत्यपीति** ॥ न केवलमङ्गविषयेत्यपेरर्थः ।

## अभिनवचन्द्रिका

**चार्थस्तुशब्द इति** ॥ अनेन तदवधेस्त्विति तुशब्दसम्बन्धः सूचितो भवतीति ज्ञेयम् ॥

## वाक्यार्थमुक्तावली

अनारब्धकार्ये भोक्तुमनुपक्रान्ते सुखदुःखरूपकार्ये ययोस्तादृशे एव पूर्वे पूर्वोक्तपुण्यपापे नश्यत इति शेषः । न तु प्रारब्धकार्ये येनोक्तदोषः स्यादित्यर्थः । ज्ञानानन्तरं प्रारब्धसत्वं कुतस्तदवधेः श्रवणादिति शेषः । तदिति तन्त्रं श्रुतिस्थं परामृशति । तस्य मोक्षस्य तदवधेः प्रारब्धकर्मणो भोगोपमर्दाभ्यां मोक्षावधिकत्वस्य श्रवणादिति भावेन कृतसंस्थितिरित्युक्तन्यायप्रदर्शकत्वेन व्याचष्टे ॥ **नास्मभिरिति** ॥ **चार्थ इति** ॥ अनेन तदवधेः श्रवणात् स्मरणाच्चेत्यन्वय इत्युक्तं भवति । हीनं च ब्रह्म पश्यतो जानतः । आरब्धयोश्च नाश इत्यत्र नाश उपमर्दः ।

## तत्त्वसुबोधिनी

**विमोक्ष्य इति** । अत्रोपनिषदि विमोक्ष्य इत्येव पाठः । तदर्थं एवायं विमोक्ष्यत इति । तस्य तावदेवचिरं इति परोक्षवचनादथसंपत्स्यते इति प्रथमपुरुषप्रयोगात् सुपुतिङुपग्रहलिङ्गनराणां इत्यादि सूत्राच्चेति ज्ञेयम् । आरब्धयोश्चनाशः स्यादल्पयोः पुण्यपापयोरिति भाष्यं अत्राल्पनाशो नाम फलद्वारेणैव विवक्षितः । कर्मणां निर्भागत्वात्, कर्माणि न तावत् ज्ञानिनं भोजयंति यावदज्ञान-मिति भावः ।

नचैवं गृहाद्गृहादिति दग्धदेहेष्टिविधानं तस्यापि वैय्यर्थ्यमित्यस्य दाहपरिहारकत्वाभावे तस्य तन्निमित्तकप्रत्यवायपरिहारकत्वस्मृतिबाधः स्यादिति "नाभुक्तं क्षीयते कर्म" इति स्मृतिबाधः स्यादित्यर्थः । दग्धगेहपदेन तस्यैव उपलक्षणत्वान्न दोष इत्याह । **दग्धगेहपदेन चेति** ।

**चार्थः तुशब्द इति** । अनेन तदवधेस्त्विति तुशब्दसम्बन्धः इत्युक्तं भवति । चार्थत्वेहि तस्य समुच्चयरूपत्वेन स्मृतिसमुच्चायकत्वं लभ्यते इति भावः । **एतेनेति** । पूर्वोत्तरपापपुण्यविनाशाश्लेष-

(तत्त्वसुबोधिनी)

प्रतिपादकप्रमाणोदाहरणेनेत्यर्थः । **प्रारब्धविषयेऽप्यपीति** । नकेवलं तदर्थेति श्रुतिबलेन अज्ञानविषयिणीत्यपिशब्दार्थः ।

## वाक्यार्थविवरणम्

**ज्ञानादिनैवेति ॥** सम्यज्ज्ञानेन । आदिपदेन मिथ्याज्ञानग्रहणम् । मोक्षादीत्यत्रादिपदेन तमोग्रहणम् । 'न विमोक्ष्ये' इत्यस्य व्याख्यानं न विमोक्ष्येतेति । भाष्ये निर्द्वंद्वं समरहितं सर्वोत्तमं ब्रह्म पश्यतः हीनं च निर्गुणं च ब्रह्म पश्यतः मिथ्याज्ञानपरिपाकवत इति यावत् । द्विषतो वा द्वेषपरिपाकवत इत्यर्थः । अत एवानुव्याख्याने "ब्रह्मद्विड् ब्रह्मदर्शी च तमोमोक्षाववाप्नुतः" इत्युक्तम् । न तु निर्गुणब्रह्मसाक्षात्कारः । 'न मे गुरोरप्यपरोक्षतां गतम्' मास्म विश्वसी-रित्यच्युतप्रेक्षेण श्रीमदानन्दतीर्थान्प्रत्युक्तत्वादिति ज्ञेयम् ॥ आरब्धयोश्च नाशः स्यादिति ईषद्विनाशः फलद्वारेणैव । कर्मणां निर्भागत्वात् । फलद्वारेणेत्यस्य उपमर्देनेत्यर्थः । महता कारणेनैव प्रारब्धान्यपि कानिचित् । कर्माणि क्षयमायान्तीति प्रथमस्पन्धतात्पर्योदाहृत-प्रमाणस्याप्ययमेवार्थो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

अनारब्धे भोक्तुमनुप्रक्रान्ते सुखदुःखरूपे कार्ये ययोस्तादृश एव पूर्वे पूर्वोक्ते पुण्यपापे नश्यतः न तु प्रारब्धकार्ये । कुतः । मोक्षस्य तदवधेः प्रारब्धकर्मावधिश्रवणादित्यर्थः ॥ **कर्मसद्भाव इति ॥** कर्मणा विना प्रतिबन्धकान्तराभावादिति भावः ॥ **आद्येऽघशब्देति** ॥ तथात्वे उभय-सङ्ग्राहककर्मपदप्रयोगप्रसङ्गइति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ॥ १६ ॥**

**अग्निहोत्राद्यपि तु मोक्षेऽनुभवायैव । तुशब्दाद्ब्रह्मदर्शनवतः ।**

**'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम् यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य**

(सूत्रभाष्यम्)

आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत' इति तद्दर्शनात् ॥

## तत्त्वप्रदीपिका

अग्निहोत्रादीत्यादि सूत्रम् । ब्रह्मदर्शिनो महासुखं प्राप्नुवतो लोकातीतस्य पुण्येन प्रयोजनाभावात्स न करोति, कुतश्चन श्लिष्यतीति न मन्तव्यम् । अग्निहोत्रसन्ध्योपासन श्राद्धादिनित्यनैमित्तिकं पुण्यमपि मोक्षे ज्ञानकार्यानन्दानुभवविशेषायैव भवति । तुशब्दाद्ब्रह्मदर्शनवतः एतत्पूर्वस्य दर्शनमुत्पाद्योपक्षयसिद्धेः । ''सर्वापेक्षा च यज्ञादिश्रुतेरि''ति ''स एनमविदितो न भुनक्ती''त्यादिदर्शनात् । ''ज्ञानादेवापवर्गः तथापि तु यथा यथा कर्म कुरुते तथा तथाऽधिको भवति'' ''पश्यन्नपीममात्मानमि''त्यादेश्च ।

'अग्निविप्रार्चकोऽप्येवं यो न वेद हरिं परम् ।
आश्रयं सर्वजीवानां हरिस्तं नैव भोजयेत् ॥
यथाऽनधीतो वेदन्तु यथा कर्माकृतं तथा ।
न सम्यक् फलदो विष्णुरज्ञातो जगदीश्वरः ॥
यद्यवेत्ता महदपि हयमेधादिकं हरेः ।
कुर्यात्क्षयिष्णु फलवान्स भवेन्नात्र संशयः ॥
आप्तकामतयाऽऽत्मेति यो विष्णुः समुदीरितः ।
सर्वाश्रयमुपासीत तमेव पुरुषः सुधीः ॥
विष्णुं सर्वाश्रय इति सदोपास्ते य आत्मवान् ।
क्षीयन्ते नास्य कर्माणि शुभान्येव कदाचन ॥
उपासनाबलान्मुक्तौ भोगान्कर्मफलान्सदा ।
भुङ्क्ते विष्णोः समीपस्थः सर्वदोषविवर्जित' इति ब्रह्माण्डे ॥

अपि शब्दादितरस्य द्वेषिण इतरदपीतरविशेषायैवेति गम्यते । तस्यापि पूर्वस्यान्यथाज्ञानमुत्पाद्योपक्षयात् ।

## तत्त्वप्रकाशिका

ननु ज्ञानिकृतपुण्यस्य पूर्वोत्तरस्य विनाशाश्लेषौ विद्येते न वा । आद्येऽघशब्दवैयर्थ्यं द्वितीये मोक्षासिद्धिः । पुण्यस्यापि बन्धकत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अग्नीति** ॥ किं पूर्वोत्तरपुण्यस्याकाम्यस्य नाशाश्लेषौ विकल्प्येते उत काम्यस्य । आद्ये न नाशाश्लेषाविति ब्रूमः । न च तावता बन्धानिवृत्तिः । पूर्वकृताग्निहोत्राद्यकाम्यं कर्म तदधिगमाख्यकार्याय भवत्युत्तरकालकृतं च ज्ञानकार्यमोक्षातिशयानुभवाय भवतीत्युभयस्यापि मोक्षानुप्रवेशितत्वादिति भावः । पूर्वं ज्ञानि-द्वेषिणोरनुवृत्तत्वादत्राप्युभयोरेतदुच्यत इति शङ्का मा भूदिति भावेनाह ॥ **तुशब्दादिति** ॥ इति तमन्यस्माद्विशिनष्टीति शेषः । ननु ब्रह्मदर्शिकृतस्यैव पूर्वोत्तरपुण्यस्य मोक्षानुप्रवेशे नाबन्धकत्वं कुत इत्यत आह ॥ **स इति** ॥ अत्र 'स एनम्' इत्यादिनाज्ञकृतकर्मणोऽल्पफलत्वमुक्त्वा 'स य' इति ज्ञानिनः पूर्वोत्तरपुण्यस्योक्तरीत्या मोक्षानुप्रवेश उच्यते । यो जिज्ञासुरुपास्ते तस्य पुण्यं ज्ञानद्वारेणाक्षयमोक्षफलदं भवतीति तथा य उपास्ते जानीते तस्य पुण्यमक्षयमोक्षातिशयाय भवतीति । एतच्च कर्माकाम्यमेव । काम्यस्य स्वल्पफलप्रदत्वात् ।

## भावबोधः

तदधिगमाख्यकार्यायेति । अनेन तच्च तत्कार्यं चेति विग्रह उक्तो भवति । **ज्ञानकार्येति** । अनेन तस्य कार्यायेति षष्ठीतत्पुरुष इत्युक्तं भवति । इत्युभयस्यापि मोक्षानुप्रवेशितत्वादिति । अनेनाग्निहोत्राद्यपि मोक्षेऽनुभवायैवेति भाष्यं मोक्षे फले विवक्षिते तज्जनकापरोक्षानुभवायेति; मोक्षे जाते आनन्दानुभवायेति च द्वेधा व्याख्यातं भवति । उक्तार्थद्वयपरत्वेन ''स य आत्मानमेव लोकमुपास्ते'' ''न हास्य कर्म क्षीयते'' इति वाक्यं द्वेधा व्याचष्टे– यो जिज्ञासुरित्यादिना । ''भाक्तं वानात्मवित्त्वात्'' इत्यत्र मोक्षस्य कर्मसाध्यत्वप्रतिपादकश्रुतिगतिप्रदर्शनाय पूर्वोत्तराकाम्य-पुण्यकर्मणां परंपरया साक्षाच्च मोक्षानुप्रवेशत्वोक्तिः । अत्र तु पूर्वोत्तराकाम्यपुण्यकर्मणां मोक्षप्रतिबन्धकत्वाशङ्कानिरासायोक्तकारणद्वयेन मोक्षानुप्रवेशोक्तिरिति फलभेदान्न पुनरुक्तिः ।

## भावदीपः

**अघशब्देति** ॥ आद्यसूत्रे उत्तरपूर्वकर्मणोरिति वाच्यमिति भावः ॥ **परिहरदिति** ॥ अघवैषम्यकथनेनेति भावः । विकल्पपूर्वमाद्यपक्षे भाष्यं व्यनक्ति ॥ **किमिति** ॥ मोक्षहेत्वनुभवो

(भावदीपः)

मोक्षानुभव इति भाष्यार्थमुपेत्य तमर्थं सूत्रारूढतया दर्शयति ॥ **तदधिगमाख्येति** ॥ मोक्षस्यानुभव इत्यपि भाष्यार्थमुपेत्य तमपि सूत्रारूढं दर्शयति ॥ **उत्तरकालेति** ॥ प्रकृतोपयोगाय फलितार्थोक्ति-परोत्तरवाक्यस्य स्वोक्तार्थपरत्वं च व्यनक्ति ॥ **अत्र स एनमित्यादिवाक्येन** ॥ व्याख्यातैषा श्रुतिर्भाक्तं वानात्मवित्त्वादित्यत्र ॥

## अभिनवचन्द्रिका

**पूर्वकृतेति** ॥ ज्ञानात् पूर्वकृतमकाम्यं कर्म ज्ञानलक्षणकार्याय भवति । तदुत्तरत्र कृतमकाम्यं कर्म ज्ञानकार्यमोक्षातिशयाय भवतीत्येवमुभयोरपि मोक्षानुप्रवेशित्वादबन्धकत्वम् अबन्धकत्वा-द्बन्धानिवृत्तिरिति न वाच्यमित्यर्थः । अत्र भाष्यं 'तुशब्दाद्ब्रह्मदर्शनवत' इति । तच्छेषं पूरयति 'इति तमन्यस्माद्विशिनष्टि' इति शेषः ॥ यस्याग्निहोत्रादि मोक्षानुभवाय भवति, तमन्यस्मात् द्वेषिणः सकाशात् व्यावृत्तये 'तुशब्दात् ब्रह्मदर्शनवत' इति विशिनष्टीत्यर्थः । अनेन 'तु ब्रह्मदर्शनवतः' अग्निहोत्रादिमोक्षानुभवायैव भवति । 'स एवमविदितो न भुनक्ति' इति तद्दर्शनात्' इति सूत्रार्थ उक्तो भवति । भाष्ये उभयोस्त्यागेनेति । उभयोः पुण्यपापयोः त्यागेन परित्यागो भवतीत्याशयेन एकेषां पाठोऽस्तीत्यर्थः ।

**पूर्वपक्षस्तु** न ज्ञानेन मोक्षो, नापि द्वेषेण तमः । प्रागापादितकर्मणां भावात् । न च तानि ज्ञानविद्वेषजन्मनि भुज्यन्ते । विभिन्नानेकशरीरभोग्यफलत्वात् । न च कायव्यूहेन युगपद्भोगः । विभिन्नदेशकालविपाकत्वात् । किं तर्हि क्रमेण भोगः न च क्रमेण सर्वकर्मणां भोगेन क्षयानन्तरं सदसन्मोक्षावुपपद्येते । बहुकालान्तरितयोर्ज्ञानविद्वेषयोर्जीर्णधान्यवत्क्षीणशक्तित्वेन मोक्षजनकत्वासम्भवात् । तद्भोगसमये पुनरनन्तकर्मानुष्ठानेन कर्मावसानासम्भवाच्च । न च ज्ञानद्वेषाभ्यामेवाभुक्तानामेव पुण्यपापानां क्षयः । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधात् । न च प्रायश्चित्तेनेवाऽभुक्तकर्मणामेव ज्ञानेन क्षयसम्भवः । विप्रतिपत्तेः । गृहदाहे दग्धगेहेष्ट्यधिकारवत् कृतपापानामेव द्वादशाब्दादिकर्माधिकारित्वाभिप्रायेण 'ब्रह्महा द्वादशाब्दं व्रतं चरेत्' इत्यादिवचनानां प्रवृत्तत्वेन कर्मक्षयार्थमवृत्त्वात् । अतो ज्ञानद्वेषाभ्यां सदसन्मोक्षासिद्धेरुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** सम्भवत एव ज्ञानद्वेषाभ्यां सदसन्मोक्षौ । 'तद्यथा पुष्कर पलाश आपो न श्लिष्यन्ते तद्यथैषीकातूलम्' इत्यादिना उत्तरपूर्वाघयोरश्लेषविनाशौ ज्ञानेन सम्भवत इति श्रवणात् ।

## तत्त्वप्रकाशिका

ननु ज्ञानिकृतपुण्यस्य पूर्वोत्तरस्य विनाशाश्लेषौ विद्येते न वा । आद्येऽघशब्दवैयर्थ्यं द्वितीये मोक्षासिद्धिः । पुण्यस्यापि बन्धकत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अग्नीति** ॥ किं पूर्वोत्तरपुण्यस्याकाम्यस्य नाशाश्लेषौ विकल्प्येते उत काम्यस्य । आद्ये न नाशाश्लेषाविति ब्रूमः । न च तावता बन्धानिवृत्तिः । पूर्वकृताग्निहोत्राद्यकाम्यं कर्म तदधिगमाख्यकार्याय भवत्युत्तरकालकृतं च ज्ञानकार्यमोक्षातिशयानुभवाय भवतीत्युभयस्यापि मोक्षानुप्रवेशितत्वादिति भावः । पूर्वं ज्ञानि-द्वेषिणोरनुवृत्तत्वादत्राप्युभयोरेतदुच्यत इति शङ्का मा भूदिति भावेनाह ॥ **तुशब्दादिति** ॥ इति तमन्यस्माद्विशिनष्टीति शेषः । ननु ब्रह्मदर्शिकृतस्यैव पूर्वोत्तरपुण्यस्य मोक्षानुप्रवेशे नाबन्धकत्वं कुत इत्यत आह ॥ **स इति** ॥ अत्र 'स एनम्' इत्यादिनाज्ञकृतकर्मणोऽल्पफलत्वमुक्त्वा 'स य' इति ज्ञानिनः पूर्वोत्तरपुण्यस्योक्तरीत्या मोक्षानुप्रवेश उच्यते । यो जिज्ञासुरुपास्ते तस्य पुण्यं ज्ञानद्वारेणाक्षयमोक्षफलदं भवतीति तथा य उपास्ते जानीते तस्य पुण्यमक्षयमोक्षातिशयाय भवतीति । एतच्च कर्माकाम्यमेव । काम्यस्य स्वल्पफलप्रदत्वात् ।

## भावबोधः

तदधिगमाख्यकार्यायेति । अनेन तच्च तत्कार्यं चेति विग्रह उक्तो भवति । **ज्ञानकार्येति** । अनेन तस्य कार्यायेति षष्ठीतत्पुरुष इत्युक्तं भवति । इत्युभयस्यापि मोक्षानुप्रवेशितत्वादिति । अनेनाग्निहोत्राद्यपि मोक्षेऽनुभवायैवेति भाष्यं मोक्षे फले विवक्षिते तज्जनकापरोक्षानुभवायेति; मोक्षे जाते आनन्दानुभवायेति च द्वेधा व्याख्यातं भवति । उक्तार्थद्वयपरत्वेन "स य आत्मानमेव लोकमुपास्ते" "न हास्य कर्म क्षीयते" इति वाक्यं द्वेधा व्याचष्टे– यो जिज्ञासुरित्यादिना । "भाक्तं वानात्मवित्त्वात्" इत्यत्र मोक्षस्य कर्मसाध्यत्वप्रतिपादकश्रुतिगतिप्रदर्शनाय पूर्वोत्तराकाम्य-पुण्यकर्मणां परंपरया साक्षाच्च मोक्षानुप्रवेशत्वोक्तिः । अत्र तु पूर्वोत्तराकाम्यपुण्यकर्मणां मोक्षप्रतिबन्धकत्वाशङ्कानिरासायोक्तकारणद्वयेन मोक्षानुप्रवेशोक्तिरिति फलभेदान्न पुनरुक्तिः ।

## भावदीपः

**अघशब्देति** ॥ आद्यसूत्रे उत्तरपूर्वकर्मणोरिति वाच्यमिति भावः ॥ **परिहरदिति** ॥ अघवैषम्यकथनेनेति भावः । विकल्पपूर्वमाद्यपक्षे भाष्यं व्यनक्ति ॥ **किमिति** ॥ मोक्षहेत्वनुभवो

(भावदीपः)

मोक्षानुभव इति भाष्यार्थमुपेत्य तमर्थं सूत्रारूढतया दर्शयति ॥ **तदधिगमाख्येति** ॥ मोक्षस्यानुभव इत्यपि भाष्यार्थमुपेत्य तमपि सूत्रारूढं दर्शयति ॥ **उत्तरकालेति** ॥ प्रकृतोपयोगाय फलितार्थोक्ति-परोत्तरवाक्यस्य स्वोक्तार्थपरत्वं च व्यनक्ति ॥ **अत्र स एनमित्यादिवाक्येन** ॥ व्याख्यातैषा श्रुतिर्भाक्तं वानात्मवित्त्वादित्यत्र ॥

## अभिनवचन्द्रिका

**पूर्वकृतेति** ॥ ज्ञानात् पूर्वकृतमकाम्यं कर्म ज्ञानलक्षणकार्याय भवति । तदुत्तरत्र कृतमकाम्यं कर्म ज्ञानकार्यमोक्षातिशयाय भवतीत्येवमुभयोरपि मोक्षानुप्रवेशित्वादबन्धकत्वम् अबन्धकत्वाद्बन्धानिवृत्तिरिति न वाच्यमित्यर्थः । अत्र भाष्यं 'तुशब्दाद्ब्रह्मदर्शनवत' इति । तच्छेषं पूरयति 'इति तमन्यस्माद्विशिनष्टि' इति शेषः ॥ यस्याग्निहोत्रादि मोक्षानुभवाय भवति, तमन्यस्मात् द्वेषिणः सकाशात् व्यावृत्तये 'तुशब्दात् ब्रह्मदर्शनवत' इति विशिनष्टीत्यर्थः । अनेन 'तु ब्रह्मदर्शनवतः' अग्निहोत्रादिमोक्षानुभवायैव भवति । 'स एवमविदितो न भुनक्ति' इति तद्दर्शनात्' इति सूत्रार्थ उक्तो भवति । भाष्ये उभयोस्त्यागेनेति । उभयोः पुण्यपापयोः त्यागेन परित्यागो भवतीत्याशयेन एकेषां पाठोऽस्तीत्यर्थः ।

**पूर्वपक्षस्तु** न ज्ञानेन मोक्षो, नापि द्वेषेण तमः । प्रागापादितकर्मणां भावात् । न च तानि ज्ञानविद्वेषजन्मनि भुज्यन्ते । विभिन्नानेकशरीरभोग्यफलत्वात् । न च कायव्यूहेन युगपद्भोगः । विभिन्नदेशकालविपाकत्वात् । किं तर्हि क्रमेण भोगः न च क्रमेण सर्वकर्मणां भोगेन क्षयानन्तरं सदसन्मोक्षावुपपद्येते । बहुकालान्तरितयोर्ज्ञानविद्वेषयोर्जीर्णधान्यवत्क्षीणशक्तित्वेन मोक्षजनकत्वासम्भवात् । तद्भोगसमये पुनरनन्तकर्मानुष्ठानेन कर्मावसानासम्भवाच्च । न च ज्ञानद्वेषाभ्यामेवाभुक्तानामेव पुण्यपापानां क्षयः । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधात् । न च प्रायश्चित्तेनेवाऽभुक्तकर्मणामेव ज्ञानेन क्षयसम्भवः । विप्रतिपत्तेः । गृहदाहे दग्धगेहेष्ट्यधिकारवत् कृतपापानामेव द्वादशाब्दादिकर्माधिकारित्वाभिप्रायेण 'ब्रह्महा द्वादशाब्दं व्रतं चरेत्' इत्यादिवचनानां प्रवृत्तत्वेन कर्मक्षयार्थमत्तृत्वात् । अतो ज्ञानद्वेषाभ्यां सदसन्मोक्षासिद्धेरुक्तमयुक्तमिति ।

**सिद्धान्तस्तु** सम्भवत एव ज्ञानद्वेषाभ्यां सदसन्मोक्षौ । 'तद्यथा पुष्कर पलाश आपो न श्लिष्यन्ते तद्यथैषीकातूलम्' इत्यादिना उत्तरपूर्वाघयोरश्लेषविनाशौ ज्ञानेन सम्भवत इति श्रवणात् ।

(अभिनवचन्द्रिका)

तथा 'एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम्' इति द्वेषिकृतपूर्वोत्तरपुण्ययोः द्वेषेण विनाशाश्लेषौ भवत इति स्मरणात् । न चैवं सति ज्ञानद्वेषोदयानन्तरमेव मोक्षापत्तिः । अप्रारब्धानामेव प्राचीन-पुण्यानां विनाशाङ्गीकारेण प्रारब्धभोगाय विलम्बनस्य भाव्यत्वात् । ननु ज्ञानिकृत-पूर्वोत्तरपुण्ययोरश्लेषविनाशौ विद्येते न वा । नाद्यः । इष्टविधातिनो ज्ञानस्यापुरुषार्थत्वप्रसङ्गात् । द्वितीये मोक्षाभावप्रसङ्गः । प्राचीनबहुपुण्यभोगसमये पुनः पुनः पुण्यानुष्ठानसम्भवेनाऽपर्यवसानादिति चेत् अत्र वक्तव्यं किमकाम्यानां पुण्यानामश्लेषविनाशौ पृच्छसि । उत काम्यानाम् । आद्ये नेति ब्रूमः । न च तावता मोक्षाऽसम्भवः । प्राचीनपुण्यस्य ज्ञानजन्मन्युपयोगात् । उत्तरस्य तु ज्ञानकार्यमोक्षानुप्रवेशात् । तदुक्तम् 'न ह्यस्य कर्म क्षीयते । अस्माध्द्येवात्मनो यद्यत्कामयते तत्तत्सृजत' इति । द्वितीये तु मुक्तावनुभवकारणादन्यत् । अप्रारब्धमनभीष्टं पुण्यं यत्तद्विनश्यति । अलेपश्च ज्ञानोत्तरं क्रियमाणस्येति ब्रूमः । 'तस्य पुत्रादायमुपयन्ति, सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्याम्' इति वचनात् । न च यदुक्तं ज्ञानिकर्मणो मोक्षानुप्रवेश इति । न तद्युक्तं, कर्मणो नाशशिरस्काल्पफलत्वादिति वाच्यं ज्ञानिकृतस्याऽनन्तफलत्वात् । तदुक्तं 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' इति । ननु एवमपि ज्ञानिद्वेषिणोर्न मोक्षतमसी सिध्यतः । प्रारब्धप्रतिबन्धकसद्भावादिति चेत् न, उभावपि ज्ञानिद्वेषिणौ भोगेन प्रारब्धकर्माणि क्षपयित्वा ब्रह्मतमसी प्राप्नुतः । तदुक्तम् 'आरब्धपुण्यपापस्य भोगेन क्षपणादनु । प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशय' इति । अत उक्तं युक्तमिति सिद्धम् ॥

**॥ इति श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधक श्रीमत्सत्यनाथयतिविरचितायां तत्वप्राकाशिकाव्याख्याऽभिनवचन्द्रिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमुक्तावली

तत्कार्ययैव न तु नाशाश्लेषावाप्नोति नाबन्धमित्येवकारव्यावर्त्यकथनपूर्वं व्याचष्टे ॥ **नाशाश्लेषाविति** ॥ तच्च तत्कार्यमिति कर्मधारयमुपेत्याह ॥ **तदधिगमाख्येति** ॥ तस्य कार्ययेति तत्पुरुषं चाभिप्रेत्याह ॥ **ज्ञानकार्येति** । एतेनाग्निहोत्राद्यपि मोक्षेऽनुभवायैवेति भाष्यं मोक्ष इति तादर्थ्ये सप्तमी । अनुभवपदेनापरोक्षज्ञानमुच्यते । मोक्षार्थं तत्साधनापरोक्षायेत्यर्थः । मोक्षे जाते सत्यानन्दानुभवाय चेत्यर्थ इति द्वेधा व्याख्यातं भवति ॥ **अल्पफलत्वमिति** ॥ अल्पस्वे निस्व

(वाक्यार्थमुक्तावली)

इति प्रयोगदर्शनान्न विरोधः । उक्तार्थद्वयं प्रमाणपरत्वेन श्रुतिं व्याचष्टे ॥ **जिज्ञासुरिति** ॥ भाक्तं वा नात्मवित्वादित्यत्र मोक्षस्य कर्मसाध्यत्वनिरासायैषामसोमेति श्रुतेर्गतिप्रदर्शनाय ज्ञानात्पूर्वापरभाव्यकाम्यकर्मणा परंपरया साक्षाच्च मोक्षानुप्रवेशित्वोक्तेः अत्रत्यकाम्यपुण्यकर्मणां मोक्षप्रतिबन्धकत्वाशङ्कानिरासायोक्तप्रकारद्वयेन मोक्षानुप्रवेशित्वोक्तिरिति फलभेदान्न पुनरुक्तिः ।

## तत्त्वसुबोधिनी

आद्ये पूर्वोत्तरपुण्यस्यापि विनाशाश्लेषौ विद्येते इति आद्यपक्षे । आद्ये तदधिगमे इति सूत्रे कर्मविशेषवाचकाद्यशब्दवैय्यर्थ्यमित्यर्थः । **आद्ये अघशब्दवैय्यर्थ्यमिति** । प्रथमसूत्रे इत्यर्थः । तदधिगमाख्यकार्यायेति । अनेन तच्च तत् कार्यं चेति विग्रह उक्तो भवति । **इत्युभयस्यापीति** । अनेनाग्निहोत्राद्यपि इति भाष्यं मोक्षे फले विवक्षिते तज्जनकापरोक्षानुभवायेति मोक्षे जाते आनन्दानुभवायचेति द्वेधा व्याख्यातं भवति । उक्तार्थद्वयपरत्वेन "सय आत्मानमेव लोकमुपास्ते नहास्य कर्मक्षीयते"इति वाक्यं द्वेधा व्याचष्टे । **योजिज्ञासुरिति** ॥

## वाक्यार्थविवरणम्

पुण्यस्य विनाशाश्लेषयोरभावे कुतः तदसिद्धिरित्यत आह ॥ **पुण्यस्यापीति** ॥ पापवदिति शेषः ॥ **तावतेति** ॥ अकाम्यपुण्यस्य नाशाश्लेषाभाववचनेनेत्यर्थः ॥ **अनिवृत्तिरिति** ॥ बन्धकत्वादिति भावः ॥ **अधिगमाख्यकार्यायेति** ॥ तद्द्वारा मोक्षायेत्यर्थः ॥ **मोक्षानुप्रवेशित्वादिति** ॥ तथा च न तस्य बन्धकत्वमिति भावः ॥ **उक्तरीत्येति** ॥ पूर्वकृताग्निहोत्रादीत्युक्तरीत्येत्यर्थः ॥ **स्वल्पफलेति** ॥ स्वोचितफलेत्यर्थः । तथा च तस्य बन्धकत्वेन मोक्षानुप्रवेश इति भावः ।

## वाक्यार्थमञ्जरी

ज्ञानिनः पूर्वकृतमाग्निहोत्राद्यकाम्यकर्म तत्कार्याय ज्ञानाख्यकार्यायैव पश्चात्कृतं तत्कार्याय मोक्षातिशयायैव । कुतः तद्दर्शनात् तस्योक्तार्थस्यात्मानमेवेत्यादि श्रुतौ दर्शनादित्यर्थः । उक्तरीत्या पूर्वकृतेत्यादिना एतच्छुत्युक्तं ॥ **स्वल्पफलेति** ॥ अपेक्षितपुत्रादिहेतुत्वेन ज्ञानाद्यहेतुत्वादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ॥ १७ ॥**

मुक्तावनुभवकारणाद्यदन्यत् पुण्यमपि विनश्यति, अप्रारब्धमनभीष्टं च। तथा ह्येकेषां पाठ उभयोस्त्यागेन–

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि'ति।

'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति।
किमु पापं परब्रह्मज्ञानिनो नात्र संशय' इति पाद्मे ॥ १७ ॥

## तत्त्वप्रदीपिका

ननु तत्वज्ञानिनो मुच्यमानस्योभयोरपि त्यागः श्रूयते ''तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि''ति। तत्र कथं पापस्यैवेत्युच्यत इत्यत आह– अतोऽन्यदपीत्येकेषामुभयोः ॥ अतोऽग्निहोत्रादेर्मुक्तावनुभवकारणाद्यदन्यत्काम्यकर्म तत्पुण्यमपि विनश्यति यद्यनभीष्टमनारब्धं च। अभीष्टं चेदनारब्धमपि भुक्त्वा क्षप्यते। आरब्धं चेदनभीष्टमपि तथैव पापवत्। एवंभावाद्ध्येकेषां शाखिनामयं पाठः। न पुनर्ज्ञानात्पूर्वस्याकाम्यपुण्यस्योत्तरस्य वा विनाशात् तयोरुपयोगित्वेनाभीष्टत्वात्।

## तत्त्वप्रकाशिका

द्वितीयपक्षोत्तरत्वेन सूत्रं पठित्वा व्याचष्टे **॥ अत इति ॥** यदकाम्यपुण्यमतोऽन्यत्पूर्वोत्तर-काम्यपुण्यं तदपि नाशाश्लेषौ प्राप्नोति। तत्राप्यस्ति विशेषः। पूर्वतनं काम्यपुण्यं द्विविधं प्रारब्धमप्रारब्धं च। तत्र प्रारब्धं न नश्यति। अप्रारब्धं च द्विविधम्। इष्टमनिष्टं च। तत्रेष्टमपि न नश्यति। अनिष्टमेव नश्यति। तथोत्तरकालीनमपि द्विविधम्। इष्टमनिष्टं च। तत्रेष्टस्य संश्लेषोऽ-निष्टस्याश्लेष इति भावः। कुत एतदित्यत आह **॥ तथा हीति ॥** अत्रापि साधुकृत्याशब्देन काम्यमप्रारब्धमनिष्टं पुण्यमुच्यते। अकाम्यस्य विनियुक्तत्वात्प्रारब्धस्य भोक्तव्यत्वात्। इष्टनाशस्यापुरुषार्थत्वात्। तथाप्ययं विशेषोऽत्र स्फुटं न प्रतीयतेऽत आह ॥ **अनभीष्टमिति** ॥

## गुर्वर्थदीपिका

इष्टमनिष्टं चेत्यत्र ज्ञानात्पूर्वं कृतं ज्ञानकालीनदेहधारणानुकूलान्नपानादिजनकं काम्यं कर्मेष्टम् । अनिष्टं तु केवलं स्वर्गभोगसाधकतया कृतं काम्यं कर्म । इहापि दुर्विषयपरम्परासाधकतया कृतं काम्यं कर्म ज्ञानोत्तरकालं च देहधारणाद्यर्थं कृतं काम्यं पुण्यकर्मेष्टम् । कदाचिद्रागोद्रेकवशाद्बहुकुविषयभोगार्थं कृतं कर्मानिष्टमिति विवेकः । स्वाश्रयेषु ज्ञानिषु हैन्यमसहमानमपरोक्षज्ञानं हीनसुखदायककाम्यकर्मैव नाशयेत् । न सञ्जयति च । अहीनसुखदायकं काम्यमपि कर्म पुनः स्वश्रैष्ठ्यापादकत्वादनुमन्यत एव । ननु प्रारब्धकाम्यपुण्यकर्मणैवाऽऽमोक्षं भोगादिसम्भवात्किमनेनेति चेत्सत्यम् । ''अधिकं तु प्रविष्टं न तु तद्धानि''रिति न्यायेन ज्ञानात्प्रागुत्तरत्र च विद्यमानयोरप्यनयोः काम्यपुण्यकर्मणोर्ज्ञानमोक्षानुकूलातिशयदायकत्वान्न ज्ञानेन नाशो नाप्युत्तरत्रालेप इति विवेकसम्भवात् । अस्ति च देहधारणकिञ्चिद्रोगादिफलम् । नापि मोक्षं प्रतिबन्धयति । शक्रादीनां प्रारब्धकर्मणि नारायणवर्मपठनलक्ष्मीस्तवनादिकाम्यकर्मणा सकलासुरविजयत्रैलोक्यैश्वर्यसम्पत्त्यादिमहाफलम् । तथा प्रारब्धकर्मणा वनवासगतानामेव पाण्डवानां सूर्यप्रार्थनाख्यकाम्यकर्मणाऽक्षयपात्रलाभे सति लक्षोपलक्षयोगीश्वराणां स्वर्णपात्रेष्वन्नदानादिमहामाहात्म्यम् । अतः काम्यकर्मणा कथं न प्रारब्धकर्मण्यतिशयानासादनम् । ज्ञानस्य चापेक्षितसकलपुरुषार्थसाधकत्वशक्तौ सहकारिता चेति भावः ।

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां तत्त्वप्रकाशिकाटिप्पण्यां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

## भावबोधः

''अप्रारब्धमनिष्टं चेत्'' इति स्मृत्यनुसारेण श्रौतं ''साधुकृत्या'' शब्दं व्याख्याति– **अत्रापीति ॥** सूत्र इव श्रुतावपीत्यर्थः । महानन्तफलत्वाद्युक्तस्तस्य मोक्षानुप्रवेश इति पुरुषार्थाधिकरणे ''तच्छ्रुतौ'' इत्यत्र विद्यायुतं कर्म मोक्षेतरपुरुषार्थाय प्रभवतीत्युक्तम् । अत्र मोक्षगतानन्दातिशयाय प्रभवतीत्युच्यत इति । न तेनास्य **पौनरुक्त्यमिति ।**

'पूर्वं स्वर्गादिसिद्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।
कर्म विद्यायुतं पश्चान्मोक्षवीर्यप्रदं त्विति ॥'' इति अनुव्याख्यान एवोक्तम् ।

## भावदीपः

**द्वितीयेति ॥** काम्यस्य नाशाश्लेषौ विकल्प्येते इति पक्षेत्यर्थः । विकल्पपूर्वं भाष्यं व्यनक्ति ॥ **यदकाम्यपुण्यमत इत्यादिना ॥** तत्रेष्टस्य **संश्लेष इति ॥** पुरुषार्थनयोक्तदिशा फलान्तरभोगरूप-संश्लेष इत्यर्थः । प्रकृतोपयोगायाह ॥ **अत्रापीति ॥** श्रुतावपीत्यर्थः । न केवलं सौत्राघपदे इत्यपेरर्थः ॥ **विनियुक्तत्वादिति ॥** ज्ञाने मोक्षातिशयेत्यर्थः ।

## वाक्यार्थमुक्तावली

अत्रापिपदेन विनाशाश्लेषावाप्नोतीति समुच्चीयते । भाष्ये न विनश्यतीति श्लेषस्याप्युपलक्षण-मिति भावेन प्रतिज्ञाभागं व्याचष्टे ॥ **यदिति ॥** ननु अघवत्क्रमतः पुण्यस्यापि नाशे सूत्रे उत्तरपूर्वकर्मणोरित्येव वक्तव्यम् । अघग्रहणं व्यर्थमित्यतो भाष्येऽप्रारब्धमित्याद्युक्तं तद्व्याचष्टे ॥ **तत्रापीति ॥ इष्टमनिष्टं चेति ॥** यद्यपि करणकाले सर्वमिष्टमेव तथापि ज्ञानकाले राजत्वाद्यापादकं यन्मननज्ञानभक्त्यादिप्रतिबन्धकं तन्मास्त्विति पश्चादनिष्टत्वात् केषांचिदनिष्टत्वम् । यत्तु ज्ञानभक्त्याद्यभिवर्धकं विप्रत्वाद्यापादकं काम्यं कर्म तच्च न नश्यतीति पश्चादनुसंहितं तदिष्टम् । एवमुत्तरकालीनमपि करणानन्तरमिच्छाभावाभावाभ्यामिष्टमनिष्टं चेति ज्ञेयम् । एवं चेष्टानिष्ट-भेदस्याप्यघे भावादुत्तरपूर्वकर्मणोरित्यनुक्त्वाऽघग्रहणमिति भावः । इत्येकेषामुभयोरित्यत्रोभयोः पुण्यपापयोरिति पूर्वोक्तप्रकारेणाश्लेषविनाशावित्युक्तप्रकारेण ज्ञानिसम्बन्धितया त्यागेनोभयोः सुहृत्सुद्विषत्स्वित्युभयोः एकेषां शाखिनां पाठे आम्नानमस्तीति हेतोरतोऽन्यदपि विनाशाश्लेषा-वाप्नोतीति सूत्रार्थमभिप्रेत्य भाष्यं तथा ह्येकेषां पाठ इत्यादि । तत्र इतीत्यस्य प्रकारपरामर्शकस्य प्रतिपदं तथेति । तद्विवरणं त्यागेनेति । उभयोरित्यस्य प्राग्वदर्थद्वयम् । हिशब्दस्तु हेतुपरेति-शब्दार्थसूचक इति सिद्धवत्कृत्यावतारयति । **कुत इति ।**

## तत्त्वसुबोधिनी

**तत्रापीति ।** पूर्वोत्तरपुण्यपापयोरपीत्यर्थः । तमेवाह । **पूर्वतनमिति ।** अनारब्धं अनिष्टं चेति स्मृत्यनुसारेण श्रौतसाधुकृत्याशब्दं व्याख्याति । अत्रापि साधुकृत्येति । सूत्र इव स्मृतावपीत्यर्थः । न नश्यतीत्यादीति । पूर्वतनमनिष्टं चेत् न नश्यति उत्तरमनिष्टं न श्लिष्यते इत्यर्थः ।

## वाक्यार्थविवरणम्

**द्वितीयपक्षेति** ॥ उत काम्यस्येति द्वितीयपक्षेत्यर्थः । काम्यं प्रारब्धमिष्टं च पुण्यं किं न स्यादित्यत आह ॥ **अकाम्यस्येति** ॥ पूर्वोत्तरकृताग्नि होत्राद्यकाम्यकर्मणोऽपरोक्षज्ञानतत्साध्य-मोक्षानन्दातिशयसाधनतया विनियुक्तत्वादित्यर्थः ॥ **तत्पूर्वपुण्यस्येति** ॥ मिथ्याज्ञानद्वेष-परिपाकात्पूर्वं कृतस्य पुण्यस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

अतोऽकाम्यकर्मणोऽन्यदकाम्यमपिनाश्लेषविनाशावाप्नोति कुतः इत्येकेषामुभयोःपूर्वोत्तर-पुण्ययोरिति एवंत्यागेन तस्य पुत्रा इत्येकेषां शाखिनां पाठोऽस्ति यत इत्यर्थः ॥ **अत्रापीति** ॥ सूत्रइव श्रुतावपीत्यर्थः । अत्र क्रमेण हेतूनाह ॥ **अकाम्यस्येत्यादिना** ॥ विनियुक्तत्वाज्ज्ञानादौ ।

## सूत्रभाष्यम्

**ॐ यदेव विद्ययेति हि ॐ ॥ १८ ॥**

**ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति ।**

**'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति श्रुतेः ।**

**'न ह्यस्य कर्म क्षीयत' इति च ।**

**'अल्पमात्रः कृतो धर्मो भवेज्ज्ञानवतो महान् ।**
**महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेदि'ति च भारते ॥**

## तत्त्वप्रदीपिका

''सुहृदः साधुकृत्यामि''ति ज्ञानिनः पुण्यस्याविशेषतस्त्यागश्रुतिरनभिष्टानारब्धकाम्यविषया कथं योज्यत इत्याशङ्काऽग्निहोत्रादीत्यादिनैवोच्छिन्ना । तात्पर्यात्पुनर्ज्ञानिकृतस्य पुण्यस्याविनाश इत्युपपादयति – यदेव विद्ययेति हि ॥ महत्तमं महत्तमफलदम् । अनन्तमनन्तकालीनफलदम् । कर्मणः स्वर्गादिफलदानशेपत्वे ज्ञानस्य श्रुतिरियं प्रागुदाहृता । अत्र तु ज्ञानफलमोक्षे कर्मणा सुखाधिक्यमित्येतदर्थोदाहियते । न चेयमुद्गीथादिकर्माङ्गावबद्धोपास्तिविषयतया कर्मण एव

(तत्त्वप्रदीपिका)

फलाधिक्यार्थेति मन्तव्यम् । तदधिगम इत्यादि ब्रह्मदर्शिप्रकरण उदाहृतत्वात् । न च "ओमित्येतदक्षरमुद्गीथमुपासीते"त्यादि कर्माङ्गोपास्तिप्रकरणाधीतत्वमस्या इति वाच्यम् । आकाश-स्तल्लिङ्गादित्यादेर्ब्रह्मण एवोद्गीथादिशब्दवाच्यत्वात् ।

'ओतमस्मिन्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः ।
इत्योमिति सदोपास्यः सोऽक्षरः पुरुषोत्तमः ॥
उच्चत्वाद्गीयमानत्वात्स्थानाच्चोद्गीथ उच्यते ।
ओमित्येनं समुद्दिश्य ह्युद्गता गायति स्फुटमि'ति सारनिर्णये ॥

## तत्त्वप्रकाशिका

कथं ज्ञानिकृतोत्तरकालीनाकाम्यपुण्यस्य मोक्षानुप्रवेशः कर्मणो नाशशिरस्काल्पफलत्वा-दित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **यदेवेति** ॥ यद्यप्यज्ञकर्मणो नाशशिरस्काल्पफलत्वं तथापि ज्ञानिकृताकाम्यकर्मणो महानन्तफलत्वाद्युक्तस्तस्य मोक्षानुप्रवेश इति भावः । कुत एतदित्यत उक्तार्थे क्रमेण श्रुतिस्मृती दर्शयति ॥ **यदेवेति** ॥ एतत्सूत्रत्रयन्यायो द्वेपिपुण्ये पापे चानुवर्तितव्यः । तत्पूर्वपुण्यस्याप्रारब्धस्य विनाश उत्तरस्याश्लेष उक्तः । तत्रानिष्टं चेन्न नश्यतीत्यादि ग्राह्यम् । तेषामपि किञ्चित्पुण्यसंश्लेषदर्शनात्पापस्य तु पूर्वकृतस्य कियतश्चिद्द्वेषाभिवृद्धिहेतुत्वेनोत्तरस्य तु साक्षात्तमोऽनुप्रवेश इति ॥

## भावबोधः

**नश्यतीत्यादीति** । पूर्वतनमनिष्टं चेन्नश्यति । उत्तरमनिष्टं चेन्न श्लिष्यत इत्यर्थः ।

## भावदीपः

व्याहतिनिरासायाल्पमपीत्युक्ताल्प फलत्वमज्ञाधिकारिकत्वेनानुवादतया विवृण्वन् भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ **महेति** ॥ महाफलत्वादविनाशिफलत्वादित्यर्थः ॥ **श्रुतिस्मृती इति** ॥ श्रुत्योः श्रुतित्वेनैकीकरणाद् द्विवचनोक्तिः । पुरुषार्थनये तच्छतेरित्यत्र यदेवेति श्रुतिर्व्याख्याता । तत्रोक्तावप्यत्र पुनरुक्तिः । यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते ।

(भावदीपः)

पूर्वं स्वर्गादिसिद्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।
कर्मविद्यायुतं पश्चान्मोक्षे वीर्यप्रदं त्विति ॥

अनुभाष्योक्तार्थभेदादिति भावः ॥ **एतत्सूत्रेति** ॥ अग्निहोत्रादित्यादिसूत्रत्रयेत्यर्थः । अत एव पूर्वत्र भाष्ये अग्निहोत्राद्यपीत्यपि पदम् । द्वेषिणस्तथापातादेश्च समुच्चायकतयोपात्तम् । अन्यथा तन्न स्यादिति भावः ॥ **उक्त इति** ॥ इतरस्याप्येवमसंश्लेषः पाते त्विति सूत्रे उक्त इत्यर्थः । तत्राप्रारब्धपुण्ये अनिष्टं चेत् न नश्यति । इष्टं चेन्नश्यति । द्वेषपूर्त्युत्तरकालीनं चेत्पुण्यमप्रारब्धमनिष्टं चेत् श्लिष्यते । इष्टं चेन्न श्लिष्यत इति ग्राह्यमित्यर्थः । कथमनिष्टस्यापि पुण्यस्याविनाशसंश्लेषावित्यत आह ॥ **तेषामपीति** ॥ द्वेषिणामपीत्यर्थः । ऐश्वर्यादिभोगदर्शनादिति भावः ॥ **साक्षादिति** ॥ तमोगतदुःखभोगातिशयजनकत्वेनानुप्रवेश इत्यर्थः ॥

## वाक्यार्थमुक्तावली

यस्मादेव विद्ययेति श्रुतिरस्ति, अतो ब्रह्मदर्शिकृतमग्निहोत्रादिकर्म तत्कार्याय मोक्षेऽनन्तकालीनानन्दातिशयलक्षणमहाफलाय भवतीति पूर्वानुवृत्या सूत्रार्थः ॥ **महानन्तफलत्वादिति** ॥ अविनाशिफलत्वादित्यर्थः । नुषु पुरुषार्थाधिकरणे तच्छ्तेरित्यत्र विद्यायुतं कर्म मोक्षेतरपुरुषार्थाय भवतीत्युक्तम् । अत्र तु मोक्षगतानन्दातिशयाय भवतीत्युच्यत इति न तेनास्य पौनरुक्तयम् । तदुक्तमनुव्याख्याने ।

पूर्वं स्वर्गादिसिध्यर्थं वीर्यवत्वेन चोदितम् ।
कर्म विद्यायुतं पश्चान्मोक्षवीर्यप्रदं त्विति ॥ इति ।

एतत्सूत्रत्रयं **न्याय इति** । तत्र द्वितीयसूत्रन्यायस्य द्वेषिपुण्येऽनुसर्तव्यत्वज्ञानि पुण्यवैपरीत्येनेत्युपपादयितुं द्वितीयसूत्रलब्धन्यायं दर्शयति ॥ **तत्पूर्वपुण्यस्येति** ॥ ज्ञानिकृतपुण्यस्येत्यर्थः । तद्वैपरीत्यमुपपादयति ॥ **तत्रेति** ॥ इत्यादीत्यादिपदेनेष्टं चेन्नश्यतीति ग्राह्यम् । अनिष्टानाशमुपपादयति ॥ **तेषामिति** ॥ कुरुवंशादौ महाराजत्वेन जननकारणस्य कृष्णाकृष्णवृकोदरादौ महाद्वेषद्वारा महातमसि दुःखवैचित्र्यापादकतया पश्चादनिष्टस्य पुण्यस्य संश्लेषदर्शनादित्यर्थः । ननु दुर्योधनादौ कुरुवंशादौ भवनकारणं पुण्यं किं प्रारब्धमुत द्वेषदार्ढ्यात् पूर्वमुत्तरोत्तरभाव्यनिष्ठमिति संदिह्यत इति चेदुदाहरणायोक्तत्वेनान्यतरत्वस्य सिद्धत्वात् ।

(तत्त्वप्रदीपिका)

फलाधिक्यार्थेति मन्तव्यम् । तदधिगम इत्यादि ब्रह्मदर्शिप्रकरण उदाहृतत्वात् । न च "ओमित्येतदक्षरमुद्गीथमुपासीते"त्यादि कर्माङ्गोपास्तिप्रकरणाधीतत्वमस्या इति वाच्यम् । आकाश-स्तल्लिङ्गादित्यादेर्ब्रह्मण एवोद्गीथादिशब्दवाच्यत्वात् ।

'ओतमस्मिन्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः ।
इत्योमिति सदोपास्यः सोऽक्षरः पुरुषोत्तमः ॥
उच्चत्वाद्गीयमानत्वात्स्थानाच्चोद्गीथ उच्यते ।
ओमित्येनं समुद्दिश्य ह्युद्गता गायति स्फुटमि'ति सारनिर्णये ॥

## तत्त्वप्रकाशिका

कथं ज्ञानिकृतोत्तरकालीनाकाम्यपुण्यस्य मोक्षानुप्रवेशः कर्मणो नाशशिरस्काल्पफलत्वा-दित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **यदेवेति** ॥ यद्यप्यङ्गकर्मणो नाशशिरस्काल्पफलत्वं तथापि ज्ञानिकृताकाम्यकर्मणो महानन्तफलत्वाद्युक्तस्तस्य मोक्षानुप्रवेश इति भावः । कुत एतदित्यत उक्तार्थे क्रमेण श्रुतिस्मृती दर्शयति ॥ **यदेवेति** ॥ एतत्सूत्रत्रयन्यायो द्वेपिपुण्ये पापे चानुवर्तितव्यः । तत्पूर्वपुण्यस्याप्रारब्धस्य विनाश उत्तरस्याश्लेष उक्तः । तत्रानिष्टं चेन्न नश्यतीत्यादि ग्राह्यम् । तेषामपि किञ्चित्पुण्यसंश्लेषदर्शनात्पापस्य तु पूर्वकृतस्य कियतश्चिद्द्वेषाभिवृद्धिहेतुत्वेनोत्तरस्य तु साक्षात्तमोऽनुप्रवेश इति ॥

## भावबोधः

**नश्यतीत्यादीति** । पूर्वतनमनिष्टं चेन्नश्यति । उत्तरमनिष्टं चेन्न श्लिष्यत इत्यर्थः ।

## भावदीपः

व्याहतिनिरासायाल्पमपीत्युक्ताल्प फलत्वमज्ञाधिकारिकत्वेनानुवादतया विवृण्वन् भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ **महेति** ॥ महाफलत्वादविनाशिफलत्वादित्यर्थः ॥ **श्रुतिस्मृती इति** ॥ श्रुत्योः श्रुतित्वेनैकीकरणाद् द्विवचनोक्तिः । पुरुषार्थनये तच्छतेरित्यत्र यदेवेति श्रुतिर्व्याख्याता । तत्रोक्तावप्यत्र पुनरुक्तिः । यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते ।

(भावदीपः)

पूर्वं स्वर्गादिसिद्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।
कर्मविद्यायुतं पश्चान्मोक्षे वीर्यप्रदं त्विति ।।

अनुभाष्योक्तार्थभेदादिति भावः ।। **एतत्सूत्रेति** ।। अग्निहोत्रादित्यादिसूत्रत्रयेत्यर्थः । अत एव पूर्वत्र भाष्ये अग्निहोत्राद्यपीत्यपि पदम् । द्वेषिणस्तथापातादेश्च समुच्चायकतयोपात्तम् । अन्यथा तन्न स्यादिति भावः ।। **उक्त इति** ।। इतरस्याप्येवमसंश्लेषः पाते त्विति सूत्रे उक्त इत्यर्थः । तत्राप्रारब्धपुण्ये अनिष्टं चेत् न नश्यति । इष्टं चेन्नश्यति । द्वेषपूर्त्युत्तरकालीनं चेत्पुण्यमप्रारब्धमनिष्टं चेत् श्लिष्यते । इष्टं चेन्न श्लिष्यत इति ग्राह्यमित्यर्थः । कथमनिष्टस्यापि पुण्यस्याविनाशसंश्लेषावित्यत आह ।। **तेषामपीति** ।। द्वेषिणामपीत्यर्थः । ऐश्वर्यादिभोगदर्शनादिति भावः ।। **साक्षादिति** ।। तमोगतदुःखभोगातिशयजनकत्वेनानुप्रवेश इत्यर्थः ।।

## वाक्यार्थमुक्तावली

यस्मादेव विद्ययेति श्रुतिरस्ति, अतो ब्रह्मदर्शिकृतमग्निहोत्रादिकर्म तत्कार्याय मोक्षेऽनन्तकालीनानन्दातिशयलक्षणमहाफलाय भवतीति पूर्वानुवृत्या सूत्रार्थः ।। **महानन्तफलत्वादिति** ।। अविनाशिफलत्वादित्यर्थः । नृषु पुरुषार्थाधिकरणे तच्छ्रुतेरित्यत्र विद्यायुतं कर्म मोक्षेतरपुरुषार्थाय भवतीत्युक्तम् । अत्र तु मोक्षगतानन्दातिशयाय भवतीत्युच्यत इति न तेनास्य पौनरुक्त्यम् । तदुक्तमनुव्याख्याने ।

पूर्वं स्वर्गादिसिध्यर्थं वीर्यवत्वेन चोदितम् ।
कर्म विद्यायुतं पश्चान्मोक्षवीर्यप्रदं त्विति ।। इति ।

एतत्सूत्रत्रयं **न्याय इति** । तत्र द्वितीयसूत्रन्यायस्य द्वेषिपुण्येऽनुसर्तव्यत्वज्ञानि पुण्यवैपरीत्येनेत्युपपादयितुं द्वितीयसूत्रलब्धन्यायं दर्शयति ।। **तत्पूर्वपुण्यस्येति** ।। ज्ञानिकृतपुण्यस्येत्यर्थः । तद्वैपरीत्यमुपपादयति ।। **तत्रेति** ।। इत्यादीत्यादिपदेनेष्टं चेन्नश्यतीति ग्राह्यम् । अनिष्टानाशमुपपादयति ।। **तेषामिति** ।। कुरुवंशादौ महाराजत्वेन जननकारणस्य कृष्णाकृष्णवृकोदरादौ महाद्वेषद्वारा महातमसि दुःखवैचित्र्यापादकतया पश्चादनिष्टस्य पुण्यस्य संश्लेषदर्शनादित्यर्थः । ननु दुर्योधनादौ कुरुवंशादौ भवनकारणं पुण्यं किं प्रारब्धमुत द्वेषदार्ढ्यात् पूर्वमुत्तरोत्तरभाव्यनिष्ठमिति संदिह्यत इति चेदुदाहरणायोक्तत्वेनान्यतरत्वस्य सिद्धत्वात् ।

(वाक्यार्थमुक्तावली)

ननु द्वेषिकृतपूर्वोत्तरपापस्य विनाशाश्लेषौ विद्येते न वा । आद्ये इतरस्यापीति पुण्यमात्राश्लेषादिरयुक्तः । द्वितीये तमसोऽभावप्रसङ्ग इत्यतः प्रथमसूत्रोक्तन्यायं दर्शयति ॥ **पापस्य पूर्वकृतस्येति** ॥ प्रारब्धव्यवच्छेदाय कियतश्चिदित्युक्तम् । ननु नानादुर्योन्यापादकत्वेन तेषां क्लृप्तत्वात् कथं फलान्यतरत्वात् द्वेषमात्रहेतुतया पर्यवसानम् । अन्यथा योग्यकृतपूर्वानिष्टकाम्यानामपि भक्तिहेतुत्वप्रसङ्ग इति चेन्न । स्वतः पापमात्रस्यान्तश्शुद्धिविरोधित्वेन द्वेषहेतुत्वेऽपि स्वतः क्लृप्तदुर्योन्याद्यनापादकत्वस्य यथाप्रमाणं योग्यानामनिष्टपुण्यस्येवाङ्गीकार्यत्वात् । मिथ्याज्ञानदार्ढ्यस्य तमःप्रतिबलसामग्रीत्वादिति । ननु कथं द्वेषिकृतोत्तरपापस्य तमस्यनुप्रवेशः । कर्मणो नाशाशिरस्काल्पफलत्वादिति न च वाच्यं प्रमाणसद्भावादिति तृतीयन्यायो द्रष्टव्य इत्यभिप्रेत्य प्रमितत्वद्योतनायोक्तं तमस्येवानुप्रवेश इति ।

## तत्त्वसुबोधिनी

**तेषामपीति** । पुनिताथाचानिष्टपुण्येनैव तेषामैश्वर्यादीति न तत्रादृष्टं तु नश्यंत्येवेति भावः । पापेपि विभागमाह । **पापऽस्येति** ।

## वाक्यार्थविवरणम्

इत्यादि **ग्राह्यमिति** ॥ अत्र आदिपदेन उत्तरमप्यनिष्टं चेत् श्लिष्यत इति ग्राह्यमित्यर्थः । न तु तेषामप्यनिष्टस्य पुण्यस्य नाश एव किं न स्यादित्यत आह ॥ **तेषामपीति** ॥ दुर्योधनादीनामित्यर्थः ॥ **पुण्यसंश्लेषेति** ॥ तत्फलभूतैश्वर्यादीत्यर्थः ॥ **द्वेषाभिवृद्धीति** ॥ मिथ्याज्ञानपरिपाकद्वारेत्यर्थः ॥ **तमोऽनुप्रवेश इति** ॥ दुःखाभिवृद्धिहेतुत्वादिति भावः ।

## वाक्यार्थमञ्जरी

हि यस्माद्यदेवं विद्यया करोतीति श्रुतिरस्ति तस्माज्ज्ञानिकृताकाम्यकर्मणो मोक्षानुप्रवेशो युक्त इत्यर्थः ॥ **न नश्यतीत्यादीति** ॥ पूर्वतनमिष्टं चेत् न नश्यति उत्तरमनिष्टंचेत् श्लिष्यत इत्यर्थः । कियतश्चित् कस्यचित् साक्षाद्दुःखातिशयहेतुत्वेन ॥

## सूत्रभाष्यम्

**॥ ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ ॥ १९ ॥**

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते । अथेति नियमसूचकः ।

'आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥
ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः ।
नियमेन भवेन्नात्र कार्या काचिद्विचारणे'ति च नारायणतन्त्रे ॥ १९ ॥

॥ इति तदधिगमाधिकरणम् ॥ ८ ॥

॥ इति श्री आनन्दतीर्थभगवत्पादाचार्य विरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥

## तत्त्वप्रदीपिका

भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॥ आरब्धकार्यं पुण्यं पापं चेत्युभयमपि ब्रह्मदर्शी भोगेन क्षपयित्वा ब्रह्म प्राप्नोति । इतरोऽपि तदुभयं भोगेन क्षपयित्वाऽन्धतमः सम्प्राप्नोति । इतरस्याप्येव-मित्युपरि च यथासम्भवं योजनीयत्वात् । यथा ज्ञाने जाते तद्देहपाते देहान्तरपाते वा मुक्ति-रित्यनियमः प्रागुक्तः । न तथा प्रारब्धकर्मक्षये किन्तु तदनन्तरमेवेत्येतद्दर्शयति – अथेति नियम-सूचक इति । प्रारब्धकर्मक्षयश्च ब्रह्मणां शतकालात्पूर्वं भवत्येव । ब्रह्मणामपि ब्रह्मणां शतकाला-द्भवत्येव । ततोऽपि पूर्वं पूर्वमनन्तादीनाम् ।

'ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः ।
ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद्ब्रह्मणस्तथा ।
रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश ॥
अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसंक्षयः ।
ब्रह्मणैव सहातश्च परं नारायणं व्रजेदि''ति सत्तत्वे ॥ इति तदधिगमाधिकरणम् ॥

॥ इति श्री त्रिविक्रमपण्डिताचार्य विरचित तत्वप्रदीपिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

## तत्त्वप्रकाशिका

तथापि न ब्रह्मज्ञानिविद्वेषिणोर्मुक्तितमसी सिध्यतः । उभयोरपि प्रत्येकं प्रारब्धपुण्यपाप सद्भावादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **भोगेनेति** ॥ न प्रारब्धपुण्यपापसद्भावादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **भोगेनेति** ॥ न प्रारब्धकर्मसद्भावेन मोक्षाभावः । प्रारब्धं भोगेन क्षपयित्वा मोक्षादिप्राप्तिसम्भवादिति भावः । ज्ञानिनः प्रारब्धभोगे विशेषसूचकस्तुशब्दः । यदुक्तमुपमर्दं चेति । यथा ज्ञानाद्यनन्तरमपि न मोक्षादिनियमस्तथा कर्मक्षयानन्तरमपीति शङ्का मा भूदिति भावेनाह ॥ **अथेति** ॥ शब्द इति शेषः । कुतो नियत इत्यत आह ॥ **आरब्धेति** ॥ आरब्धभोगस्य निरवधिकत्वे ब्रह्मादिप्राप्त्यनुपपत्तिरिति तत्राह ॥ **ब्रह्मणामिति** ॥ ब्रह्मणां शतस्य यः कालस्तत्समाप्तेः पूर्वमेवेत्यर्थः । न च वाच्यं पुनः पुनरिष्टकाम्यपुण्यापादनादमुक्तिरिति । 'प्रजहाति यदा कामान्' इत्यादेस्तदापादनस्य कादाचित्कत्वात् । अतो ज्ञानेन क्षीणकर्मणां मोक्षसम्भवादुक्तं युक्तमिति सिद्धम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां
श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

## भावबोधः

प्रारब्धं भोगेन क्षपयित्वेति । अनेन यावद्भोगं संस्थितेरिति न्यायविवरणांशोऽप्युक्तार्थो भवति । अनेन ''न चेन्न कर्मक्षयः'' इत्याक्षेपः परिहृतो भवति । ब्रह्मणां शतस्येति । अनेन ब्रह्मणां शतमिति षष्ठ्या अलुक्; तस्य कालो ब्रह्मणां शतकालः । तस्मात्तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनामारब्धसंक्षयो भवतीति स्मृतियोजनोक्ता भवति । **प्रजहातीति** । इत्यादिज्ञानस्वरूप-प्रतिपादकवाक्यात्तस्य बन्धककर्मत्यागश्रवणादिति भावः । अत्र कर्माणि क्षपयेद्विष्णुरिति न्याय-विवरणोदाहृतस्मृतौ ''तथोपास्याञ्जसा दृष्टं ब्रह्म'' इत्यनुव्याख्याने चोक्तप्रकारेण न ज्ञानसामर्थ्येन कर्मक्षयो भवति; किं तु ज्ञातेन ब्रह्मणैवेति ''तदधिगम'' सूत्रतात्पर्यमुक्तमिति ज्ञातव्यम् ।

अत्राद्ये ब्रह्मज्ञानस्य ज्ञानिकृतपूर्वोत्तरपापविनाशाश्लेषहेतुत्वं प्रतिज्ञाय तत्र प्रमाणोक्तिः । द्वितीये मिथ्याज्ञानस्यापि मिथ्याज्ञानिकृतपूर्वोत्तरपुण्यविनाशाश्लेषहेतुत्वोक्तिः । यद्येवं ब्रह्मज्ञानि-द्वेषिणोर्ज्ञानादिनैव पुण्यपापक्षयः तर्हि ज्ञानाद्युदय एव मोक्षादिप्रसङ्ग इत्याशङ्कानिरासाय, तृतीये प्रागुक्तविनाशाश्लेषावप्रारब्धपापपुण्ययोरेव न तु प्रारब्धयोरिति प्रतिपादनम् ।

(भावबोधः)

ननु ज्ञानिकृतपापस्य ज्ञानेन विनाशाश्लेषयोरपि तत्कृतपूर्वोत्तरपुण्यस्य प्रतिबन्धकस्य सत्त्वात् कथं मोक्ष इत्याशङ्कानिरासाय तत्पुण्यं किमकाम्यमुत काम्यमिति विकल्पं हृदि निधाय, चतुर्थे– अकाम्यस्य मोक्षानुप्रवेशित्वोक्तिः । पञ्चमे– अनिष्टकाम्यस्य विनाशाश्लेषोक्तिः । ननु नाशशिरस्कात्पफलस्य कर्मणो मोक्षानुप्रवेशित्वं कथमित्याशङ्कापरिहाराय, षष्ठे– काम्यकर्मणोऽपि ज्ञानिकृतस्यानन्तमहाफलत्वसमर्थनम् । नन्वेवमप्रारब्धपुण्ययोर्नाशाश्लेषविनियोगसत्त्वेनाप्रतिबन्धकत्वेऽपि प्रारब्धयोस्तयोः प्रतिबन्धकत्वात् कथं ज्ञानादिना मोक्षादीत्याशङ्कानिरासाय, सप्तमे– प्रारब्धयोरपि पापपुण्ययोर्भोगेनैव विनाशोक्तिरिति सूत्रक्रमः ॥

अत्र फलान्तरङ्गतयावश्यंभाविसाधनप्रतिपादकतयाऽधिकरणसप्तकमेका पेटिका । तत्रापि ज्ञानसाधनानां मध्ये प्रधानभूतश्रवणादेरवश्यकर्तत्वप्रतिपादकतया आद्यमधिकरणपञ्चकम् अवान्तरपेटिका । तत्राद्ये– श्रवणाद्यावृत्तेर्नित्यकर्तव्यत्वसमर्थनम् । द्वितीये– आत्मत्वोपासनस्य कर्तव्यत्वप्रतिपादनम् । तृतीये– आत्मत्वोपासनोपयोगितया प्रतीकैक्योपासनवर्जनस्य वर्णनम् । चतुर्थे– ब्रह्मत्वोपासनस्य कर्तव्यत्ववचनम् । पञ्चमे– स्वोत्पत्त्यङ्गाश्रितत्वेन भगवदुपासनस्य देवैः कर्तव्यत्वोपपादनमिति । षष्ठे– ज्ञानप्रधानसाधनभूतध्यानाङ्गस्यासननियमस्य साधनम् । सप्तमे– ज्ञानिनामपि ध्यानस्याप्रायणान्तत्वसमर्थनमिति । अष्टमे– कर्मक्षयलक्षणमोक्षप्रतिपादनमिति ॥

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचित तत्वप्रकाशिकाभावबोधे चतुर्थाध्यायस्य प्रथमः पादः ॥**

## भावदीपः

स्मृतौ तमो घोरमित्युक्तेरुभयपरतया सूत्रमवतारयति ॥ **तथापीति** ॥ अनारब्धपुण्यपापप्रतिबन्धेऽपीत्यर्थः । उक्तशङ्कां प्रत्याह ॥ **न प्रारब्धेति** ॥ मोक्षाभावो मोक्षाद्यभावः । तत्र हेतुत्वेन भाष्यं व्यनक्ति ॥ **प्रारब्धमिति** ॥ क्षपयित्वा वर्तमानस्येत्यर्थः । ननु भोगेन प्रारब्धक्षपणोक्तावुपमर्दं चेत्युक्तविरोध इत्यत आह ॥ **ज्ञानिन इति** ॥ अल्पभोगलक्षणविशेषेत्यर्थः । ब्रह्मादीत्यादिपदेन तमोग्रहः ॥ **प्रजहातीति** ॥

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥

(भावदीपः)

इति द्वितीये गीतोक्तदिशा प्रायः सर्वकामप्रहाण एव ज्ञानोदयेन कादाचित्ककाम्येष्टापादनस्य भोगेन क्षयसम्भवादिति भावः ॥ **अत इति** ॥ भोगैकनाश्यप्रारब्धकर्मणोऽवस्थिति सम्भवेनाप्रारब्धसर्वकर्मणां ज्ञानेन क्षयेऽपि सद्यो मुक्तिः स्यादिति बाधकाभावाच्छत्यादि बलाच्चेत्यर्थः । अनियम इत्युक्तं युक्तमिति फलोक्तिः ॥

**॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमुक्तावली

ज्ञानाद्यनन्तरमित्यादिपदेनोपासनोत्कर्ष उच्यते । न मोक्षादिरित्यादिपदेन ज्ञानम् । अत्राद्यद्वितीययोर्योग्यताक्रमेण ज्ञानादेव पापपुण्ययोर्विनाशाश्लेषोक्तिः । तृतीये तर्हि ज्ञानानन्तरमेव मोक्षादिप्रसङ्ग इति पूर्वप्रमाणस्य तर्कबाधमाशं(क्या)स्याप्रारब्धनाशेऽपि प्रारब्धप्रतिबन्धकसत्वात्तर्कस्याप्रयोजकत्वोक्तिः । तथापि योग्यस्य पूर्वोत्तरपुण्यसद्भावान्न मोक्ष इत्याशङ्क्य, चतुर्थे निवृत्तपुण्यस्य पूर्वोत्तरस्य मोक्षानुप्रवेशाप्रतिबन्धकत्वस्य । पञ्चमे काम्याप्रारब्धानिष्टपुण्यस्य नाशाश्लेषोक्तिः । यद्यपि यदेव विद्ययेति सूत्रमग्निहोत्रादीत्यतः परं पठितव्यं तथापि अतोऽन्यदपीत्यत्र मुक्तावनुभवकारणादन्यन्नश्यतीत्युक्ते उत्तरकृताग्निहोत्रादेर्मुक्तावनुभवकारणत्वे नाशे सति तदन्यस्य नाशः सम्भवति तदेवायुक्तं कर्मत्वादनिष्टकाम्यवदित्यनुमानविरोधाक्षेप उत्थिते यदेवेत्यत्र श्रुतिबाधोक्तिः । सप्तमे पुनः प्रारब्धप्रतिबन्धेन मोक्षतमसोरभावमाशङ्क्य भोगेन क्षयोक्तिरिति सूत्रक्रमः ॥

**॥ इति श्री ताम्रपर्णी श्रीनिवासाचार्य विरचितायां**
**श्रीमतत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां चतुर्थाध्यायस्य प्रथमः पादः ॥**

## तत्त्वसुबोधिनी

स को विशेष इत्यत ''उपमर्दं चेत्यन्त्रोक्त इत्यत आह ॥ **यदुक्तमुपमर्दं चेति** ॥ सम्यज्ज्ञानिनां परब्रह्मप्राप्तिः मिथ्याज्ञानिनां तमःप्राप्तिश्च न स्यादित्यर्थः ॥ **ब्रह्मणां शतस्येति** ॥ अनेन ब्रह्मणां शतमिति षष्ट्या अलुक् । तस्य कालो ब्रह्मणां शतकालः । तस्मात्तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनां प्रारब्धं संक्षयीभवतीति स्मृतियोजना उक्ता भवति । अत्र विशेषः 'ब्रह्मणस्त्वेव

(तत्त्वसुबोधिनी)

तावत्वं पञ्चाशद्ब्रह्मणस्तथा । रुद्रस्य विंशदेव स्यादिद्रंस्यार्कादिके दश । अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसंक्षयः । इत्यनुव्याख्यानोक्तयः ॥ प्रजहातीति ॥ इत्यादिज्ञानस्वरूपप्रतिपादक-व्याख्यानस्य कबन्ध कर्मत्यागश्रवणादिति भावः । अत्राद्ये सूत्रे ब्रह्मज्ञानस्य पूर्वोत्तरपाप-विनाशाश्लेषहेतुत्वे प्रमाणोक्तिः । द्वितीये मिथ्याज्ञानस्य पूर्वोत्तरपुण्यपापाश्लेषहेतुत्वोक्तिः । तृतीये अप्रारब्धपुण्यपापयोरेवाश्लेषविनाशो न तु प्रारब्धयोरिति प्रतिपादनम् । चतुर्थे कामस्य मोक्षानु-प्रवेशोक्तिः । पञ्चमे प्रारब्धयोरपि विनाशाश्लेषोक्तिः । षष्टे ज्ञानिकृतस्याकाम्यकर्मणः अनन्त-महाफलत्वसमर्थनम् । सप्तमे प्रारब्धयोरपि पुण्यपापयोः भोगेन विनाशित्वोक्तिरिति सूत्रक्रमः ॥

**॥ इति श्रीतत्वप्रकाशिकाविवृतौ तत्वसुबोधिन्यां पाण्डुरङ्गि आनन्दाचार्यसूनु श्रीनिवासाचार्यकृतायां चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थविवरणम्

**ब्रह्मादिप्राप्तीति ॥** कार्याकार्यब्रह्मप्राप्तीत्यर्थः । एतत्सर्वं सङ्गृह्योक्तमणुभाष्ये

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥ इति ।

अस्यार्थः ॥ प्रारब्धकर्मणः सकाशादन्यस्य अप्रारब्धस्य पुण्यस्य पापस्य इति उभयस्यापि । तथा प्रारब्धमपि काम्यं पुण्यं द्विविधम् । इष्टमनिष्टं चेति । तन्मध्येऽनिष्टस्यापि पुण्यस्य ज्ञानादेव परिक्षय इत्यर्थः । अन्यस्य अप्रारब्धकर्मणः सकाशादन्यस्य प्रारब्धस्य । उभयस्य पुण्यपापरूपस्य सर्वस्यापि । तथा अन्यस्य अनिष्टपुण्यादन्यस्य इष्टस्य अप्रारब्धकाम्यपुण्यस्यापि भोगत एव परिक्षय इत्यर्थः । प्रारब्धानामपि कर्मणां नाशे वातपुत्रीयाः ब्रह्मोपदेशाः प्रसज्येरन् । परं ब्रह्म प्रत्यक्षतो दृष्ट्वा वक्तॄणामभावात् । इष्टकाम्यस्यापि नाशे ज्ञानस्येष्टविघातित्वेनापुरुषार्थत्वप्रसङ्ग इति भाव इति सम्प्रदायविदः ।

**॥ इति तत्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासतीर्थकृते चतुर्थाध्यायस्य प्रथमः पादः ॥**

(भावदीपः)

इति द्वितीये गीतोक्तदिशा प्रायः सर्वकामप्रहाण एव ज्ञानोदयेन कादाचित्ककाम्येष्टापादनस्य भोगेन क्षयसम्भवादिति भावः ॥ **अत इति** ॥ भोगैकनाश्यप्रारब्धकर्मणोऽवस्थिति सम्भवेनाप्रारब्धसर्वकर्मणां ज्ञानेन क्षयेऽपि सद्यो मुक्तिः स्यादिति बाधकाभावाच्छत्यादि बलाच्चेत्यर्थः । अनियम इत्युक्तं युक्तमिति फलोक्तिः ॥

**॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमुक्तावली

ज्ञानाद्यनन्तरमित्यादिपदेनोपासनोत्कर्ष उच्यते । न मोक्षादिरित्यादिपदेन ज्ञानम् । अत्राद्यद्वितीययोर्योग्यताक्रमेण ज्ञानादेव पापपुण्ययोर्विनाशाश्लेषोक्तिः । तृतीये तर्हि ज्ञानानन्तरमेव मोक्षादिप्रसङ्ग इति पूर्वप्रमाणस्य तर्कबाधमाशं(क्या)स्याप्रारब्धनाशेऽपि प्रारब्धप्रतिबन्धकसत्वात्तर्कस्याप्रयोजकत्वोक्तिः । तथापि योग्यस्य पूर्वोत्तरपुण्यसद्भावान्न मोक्ष इत्याशङ्क्य, चतुर्थे निवृत्तपुण्यस्य पूर्वोत्तरस्य मोक्षानुप्रवेशाप्रतिबन्धकत्वस्य । पञ्चमे काम्याप्रारब्धानिष्टपुण्यस्य नाशाश्लेषोक्तिः । यद्यपि यदेव विद्ययेति सूत्रमग्निहोत्रादीत्यतः परं पठितव्यं तथापि अतोऽन्यदपीत्यत्र मुक्तावनुभवकारणादन्यन्नश्यतीत्युक्ते उत्तरकृताग्निहोत्रादेर्मुक्तावनुभवकारणत्वे नाशे सति तदन्यस्य नाशः सम्भवति तदेवायुक्तं कर्मत्वादनिष्टकाम्यवदित्यनुमानविरोधाक्षेप उत्थिते यदेवेत्यत्र श्रुतिबाधोक्तिः । सप्तमे पुनः प्रारब्धप्रतिबन्धेन मोक्षतमसोरभावमाशङ्क्य भोगेन क्षयोक्तिरिति सूत्रक्रमः ॥

**॥ इति श्री ताम्रपर्णी श्रीनिवासाचार्य विरचितायां**
**श्रीमतत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां चतुर्थाध्यायस्य प्रथमः पादः ॥**

## तत्त्वसुबोधिनी

स को विशेष इत्यत ''उपमर्द चेत्यन्त्रोक्त इत्यत आह ॥ **यदुक्तमुपमर्दं चेति** ॥ सम्यज्ज्ञानिनां परब्रह्मप्राप्तिः मिथ्याज्ञानिनां तमःप्राप्तिश्च न स्यादित्यर्थः ॥ **ब्रह्मणां शतस्येति** ॥ अनेन ब्रह्मणां शतमिति षष्ठ्या अलुक् । तस्य कालो ब्रह्मणां शतकालः । तस्मात्तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनां प्रारब्धं संक्षयीभवतीति स्मृतियोजना उक्ता भवति । अत्र विशेषः 'ब्रह्मणस्त्वेव

(तत्त्वसुबोधिनी)

तावत्वं पञ्चाशद्ब्रह्मणस्तथा । रुद्रस्य विंशदेव स्यादिंद्रस्यार्कादिके दश । अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसंक्षयः । इत्यनुव्याख्यानोक्तयः ॥ **प्रजहातीति ॥** इत्यादिज्ञानस्वरूपप्रतिपादक-व्याख्यानस्य कबन्ध कर्मत्यागश्रवणादिति भावः । अत्राद्ये सूत्रे ब्रह्मज्ञानस्य पूर्वोत्तरपाप-विनाशाश्लेषहेतुत्वे प्रमाणोक्तिः । द्वितीये मिथ्याज्ञानस्य पूर्वोत्तरपुण्यपापाश्लेषहेतुत्वोक्तिः । तृतीये अप्रारब्धपुण्यपापयोरेवाश्लेषविनाशो न तु प्रारब्धयोरिति प्रतिपादनम् । चतुर्थे कामस्य मोक्षानु-प्रवेशोक्तिः । पञ्चमे प्रारब्धयोरपि विनाशाश्लेषोक्तिः । षष्टे ज्ञानिकृतस्याकाम्यकर्मणः अनन्त-महाफलत्वसमर्थनम् । सप्तमे प्रारब्धयोरपि पुण्यपापयोः भोगेन विनाशित्वोक्तिरिति सूत्रक्रमः ॥

**॥ इति श्रीतत्वप्रकाशिकाविवृतौ तत्वसुबोधिन्यां पाण्डुरङ्गि आनन्दाचार्यसूनु श्रीनिवासाचार्यकृतायां चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थविवरणम्

**ब्रह्मादिप्राप्तीति ॥** कार्याकार्यब्रह्मप्राप्तीत्यर्थः । एतत्सर्वं सङ्गृह्योक्तमणुभाष्ये

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥ इति ।

अस्यार्थः ॥ प्रारब्धकर्मणः सकाशादन्यस्य अप्रारब्धस्य पुण्यस्य पापस्य इति उभयस्यापि । तथा प्रारब्धमपि काम्यं पुण्यं द्विविधम् । इष्टमनिष्टं चेति । तन्मध्येऽनिष्टस्यापि पुण्यस्य ज्ञानादेव परिक्षय इत्यर्थः । अन्यस्य अप्रारब्धकर्मणः सकाशादन्यस्य प्रारब्धस्य । उभयस्य पुण्यपापरूपस्य सर्वस्यापि । तथा अन्यस्य अनिष्टपुण्यादन्यस्य इष्टस्य अप्रारब्धकाम्यपुण्यस्यापि भोगत एव परिक्षय इत्यर्थः । प्रारब्धानामपि कर्मणां नाशे वातपुत्रीयाः ब्रह्मोपदेशाः प्रसज्येरन् । परं ब्रह्म प्रत्यक्षतो दृष्ट्वा वक्तृणामभावात् । इष्टकाम्यस्यापि नाशे ज्ञानस्येष्टविघातित्वेनापुरुषार्थत्वप्रसङ्ग इति भाव इति सम्प्रदायविदः ।

**॥ इति तत्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासतीर्थकृते चतुर्थाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमञ्जरी

इतरे प्रारब्धपुण्यपापे भोगेन क्षपयित्वाऽथ तदनन्तरमेव संपत्स्यते ब्रह्म तमो वाऽऽप्नोति । कोऽयं विशेष इत्यत आह ॥ **यदुक्तमिति** ॥ अत्र भगवदनुग्रहेण ज्ञानिकृतपापस्य यावत्स्व-फलप्रदातृत्वाभावस्योक्तत्वादिति भावः । प्रजहातीत्यादिज्ञानिस्वरूपप्रतिपादकवाक्यतस्तस्य स्वसम्बन्धिककर्मत्यागश्रवणादिति भावः ॥

॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करा श्रीनिवासविरचितायां
चतुर्थाध्यायस्य प्रथमः पादः ॥

॥ इति तदधिगमाधिकरणम् ॥ ८ ॥

**॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥**

# अथ चतुर्थाध्यायस्य द्वितीयः पादः

## १. वाङ्मनसाधिकरणम्

देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यते–

**॥ ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ १ ॥**

वागभिमानिन्युमा मनोऽभिमानिनि रुद्रे विलीयते । वाचो मनोवशत्वदर्शनात् । 'तस्य यावन्न वाङ्मनसि सम्पद्यत' इति शब्दाच्च ।

'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते' इति स्कान्दे ॥ १ ॥

### तत्त्वप्रदीपिका

देवानां स्वपदगतानामुत्तरोत्तरप्रवेशात्मको मोक्षः, मानुषशरीरिणां ज्ञानिनां शरीरादुत्क्रान्तिश्चास्मिन्पाद उच्यते । प्रागेव शरीरादुत्क्रान्तानां देवयानेन गतानामन्येषामपि देवमोक्षोक्तावेव मोक्षः सिद्धः । तत्प्रवेशात्मकत्वात्तस्य । अविभागो वचनादित्यन्तेन मोक्ष उच्यते । तत्परत उत्क्रान्तिः । आदितस्तु वागाद्यभिमानिनां देवानां मोक्षोक्तावेवोत्क्रमिष्यत्पुरुषशरीरगतानां वागादीनां लयक्रमोऽपि गम्यते ॥ **वाङ्मनसि दर्शनाच्छब्दाच्च** ॥ वाङ्मनसि लीयते । वागाभिमानिन्युमा मनोऽभिमानिनि रुद्रे विलीयते वाचो मनोवशत्वदर्शनात् । मनसा सङ्कल्पितं हि वाचा व्याहरति । ननु कथमेतदुपपद्यते, वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते । मनोभिमानी रुद्रः प्राणे वायौ विलीयत इत्यादि? 'वह्नीन्द्रोपेन्द्रमित्रका' इति हि भागवते वागाद्यभिमानिनोऽग्न्यादय उक्ताः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इति च श्रूयते । 'चन्द्रमा मनो भूत्वा' इति च । क्वचिच्च स्कन्देन्द्रयोर्मनोऽभिमानित्वमुक्तम् । क्वचित्स्वाहापर्जन्ययोर्वाङ्मनसाभिमानित्वमिति । उच्यते । नायं दोषः । एकत्र बहूनामभिमानाविरोधात् ।

'सर्वाभिमानिनो देवास्तत्रापि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेतेषां पृथक् स्थानमुदीर्यते ॥
आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरेषां च परे सन्ति न चेतरत् ॥

(तत्त्वप्रदीपिका)

तथापि पितुरर्थो यः पुत्रस्याप्युपचर्यते ।
अव्यक्तादिपदार्थानां सर्वे तदभिमानिनः' इति हि ब्रह्मतर्के ॥

'बहुवाचिनां च शब्दानां लिङ्गप्रकरणादिभिः ।
प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोऽर्थेषु गम्यते' इति शब्दनिर्णये ॥

'लिङ्गादिसाम्यं यत्र स्यात्प्रयोगाधिक्यमेव तु ।
नियामकं भवेत्तत्र तेन स्यात्सुबहुश्रुत' इति च ब्रह्मतर्के ॥

अतोऽग्न्यादिभिरवरैरभिमन्यमानेष्वपि तेषूत्तमानामभिमानाविरोधः । महदभिमानिनस्तदल्पाभिमानिनश्च भवन्ति । यथा विषयस्वामी ग्रामस्य । दर्शितश्चायं न्यायः सर्वश्रुतिस्मृत्यर्थग्रथनात्मकेऽनुव्याख्याने 'भूतेषु तच्छ्रुतेः' इति सूत्रमधिकृत्य–

'प्रधानवायुस्त्विह वायुनामा भूतेष्विति प्रोक्तगतोऽपि युक्तया ।
यस्माच्छ्रुतौ पवते चेति भूरि प्रोक्तो यतो भूतमानी च सोऽपि ॥
महामानी त्वल्पमानी च यस्मात् तच्छब्देनाप्युच्यते तेन सोऽपि ।
तस्मिंल्लयं यान्ति भूतान्यशेपक्रमाविरोधेन स एव विष्णौ' इति ॥

अथापि कथमित्थमिह समुत्थितिरस्य भाष्यस्य, यावतोमारुद्रादीनां तद्देहपाते पुनः पदान्तरं प्राप्य ततो मोक्षोऽभिमतः । अत उमा रुद्रे विलीयत इति न मोक्षोक्तिरुपपद्यते । मैवम् । उमारुद्रादीनामेवोपरि वारुणीशेषादिभावात्तदानीमपि तेषु पूर्वप्रसिद्धनामप्रयोगाविरोधात् । अर्जुनादिशरीरपातेऽपि स्वर्गारोहणिकेऽर्जुनादिशब्दप्रयोगवत् । उक्तं च गारुडे–

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रुद्रपदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः ॥' इति ।

'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यत' इति च नारदीये ॥

अनुव्याख्याने च—

'उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नौ विरिञ्चं च विमुक्तिकाले ॥

(तत्त्वप्रदीपिका)

त एव यत्तत्पदमाप्नुवन्ति तत्काल एतान् समुपास्य जीवाः ।
ब्रह्मत्वकाले प्रविशन्ति चैतानिति स्म वाक् तादृशतामुपैती' इति ॥

## तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति ॥ **देवानामिति** ॥ ज्ञानभोगाभ्यां क्षीणकर्मणामत्र देहक्षयक्रमो वक्तव्यो भवति । स च द्विविधः । देवानां स्वोत्तमप्रवेशेन तत्र देहलयः । अन्येषां तु ब्रह्मनाड्या देहोत्क्रान्तिरिति । तदुभयमस्मिन्पादेऽधिकार्याधिक्यक्रमेणैव निगद्यत इति भावः । न चैवं सति पादभेदप्रसङ्गः । उपासनावदेकस्यैवार्थस्याधिकारिभेदेन द्वैविध्यात् । तत्र यत्र देवतालये विवादस्स विचार्यते । अत्रादौ भगवत्प्राप्तिलक्षणमोक्षार्थं वाचो मनसि लयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मोक्षाभावप्रसङ्गेनोक्तविरोधः स्यादतः साधनीयमेतत् । प्रकृतज्ञानिनामन्तर्गता वाग्विषयः । मनसि लीयते न वेति सन्देहः । 'तत्पूर्वकत्वात्' इति मनोजातत्वोक्तिर्विशेषप्रमाणादर्शनं च सन्देहबीजम् । न वाङ्मनसि लीयत इति पूर्वः पक्षः ।

तथा हि । तदधीनस्य तत्र लयो वक्तव्यः । न च वाङ्मनसयोर्नियम्यत्वादि निश्चेतुं शक्यते । 'वाक् पूर्वरूपं मन उत्तररूपं' 'मनः पूर्वरूपं वागुत्तररूपम्' इति व्यामिश्रत्वोक्तेः । न चान्यतरग्रहणं युक्तं वचनद्वयस्यापि साम्यात् । अतो वाचो मनसि लयाभावेन मोक्षाभावादनियम इत्युक्तव्याघात इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **वागिति** ॥ अस्त्येव वाचो मनसि लयः प्रत्यक्षत एव वाचो मनोवशत्वदर्शनात् । न चोक्तेर्व्यामिश्रत्वेन मनः प्राधान्यानिश्चयः । अत्र खलु वाक् पूर्वरूपमित्यादिना वाङ्मनसयोः पूर्वोत्तरवर्णदेवतात्वे गुणप्रधानभावे च मुनिमतयोर्विवाद उच्यते । तत्र वर्णदेवतात्वविपये तूक्त्योः साम्यम् । अन्यतरपक्षे विशेषादर्शनात् । न च तत्र व्यामिश्रतापि । उभयोरपि ''वर्णदेवतात्वोपपत्तेः । गुणप्रधानभावे तु साम्यमेव नास्ति । 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इति युक्त्या मनःपूर्वकत्वस्य विशेपश्रवणात्प्रत्यक्षानुसारित्वाच्चेति भावः । न च वाचो मनोऽधीनत्वेऽपि देवतयोः कुतस्तदिति वाच्यम् । अचेतनस्यान्योन्यवशत्वस्य देवतानिमित्तत्वात् । अस्तु वाचो मनोऽधीनत्वं तथापि तत्र कुतो लयो नियामकानामनेकत्वेन निश्चयायोगादित्यत आह ॥ **तस्येति** ॥ नन्वेतच्छ्रुतिसूत्रगतौ वाङ्मनःशब्दावुमारुद्रपरौ कुत इत्यत आह ॥ **उमेति** ॥ अत्रोमापदेन वारुणी सुपर्णी चोच्येते । रुद्रपदेन च शेपसुपर्णाविति ज्ञातव्यम् ॥

## गुर्वर्थदीपिका

गुणप्रधानभाव इत्यत्र वर्णदेवतात्वविषयकगुणप्रधानभावे । न तु स्वरूपयोः गुणप्रधानभाव इत्यर्थः । अन्यथा वक्ष्यमाणसिद्धान्तविरोधः स्यात् । प्रत्यक्षानुसारित्वाच्चेत्यत्र मरणसमये प्राग्वाचः कुण्ठनेऽपि मनोव्यापारदर्शनेन वाचो मनसि लयस्य सर्वैर्दृश्यमानत्वादित्यर्थः ।

## भावबोधः

अत्र भाष्ये देवानामित्येतस्य मोक्षोत्क्रान्तिभ्यां सम्बन्धः प्रतीयते । स चायुक्तः । तथात्वे देवेभ्योऽन्येषां शरीरिणामेवावस्थानप्राप्तेः । अन्यत्र वा तच्छरीरपरित्यागप्रकारस्य चिन्तनीयत्वात् । अचिन्तने वा कारणस्य वाच्यत्वादित्यतः ''उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः'' इत्यनुव्याख्यानानुसारेण भाष्यं व्याचष्टे– **स च द्विविध इत्यादिना ॥** अनेन भाष्ये देवानामित्यस्य मोक्ष इत्यनेनैवान्वयः । मोक्षश्च प्रकरणवशाद्देहादिति गम्यते । उत्क्रान्तिश्चेत्यस्यान्येषां देव-व्यतिरिक्तानामित्यध्याहृतेन सम्बन्ध इत्युक्तं भवति ॥ **उपासनावदेकस्यैवार्थस्येति** ॥ सकल-वेदोक्तगुणादेर्विशिष्योपासनं तावद्गुणानां विशिष्य क्रियायाश्च सामान्यत उपासनम् । बहुगुणोपासनं चतुर्गुणोपासनमिति चतुर्मुखाद्यधिकारिभेदेनावान्तरवैचित्र्ये विद्यमानेऽपि उपासनत्वेनैकीकृततत्प्रति-पादकत्वेन तत्पादस्यैकपादत्ववदत्रापि स्वोत्तमप्रवेश उत्क्रमणमिति, देवाद्यधिकारिभेदेनावान्तर-वैचित्र्ये विद्यमानेऽपि देहक्षयत्वेनैकीकृततत्प्रतिपादकत्वेन पादैक्यं सम्भवतीति भावः ॥ **भगव-त्प्राप्तिलक्षणमोक्षार्थमिति** ॥ पूर्वसूत्रे 'अथ संपत्स्यते' इत्युक्तभगवत्प्राप्तिलक्षणमोक्षार्थं वाचो मनसि लयसमर्थनादस्ति शास्त्रादिसङ्गतिरिति भावः ॥ **मनसीति** ॥ अत्र वाङ्मनसि न लीयते उत लीयत इति चिन्ता । तदर्थं तयोः किं नियम्यनियामकभावो नास्त्युतास्तीति । तदर्थं 'वाक् पूर्वरूपम् मन उत्तररूपम्' 'मनः पूर्वरूपं वा वागुत्तररूपम्' इत्युक्त्योर्व्यामिश्रत्वेन नियम्य-नियामकभावे विरोधित्वमस्त्युत नास्तीति । तदर्थं वाङ्मनसोर्नियम्यनियामकभावे प्रमाणं नास्त्युतास्तीति । **विशेषप्रमाणादर्शनमिति ।** 'तत्पूर्वकत्वाद्वाचः' इत्यत्रोत्तरश्रुतेः वक्ष्यमाणन्यायेन व्यामिश्रत्वान्न विशेषप्रमाणमिति भावः । 'वाक् पूर्वरूपम् मन उत्तररूपम् मनः पूर्वरूपम् वागुत्तररूपम्' इत्युक्ते व्यामिश्रत्वादनिर्णय इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **तदधीनस्येत्यदिना ॥ प्रत्यक्षत एवेति ॥** अनेन सूत्रे दर्शनपदस्य श्रुतिपरत्वे शब्दात् इत्येतत्

(भावबोधः)

पुनरुक्तं स्यादिति भाष्ये वाचां मनोवशत्वदर्शनादित्यनेन दर्शनात् इति पदस्य प्रत्यक्षपरत्वमेवोक्तमित्युक्तं भवति ॥ **मुनिमतविवाद उच्यत इति** ॥ 'अथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपम् प्राणः संहिता' इति शूरवीरो माण्डूकेयः । अथ हास्याह ज्येष्ठः 'मनः पूर्वरूपम् वागुत्तररूपम्' इति शूरवीरमाण्डूकेयतज्ज्येष्ठपुत्राख्यमुनिमतविवाद उच्यत इत्यर्थः । 'वाक् पूर्वरूपं मन उत्तररूपम्' इति वाचः पूर्ववर्णदेवतात्वनिर्देशमात्रेण मनः पूर्वरूपम्'' इत्यनेन साम्यमिति न्यायविवरणं व्याचष्टे– **तत्रेति** ॥ **अन्यतरेति** ॥ मतद्वयेऽपि विष्णुरूपयोरेव पूर्वोत्तरवर्णदेवतात्वादिति भावः ॥ **उभयोरपीति** ॥ वाङ्मनोनामकयोरुभयोरपि विष्णुरूपयोः प्रत्येकं पूर्वोत्तरवर्णप्रतिपाद्यत्वेन पूर्वोत्तरवर्णदेवतात्वोपपत्तेरित्यर्थः । 'मनसा वा अग्रे सङ्कल्पयति अथ वाचा व्यवहार इति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रूयत इति प्राधान्यं मनस एव हि ज्ञायत इति न्यायविवरणार्थमाह– गुणप्रधानभावे त्वित्यादिना । युक्तिमात्रेण कथमुक्तेरर्थान्तरविषयत्वमित्यत आह– **प्रत्यक्षेति** ॥ वाचो मनोऽधीनत्वेऽपीति सङ्कल्पव्यवहरणे प्रति, अचेतनयोरेव कारणत्वमिति भावः ॥ **अचेतनस्येति** ॥ उपलक्षणमेतत् ।

सृष्टौ च विलये चैव सदा पूर्वप्रवर्तने ।
नियन्तृत्वे च वचसो मनोऽधीशं शिवो हि तत् ॥

इति न्यायविवरणोदाहृतश्रुतेश्चेत्यपि ग्राह्यम् ।

ननु उमायास्तस्मिन् जन्मनि मोक्षाभावाद्रुद्रस्य च मोक्षमार्गत्वाभावात् कथं तस्यास्तत्र मोक्षार्थं देहलय इत्यतः–

'उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले' ॥

इत्यनुव्याख्यानं मनसि निधायाह– **अत्रोमापदेनेति** ॥

## भावदीपः

एतदित्यादि पूर्ववद्व्याख्येयम् । पादार्थदर्शनं च वृत्तवर्तिष्यमाणयोः सङ्गतिसूचनायेति भावेनाह ॥ **ज्ञानेति** ॥ भाष्यदिशा पादैक्याप्राप्तेराह ॥ **देहक्षयेति** ॥ तर्हि भाष्ये देहक्षय इत्येव कुतो

(भावदीपः)

नोक्तमित्यत आह ॥ **स चेति** ॥ मोक्षशब्दार्थस्तत्र देहलय इति । उत्क्रान्तावपि देवकर्तृकत्व-भ्रमनिरासायाह ॥ **अन्येषामिति** ॥ निगद्यते अविभागो वचनादित्यतः प्राग्देहलयः ततः परमुत्क्रान्तिरिति भावः । भाष्येऽविभागेनोक्तिर्देवानामित्यधिकार्युक्तिश्च पादभेदशङ्काव्युदासायेति भावेन शङ्कापूर्वं भाष्यभावं व्यनक्ति ॥ **न चैवमिति** ॥ **उपासनावदिति** ॥ यथा 'सच्चिदानन्द आत्मेति मानुषैः' इत्यादि सङ्क्षेपभाष्यदिशा चतुर्गुणबहुगुणाखिलगुणोपासनेत्यधिकारिभेदे-नोपासनावान्तरभेदेऽपि उपासनात्वेनैकार्थ्यात्पादैक्यं तथेति भावः ।

ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ १ ॥ तर्हि वादिलयविचारे को हेतुरित्यत आह ॥ **तत्रेति** ॥ देहलयप्रकारेऽवश्यवक्तव्ये सतीत्यर्थः । श्रुतौ वाचः प्रथमं श्रवणादाह ॥ **अत्रादाविति** ॥ भवदिति शास्त्रे मोक्षार्थमित्यध्याये लयेति पादे सङ्गतिरुपपादिता । एवमग्रेऽपि ॥ **अन्यथेति** ॥ देहलयाभाव इत्यर्थः ॥ **उक्तेति** ॥ अनियम इत्युक्तविरोध इत्यर्थः । वागादेर्ज्ञानित्वेन सामान्यतः प्रकृतत्वमाह ॥ **प्रकृतेति** ॥ वाक् उमादेवी । मनसि रुद्रे । एते च भूतपूर्वगत्या तयोर्नामिनी । वर्तमाने तु वारुणीशेषावित्यग्रे व्यक्तम् ॥ **तदिति** ॥ तत्पूर्वकत्वाद्वाच इति सूत्र इत्यर्थः ॥ **विशेषेति** ॥ वाङ्मनसि संपद्यत इति श्रुतेः इतः पूर्वं क्वापि सूत्रकृदनुक्तेरदर्शनमित्युक्तम् । यद्वा वाचो मनोजातत्वे विशेषप्रमाणादृष्टिरित्यर्थः । मनः पूर्वरूपमिति तु सामान्यमिति भावः । सूत्रभाष्यव्यावर्त्यकोटिमाह ॥ **न वागिति** ॥ कुत इत्यतः वाक्पूर्वरूपं मन उत्तररूपं, मनः पूर्वरूपं वागुत्तररूपमित्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेवेत्यन्यत्रोक्तं परिष्कृत्य हेतुत्वेन योजयति ॥ **तदधीनेति** ॥ विपर्ययेण तु क्रमोऽत उपपद्यते चेत्यत्र तथोक्तेः । 'स्रष्टृष्वेव च सृज्यानां प्रवेशो ब्रह्मणो लय' इत्याद्यनुभाष्योक्तेश्चेति भावः । अचतुरेत्यादिना निपातनाद्वाङ्मनसयोरित्युक्तिः । पूर्वरूपं कारणं उत्तररूपं कार्यमिति शङ्कितुराशयः । उक्तेरप्रयोजकत्वं निराह ॥ **न चेति** ॥ **अत इति** ॥ व्यामिश्रत्वोक्त्या वाचो मनोवशत्वानिर्णयात्तद्वश एव तत्र लीयत इति वाच्यत्वादित्यर्थः ।

भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ अनिर्णयनिरासायैवकारः ॥ **प्रत्यक्षत इति** ॥ मनः प्रवृत्त्यनन्तरमेव वाक्प्रवृत्तेः सर्वानुभवसिद्धत्वादित्यर्थः । वाक्पूर्वरूपं मन उत्तररूपमिति वाचः पूर्ववर्णदेवतात्वनिर्देशमात्रेण मनः पूर्वरूपमित्यनेन साम्यमित्यन्यत्रोक्तं प्रागुक्तशङ्कोत्तरत्वेन परिष्कारपूर्वं व्यनक्ति ॥ **न चेत्यादिना** ॥ अत्र ऐतरेयश्रुतौ । वाङ्मनसयोः 'वक्तृत्वाच्चैव वाङ्नामा

(भावदीपः)

मनोमंतृत्वहेतुतः' इति तद्भाष्योक्त्या वाङ्मनोनामकभगवद्रूपयोर्विष्णुनामगतपूर्वोत्तरवर्णदेवतात्व इत्यर्थः । निर्देशमात्रेणेति मात्रपदव्यावर्त्यायाह ॥ गुणेति ॥ वाङ्मनोनामकभगवद्रूपोपासनायां स्थानभूतयोर्वाङ्मनोऽभिधयोस्तदभिमानिदेवतयोर्गुणप्रधानभावेनेत्यर्थः । एतेन श्रुतौ पूर्वरूपोत्तर-रूपशब्दौ प्रधानाप्रधानपरावित्यपि व्याख्या सूचिता । मुनिमतयोः माण्डूकेयतज्ज्येष्ठपुत्रमतयोर्विवाद उच्यत इत्यर्थः ।

तथा हि श्रूयते । 'अथातः संहिताया उपनिषत्' इत्युपक्रम्य 'वाक्पूर्वरूपं मन उत्तररूपं' प्राणस्त्वेव संहितेत्यादि । एवं परिष्कृत्य पूर्ववर्णेत्यादि व्याचष्टे ॥ **तत्रेति** ॥ देवतात्व-गुणादिभावरूपार्थद्वयमध्ये इत्यर्थः । नन्वेवमुक्त्योः साम्ये देवतात्वानिर्णयादुपासनायोगादित्यतः साम्यपदभावमाह ॥ **न चेति** ॥ किं चेति चार्थः ॥ **उभयोरिति** ॥ रूपयोरैकैक-वर्णदेवतात्वोपपत्तेरित्यर्थः । न चैवमैतरेयभाष्ये अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेव अन्यत्र तु पुत्रपक्ष एव बलीयान् । युक्तिमत्त्वादित्युक्तिविरोध इति चेन्न । अन्यत्र तु गुणप्रधानभावे इत्यर्थोपपत्तेरिति भावेनाह ॥ **गुणेति** ॥ कुत इत्यतो न्यायविवरणशेषोक्तं हेतुमाह ॥ **मनसेति** ॥ **प्रत्यक्षेति** ॥ वाचो मनोवशत्वस्यानुभाविकत्वादित्यर्थः । जडं मत्वा शङ्कते ॥ **न चेति** ॥ **देवतेति** ॥ अभिमानिनयन्यायादिति भावः ॥ **अनेकत्वेनेति** ॥ छान्दोग्ये सप्तमे कुमारनारदसंवादे वाचः स्वाहात्वं मनसः पर्जन्यत्वं भाष्यते । अग्निर्वाग्भूत्वेति श्रुतेर्वाचोऽग्नित्वं क्वचिदुच्यते । स्कन्देन्द्रादीनां मनस्त्वं क्वचिदुच्यते । वह्नीद्रोपेंद्रमित्रका इति भागवते वाचो वह्न्यादित्वमुच्यते । क्वचिच्च वाग्रसः वागष्टमी ब्रह्मणी संविदानेत्यादौ वाचो वाणीत्वमुच्यत इति वाङ्मनसाभिमानिनामनेकत्वाद्वागुत्तमदेवस्य कथं मनसि लय इति सन्देहाव-स्कन्दनेनानिर्णयादित्यर्थः ॥ इत्यत **आहेति** ॥ अभिमानिनामनेकत्वेऽपि बह्वीनामेकमानेन त्वेकं नाम च युज्यत इति ऋग्भाष्योक्त्या एकवस्त्वभिमानिनां वागादीनामनेकत्वेऽपि इह वाचो मनसि लयोक्त्या वाङ्मनसपदाभ्यामुमारुद्रयोरेव ग्रहणमिति भावः ॥ **कुत इत्यत आहेति** ॥ वाङ्मनसयोः सूत्रादौ सहनिर्देशाल्लिङ्गात्स्मृतौ दम्पतित्वेन सहभूततयोक्तावुमारुद्रावेव सूत्रादावभिमतौ ।

बहुवाचिनां च शब्दानां लिङ्गप्रकरणादिभिः ।
प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोऽर्थेषु गम्यते ।

इति तृतीये गीतातात्पर्योक्तेरिति भावः ।

(भावदीपः)

यद्वा

लिङ्गादिसाम्यं यत्र स्यात्प्रायो नाधिक्यमेव तु ।
नियामकं भवेत्तत्र तेन स्यात्स बहुश्रुतः ॥

इति तत्रैवोक्तदिशा स्मृतौ समुद्दिष्टेति प्रयोगाधिक्यात्तयोरेवात्र ग्रहणमिति भावः । ननु षष्ठे गीताभाष्ये 'स्थितप्रज्ञोऽपि यस्तूर्ध्वं प्राप्य रुद्रपदं ततः ॥ साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादत' इति गारुडे । महादेव परे जन्मंस्तव मुक्तिर्निरूप्यत इति च नारदीये इत्युक्त्या देहानंतरमेव न मुक्तिरतः कथमेवमुक्तिरित्यत आह ॥ **अत्रेति** ॥ स्मृत्यादौ । अर्जुनादिदेहपातेऽपि स्वर्गारोहण-कालेऽर्जुनादिशब्दप्रयोगवद्भूतपूर्वगत्या वारुण्यादावुमादिपदप्रयोग इति भावः । एतच्च समान-देवतयोरप्युपलक्षणं मत्वाऽऽह ॥ **शेषसुपर्णाविति** ॥

उमागिरीशाविति भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिंचपत्नीं विरिंचिं च विमुक्तिकाले ॥

इत्यनुभाष्योक्तेरिति भावः ॥

## अभिनवचन्द्रिका

**एतत्पादार्थं दर्शयतीति** ॥ अध्यायस्यैकार्थत्वात्पादभेदः किं निबन्धन इत्यतः फलेऽप्यवान्तरभेदेन पादभेद उपपन्न इति भावेनेति वर्तते । तस्यानेन सम्बन्धः ॥ **उपासनावदिति** ॥ उपासनस्य बहुगुणत्वेन चतुर्गुणत्वेनेत्यधिकारिभेदेनाऽनेकप्रकारत्वेऽपि उपासनत्वेनैक्यसद्भावात् उपासनापादस्यार्थैक्यवत् इहापि 'स्वोत्तमप्रवेश उत्क्रमणम्' इत्यवान्तरभेदसद्भावेऽवि देहक्षयत्वेनैक्यसद्भावेन एकार्थत्वसम्भवात् न पादभेद इति भावः ॥ **तत्पूर्वकादिति** ॥ वाचो मनोजन्यत्वोक्तिः तत्र लयसम्भावकत्वात्सन्देहबीजम् । एवमुत्तराधिकरणेष्वपि द्रष्टव्यम् । अनियम इत्युक्तेति ॥

केषाञ्चिज्ज्ञानिनां मोक्षः केषाञ्चिन्नेति नियममपहाय ज्ञानिमात्रस्य मोक्ष इत्युक्तनियमव्याघात इत्यर्थः । **अत्र खल्विति** ॥ अत्र मनः पूर्वरूपं वागुत्तररूपं, वाक्पूर्वरूपं मन उत्तररूपम्' इति श्रुतिभ्यां न किञ्चिदुच्यते किन्तु मुनिमतविवाद एवोच्यते । तथा च श्रुत्योर्व्यामिश्रत्वमिति

(अभिनवचन्द्रिका)

भावः । प्रसङ्गादृषिमतयोः किं वरमिति जिज्ञासायामाह– **तत्रेति ॥** वर्णदेवतात्वविषये ऋष्युक्त्योः साम्यमित्यर्थः । हेतुमाह – **अन्यतरेति ॥** अन्यतरपक्षस्वीकाराय श्रुत्या विशेषाऽनभिधाना-दित्यर्थः । ननु द्वयोरपि ऋषिवचनयोर्वर्णदेवताविषये साम्योक्तिरनुपपन्ना विरुद्धवादित्वेन अन्यतराऽप्रामाण्याऽवश्यं भावादित्याशङ्क्य निषेधति – **न चेति ॥** तत्र वर्णदेवताविषये । ऋषि वचनयोः व्यामिश्रता विरुद्धार्थभाषिता नेत्यर्थः । गुणप्रधानभावविषये तु पुत्रवचनमेव ग्राह्यं न तु नामतः शूरवीरस्य माण्डूकेयस्य वचनं ग्राह्यमिति भावेनाह – **गुणप्रधानभावे त्विति ॥** पितापुत्रवचनयोः साम्यमेव नास्ति किमत्र तत्वमिति कुतः संदेहः स्यादिति भावः । कुतः पुत्रमतस्य विशिष्टत्वमित्यत आह – **मनसा वा अग्रे सङ्कल्पयतीति ॥ अस्तु वाच इति ॥** अस्तु वाचो मनोवशत्वं तथापि वाचो मनसि लयः कुतः प्रमाणादङ्गीकर्तव्यः । उपन्यस्तस्य तद्वशत्वस्य सम्भावकत्वमात्रेण । तेन तन्निश्चयायोगादित्यर्थः । तद्वशत्वस्य सम्भावकत्वमेव कुत इत्यत उक्तं – **नियामकानामिति ॥** देवानामित्यर्थः । इदमुक्तं भवति वाचो मनसि लयं प्रतिज्ञाय तत्सिद्धये वाचो मनोवशत्वमुक्तम् । न चेदं तन्निश्चायकं, वाचो मनोवशत्वमिव नियामकानां बहुत्वेन अन्यवशतापि विद्यते । मनोवशत्वेन मनसि लयसाधनेऽन्यवशत्वेनाऽन्यत्रापि लयसिद्धिप्रसङ्गात् । ततोऽकामेनापि नेदं प्रमाणम् अपि तु सम्भावकमात्रमिति वक्तव्यम् । न च सम्भावनामात्रेणार्थः सिध्यतीति प्रमाणस्याऽऽवश्यकत्वात् किं तत्प्रमाणं, कुतो वाचो मनसि लयः प्रतिपत्तव्य इति ।

## वाक्यार्थमुक्तावली

**एतत्पादेति ॥** अध्यायस्यैकार्थत्वात् पादभेदः किंनिबन्धनः इत्यतः फलेऽप्यवान्तरभेदा-दित्याशयेन एतत्पादार्थं दर्शयतीत्यर्थः । पूर्वपादेनास्य पादस्यानन्तरसङ्गतिमाह **॥ ज्ञानेति ॥** ज्ञानेन क्षीणप्रारब्धकर्मणामस्मिन्पादे चरमशरीरक्षयो वक्तव्यो भवति । तदारम्भकप्रारब्धक्षये तदवस्थानायोगादनन्तरसङ्गतिरिति भावः । भाष्ये देवानामित्येतद्यदि मोक्षोत्क्रान्तिभ्यां सम्बध्यते तदा देवेभ्योऽन्येषां चरमदेहविसर्गक्रमोऽत्र न निन्तितः स्यादिति न्यूनता । यदि च मोक्षेणैव सम्बध्यते तदा देवानां मोक्ष इतरेषामुत्क्रान्तिश्चेत्युक्तं भवति । मोक्षश्च प्रकरणभेदात् देहादिति गम्यते । देहक्षय इति वोत्क्रान्तिरिति वाऽस्मिन्पादे उच्यत इति सामान्येन वक्तव्यं किमनेन

(वाक्यार्थमुक्तावली)

विभागेनेत्यतः 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः'' इत्यनुव्याख्यानुसारेण भाष्यं व्याचष्टे ॥ **स चेति** ॥ **उपासनावदिति** ॥ सर्वगुणोपासनं ब्रह्मणः बहुगुणोपासनं देवानां चतुर्गुणोपासनमेव मनुष्याणामित्यधिकारिभेदेन वैचित्र्यसद्भावेऽपि यथोपासनत्वे प्रतिपाद्यप्रमेयस्यैकत्वान्न पादभेदस्तथाऽत्रापि स्वोत्तमप्रवेशेन तत्रैव देहक्षयो देवानामितरेषामुत्क्रमणमित्यधिकारिभेदेनावान्तरवैचित्र्ये विद्यमानेऽपि देहलयत्वेनैकीकृत्य तत्प्रतिपादकपादैक्यं सम्भवतीति भावः ।

**अन्यथेति** ॥ अथ सम्पत्स्यत इति पूर्वाधिकरणोक्तमोक्षाभावप्रसङ्गादनन्तरसङ्गतिरिति भावः ॥ **मनसीति** ॥ वाङ्मनसि न लीयत उत लीयत एवेति चिन्ता । तदर्थं वाचो मनोनियम्यत्वनिश्चयो न सम्भवत्युत सम्भवतीति ॥ **मनोजातत्वोक्तिरिति** ॥ तज्जन्यत्वे तत्र लयस्य सम्भावितत्वादिति भावः । एवमुत्तरत्रापि । वाचो मनोवशत्वदर्शनादिति भाष्यनिरस्यं व्यामिश्रतेत्युक्तन्यायं व्यनक्ति ॥ **न चेति** ॥ पूर्वरूपं कारणम् । अत एव प्रधानं च । उत्तरं रूपं कार्यं अप्रधानं च ॥ **प्रत्यक्षत एवेति** ॥ मनोऽनुसारेणैव वाक्प्रवृत्तेः सर्वानुभवसिद्धत्वादिति भावः । नन्वथाध्यात्मं वाक्पूर्वरूपं मन उत्तररूपं प्राणस्संहितेति सूरवीरो माण्डूकेयः । अथास्य पुत्र आह ज्येष्ठः । मनः पूर्वरूपं वागुत्तररूपमिति स्मृत्योर्व्यामिश्रत्वात् प्राधान्यानिश्चय इत्युक्तमित्याशङ्क्य विशेषसाम्यश्रुतिरित्युक्तसिद्धान्तन्यायं व्यञ्जयन्प्रतिषेधति ॥ **न चेति** ॥ **अत्र खल्विति** ॥ अत्र खलु वाक्पूर्वरूपमित्यादिना वाङ्मनसोर्विष्णुनाम्नि, पूर्वोत्तरदेवतात्वविषये तु मुनिमतयोर्माण्डूकेयतज्ज्येष्ठपुत्रमतयोरेको विवाद उच्यते । गुणप्रधानभावे च पूर्वोत्तरवर्णदेवताभूतवाङ्मनोनामकभगवद्रूपोपासनायां प्रतिमाभूतयोर्वाङ्मनोनियामकयोर्देवतयोर्गुणप्रधानभावविषये चापरोऽपि विवाद उच्यत इति योज्यम् ॥ **उभयोरिति** ॥ वाङ्मनोनामकयोरुभयोरपि विष्णुरूपयोः प्रत्येकं वर्णदेवतात्वोपपत्तेरित्यर्थः । एवं विशेषसाम्यश्रुतिरित्यत्र साम्यश्रुतिरित्यंशं व्याख्याय विशेषश्रुतिरित्यंशस्फोरकत्वेन वाचो मनोवशत्वदर्शनादिति भाष्यं युक्त्या प्रत्यक्षेण च दर्शनादिति भावेन व्याचष्टे ॥ **गुणेति** ॥ **साम्यमिति** ॥ उक्त्योरित्यनुवर्तते ॥ **व्याहरतीति** ॥ **युक्त्येति** ॥ व्याहरति यस्मात्तस्मान्मन एव पूर्वरूपमिति पुत्रोक्तयुक्तिवचनं न वाङ्मनःपूर्वकत्वस्य वाचो मनःकारणकत्वेऽस्य वाक्पक्षस्य मनःपक्षविवक्षया दौर्बल्यं मनस एव प्रधानत्वमिति मनःपक्षस्य ज्यायस्त्वश्रवणाद्वाचो मनोवशत्वग्राहकसाक्षिप्रत्यक्षानुसारित्वाच्चेत्यर्थः ॥ **देवतानिमित्तत्वादिति** ॥ उभयोरचेतनत्वेन साम्या-

(वाक्यार्थमुक्तावली)

दन्यस्यान्यवशत्वायोगाद्देवताकारितत्वादित्यर्थः ॥ **नियामकानामिति** ॥ नियामकदेवताना-मित्यर्थः । तथा च मनोधीनत्वमात्रस्याप्रयोजकत्वात् कुतः प्रमाणान्मनस्सिद्धिरिति भावः ॥ **तस्य यावदिति** ॥ जीवमरणकाले देवताप्रवेशस्य देवतालयक्रमानुसारित्वान्नैतदुदाहरणमसङ्गतम् । तदुक्तं अनुव्याख्याने–

तत्र प्रवेशो देवानामुत्तरोत्तरतः क्रमात् ।
उच्यते देहगानां च वृत्तीनामेवमेव तु ॥ इति ।

ननूमायास्तस्मिञ्जन्मनि मोक्षाभावाद्रुद्रस्य च संसारिणो मोक्षमार्गत्वाभावात्कथं तस्यास्तत्र मोक्षार्थं देहलय इत्यत आह ॥ **अत्रेति** ॥ उमादिशब्दानां वारुण्यादौ वृत्तौ किं निमित्तमिति चेदत्रोक्तं सुधायाम् । उमात्वादीनां वारुणीत्वादीनां चैकद्रव्यसम्बन्धो लक्षणाबीजमिति । अत एवानुव्याख्याने त एव मरुत्पदमाप्नुवन्तीत्युक्तम् । उमादिपदेन सौपर्ण्यादिलक्षणायां तु पदसादृश्यं प्रवृत्तिनिमित्तमित्युक्तं ज्ञेयम् ।

## तत्त्वसुबोधिनी

अत्र यथा भाष्ये देवानामित्यस्य भोगोत्क्रान्तिभ्यां सम्बन्धः प्रतीयते स चायुक्तः । तथात्वे देवस्यान्येषां सशरीरिणामेवावस्थानप्राप्तेः । अन्यत्र तच्छरीरपरित्यागप्रकारस्य चिन्तनीयत्वात् । अचिन्तने वा कारणस्य वाच्यत्वात् मनः इत्यतो उत्क्रान्तिमार्गौ देवानामित्यनुव्याख्यानानुसारेण भाष्यार्थमाह ॥ **स च द्विविध इति** ॥ अनेन भाष्ये देवानामित्यस्य मोक्ष इत्यनेनान्वयः । मोक्षस्य प्रकरणवशाद्देहादिति गम्यते उत्क्रान्तिश्चेत्यस्यान्येषां देवव्यतिरिक्तानां इत्यध्याहृतेन सम्बन्ध इत्युक्तं भवति ॥ **उपासनावदेकस्यैवार्थस्येति** ॥ सकलवेदोक्तगुणादविशिष्योपासनं तावद्गुणानां विशिष्य क्रियायाश्च सामान्यत उपासनं, बहुगुणोपासनं, चतुर्गुणोपासनमिति चतुर्मुखाद्यधिकारिभेदेना-वान्तरवैचित्र्ये विद्यमानेऽपि उपासनात्वेन एकीकृततत्प्रतिपादकत्वेन तत्पादस्यैकपादत्ववदत्रापि स्वोत्तमप्रवेश उत्क्रमणमिति देवाधिकारिभेदेनावान्तरवैचित्र्ये विद्यमानेऽपि देहक्षयत्वेनैकीकृत-तत्प्रतिपादकत्वेन पादैक्यं सम्भवतीति भावः । भगवता पूर्वसूत्रे 'अथ संपत्स्यते इत्युक्तभगव-त्प्राप्तिलक्षणमोक्षार्थं वाचो मनसि लयसमर्थनात् अनन्तरसङ्गतिरिति भावः । उक्तविरोधः

(तत्त्वसुबोधिनी)

स्यादित्यर्थः ॥ **विशेषप्रमाणादर्शनमिति** ॥ तत्पूर्वकत्वात् इत्युक्तश्रुतेः वक्ष्यमाणन्यायेन व्यामिश्रितत्वान्न विशेषप्रमाणत्वमिति भावः ॥ **प्रत्यक्षत एवेति** ॥ अनेन सूत्रे दर्शनपदस्य श्रुतिपरत्वे शब्दादित्येतत्पुनरुक्तं स्यात् इति भाष्ये वाचो मनोवशत्वदर्शनादित्यनेन दर्शनादिति पदस्य प्रत्यक्षपरत्वमेवोक्तमित्युक्तं भवति । मुनिमतयोः विवाद उच्यते इति । अथात्मा वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहिते शूरवीरोमाण्डूकेथा हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं इति शूरवीरमाण्डूकेयतज्ज्येष्ठपुत्राख्यमुनिमतविवाद उच्यते इत्यर्थः ॥ **अन्यतरेति** ॥ मतद्वयेऽपि विष्णुरूपयोरेव पूर्वोत्तरवर्णदेवतात्वादिति भावः ॥ **उभयोरपीति** ॥ वाङ्मनोनामकयोः उभयोरपि विष्णुरूपयोः प्रत्येकं पूर्वोत्तरवर्णप्रतिपाद्यत्वेन पूर्वोत्तरवर्णदेवतात्वोपपत्तिरित्यर्थः । युक्तिमात्रेण कथं युक्तेरर्थान्तरविषयत्वमित्यत आह ॥ **प्रत्यक्षेति** ॥ वाचो मनोऽधीनत्वेऽपीति । सङ्कल्पव्यवहरणे सत्यचेतनयोरेव कारणत्वमिति भावः । ननूमायाः स्वस्मिञ्जन्मनि मोक्षभावेन रुद्रस्य च मोक्षमार्गाभावात् कथं तस्याः मोक्षार्थं देहलयः इत्यत आह ॥ **अत्रोमापदेनेति** ॥ उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति । अहीन्द्रपत्नीमहिषं विरिञ्चपत्नीं विरिञ्चेत्यनुव्याख्यानोक्तेरिति भावः ।

## वाक्यार्थविवरणम्

**उपासनावदिति** ॥ मनुष्योत्तममारभ्य ब्रह्मपर्यन्तमुपासनायाधिकारिभेदे विद्यमानेऽपि उपासनात्वेनैकीकृतोपासनाप्रतिपादकत्वेनैकपादत्वम् । एवमत्रापि देवाद्यधिकारिभेदे विद्यमानेऽपि स्वोत्तमप्रवेशोत्क्रमणयोर्देहक्षयत्वेनैकत्वाद्देहक्षयरूपैकार्थप्रतिपादकत्वेन पादैक्यं युक्तमिति भावः । 'इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी । उक्ता सुपर्णश्च गिरीशनाम्ना' इत्यनुव्याख्यानं मनसि निधायाह ॥ **उमारुद्रपदाभ्यामिति** ॥ वारुणीशेषयोर्ग्रहणे गरुडमार्गस्थस्येन्द्रस्य वारुण्यां लयाभावादिति भावः ।

## वाक्यार्थमञ्जरी

**तत्रोत्तमेषु** ॥ **उपासनावदिति** ॥ चतुर्मुखाद्यधिकारिभेदेन सकलगुणोपासनं चतुर्गुणोपासनमित्याद्यवान्तरवैचित्र्ये विद्यमानेऽप्युपासनात्वेनैकीकृततत्तत्प्रतिपादकत्वेन तस्य पादैक्यवदत्रापि

(वाक्यार्थमञ्जरी)

देहक्षयत्वेन एकीकृततत्प्रतिपादकत्वेन पादैक्यं सम्भवतीति भावः ॥ **उक्तेति** ॥ अनियम इत्युक्तेत्यर्थः । **वागिति** ॥ वाङ्नामा भगवान् विष्णुनाम्नि पूर्वरूपे पूर्ववर्णदेवता मनः मनोनामा उत्तरवर्णदेवता तथा वाक् वागिन्द्रियं पूर्वरूपं पूर्वभाविव्यापारत्वेन प्रधानं मनः मनोरूपेन्द्रियं उत्तररूपं पश्चाद्भाविव्यापारत्वेन अप्रधानमित्यर्थः । एवमुत्तरवाक्यमपि द्वेधा व्याख्येयम् ॥ **व्यामिश्रेति** ॥ विरुद्धेत्यर्थः ॥ ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ वागभिमानी वाणी सौपर्णी च मनसि मनोभिमानिनि शेषे गरुडे च विलीयते कुतः दर्शनात् वाचो मनोवशत्वस्य प्रत्यक्षत एव दर्शनात्तस्य न यावदिति शब्दाच्छ्रुतेश्चेत्यर्थः ॥ **मुनिमतविवाद इति** ॥ अथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपं प्राणःसंहितेति शूरवीरो माण्डूकेयोऽथाहास्य पुत्र ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं इति शूरवीरो माण्डूकेय तज्ज्येष्ठपुत्राख्यमुनिमतविवाद उच्यत इत्यर्थः ॥ **अन्यतरेति** ॥ मतद्वयेऽपि विष्णुरूपयोरेव पूर्वोत्तरवर्णदेवतात्वमिति भावः ॥ **उभयोरपि** ॥ वाङ्मनसनामकयोरुभयोरपि विष्णुरूपयोः प्रत्येकं पूर्वोत्तरवर्णप्रतिपाद्यत्वेन पूर्वोत्तरवर्णदेवतात्वमिति भावः ॥ **युक्तेति** ॥ मनसा सङ्कल्पितस्यैव वाचा व्यवहरणरूपयुक्त्येत्यर्थः । युक्तिमात्रेण कथं श्रुतेरर्थान्तरविषयत्वमित्यत आह ॥ **प्रत्यक्षेति** ॥ **वाचो मनोऽधीनत्वेऽपीति** ॥ सङ्कल्पव्याहरणे प्रति चेतनयोरेव कारणत्वमिति भावः ॥ **अनेकत्वेनेति** ॥ ब्रह्मादेरपि तन्नियामकत्वादिति भावः । ननूमायास्तस्मिन् जन्मनि मोक्षाभावाद्रुद्रस्य मोक्षमार्गत्वाभावात्कथं तस्यास्तत्र मोक्षार्थं देहलय इत्यत आह ॥ **अत्रोमापदेनेति** ॥

## सूत्रभाष्यम्

### ॥ ॐ अत एव च सर्वाण्यनु ॐ ॥ २ ॥

अत एव च शब्दात्सर्वाणि दैवतानि यथानुकूलं विलीयन्ते ।

'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्दे इन्द्र उमायामुमा रुद्रे विलीयते एवमन्यानि दैवतानि यथाऽनुकूलम्' इति हि गौपवनश्रुतिः ॥

॥ इति वाङ्मनसाधिकरणम् ॥ १ ॥

## तत्त्वप्रदीपिका

अत एव शब्दात् सर्वाणि दैवानि यथायोग्यं विलीयन्ते । चशब्दादिन्द्रियाणि च यथानुकूलं विलीयन्ते । तथा दर्शनात् । 'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयत' इति गौपवनश्रुतिः । कथम्? न हीन्द्रस्य वारुणीप्रवेशो मोक्षोऽभिमतः । मैवम् । समानयोरन्यतर-शब्देनान्यस्य कथञ्चिद्वक्तुं शक्यत्वात् ।

'इन्द्रप्रवेशश्च यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र' इति च ॥

## तत्त्वप्रकाशिका

अस्त्वेवं वाचो लयनिर्णयस्तथापि न सर्वदेवानां मोक्षो लयानिश्चयादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **अत एवेति** ॥ न देवानां मोक्षाभावः । सर्वेषामपि देवानां स्वनियम्यनियामक-भावानुसारेण लयनिश्चयात् । न च नियामकबाहुल्येनानिश्चयः । श्रुत्या निर्णयोपपत्तेरिति भावः । कासौ श्रुतिरित्यतस्तामुदाहरति ॥ **अग्नाविति** ॥ अत्रोमारुद्रपदाभ्यां सुपर्णीसुपर्णावुच्येते । अग्नेस्तु सूर्यद्वारेणेन्द्रे लयो ज्ञातव्यः । अतो वागादीनां मन आदिषु लयनिश्चयाज्ज्ञानिनां मुक्तिनियम इति सिद्धम् ॥

## भावबोधः

सूत्रगतानुशब्दव्याख्यानरूपयथानुकूलमिति भाष्यं व्याचष्टे– **स्वनियम्यनियामकभावानु-सारेणेति** ॥

इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र ॥

इत्यनुव्याख्यानं मनसि निधायाह– **अत्रोमारुद्राभ्यां सुपर्णीसुपर्णावुच्येते इति** ॥

सूर्योऽग्नियुक्तो गुरुमाप्य तेन । शक्रम्.... .... .... .... ॥ इत्यनुव्याख्यानं मनसि निधायाह– **अग्नेस्त्विति** ॥ अत्राद्ये वाचो मनसि लये विशेषप्रमाणोक्तिः । द्वितीये सर्वदेवानां स्वनियामकदेवविशेषे लये श्रुतिरूपप्रमाणोक्तिः ॥

## भावदीपः

एवमिति श्रुत्याद्युक्तप्रकारेणेत्यर्थः । सर्वदेवतालयोक्तेर्नैष्फल्यनिरासाय प्रागुक्तशङ्का-निवर्तनहेतुत्वेन भाष्यं व्याचष्टे ॥ **न देवानामिति** ॥ **चशब्दार्थोऽपीति** । न केवलं वाच इत्यर्थः । यथानुकूलशब्दार्थः स्वनियम्येत्यादि । नन्विन्द्रस्य सुपर्णीप्रवेश एव मोक्षोऽभिमत इति कथमुमा-पदोक्तवारुण्यनुप्रवेशोक्तिः श्रुतावित्यत आह ॥ **अत्रोमेति** । इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नीत्याद्युक्तेरिति भावः । साक्षादिन्द्राप्रवेशादाह ॥ **अग्नेस्त्विति** ॥ सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रमित्यनुभाष्योक्तेरिति भावः ॥ **अत इति** ॥ दर्शनश्रुतिरूपनिर्णायकयो-र्भावादित्यर्थः ॥

## अभिनवचन्द्रिका

अत्र वाङ्मनः शब्दाभ्यामुमारुद्रयोर्ग्रहणमित्ययुक्तं, तन्मोक्षस्य कल्पान्तरभावित्वेन इदानीं लयकथनाऽयोगादित्यत आह – **अत्रोमाशब्देनेति** ॥ ननु प्राक् 'उमाशब्देन वारुणी सौपर्णी च' इच्येत इत्युक्तत्वात् इन्द्र उमायामिति श्रुतावपि उमाशब्देनोभयोर्ग्रहणं कार्यं, तच्चायुक्त-मेकस्योभयत्र लयाऽयोगादित्यत आह – **अत्रेति** ॥ **अग्नेः सूर्यद्वारेणेति** ॥ उपलक्षणमेतत्, सूर्यस्य गुरुद्वारेणेत्यपि ग्राह्यम् । अयमत्र लयक्रमः । द्वौ मार्गौ शेषमार्गो गरुडमार्गश्चेति । देवानुगानां कुबेरे, कुबेरवरुणयोः सोमे, सोमस्य विष्वक्सेनादीनां चानिरुद्धे । अनिरुद्धस्य सनकादीनां च कामे, कामस्य वारुण्यां, वारुण्याः शेषे लय इति शेषमार्गः । शिष्टानां देवानामग्नौ लयः अग्नेः सूर्ये, सूर्यस्याऽऽकाशपृथिव्योश्च गुरौ, मनुष्याणां सर्वेषां पितॄणां निर्ऋतेश्च धर्मे, धर्मस्य स्वायंभुवव्यतिरिक्तमनूनां प्रियव्रतादीनां च मनौ, भृग्वादीनां दक्षे, गुरोर्मनोर्दक्षस्य मरुद्गणानां च इन्द्रे, इन्द्रस्य सौपर्ण्यां, सौपर्ण्याः सुपर्ण इति गरुडमार्गः । सुपर्णशेषयोर्वाण्यां, वाण्या ब्रह्मणि, ब्रह्मणस्तु परमात्मनि लयो भवतीति ।

**पूर्वपक्षस्तु** न वाक् मनसि लीयते । उभयोः समत्वात् । न हि सत्यपि साम्ये वाक् मनसि लीयते न मनो वाचीत्यत्र नियामकमस्ति । न च साम्यासिद्धिः । 'मनः पूर्वरूपं वागुत्तररूपम्' इति मनसः प्राधान्यमिव, 'वाक्पूर्वरूपं मन उत्तररूपम्' इति वाचोऽपि प्राधान्यश्रवणात् । अतो वाचो मनसि लयाऽभावेन मोक्षाभावात् 'अनियम' इत्युक्तव्याघात इति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु** अस्त्येव वाचो मनसि लयः । 'तस्य यावन्न वाक् मनसि संपद्यत' इति शब्दात् । न च सत्यपि शब्देऽसम्भावितत्वात् न वाचो मनसि लयसिद्धिः सम्भावितस्यैव साधनार्हत्वादिति वाच्यम् । प्रत्यक्षत एव वाचो मनोवशत्वदर्शनेन तत्र तल्लयस्य सम्भावितत्वात् । न च 'वाक्पूर्वरूपं मन उत्तररूपम्, मनःपूर्वरूपं वागुत्तररूपम्' इत्यभिधानादुभयोः साम्यमिति वाच्यम् । अत्र हि पूर्वोत्तरवर्णदेवतात्वविषये गुणप्रधानभावे च मुनिमतविवाद एवोच्यते न स्वयं किंचिदभिधीयते । येन तयोः साम्यमिति प्रतिपद्येमहि, तथापि द्वयोर्मुनिमतयोः किं ग्राह्यमिति चेत् पूर्वोत्तरवर्णदेवतात्वविषये मतद्वयमपि ग्राह्यं विशेषाऽनुक्तेः । प्राधान्यविषये तु मनः प्राधान्यवादिन ऋषिपुत्रस्यैव मतं ग्राह्यं, 'मनसा वा अग्रे सङ्कल्पयति अथ वाचा व्याहरति' इति युक्त्या च मनः पूर्वकत्वस्य विशेषश्रवणात्, प्रत्यक्षानुसारित्वाच्च, वाचोलयनिर्णयेऽपि न सर्वदेवानां मोक्षः लयानिश्चयादिति चेत्, 'अग्नौ सर्वे देवा विलीयन्त' इति श्रुत्या यथानुकूलं सर्वदेवतालयनिर्णयात् । ततश्च युक्त एव ज्ञानिनां मोक्षनियम इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

सूत्रे चशब्दोऽभिव्याप्त्यर्थकापिशब्दार्थः सर्वाण्यपीति सम्बध्यते । एवशब्दस्तु अत एवेति शब्दादेवेति यथाश्रुतं व्याख्येयः । लीयंत इत्यध्याहृतेन वा सम्बध्यते लीयंत एवातो न मोक्षाभाव इति तद्व्यवच्छेद्योऽर्थः । क्लीबोक्तिस्त्वन्यानि दैवतानि यथानुकूलमिति श्रुत्यनुसारेणेति भावेन व्याचष्टे ॥ **न देवानामिति ।** तत्त्वप्रदीपे तु चशब्दादिन्द्रियाणि च यथानुकूलं विलीयन्त इत्युक्तम् । केचित्प्राचीना अत एवेति सूत्रं अन्तर्भेदाधिकरणं व्याचक्षते । पूर्वसूत्रसङ्गत्यभावाद्विषय-संशयपूर्वपक्षाणामन्यत्वाच्चेति । तथापि न्यायमालायां न्यायविवरणे च तज्ज्ञापकाभावादेकाधि-करणत्वेन व्याख्यातम् ।

इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीश नाम्ना ततो विरोधश्च न कश्चनात्र ॥

इत्यनुव्याख्यानं मनसि निधायाह **॥ अत्रोमेति ॥** सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रमित्यनु-व्याख्यानं मनसि निधायाह **॥ अग्नेस्त्विति ॥** अत्राद्ये वारुण्याः शेषे । सौपर्ण्याः सुपर्णे च लयसिद्धौ, गरुडमार्गस्थानां देवानामग्न्यादिद्वारा लयविचारो द्वितीय इति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

यथानुकूलमिति भाष्यं व्याचष्टे ॥ **स्वनियम्येति** । **अत्रेति** । **अग्नेस्त्विति** ।

इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्तासुपर्णश्च गिरीश नाम्ना ततो विरोधश्च न कश्चनात्र ॥

इति अनुव्याख्यानं मनसि निधायाह ॥ **अत्रेति** ॥ अत्राद्ये सूत्रे वाचो मनसि लये सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रमित्यनुव्याख्यानोक्तेरिति विशेषप्रमाणोक्तिः । द्वितीये देवविशेषे लये श्रुतिरूपप्रमाणोक्तिः ।

## वाक्यार्थविवरणम्

**सूर्यद्वारेणेति** ॥ सूर्यबृहस्पतिद्वारेणेत्यर्थः ॥

## वाक्यार्थमञ्जरी

सर्वाणि च देवतानि अनु स्वनियम्यनियामकभावानुसारेण लीयन्ते । कुतः अत एव अग्नौ सर्वे देवा इति श्रुतेरेवेत्यर्थः ।

॥ इति वाङ्मनसाधिकरणम् ॥ १ ॥

## २. मनोऽधिकरणम्

### ॐ तन्मनः प्राण उत्तरात् ॐ ॥ ३ ॥

'मनः प्राण' इत्युत्तराद्वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते ।

'वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठ' इति च कौण्डिन्य-श्रुतिः ॥

॥ इति मनोऽधिकरणम् ॥ २ ॥

### तत्त्वप्रदीपिका

अथापि कथं प्राक्तनरुद्रस्यानन्तस्य भारतीशब्दितायां ब्रह्माण्यां च लये वक्तव्ये तद्विलयस्थाने वाय्वाख्ये चतुर्मुखे लय उच्यते । नैष दोषः । सर्वशाखाप्रत्ययन्यायावतारात् । न ह्येकत्रानुक्तिरन्यत्रोक्तिं बाधते ।

'तस्मादशेषा गिरिजां प्रविश्य तयैव रुद्रं सह तेन वाणीम् ।
तया पतिं प्राप्य सहैव तेन लयं हरौ यान्ति समस्तजीवाः' इति च ॥

'अशेषा' इति कामादयस्तत्प्रतिबिम्बभूताः ॥

### तत्त्वप्रकाशिका

अत्र मनसो ब्रह्मप्राप्त्यर्थं प्राणे लयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मोक्षाभाव-प्रसङ्गेनोक्तव्याहतिरेव स्यादित्यतः समर्थनीयमेतत् । प्रकृतं मन एव विषयः । प्राणे लीयते न वेति सन्देहः । तस्य प्राणोत्पन्नत्वं विशेषादर्शनं च सन्देहबीजम् । न प्राणे मनो लीयते इति पूर्वः पक्षः । मनसः प्राणादनूनत्वात् । सर्वप्रवृत्तिहेतुर्हि प्राणः । मनोऽपि प्रत्यक्षत एवान्वयव्यतिरेकाभ्यां सर्व-प्रवृत्तिकारणं दृश्यते । न च 'इयदामननात्' (३-३-३५) इति मनसः प्राणादूनत्वमुक्तमिति वाच्यम् । तत्र मनःशब्दस्यान्यपरत्वात् । न च स्मरशब्देन तद्ग्रहणम् । मनःप्राणयोरुक्तन्यायेन साम्यात् । तत्पदस्याप्यन्यपरत्वोपपत्तेः । न च मनसः प्राणोत्पन्नत्वात्तत्र लयः । 'तत्प्राक् श्रुतेश्च' (२-४-४) इति मनसो भगवदुत्पन्नत्वस्योक्तत्वात् । अतो मनसो लयाभावेन मोक्षाभावादनियम

(तत्त्वप्रकाशिका)

इत्युक्तहानिरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **तदिति** ॥ मनः प्राणे लीयत एव । 'मनः प्राणे' इति 'वाङ्मनसि सम्पद्यते' इति पूर्वोदाहृतोत्तरवाक्यसद्भावादिति भावः । अत्र प्राणपदेन चतुर्मुखः । तत्र च मनसो लयो वाणीद्वारा । ननु कथं प्राणादनुत्पन्नस्य मनसः प्राणे लय इत्यत आह ॥ **वायोरिति** ॥ न च भगवदुत्पन्नत्वोक्तिविरोधः । प्राणद्वारा तदुपपत्तेः । न च तयोश्चेष्टकत्वसाम्यम् । 'मनः उदक्रामन्मीलित इवाश्नन्पिबन्नास्तैव प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत । मनः प्राविशदशयदेव । प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत' इत्यादेः । अतो मनसः प्राणे लयसद्भावादुक्तं युक्तमिति सिद्धम् ॥

## भावबोधः

**मनसो ब्रह्मप्राप्त्यर्थमिति** ॥ अत्र 'वाङ्मनसि संपद्यते । मनः प्राणे । प्राणस्तेजसि । तेजः परस्यां देवतायाम्' इति श्रुतिक्रमेणैवैषां त्रयाणामधिकरणानां प्रवृत्तत्वादनन्तरसङ्गतिः । तेजसो मार्गमात्रत्वस्य वक्ष्यमाणत्वेन 'प्राणः परस्यां देवतायाम्' इति श्रुतिसमाख्यया च प्राणस्यापि परमात्मन्येव लयसमर्थनादिति ज्ञातव्यम् । प्राणे लीयत इति । अत्र मनः किं प्राणे न लीयत उत लीयत इति चिन्ता । तदर्थं मनःप्राणयोरुभयोरपि सर्वचेष्टकत्वेनानूनत्वमुत तयोर्नियम्यनियामकभाव इति । तदर्थं मनसः किं भगवदुत्पन्नत्वं किं वा प्राणादुत्पन्नत्वमिति । तदर्थं मनसो भगवदुत्पन्नत्वप्रतिपादिका 'मनः सर्वेन्द्रियाणि च' इति श्रुतिः किं निरवकाशोत सावकाशेति । तदर्थं मनसः प्राणोत्पन्नत्वे विशेषप्रमाणं नास्त्युतास्तीति ॥ **विशेषादर्शनमिति** ॥ भगवदुत्पन्नस्यापि मनसो भगवति लयाभाववत् प्राणोत्पन्नस्यापि तस्य तत्र देहलयाभावसम्भवेन प्राणोत्पन्नत्वमनिर्णायकमिति भावः । मनःपूर्वकत्वनियमादशेषदृष्टव्यापाराणां तस्य प्राणादनूनतेति न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह– **मनस इत्यादिना** ॥ मनसः प्राणादूनत्वमुक्तमितीति । सङ्कल्पाद्यशान्तोत्तमप्राणादूनत्वं सङ्कल्पाद्यवरमनसः कैमुत्यसिद्धमिति भावः । तत्र मनःशब्दस्यान्यपरत्वादिति । तत्र 'मनो वाव वाचो भूयः' इत्यत्र–

> एवं तस्याभिमुक्तौ च पर्जन्यः सर्वतो वरः ।
> मनोऽभिमानी स प्रोक्तः... ... ... ॥

(भावबोधः)

इति छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण मनःशब्दस्य पर्जन्यपरत्वादित्यर्थः । स्मरशब्देन तद्ग्रहणमिति । 'स्मरो वाव आकाशात् भूयान्' इत्यत्र ''तस्याश्चैव सदाशिवः स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः'' इति छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण स्मरशब्देन रुद्रग्रहणमित्यर्थः । तथा च तदुत्तमाशोत्तमप्राणोनत्वं रुद्रस्य सिद्ध्यतीति भावः ॥

ननु प्राणस्यास्मिन् जन्मनि मुक्त्यभावात् कथं मनःशब्दवाच्यशेषगरुडयोस्तत्र मुक्त्यर्थं देहलय उच्यत इत्यत आह– **अत्र प्राणपदेन चतुर्मुख इति** ॥ अत्र नियामकमनुव्याख्यानं प्रागेवोदाहृतम्–

'तया सुपर्णं सह तेन वार्णी ब्रह्माणमेतद्गत एव याति'

इत्यनुव्याख्यानानुसारेणाह– **तत्र मनस इति** ॥ **उदतिष्ठदित्यादेरिति** ॥ आदिपदेन 'इन्द्रियस्थैः स्वरूपैस्तु' इत्यादिन्यायविवरणोदाहृतश्रुतिग्रहणम् ॥

## भावदीपः

**प्राणे लयेति** ॥ एतेन वाङ्मनसि सम्पद्यते मनः प्राण इत्यादि श्रौतक्रमेण चिन्तनाद्वा पूर्वत्र प्रत्यक्षेण श्रौतयुक्त्या च वाचो मनोऽधीनत्वेन तस्यास्तत्र लयेऽपि इह मनसः प्राणवशत्वे मानाभावेन न तत्र तस्य लय इति शङ्कनाद्वा पूर्वसङ्गतिरपि सूचिता ॥ **उक्तेति** ॥ अनियम इत्युक्तव्याघात इत्यर्थः ॥ **प्राणोत्पन्नत्वमिति** ॥ वायोर्वाव रुद्र उदेतीति वा प्राणाच्छ्रद्धाम् । खं वायुर्ज्योतिरापः पृथिवीन्द्रियमनोऽन्नमिति वा श्रुतेः प्राणोत्पन्नत्वदर्शनं वाचो मनोवशत्व इव मनसः प्राणवशत्वे विशेषप्रमाणादृष्टिश्चेत्यर्थः । तत उत्पन्नत्वं च हरौ व्यभिचारीति न तत्र लये विशेषमानमिति भावः । मनः प्राण इति सूत्राद्युक्तकोटिव्यावर्त्यमाह ॥ **नेति** ॥ मनोऽभिमानी शेषः सुपर्णश्च प्राणे चतुर्मुख इत्यर्थः । कुत इत्यतस्तस्य प्राणादनूनतेत्यन्यत्रोक्तं हेतुत्वेन योजयति ॥ **मनस इति** ॥ तदेव कुत इत्यतः मनःपूर्वकत्वादिति नियमादशेषदृष्टादृष्टव्यापाराणामित्यन्यत्रोक्तहेतोरनूनतोपपादकत्वं विवृण्वानः प्राणेऽपि तदाह ॥ **सर्वेति** ॥ यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेदित्यादेः प्रकर्षेणानति चेष्टत इति व्युत्पत्तेश्च । यत्प्राप्तिर्यत्परित्याग इत्यादेश्चेति भावः ॥ **प्रत्यक्षत एवेति** ॥ तत्तदनुभवसिद्धाभ्यामन्वयव्यतिरेकाभ्यामित्यर्थः ।

(भावदीपः)

अनूनत्वहेतोरसिद्धिमाशङ्क्य निराह ॥ **न चेति** ॥ उपासनापादे इयदिति नये च्छान्दोग्योक्तानां नामवाङ्मनस्सङ्कल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशाप्राणशब्दितानामुत्तरोत्तरातिशयेन प्राणस्य सर्वाधिकत्वोक्तेः मनसः प्राणादूनत्वं सिद्धमिति भावः ॥ **अन्येति** ॥ पर्जन्यपरत्वेन छान्दोग्यभाष्योक्तेरिति भावः । एतेन तेन गतार्थत्वमस्य निरस्तम् । प्रकारान्तरेण गतार्थत्वं शङ्कते ॥ **न चेति** ॥ **तद्ग्रहणमिति** ॥ रुद्रग्रहणमित्यर्थः । नामादिप्राणान्तशब्दैः उषास्वाहापर्जन्य-मित्राग्निवरुणविधुप्रवहानिरुद्धाहङ्कारिकप्राणेन्द्रोमारुद्रवाणीमारुतानामुक्तेरिति भावः ॥ **उक्तेति** ॥ सर्वप्रवृत्तिहेतुत्वरूपन्यायेनेत्यर्थः । प्रकारान्तरेणानूनत्वासिद्धिमाशङ्कते ॥ **न चेति** ॥ **उक्तत्वादिति** ॥ तथा च सूत्रकृदुक्तन्यायविरोधात्प्राणोत्पन्नत्वश्रुतिरमानमन्यथा वा नेयेति भावः ॥ **अत इति** ॥ प्राणादनूनत्वे प्राणे लयायोगादित्यर्थः ॥

भाष्यं व्युत्क्रमेण विवृण्वन् सौत्रार्थमाह ॥ **मन इति** ॥ शेषः सुपर्णश्चेत्यर्थः । कस्मा-दुत्तरमित्यत उक्तं **वागित्यादि** ॥ प्राणस्य मुक्तिद्वारत्वाभावादाह ॥ **अत्र प्राणेति** ॥ ननु मनसो ब्रह्माण्याः श्रेष्ठत्वेन तत्रैव लये वाच्ये कथं भूतपूर्वगत्या प्राणाख्ये चतुर्मुखे साक्षाल्लयोक्तिरित्यतः सर्ववेदान्तप्रत्ययन्यायेनानुक्तस्थलेऽप्यन्यत्रोक्तविशेषस्य ग्राह्यतया

तस्मादशेषा गिरिजां प्रविश्य तयैव रुद्रं सह तेन वाणीम् ।
तया पतिं प्राप्य सहैव तेन लयं हरौ यांति समस्तजीवा ॥

इत्युक्त्यनुरोधेनाह ॥ **तत्र चेति** ॥ सरस्वतीवत्पूर्वपक्षिणा प्राणादनूनत्वं प्राणवत्सर्वचेष्टकत्वेन प्राणादनुत्पन्नत्वेन चोपपादितम् । तत्र द्वितीयहेतुनिरासकतया वायोरिति भाष्यं व्याचष्टे ॥ **नन्विति** ॥ वियत्पादीयन्यायविवरणोक्तदिशा समाधिमाह ॥ **प्राणद्वारेति** ॥ आद्यहेतुमनूद्य सूत्रादौ प्रकृष्टाननवाचिप्राणपदप्रयोगलब्धसमाधिना निराह ॥ **न च तयोरिति** ॥ उदक्रामत् ब्रह्मणो देहादूर्ध्वमगमदित्यर्थः । आस्तैव ब्रह्मदेह इत्यर्थः । अशयत् अशेत । उदतिष्ठत् उदतिष्ठत । इत्यादैरैतरेयादौ श्रवणादसाधारण्येन प्राणस्यैव सर्वचेष्टकत्वेनाढ्यतावगमादित्यर्थः । यद्यपि प्राण-शब्दः पादांत्यप्राणनये प्राणस्तथानुगमादित्यत्र हरौ न्यायैरुपपादितः । तथापि प्राणान्तर्यामितयैव न तु मुख्यप्राणस्य त्याग इति भावः । अत एवैतरेयभाष्ये मुख्यवायुपरतयाऽपि व्याख्यातम् । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ मनः प्राण इति श्रुतिबलात्प्राणान्मनस ऊनत्वयुक्ति-बलाच्चेत्यर्थः । उक्तमनियम इत्युक्तमित्यर्थः ॥

## अभिनवचन्द्रिका

तन्मनोग्रहणं शक्यमकर्तुं पूर्वसूत्रादनुवृत्तमनःशब्देनैवऽन्वयसम्भवात् । ननु तर्हि सप्तमीनिर्दिष्टं प्रथमानिर्दिष्टेन चेहार्थः । मैवम् । अर्थाद्विभक्तिविपरिणामसम्भवात् । तद्यथा 'उच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्व' इत्युक्ते एनमिति गम्यते । तथा इहापि 'वाङ्मनसि दर्शनाच्छब्दाच्च' इत्युक्त्वा 'प्राण उत्तरादित्युक्ते मनः प्राणे लीयत इति गम्यत एवेति चेत् सत्यम्, इहानुवृत्तिः सम्भवति, तथापि मनोग्रहणं तावत्कर्तव्यम् । अन्यथा मनसीति सप्तम्यन्तमनुवृत्य प्राण इति प्रथमान्तं कृत्वा मनसि प्राणो लीयते उत्तरात् 'मनः प्राण' इत्येतस्मादप्युत्तरात् अपवादतया तदूर्ध्वं पठितत्वेन प्रबलात् 'प्राणस्तेजसि' इति वाक्यात् 'तैजसानींद्रियाण्याहुः' इति तेजःशब्दवाच्ये मनसि प्राणस्य लयाभिधानात् इति भ्रमः स्यात् । मनःशब्दे पुनः क्रियमाणे न दोषो भवति तद्ग्रहणमपि कर्तव्यम् । अन्यथा रुद्रस्यापि मनःशब्दवाच्यत्वात् रुद्रस्य प्राणे लयो विज्ञायेत । तद्ग्रहणे पुनः क्रियमाणे न दोषो भवति' 'वाङ्मनसि' इति पूर्वसूत्रे वाचो लयाधिकरणत्वेन यौ गरुडशेषौ प्रकृतौ तयोरेवेह ग्रहणमित्यवगमात् ।। **मनःशब्दस्याऽन्यपरत्वादिति** ।। 'मनो वाव वाचो भूय' इत्यत्र मनःशब्दस्य 'एवं तस्याविमुक्तौ च पर्जन्यः सर्वतो वरः । मनोभिमानी संप्रोक्त' इति प्रमाणानुसारेण पर्जन्यपरत्वादित्यर्थः ।। **न च स्मरशब्देनेति** ।। 'स्मरो वावा काशाद्भूयान्' इत्यत्र स्मरशब्देन रुद्रग्रहणमिति न वाच्यमित्यर्थः ।। **न च मनस इति** ।। अस्तु तयोः साम्यम् तथापि मनसः प्राणे लयो युज्यते । तत्र लये तदुत्पन्नत्वस्यैव प्रयोजकत्वेन तदवरत्वस्याप्रयोजकत्वादिति न च वाच्यमित्यर्थः । कुतो न वाच्यमित्यत आह – **तत्प्रागिति** ।। **अत इति** ।। मनसो भगवति लयस्य त्वयाऽनङ्गीकारात् । अङ्गीकृतस्य प्राणे लयस्याऽनुपपन्नत्वात्, 'अनियम' इत्युक्तहानिरित्यर्थः । एतेन प्राणसमत्वात् प्राणे लयाऽसम्भवेऽपि प्राणवद्भगवति लयसम्भवात् उपपन्नोऽमोक्ष इति परास्तम् । प्राणस्य जन्मान्तरसद्भावात् मुच्यमानस्य तत्र लयकथनमयुक्तमित्यत आह – **अत्र प्राणपदेनेति** ।। नाऽत्र चतुर्मुखग्रहणं सम्भवति । 'प्राणस्तेजसि' इति प्रकृतौ लयश्रवणात् प्रकृतिलीनस्य च संसारावश्यम्भावादिति चेत्, न 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' इति औपचारिकलयाऽङ्गीकारात् । तस्य च संसारानापादकत्वादिति ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** न प्राणे मनो लीयते । तत्समत्वात् । दृश्यते हि प्राणस्येव मनसोऽपि प्रवर्तकत्वम् । न च तदुत्पन्नत्वात्तत्र लयः । तस्य भगवदुत्पन्नत्वश्रवणात् । ततश्च भगवति लयस्य त्वयाऽनङ्गीकारात्, अङ्गीकृतस्य प्राणे लयस्यानुपपन्नत्वात्, न मोक्ष इत्युक्तमयुक्तमिति ॥

**सिद्धान्तस्तु** लीयत एव मनः प्राणे । 'मनः प्राण' इति श्रवणात् । न च समत्वात्तत्र लयोऽनुपपन्न इति वाच्यम् । 'मन उदक्रामदित्यादिना नीचोच्चभावश्रवणात् । न च तदनुत्पन्नत्वात्तत्र लयाऽसम्भवः । 'वायोर्वाव रुद्र उदेति' इति तस्य तस्मादुत्पत्तिश्रवणात् । न च भगवदुत्पन्नत्वोक्तिविरोधः । प्राणद्वारा भगवदुत्पन्नत्वार्थकत्वात् । अतो मनसः प्राणे लयसद्भावादुक्तं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

अत्र वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामिति श्रुत्युक्तक्रमेणैषां त्रयाणामधिकरणानां प्रवृत्तत्वादनन्तरसङ्गतिः । सोऽध्यक्ष इत्यत्र प्राणस्य परमात्मनि लयोक्त्या श्रुतिक्रमोल्लङ्घनं तु तेजसो मार्गमात्रत्वेन प्राणस्य तद्द्वारा परमात्मन्येव देहलयादिति बोध्यम् । अत्र मनः प्राणे न लीयत उत लीयत इति चिन्ता । तदर्थं किं तयोस्साम्यमुत नियम्यनियामकभावेन प्राणस्योत्तमत्त्वमिति । तदर्थं प्राणान्मनस उत्पत्तिर्नास्त्युतास्तीति । तदर्थमेतस्माज्जायते प्राणो मन इति मनसो भगवदुत्पन्नत्वपरवाक्यं प्रबलमुत वायोर्वाव रुद्र उदेतीति वाक्यं प्रबलमिति । **प्राणोत्पन्नत्वमिति** ॥ वायोर्वाव रुद्र उदेतीत्युक्तं प्राणोत्पन्नत्वमित्यर्थः ॥ **विशेषेति** ॥ भगवदुत्पन्नस्यापि मनसो भगवति लयाभाववत्प्राणोत्पन्नस्यापि तस्य तत्र देहलयाभावसम्भवेन प्राणोत्पन्नत्वमनिर्णायकं विशेषप्रमाणाभावादिति भावः । तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति । सिद्धान्तश्रुतिव्यावर्त्ययुक्तिमाह ॥ **मनसः प्राणादनूनत्वादिति** ॥ तदुपपादकत्वेन कार्यकरत्वमित्युक्तन्यायं व्यनक्ति ॥ **सर्वेति** ॥ **प्रत्यक्षत इति** ॥ साक्षिप्रत्यक्षत इत्यर्थः ।

ननु कार्यकारणभावस्यातीन्द्रियत्वात् कथं मनसः कारणत्वं प्रत्यक्षेण दृश्यत इत्यतोऽन्वयव्यतिरेकसचिवस्यास्ति शक्तिरिति भावेनोक्तं ॥ **अन्वयेति** ॥ **इयदामननादिति** ॥ नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नापेज आकाशस्मराशाप्राणशब्दितानामुत्तरोत्तराधिक्येन प्राणस्य

(वाक्यार्थमुक्तावली)

सर्वाधिक्यस्योक्तत्वात् । सङ्कल्पावरमनसः प्राणादूनत्वं कैमुत्यसिद्धमिति भावः । **अन्यपरत्वादिति ।** 'एवं तस्याविमुक्तौ च पर्जन्यः सर्वतो वरः । मनोऽभिमानी सः प्रोक्तः' इति छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण पर्जन्यपरत्वान्न प्राणोनत्वं रुद्रस्य सिध्यतीति भावः ॥ **तद्ग्रहणमिति ॥** मनोऽधमरुद्रग्रहणमित्यर्थः ॥ **तत्पदस्येति ॥** स्मरपदस्य प्रसिद्धमन्मथपरत्वोपपत्तेरित्यर्थः । तस्याश्चैव सदा शिवः । स्मरः स्मृत्यभिमानी सः सममेव रतेः स्मरः इति छान्दोगप्रमाणं तु रूढिबाधेऽनादरणीयमिति भावः । सूत्रे शब्दादित्यनुवर्तते । तत् तस्माद्वाङ्मनसि सम्पद्यत इत्यस्मादुत्तराच्छब्दात् मनः प्राण इत्युत्तराद्वचनान्मनोभिमानी शेषः सुपर्णश्च वाणीद्वारा प्राणे चतुर्मुखे लीयत इति सूत्रार्थमभिप्रेत्याह ॥ **मन इति ॥** यद्वा तदिति मनोविशेषणम् । वागादिसर्वप्रवृत्तिकारणत्वेन वाङ्मनसीति श्रुतिसूत्रयोर्भगवज्ज्ञातत्वेन तत्प्राक्श्रुतेश्च एतस्माज्जायते प्राणो मनश्चेति श्रुतिसूत्रयोरुक्तमपि मन इति शङ्कासूचनार्थम् । यद्वा सङ्कल्पावरं मनो न किंतु यत् वाङ्मनसि 'उमा वै वाक्समुदिष्टा मनो रुद्र उदाहृतः' इति श्रुत्युक्तं रुद्राख्यमेव मनः । अत इयदामननादित्यत्र छान्दोग्ये मनःशब्दस्यान्यपरत्वेऽपि स्मरशब्दस्यान्यथासिद्धिशङ्कायामप्युत्तरवचनाद्रुद्राख्यमनसो न प्राणे लयाभावसिद्धिरिति पूर्वपक्षप्रतिक्षेपाय विशेषणम् ॥ **वाणीद्वारेति ॥** तया सुपर्णं सह तेन वाणीं ब्रह्माणमेतद्यत एव यातीत्यनुव्याख्यानोक्तेरिति भावः ॥ **इत्यत आहेति ॥** शब्दादित्यस्योत्तरादित्येतद्विशेषणत्वं विनाऽर्थान्तरमाहेत्यर्थः ॥ **प्राणद्वारेति ॥** सावकाशा श्रुतिरिति भावः । आढ्यतेत्युक्तसिद्धान्तन्यायं व्यनक्तुं इति च श्रुतिरिति भाष्ये चशब्दगृहीतां श्रुतिमुदाहरति ॥ **मन उदक्रामदिति ॥** इत्यादेरित्यादिपदेनेन्द्रियस्थैः स्वरूपैरित्यादिन्यायविवरणोदाहृतश्रुतिर्गृह्यते ॥

## तत्त्वसुबोधिनी

**मनसो ब्रह्मप्राप्त्यर्थमिति ॥** वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां इति श्रुतिक्रमेणैवेषामष्टानामधिकरणानां क्रमप्रवृत्तत्वादनंतरसङ्गतिः । तेजसो मार्गमात्रपरत्वस्य वक्ष्यमाणत्वेन प्राणः परस्यां देवतायामिति श्रुतिसमाख्या च प्राणस्यापि परमात्मन्येव लयसमर्थनादिति ज्ञातव्यम् । उक्तव्याहृतिः अनियम इत्युक्तव्याहृतिः ॥ **विशेषादर्शनमिति ॥** भगवदुत्पन्नस्यापि मनसः भगवति लयाभाववत् प्राणोत्पन्नस्यापि तस्य तत्र देहलयासम्भवेन

(तत्त्वसुबोधिनी)

प्राणोत्पन्नेन लयनिर्णायकमिति भावः । अनूनत्वमेव प्रकटयति ॥ **सर्वप्रवृत्तीति** ॥ **मनसः प्राणादूनत्वमुक्तमिति** ॥ तत्र सङ्कल्पाद्याशोत्तमप्राणादूनत्वं सङ्कल्पाद्यवरमनसः कैमुत्यसिद्धमिति भावः ॥ **तत्र मनःशब्दस्येति** ॥ तत्र मनो वाव वाचो भूय इत्यत्र एव तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः । मनोऽभिमानी सम्प्रोक्ता इति प्रमाणानुसारेण मनःशब्दस्य पर्जन्यपरत्वादिति भावः । स्मरशब्देन तद्ग्रहणमिति भावः । स्मरो वाव आकाशाद्भूयानित्यत्र तस्याश्चैव सदाशिवः । स्थिरस्मृत्यभिमानी स सममेव रतेः स्मर इति प्रमाणानुसारेण स्मरशब्देन रुद्रग्रहणमित्यर्थः । तथा च तदुत्तमाशोत्तामप्राणोनत्वं रुद्रस्य सिद्ध्यतीति भावः । ननु प्राणस्यास्मिन् जन्मनि मुक्तयभावात् कथं मनःशब्दवाच्यशेषगरुडयोः तत्र मुक्त्यर्थं देहलय उच्यते इत्यत आह ॥ **ताविति** ॥ स्म वाक् विरिञ्चपत्नीं विरिञ्चं च काले इत्यनुव्याख्यानं मनसि निधायाह । अत्र **प्राणपदेनेति** ॥ इत्यादेरित्यत्रादिपदेन इन्द्रियस्थैः स्वरूपैस्त्वित्यादिश्रुतिग्रहणम् ।

## वाक्यार्थविवरणम्

**दृश्यत** इति ॥ तथा चोभयोः **साम्यमिति** भावः । ऊनत्वं नीचत्वम् । तथा च प्राणे लयो युक्त इति भावः ॥ **अन्यपरत्वादिति** ॥ पर्जन्यपरत्वेन रुद्रपरत्वादिति भावः । तथा च रुद्रस्य न प्राणादूनत्वमिति भावः ॥ **तद्ग्रहणमिति** ॥ रुद्रग्रहणमित्यर्थः । तथा च तदुत्तमाशोत्तमप्राणादूनत्वं सिध्यतीति भावः ॥ **उक्तन्यायेनेति** ॥ उभयोरपि सर्वप्रवृत्तिकारणत्वेन साम्यात् स्मरशब्देन रुद्रग्रहणे तदुत्तमत्वायोगेन तत्पदस्य स्मरपदस्य कामदेवपरत्वोपपत्तेः । तत्र चतुर्मुखे मनसः शेषस्य इत्यादेरिति । तथा च न साम्यमिति भावः ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ अनियम इत्युक्तेत्यर्थः ॥ **ऊनत्वमुक्तमिति** ॥ सङ्कल्पाद्याशोत्तमप्राणादूनत्वं सङ्कल्पाद्यवरमनसः कैमुत्यसिद्धमित्यर्थः ॥ **तत्रेति** ॥ मनो वाव वाचो भूय इत्यत्र मनःशब्दस्य पर्जन्यपरत्वादित्यर्थः । पर्जन्यः सर्वतोवरः मनोऽभिमानी सम्प्रोक्त इति स्मरणादिति भावः ॥ **स्मरशब्देन तद्ग्रहणमिति** ॥ स्मरो वावाकाशाद्भूयानित्यत्र तस्याश्चैव सदाशिवः । स्थिरस्मृत्यभि-मानी स सममेव रतेः स्मर इति स्मरणात्स्मरशब्देन रुद्रग्रहणमित्यर्थः । तथा च तदुत्तमाशोत्तम-

(वाक्यार्थमञ्जरी)

प्राणोनत्वं रुद्रस्य सिध्यतीति भावः ॥ ॐ तन्मनः प्राण उत्तरात् ॐ ॥ तद्वाङ्नियामकत्वेन मनः मनोऽभिमानी शेषः सुपर्णश्च प्राणे चतुर्मुखे वाणीद्वारा विलीयते कुतः उत्तरात् वाङ्मनसीति पूर्वोदाहृतवाक्यापेक्षयोत्तरान्मनः प्राण इति वाक्यादित्यर्थः ॥ **चतुर्मुख इति** ॥ वायोरेतज्जन्मनि मुक्त्यभावेन तत्र मनसो मुक्त्यर्थं देहलयासम्भवादिति भावः ॥ **मन उदक्रामदिति** ॥ सर्वदेवनिर्गमानन्तरं मनो रुद्र उदक्रामत् ब्रह्मदेहादूर्ध्वमगमत् तदासौ देहो निमीलितनयन इवाश्नन्पिबन्नास्तैव न पपातेत्यर्थः । अथ प्राण उदक्रामत्तस्मिन्प्राण उत्क्रान्ते सत्य पद्यत एव ततः पुनः सर्वदेवप्रवेशानन्तरं मन अपि प्राविशत् तदाऽशयदेव नोत्थितः प्राणः प्राविशत् तस्मिन्प्राणे प्राप्ते सत्युदतिष्ठत् उत्थित इत्यर्थः ॥

॥ इति मनोऽधिकरणम् ॥ २ ॥

## ३. अध्यक्षाधिकरणम्

### ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ ४ ॥

स प्राणः परमात्मनि विलीयते । 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' 'प्राणः परस्यां देवतायाम्' ।

'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते ।
अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु ।
आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ॥
न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन ।
किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः ॥
प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् ।
सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम्' इत्यादिश्रुतिस्मृतिभ्यः ॥ ४ ॥

॥ इति अध्यक्षाधिकरणम् ॥ ३ ॥

### तत्त्वप्रदीपिका

''इन्द्रश्च वायुमाविश्य'' इति पूर्वोक्तसुपर्णीसुपर्णवाणीद्वारेणेति द्रष्टव्यम् । सावकाशानवकाशयोरनवकाशस्य बलवत्त्वात् ।

'इन्द्रादीनां तत्र लयः क्रमं तु प्रोक्तं विशेषादनुसृत्य नान्यत्' इति च ।
'आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान्' ॥

परमात्मस्वरूपानन्दादन्यमुक्तमानन्दाच्च बाह्यं स्वानन्दं भुङ्क्ते । निर्गतस्तु बाह्यविषयभोगानपि कांश्चित्स्वयोग्यान् भुङ्क्त इत्यर्थः । 'प्राणस्तेजसि' इत्यस्य गतिमाह–

'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' इति ।

'मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम् ।
वायुं याति शिवश्चापि वायुस्तेजोऽभिधां श्रियम् ॥

(तत्त्वप्रदीपिका)

वायुमादाय सा देवी याति विष्णुं परात्परम् ।
द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः ।
मुक्तिकाले च मुक्तौ च पुरुषा वायुमाप्नुयुः' इति सत्तत्वे ॥

॥ इत्यध्यक्षाधिकरणम् ॥

## तत्त्वप्रकाशिका

अत्र प्राणस्य मोक्षसिध्यर्थं परमात्मनि लयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा कस्यापि मोक्षाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतः प्राणोऽत्र विषयः । किं परमात्मनि लीयते न वेति सन्देहः । पूर्वोक्तं सन्देहबीजम् । प्राणो न परमात्मनि लीयत इति पूर्वः पक्षः । तस्य तदधीनत्वानिश्चयात् । न च वाच्यं 'चक्षुरादिवत्' (२-४-११) इत्यादौ तदुक्तमिति । तस्यानन्याधीनत्वेऽपि श्रुतिसद्भावात् । न च तस्या गत्यन्तरं चोक्तमिति वाच्यम् । अनन्याधीनत्वे प्राणस्य श्रुतिबाहुल्यसद्भावात् । बाहुल्यस्य प्राबल्यहेतुत्वात् । न हि प्रबलस्य दुर्बलेन बाधः । वैपरीत्यस्यैवोचितत्वात् । महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति' इति प्राणस्य लयाभावोक्तेश्च । अतः प्राणस्य परमात्मनि लयाभावेन कस्यापि मोक्षाभाव इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **॥ स इति ॥** प्राणो हिरण्यगर्भः परमात्मनि लीयत एव तस्य तदधीनत्वात् । न च तदनिर्णयः । तदधीनत्वेऽपि श्रुत्यादिबाहुल्यसद्भावात् । न च साम्यम् । तदधीनत्वश्रुतीनां निरवकाशत्वात् । स्वातन्त्र्यश्रुतीनां तु 'सर्वे प्राणमुपगच्छन्ति' इति न्यायेन सावकाशत्वात् । सावकाशनिरवकाशयोश्च निरवकाशस्य प्राबल्यात् । अनद्यमान इति चान्यैरनद्यमान इत्यर्थोपपत्तेरिति भावः । बाह्यकानित्येतदेवोपपादयति **॥ न हीति ॥** ननु 'प्राणस्तेजसि' इति श्रुतेः प्राणस्य रमायां लयो न परमात्मनीत्यत आह **॥ प्राणस्येति ॥** चतुर्मुखस्य तेजसि लयो नाम तत्प्राप्तिमात्रं न तु तत्र देहलयः । तस्य साक्षात्परमात्मनि लययोग्यत्वादिति भावः । प्राणत्वेऽस्त्येव तेजसि लयः । अतो विरिञ्चस्य हरौ लयसद्भावाद्युक्तः सर्वज्ञानिनां मोक्ष इति सिद्धम् ॥

## गुर्वर्थदीपिका

यदनन्नमत्तीत्यत्रानन्नमन्येषामनन्नमित्यर्थः ।

## भावबोधः

अत्रानन्तरसङ्गतिः प्रागेवोक्ता ॥ **कस्यापीति** ॥ चतुर्मुखप्रवेशेनैव सर्वेषां मुक्तिरिति भावः ॥ **किं परमात्मनीति** ॥ अत्र प्राणः किं परमात्मनि न लीयत उत लीयत इति चिन्ता । तदर्थं प्राणः परमात्माधीनो न भवत्युत भवतीति । तदर्थम् 'चक्षुरादिवत्' इति प्रागुक्तं प्राणस्य परमात्माधीनत्वं प्राणस्य स्वातन्त्र्यादिप्रतिपादकबहुश्रुतिबाधितं भवत्युत न भवतीति । तदर्थं प्राणस्वातन्त्र्य-प्रतिपादकश्रुतिः किं निरवकाशोत सावकाशेति । तदर्थं प्राणस्य परमात्माधीनत्वे विशेषप्रमाणं नास्त्युतास्तीति ॥ **पूर्वोक्तमेवेति** ॥ प्राणस्य भगवदुत्पन्नत्वं विशेषादर्शनं चेत्यर्थः । एतदुपपादनं पूर्ववज्ज्ञातव्यम् । 'सोऽध्यक्षः' इत्यस्याप्येवमेव शङ्का । श्रुतिबाहुल्यमेव शङ्कायां विशेषहेतुरिति न्यायविवरणाभिप्रायमाह– **तस्य तदधीनत्वेत्यादिना** ॥ **गत्यन्तरं चोक्तमिति** ॥

'अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात्' इत्यादिना चक्षुरादिवत् इत्यत्रोक्तमित्यर्थः । **लयाभावोक्तेश्चेति** ॥ अनेन श्रुतिबाहुल्यमिति न्यायविवरणं लयाभावेऽपि श्रुतिबाहुल्यमिति व्याख्यातं भवति । तदधीनत्वेऽपि श्रुत्यादिबाहुल्यादिति । अनेन श्रुतिबाहुल्य एव परिहारे च विशेषहेतुरिति न्यायविवरणं व्याख्यातं भवति ॥ **इति न्यायेनेति** ॥ इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्वे तच्चेष्टकत्वादिना श्रुत्युक्तस्वातन्त्र्योपपत्तेरिति भावः ॥ **अन्यैरनद्यमान इतीति** ॥ अनेन श्रुतिबाहुल्यम् इति प्राणस्य विष्णुनाऽद्यमानत्वे श्रुतिबाहुल्यमित्यपि सिद्धान्ते व्याख्यातं भवति ॥ **प्राणत्व इति** ॥ प्राणस्य चतुर्मुखत्वेन पुनर्जननात् । विलीनो हि प्रकृतौ संसारमेति इति श्रुतेरिति भावः ॥

## भावदीपः

**प्राणस्येति** ॥ एतेन श्रौतक्रमाद्वा पूर्वनयद्वयफलाक्षेपेण शङ्कनाद्वा पूर्वसङ्गतिरपि सूचिता । अत एवाह **कस्यापि मोक्षासम्भवेति** ॥ **पूर्वोक्तमिति** ॥ श्रेष्ठश्चेत्यत्रोक्तेश्वरजत्वं विशेषादृष्टि-श्चेत्यर्थः । सोऽध्यक्ष इत्येतद्व्यावर्त्यकोटिमाह ॥ **प्राण इति** ॥ सोऽध्यक्षं इत्यस्याप्येवमेवा-शङ्कचेत्यन्यत्रोक्तेः पूर्वोक्तमेव हेतुमाह ॥ **तस्येति** ॥ श्रुतिबाहुल्यमेव शङ्कायां विशेषहेतुरित्य-न्यत्रोक्तं व्यावर्त्यशङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ **इत्यादाविति** ॥ श्रेष्ठश्च एतेन मातरिश्वा व्यतिहारो विशिंषन्ति इत्यादिपदार्थः ॥ **श्रुतीति** ॥ न प्राणः किञ्चिदाश्रित इति यस्मिन्निदं

(भावदीपः)

सर्वमध्यर्धोत्प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितमित्यादिश्रुतीत्यर्थः ॥ **गत्यन्तरं चोक्तमिति** ॥ विष्ण्वन्येश्वरवर्जनपरत्वरूपं गत्यन्तरं चक्षुरादिवदित्यत्रैवोक्तमित्यर्थः । दुर्बलेन अनन्येश्वरपरतावचनेनेत्यर्थः । छान्दोग्यचतुर्थाध्यायस्थविस्पष्टश्रुतिं चाह ॥ **महान्तमिति** ॥ **अत इति** ॥ अनन्याधीनत्वे श्रुतिबाहुल्याल्लयाभावे श्रुतेर्भावाच्चेत्यर्थः । स इत्यादिभाष्यं व्याचष्टे ॥ **प्राण इति** ॥ कुत इत्यतः सोऽध्यक्ष इत्यस्याप्येवमेव परिहार इत्यन्यत्रोक्तं हृदि कृत्वा पूर्वनयसिद्धान्तहेतुमेवात्राप्याह ॥ **तस्येति** ॥ श्रुतिबाहुल्यमेव परिहारे च विशेषहेतुरित्यन्यत्रोक्तं शङ्कानिरासकत्वेन योजयति ॥ **न चेत्यादिना** ॥ सर्वे प्राणमित्यादिभाष्यं श्रुतिबाहुल्यस्य निरवकाशत्वोपपादकत्वेन योजयति ॥ **न च साम्यमित्यादिना** ॥ **इति न्यायेनेति** ॥ रुद्रादिसर्वोपजीव्यत्वरूपश्रुत्युक्तन्यायेनेत्यर्थः । प्रागुक्तलयाभावश्रुतेर्गतिमाह ॥ **अनद्यमान इति चेति** ॥ **प्राणत्व इति** ॥ हिरण्यगर्भत्वात्पूर्वं प्राणत्वावस्थायां श्रीतत्वे देहलयोऽस्त्येव । पुनश्चतुर्मुखतया जननादिति भावः ॥ **अत इति** ॥ हरौ लीनत्वश्रुतिबाहुल्यादित्यर्थः ।

## अभिनवचन्द्रिका

**तस्य तदधीनत्वेति** ॥ अत्र नञो बुद्ध्या विवेकेनाऽतदधीनत्वनिश्चयादिति सम्बन्धो बोध्यः । एतेन तदधीनत्वनिश्चयाभावे तत्र लयसंदेह एव स्यात्, न तु न तत्र लीयत इति पूर्वपक्षसिद्धिः स्यादिति परास्तम् । 'चक्षुरादिवत्' इति सूत्रे तदधीनत्वस्य निर्णीतत्वात् नाऽभावनिश्चय इत्याक्षिप्य निषेधति – **न च वाच्यमिति** ॥ **तस्येति** ॥ प्राणस्य परमात्मानधीनत्वेऽपि श्रुतिसद्भावात्, न प्राणस्याधीनत्वनिश्चय इति भावः ॥ **गत्यन्तरमिति** ॥ प्राणस्य अनन्याधीनताप्रतिपादकस्य 'प्राणादिदमाविरासीत्, प्राणो धत्ते प्राणे लयमभ्युपैति, न प्राणः किंचिदाश्रितः, यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् । यथा प्राणः तथा राजा सर्वस्यैकाश्रयो भवेत्' इति वचनस्य 'अनन्येश्वरताप्राणे तदन्येश्वरवर्जनात्' इति गतिरुक्ता । ततश्च प्रतिप्रमाणस्य हीनबलत्वात् तदधीनतानिश्चयः सम्भवतीति न वाच्यमित्यर्थः ॥ **वैपरीत्यस्यैवेति** ॥ तदधीनताप्रतिपादकवचनस्य हीनबलत्वात् बहुत्वेन प्रबलैरनधीनतावचनैरनधीनत्वनिश्चय इति भावः ॥ **न च तदनिर्णय इति** ॥ अनधीनताप्रतिपादकबहुप्रमाणविरुद्धेन तदधीनतावचनेन न तन्निर्णय इति न वाच्यमित्यर्थः । तत्किं 'प्राणस्तेजसि' इति श्रुतिः सर्वथा मुख्यार्थैवेति जिज्ञासायामाह – **प्राणत्व इति** । हिरण्यगर्भस्यैव प्राणत्वावस्थायां तेजसि लयोऽस्त्येवेति मुख्यार्थापि श्रुतिरिति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** प्राणो न परमात्मनिलीयते । तस्याऽतदधीनत्वात् । न च वाच्यं 'चक्षुरादिवत्' इत्यादौ प्राणस्य तदधीनत्वमुक्तमिति । तस्यानन्याधीनत्वे बहुश्रुतिसद्भावात् । न च बहुबाधो युक्तः । वैपरीत्यस्यैवोचितत्वात् । 'महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति' इति लयाभावोक्तेश्च । अतः प्राणस्य लयाभावात् न कस्यापि मोक्ष इति ।

**सिद्धान्तस्तु** प्राणो हिरण्यगर्भः परमात्मनि लीयत एव । तस्य तदधीनत्वात् । न च तदनिर्णयः । निरवकाशबहुश्रुतिसद्भावात् । अनधीनत्वश्रुतीनां तु ईश्वरान्याधीनत्वाभावपरत्वेन सावकाशत्वात् । ननु 'प्राणस्तेजसि' इति श्रुतेः कथं परमात्मनि लय इति चेत् – न, तच्छ्रुतेस्तेजसो द्वारमात्रपरत्वेन तत्र लयपरत्वाभावात् । तदुक्तम् 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' इति । अतो विरिञ्चस्य लयसद्भावात् युक्तः सर्वज्ञानिनां मोक्ष इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**कस्यापीति** ॥ चतुर्मुखप्रवेशेनैव सर्वेषामुक्तेरिति भावः ॥ **किमिति** ॥ प्राणः परमात्मनि लीयते उत न लीयत इति चिन्ता । तदर्थं प्राणः परमात्मानधीन उताधीन इति ॥ **पूर्वोक्तमिति** ॥ एतस्माज्जायते प्राण इति भगवदुत्पन्नत्वं विशेषप्रमाणादर्शनं चेत्यर्थः । ननु पूर्वसूत्रे उत्तरादित्युत्तरवचनमुदाहरता प्राणस्य तेजोद्वारा परमात्मनि लयस्योपपादितप्रायत्वाद्व्यर्थमिदमधिकरणमिति चेन्न । तद्वचनानुसारेण तेजस्येव लयाङ्गीकर्तव्यत्वात्तस्य च सिद्धान्तिनोऽनिष्टत्वात् । तेजसो द्वारमात्रत्वेन विष्णौ लय इत्यत्र विशेषप्रमाणाभावादित्याक्षेपेणास्य प्रवृत्तेरिति बोध्यम् । अत्र न्यायविवरणे सोऽध्यक्ष इत्यस्याप्येवमेवाशङ्कापरिहारश्चेति कार्यकरत्वमाढ्यतेत्युक्तावेव पूर्वोत्तरपक्षन्यायावेवानुसन्धेयावित्यतिदिश्य तर्हि तन्न्यायेन गतार्थत्वमित्याशङ्क्य श्रुतिबाहुल्यमेवाशङ्कायां परिहारे च विशेषहेतुरित्युक्तम् । अत एव सूत्रे तदुपगमादिभ्य इति श्रुतिबाहुल्यं सिद्धान्ते वक्ष्यत इत्याशयेन पूर्वन्यायेन तावत्पूर्वपक्षमाह ॥ **तस्येति** ॥ मन आदिसर्वकार्यपरत्वेनेश्वरतुल्यस्येत्यर्थः । चक्षुरादिवदित्यादिपदेन श्रेष्ठश्चेत्यादिर्गृह्यते ॥ **अनन्याधीनत्वेऽपीति** ॥ न प्राणः किंचिदाश्रित इति श्रुतिसद्भावादित्यर्थः ॥ **गत्यन्तरं चेति** ॥ चक्षुरादिवदित्यत्रैवानन्येश्वरता प्राणे तदन्येश्वरवर्जनादित्यादिना गत्यन्तरमित्यर्थः । कुतो न वाच्यमित्यतो न्यायविवरणानुसारेण श्रुतिबाहुल्ये-

(भावदीपः)

सर्वमध्यध्र्योत्प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितमित्यादिश्रुतीत्यर्थः ॥ **गत्यन्तरं चोक्तमिति** ॥ विष्ण्वन्येश्वरवर्जनपरत्वरूपं गत्यन्तरं चक्षुरादिवदित्यत्रैवोक्तमित्यर्थः । दुर्बलेन अनन्येश्वरपरता-वचनेनेत्यर्थः । छान्दोग्यचतुर्थाध्यायस्थविस्पष्टश्रुतिं चाह ॥ **महान्तमिति** ॥ **अत इति** ॥ अनन्याधीनत्वे श्रुतिबाहुल्याल्लयाभावे श्रुतेर्भावाच्चेत्यर्थः । स इत्यादिभाष्यं व्याचष्टे ॥ **प्राण इति** ॥ कुत इत्यतः सोऽध्यक्ष इत्यस्याप्येवमेव परिहार इत्यन्यत्रोक्तं हृदि कृत्वा पूर्वनयसिद्धान्तहेतु-मेवात्राप्याह ॥ **तस्येति** ॥ श्रुतिबाहुल्यमेव परिहारे च विशेषहेतुरित्यन्यत्रोक्तं शङ्कानिरासकत्वेन योजयति ॥ **न चेत्यादिना** ॥ सर्वे प्राणमित्यादिभाष्यं श्रुतिबाहुल्यस्य निरवकाशत्वोपपादकत्वेन योजयति ॥ **न च साम्यमित्यादिना** ॥ **इति न्यायेनेति** ॥ रुद्रादिसर्वोपजीव्यत्व-रूपश्रुत्युक्तन्यायेनेत्यर्थः । प्रागुक्तलयाभावश्रुतेर्गतिमाह ॥ **अनद्यमान इति चेति** ॥ **प्राणत्व इति** ॥ हिरण्यगर्भत्वात्पूर्वं प्राणत्वावस्थायां श्रीतत्वे देहलयोऽस्त्येव । पुनश्चतुर्मुखतया जननादिति भावः ॥ **अत इति** ॥ हरौ लीनत्वश्रुतिबाहुल्यादित्यर्थः ।

## अभिनवचन्द्रिका

**तस्य तदधीनत्वेति** ॥ अत्र नञो बुद्ध्या विवेकेनाऽतदधीनत्वनिश्चयादिति सम्बन्धो बोध्यः । एतेन तदधीनत्वनिश्चयाभावे तत्र लयसंदेह एव स्यात्, न तु न तत्र लीयत इति पूर्वपक्षसिद्धिः स्यादिति परास्तम् । 'चक्षुरादिवत्' इति सूत्रे तदधीनत्वस्य निर्णीतत्वात् नाऽभावनिश्चय इत्याक्षिप्य निषेधति – **न च वाच्यमिति** ॥ **तस्येति** ॥ प्राणस्य परमात्मानधीनत्वेऽपि श्रुतिसद्भावात्, न प्राणस्याधीनत्वनिश्चय इति भावः ॥ **गत्यन्तरमिति** ॥ प्राणस्य अनन्याधीनताप्रतिपादकस्य 'प्राणादिदमाविरासीत्, प्राणो धत्ते प्राणे लयमभ्युपैति, न प्राणः किंचिदाश्रितः, यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् । यथा प्राणः तथा राजा सर्वस्यैकाश्रयो भवेत्' इति वचनस्य 'अनन्येश्वरताप्राणे तदन्येश्वरवर्जनात्' इति गतिरुक्ता । ततश्च प्रतिप्रमाणस्य हीनबलत्वात् तदधीनतानिश्चयः सम्भवतीति न वाच्यमित्यर्थः ॥ **वैपरीत्यस्यैवेति** ॥ तदधीनताप्रतिपादकवचनस्य हीनबलत्वात् बहुत्वेन प्रबलैरनधीनतावचनैरनधीनत्वनिश्चय इति भावः ॥ **न च तदनिर्णय इति** ॥ अनधीनताप्रतिपादकबहुप्रमाणविरुद्धेन तदधीनतावचनेन न तन्निर्णय इति न वाच्यमित्यर्थः । तत्किं 'प्राणस्तेजसि' इति श्रुतिः सर्वथा मुख्यार्थैवेति जिज्ञासायामाह – **प्राणत्व इति** । हिरण्यगर्भस्यैव प्राणत्वावस्थायां तेजसि लयोऽस्त्येवेति मुख्यार्थापि श्रुतिरिति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** प्राणो न परमात्मनिलीयते । तस्याऽतदधीनत्वात् । न च वाच्यं 'चक्षुरादिवत्' इत्यादौ प्राणस्य तदधीनत्वमुक्तमिति । तस्यानन्याधीनत्वे बहुश्रुतिसद्भावात् । न च बहुबाधो युक्तः । वैपरीत्यस्यैवोचितत्वात् । 'महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति' इति लयाभावोक्तेश्च । अतः प्राणस्य लयाभावात् न कस्यापि मोक्ष इति ।

**सिद्धान्तस्तु** प्राणो हिरण्यगर्भः परमात्मनि लीयत एव । तस्य तदधीनत्वात् । न च तदनिर्णयः । निरवकाशबहुश्रुतिसद्भावात् । अनधीनत्वश्रुतीनां तु ईश्वरान्याधीनत्वाभावपरत्वेन सावकाशत्वात् । ननु 'प्राणस्तेजसि' इति श्रुतेः कथं परमात्मनि लय इति चेत् – न, तच्छ्रुते- स्तेजसो द्वारमात्रपरत्वेन तत्र लयपरत्वाभावात् । तदुक्तम् 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' इति । अतो विरिञ्चस्य लयसद्भावात् युक्तः सर्वज्ञानिनां मोक्ष इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**कस्यापीति** ॥ चतुर्मुखप्रवेशेनैव सर्वेषामुक्तेरिति भावः ॥ **किमिति** ॥ प्राणः परमात्मनि लीयते उत न लीयत इति चिन्ता । तदर्थं प्राणः परमात्मानधीन उताधीन इति ॥ **पूर्वोक्तमिति** ॥ एतस्माज्जायते प्राण इति भगवदुत्पन्नत्वं विशेषप्रमाणादर्शनं चेत्यर्थः । ननु पूर्वसूत्रे उत्तरा- दित्युत्तरवचनमुदाहरता प्राणस्य तेजोद्वारा परमात्मनि लयस्योपपादितप्रायत्वाद्व्यर्थमिदमधिकरण- मिति चेन्न । तद्वचनानुसारेण तेजस्येव लयाङ्गीकर्तव्यत्वात्तस्य च सिद्धान्तिनोऽनिष्टत्वात् । तेजसो द्वारमात्रत्वेन विष्णौ लय इत्यत्र विशेषप्रमाणाभावादित्याक्षेपेणास्य प्रवृत्तेरिति बोध्यम् । अत्र न्यायविवरणे सोऽध्यक्ष इत्यस्याप्येवमेवाशङ्कापरिहारश्चेति कार्यकरत्वमाढ्यतेत्युक्तावेव पूर्वोत्तरपक्ष- न्यायावेवानुसन्धेयावित्यतिदिश्य तर्हि तन्न्यायेन गतार्थत्वमित्याशङ्क्य श्रुतिबाहुल्यमेवाशङ्कायां परिहारे च विशेषहेतुरित्युक्तम् । अत एव सूत्रे तदुपगमादिभ्य इति श्रुतिबाहुल्यं सिद्धान्ते वक्ष्यत इत्याशयेन पूर्वन्यायेन तावत्पूर्वपक्षमाह ॥ **तस्येति** ॥ मन आदिसर्वकार्यपरत्वेनेश्वरतुल्यस्येत्यर्थः । चक्षुरादिवदित्यादिपदेन श्रेष्ठश्चेत्यादिर्गृह्यते ॥ **अनन्याधीनत्वेऽपीति** ॥ न प्राणः किंचिदाश्रित इति श्रुतिसद्भावादित्यर्थः ॥ **गत्यन्तरं चेति** ॥ चक्षुरादिवदित्यत्रैवानन्येश्वरता प्राणे तदन्येश्वर- वर्जनादित्यादिना गत्यन्तरमित्यर्थः । कुतो न वाच्यमित्यतो न्यायविवरणानुसारेण श्रुतिबाहुल्ये-

(वाक्यार्थमुक्तावली)
नाभ्यधिकाशङ्कामाह ॥ **अनन्येति** ॥ प्राणादिदमाविरासीत् प्राणो धत्ते । 'प्राणस्यैतद्वशे सर्वम् । यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेदित्यादि श्रुतिबाहुल्यसद्भावात्' इत्यर्थः ।

ननु सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च । 'सर्वकर्तापि सन्प्राणः परमाधारतः स्थितः । नान्यदतोऽस्ति द्रष्टृित्यादिवचनयुक्तयः' । आदिशब्दोक्ता इति तत्रैव सिद्धान्त-श्रुतिबाहुल्यनिरवकाशत्वयोः पूर्वपक्षश्रुतेस्सावकाशत्वेन दौर्बल्यस्य चोक्तत्वान्न पुनः शङ्कावकाश इत्यत आह ॥ **महान्तमिति** ॥ स्वयं कैरप्यनद्यमानः अनन्नं लोकविलक्षणमन्नमत्तीति प्राणस्य लयाभावोक्तेः ॥ **नैष प्राण उदेति** ॥ यत्प्राप्तिर्यत्परित्याग इत्यादिश्रुतिबाहुल्यस्य विप्रतिपन्ने लयाभावेऽपि साक्षाद्विद्यमानत्वादुत्पत्तिश्रुतीनां कृष्णस्य वासुदेवादिवदवतारमात्रपरत्वासम्भवादिति भावः । अनन्याधीनत्वेन लयशून्यत्वेन श्रुतिशतसमधिगतोऽपि हिरण्यगर्भः अध्यक्षे अधिपतौ स्वबिम्बभूते परमात्मनि लीयते । कुतः तदुपगमादिभ्यः तदुपगमस्तस्मिन् प्राणे देवानामुपगमः तस्य प्राणस्य अध्यक्षे उपगमः । आदिपदेन सर्वेषां प्राणानामनुप्राणनम् । तत्र लयश्च प्राणस्याध्यक्ष अनुप्राणनं तत्र लयो भोग उच्यते । तेन च तत्प्रतिपादकश्रुतिस्मृतयो गृह्यन्ते । तथा च तेभ्यः प्रमाणेभ्य इति भावेन व्याचष्टे ॥ **प्राण इति** ॥ सर्वे प्राणमुपगच्छन्तीति न्यायेनेति । प्राणः परमुपगच्छतीत्युत्तरवाक्याद्यथा सर्वे प्राणमित्यत्र परमात्मातिरिक्तसर्वप्राप्यत्वं तथा परमात्मातिरिक्त-देवापेक्षया स्वातन्त्र्यं वाक्यान्तरबलादिति भावः । भावबोधे तु प्राणमुपगच्छन्तीति न्यायेनेति इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्वतच्चेष्टकत्वादिना श्रुत्युक्तस्वातन्त्र्योपपत्तेरिति भाव इत्युक्तम् । न केवलं सर्वे प्राणमुपमगच्छन्ति प्राणमितरा देवता अप्युपगच्छन्तीत्यर्थः । अनुप्राणन्ति अनुसृत्य चेष्टां कुर्वन्ति । प्राणः परस्यामिति वाक्यान्तरम् ॥ **मुक्ताः सन्तः इति** ॥ मुक्तौ भोगार्थं प्रवेशक्रमस्य लये प्रवेशक्रमस्य च समनियतत्वान्न प्रकृतासाङ्गत्यम् । मुक्तौ लये यद्वदित्यनु-व्याख्यानोक्तेरिति भावः । नन्वेवमनन्याधीनत्वश्रुतीनां सावकाशत्वेऽप्यनद्यमानः नैषः प्राण उदेति नास्तमेतीत्यादिश्रुतीनामसावकाशत्वात् प्रकृतासिद्धिरित्यत आह ॥ **अनद्यमान इति** ॥ नन्वन्यैर-नद्यमानत्वमित्युक्तं प्राणस्तेजसीति तेजोऽभिधायाः श्रियस्तददनोक्तेरिति भावेनाशङ्क्य निषेधति ॥ **नन्विति** ॥ **तस्य साक्षादिति** ॥ विलीनो हि प्रकृतौ संसारमेति' इति श्रुतेर्मुक्तस्य ब्रह्मणः परमात्मन्येव लययोग्यत्वादित्यर्थः ॥ **प्राणत्वे त्विति** ॥ प्राणत्वावस्थायां तु तस्यैव चतुर्मुखत्वेन

(वाक्यार्थमुक्तावली)

पुनर्जननादस्त्येव तेजसि शरीरलय इति तद्विवक्षायां प्राणस्तेजसीति श्रुतिर्न मार्गमात्रतया व्याख्येयेति भावः । तथा च 'तेजोभिधां तु श्रियमप्य विष्णुमग्रे ततः पुत्र तयै(थै)व वायुः । प्राप्तः प्रसूतः पुनरेव विष्णुमित्यनुव्याख्यानविरोधेनेति भावः । तदुक्तं सुधायाम् । इदं च प्राणशब्दस्य वायुवाचित्वपक्षमादायोक्तम् । हिरण्यगर्भवाचित्वपक्षे भाष्योक्तं **द्रष्टव्यमिति** ॥

## तत्त्वसुबोधिनी

अत्रानन्तरसङ्गतिः प्रागेवोक्ता । **कस्यापीतीति** । चतुर्मुखप्रवेशेनैव सर्वेषां मुक्तेरिति भावः ॥ **पूर्वोक्तमेवेति** ॥ प्राणस्य भगवदुत्पन्नत्वं विशेषादर्शनं चेत्यर्थः । गत्यन्तरं **चोक्तमिति** ॥ 'अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम्' इत्यादिना चक्षुरादिवदित्यत्रोक्तमित्यर्थः । तर्हि प्राणस्य स्वातन्त्र्यप्रतिपादकश्रुतेः का गतिरित्यत आह ॥ **स्वातन्त्र्यश्रुतीनामिति** ॥ **इति न्यायेनेति** ॥ इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्ववत्तच्चेष्टकत्वादिना श्रुत्युक्तस्वातन्त्र्योपपत्तेरिति भावः । न ह्यनद्यमान इत्यस्य का गतिरित्यत आह ॥ **अनद्यमान इति चेति** ॥ **प्राणत्व इति** ॥ प्राणस्य चतुर्मुखत्वेन पुनः जननाद्विलीनो हि प्रकृतौ संसारमेतीति श्रुतेः ।

वायुर्याति शिवं चापि वायुस्तेजोभिधा श्रियम् ।
वायुमादाय सा देवी याति विष्णुं परात्परम् ॥

इत्यादि सत्तत्ववचनाच्चेति भावः ।

## वाक्यार्थविवरणम्

**पूर्वोक्तमिति** ॥ स प्राणमसृजत' इति प्राणस्य भगवदुत्पन्नत्वं विशेषादर्शनं चेत्यर्थः । ननु कथमत्र विशेषादर्शनम् । प्राणस्य भगवति लयस्यैव विशेषप्रमाणत्वादिति चेन्न । यथा मनसो भगवदुत्पन्नत्वेन श्रुतत्वेऽपि तस्य प्राणद्वारमङ्गीकृत्य अन्यत्र लयमुक्त्वा भगवदुत्पन्नत्वमप्रयोजकीकृतम् । एवमिहापीति हृदयम् ॥ **श्रुतिसद्भावादिति** ॥ 'न प्राणः किञ्चिदाश्रित' इति श्रुतिसद्भावादित्यर्थः ॥ **गत्यन्तरमिति** ॥

अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात् ।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ॥

(वाक्यार्थविवरणम्)

इत्येवं तस्यानन्येश्वरत्ववचनस्य गत्यन्तरमुक्तमित्यर्थः ॥ **इति न्यायेनेति** ॥ इत्युक्त-न्यायेनेत्यर्थः ॥ **सावकाशत्वादिति** ॥ रुद्रादिसकलजीवप्राप्यत्वे तच्चेष्टकत्वेन श्रुत्युक्तस्वातन्त्र्योपपत्तेरिति भावः । **अन्यैः** स्वाधर्मैः ॥

## वाक्यार्थमञ्जरी

**कस्यापीति** ॥ सर्वेषां प्राणद्वारा मोक्षनियमादिति भावः ॥ **पूर्वोक्तमेवेति** ॥ प्राणस्य भगवदुत्पन्नत्वं विशेषप्रमाणादर्शनं चेत्यर्थः ॥ **श्रुतिसद्भावादिति** ॥ न प्राणः किञ्चिदाश्रित इत्यादि-श्रुतिसद्भावादित्यर्थः ॥ **उक्तमिति** ॥ अनन्येश्वरता प्राणे तदन्येश्वरवर्जनमितीश्वरेतरानधीनत्वं तच्छ्रुत्यर्थ इति चक्षुरादिवदित्यत्रोक्तमित्यर्थः ॥ **महान्तमिति** ॥ अस्य प्राणस्य महिमानं महान्तमाहुः कुतः यद्यस्मात्स्वयमन्यैरनद्यमानः अभक्ष्यमाण एवान्नमत्तीत्यर्थः ॥ ॐ सोऽध्यक्षे तदुपगमादिभ्य ॐ ॥ स प्राणोऽध्यक्षे परमात्मनि विलीयते कुतः तदुपगमादिभ्यः तस्य परमात्मन उपगमः प्राप्तिः आदिपदेन तदनुप्राणनतत्प्रवेशादितत्प्रतिपादकश्रुतिसद्भावादित्यर्थः ॥ **इति न्यायेनेति** ॥ इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्ववत्तच्चेष्टकत्वादिना श्रुत्युक्तस्वातन्त्र्योपपत्तिरिति भावः । अन्यैः ईशात् ॥ **प्राणत्व इति** ॥ वायुत्वावस्थायामित्यर्थः । तस्य चतुर्मुखत्वेन पुनर्जननात् विलीनो हि प्रकृतौ संसारमेतीति श्रुतिरिति भावः ॥

॥ इति अध्यक्षाधिकरणम् ॥ ३ ॥

# ४. भूताधिकरणम्

## ॥ ॐ भूतेषु तच्छ्रुतेः ॐ ॥ ५ ॥

भूतेष्वन्येषां देवानां लयः । 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्यकल एव मध्ये स्थाता' इति बृहच्छ्रुतेः ॥

॥ इति भूताधिकरणम् ॥ ४ ॥

### तत्त्वप्रदीपिका

अत्रोक्तेभ्योऽन्येषां देवानां भूतेषु लयः ।

### तत्त्वप्रकाशिका

अत्र देवानां परमात्मप्राप्त्यर्थं समस्तभूतेषु लयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अग्नावेव सर्वलये प्रागुक्तन्यायबाधः स्यादतः समर्थनीयमेतत् । 'अग्नौ सर्वे देवा विलीयन्ते' इत्युक्तदेवा विषयः । किमेकस्मिन्नग्नावेव लीयन्ते उत भूतान्तरेऽपीति सन्देहः । श्रुतिरन्याधीनत्वं च सन्देहबीजम् । अग्नावेव सर्वदेवानां लय इति पूर्वः पक्षः । 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतिर्विपर्यये प्रमाणाभावाच्च । न चान्याधीनत्वादन्यत्र लयः । नियामकानां बाहुल्येन तस्यानिर्णायकत्वात् । अतोऽशेषदेवानामग्नावेव लयाद्यदुक्तमधमानामुत्तमेषु लय इति तदयुक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **भूतेष्विति** ॥ येऽत्र विशिष्योक्तेभ्योऽन्ये देवास्तेषां पञ्चस्वपि भूतेषु लयो न त्वेकस्मिन्नग्नावेव । 'भूतेषु देवा' इति श्रुतेरेवेत्यर्थः । 'अत्र भूतानि परे' इति न साक्षात् । आकाशोर्व्योर्बृहस्पतिद्वारा । भूतवायोः प्रवहस्येन्द्रद्वारा । अपां सोमद्वारेऽपि अतः सर्वेषामग्नौ लयाभावादुक्तं युक्तमिति सिद्धम् ॥

### गुर्वर्थदीपिका

येऽत्र विशिष्योक्तेभ्य इत्यस्याग्नावग्नय इति विशिष्योक्तेभ्य इत्यर्थः ।

## भावबोधः

अग्नावेव सर्वलये प्रागुक्तन्यायबाधः **स्यादिति** । पूर्वाधिकरणेषु वागादीनां मनआदिषु लये तन्नियामकतया ततोऽधमत्वं यद्धेतुतयोक्तम्, तन्न युक्तम् । अग्नौ सर्वे देवा विलीयन्त इत्यग्न्युत्त-मानामप्यग्नौ लयस्य श्रुतत्वेन व्यभिचारादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ केचिद्देवा अग्नौ केचिद्भूतान्तरेऽपीत्यर्थः । अत्र सर्वे देवाः किमेकस्मिन्नग्नावेव लीयन्ते उत सर्वेष्वपि भूतेषु लीयन्त इति चिन्ता । तदर्थं अग्नौ सर्वे देवा विलीयन्ते इति श्रुतिः किम-सङ्कुचितार्थोत सङ्कुचितार्थेति । तदर्थं सर्वेष्वपि भूतेषु देवानां लये विशेषप्रमाणं नास्त्युतास्तीति ॥ **अन्याधीनत्वमिति** ॥ इन्द्राश्विन्यादीनां वायुवरुणादिभूतान्तराधीनत्वमित्यर्थः ॥ **विपर्यय इति** ॥ भूतान्तरे लय इत्यर्थः ॥ **नियामकानां बाहुल्येनेति** ॥ अश्विनिप्रभृतिनियामकानां वायुवरुणादि-भूतानां च बाहुल्यमित्यर्थः ॥ **अत्र ये विशिष्योक्तेभ्य इति** ॥ 'वाङ्मनसि' इत्याद्यधिकरणत्रये शेषसुपर्णचतुर्मुखपरमात्मसु लीयमानत्वेनोक्तेभ्यो वारुणीसौपर्णीशेषसुपर्णचतुर्मुखेभ्य इत्यर्थः । तेषां विशिष्य लयोक्तेरुक्तसन्देहाविषयत्वादिति भावः । यद्यपि वारुण्यादिचतुर्णामिन्द्रादिवदस्ति वायौ देहलयः, तथापि न भूताभिमानित्वं तद्देहलयाधिकरणतावच्छेदकं, किं तु प्राणत्वमेव । इन्द्रादि-देहलयाधिकरणतावच्छेदकं तु, भूताभिमानित्वम् । 'वायाविन्द्र इति' तत्प्रतिपादकश्रुतौ इन्द्रादीनां ग्रहणाद्वारुण्यादीनामग्रहणादिति द्रष्टव्यम् । भूतेषु देवा इति श्रुतेरेवेति । तथा च विपर्यये प्रमाणाभावः सिद्ध इत्यर्थः । न चाग्नौ सर्वे देवा इति श्रुतिविरोधः, भूतेषु इति बहुवचनस्य निरवकाशत्वेन तच्छ्रुतेर्बाधितत्वात् । तस्याश्च सावकाशत्वस्य वक्ष्यमाणत्वात् । न च नियामक-बाहुल्येनानिर्णय इति वाच्यम् । वक्ष्यमाणश्रुत्यनुसारेण निर्णयोपपत्तेरिति भावः । तदिदमुक्तं श्रुतेरेवेति एवकारेण । 'आकाश उर्वी च गुरुं प्रविश्य' इत्यनुव्याख्यानं मनसि निधायाह– **आकाशोर्व्योः बृहस्पतिद्वारेति** ॥ ''शक्रं मरुद्गणाः'' इत्यनुव्याख्यानं मनसि निधायाह– **भूतवायोरिति** ॥ 'सोमस्तु वारीशयुतः' इत्यनुव्याख्यानं मनसि निधायाह– **अपां सोमद्वारेति** ॥ अस्मिन्नधिकरणे 'भूतेषु तच्छ्रुतेः' 'नैकस्मिन् दर्शयतो हि' इत्यनयोरधिकरणयोरनतिभिन्नार्थ-कत्वात् पृथङ्न्यायविवरणाभावः । अत एव न्यायविवरणे 'तन्मनः प्राण उत्तरात्' इत्यधिकरण-सम्बन्धित्वेन अनुव्याख्यानोक्तकार्यकारणतादार्ढ्यलक्षणपूर्वोत्तरपक्षयुक्त्योः 'सोऽध्यक्षे तदुपगमा-दिभ्यः' इत्यस्मिन्नधिकरणे 'सोऽध्यक्षे' इत्यस्याप्येवमेवाशङ्कापरिहारश्चेत्यतिदेशवदत्र युक्त्यतिदेशो न कृतः ।

## भावदीपः

**समस्तभूतेष्विति ॥** तत्र तत्र लये तत्तदधीनत्वस्यातन्त्रतया अग्नावेव लयद इति शङ्का-प्राप्ताविति भावः । तेन तदुपगमादिभ्य इत्यनेन प्रागुक्ततदधीनत्वहेतुना तत्र लय इत्युक्तस्याक्षेपात्पूर्वसङ्गतिरपि सूचिता । अत एवाह ॥ **प्रागुक्तन्यायबाध इति** ॥ अग्नौ **अग्न्यभिमानिनि ॥** भूतान्तरेऽपि भूतान्तराभिमानिन्यपीत्यर्थः ॥ **श्रुतिरिति** ॥ 'अग्नौ सर्वे देवा' इति श्रुतिः । अन्याधीनत्वं देवान्तराधीनत्वम् । विपर्यय इति देवान्तरे लय इत्यत्रेत्यर्थः । प्रागुक्तहेतुमेव प्रमाणत्वेनाशङ्क्य निराह ॥ **न चान्येति** ॥ **बाहुल्येनेति** ॥ साक्षात्स्वनियामकमारभ्याध्यक्षपर्यन्तं नियामकानां बहुत्वेनेत्यर्थः । भाष्यं व्याचष्टे ॥ **अत्रेति** ॥ वाङ्मनसीति श्रुतौ विशिष्योक्तेभ्यो वागादिभ्य इत्यर्थः । भूतेषु स्वजनकभूतमानिष्वित्यर्थः । नियामकबहुत्वेऽपि यतो यस्योद्भवस्तत्र तस्य लय इति निर्णयोपपत्तेरिति भावः । भूतानां साक्षात्परे लयाभावात् । आकाश उर्वीच गुरुं प्रविश्येति शक्रं मरुद्गणा इति सोमस्तु वारीशयुतोऽनिरुद्धमित्यनुभाष्योक्तरीत्याऽऽह ॥ **अत्रेति ॥** **अत इति** ॥ पञ्चस्वपि भूतेषु लयश्रवणादित्यर्थः ॥

## अभिनवचन्द्रिका

**प्रागुक्तन्यायबाधः स्यादिति** ॥ 'अग्नौ सर्वे देवा विलीयन्त' इति उत्तमानामपि अग्नौ लयश्रवणात् तत्र लये 'तदधीनत्वमेव प्रयोजकम्' इत्युक्तन्यायबाधप्रसङ्गात् समर्थनीयमेतदित्यर्थः । **किमिति** ॥ केचिदग्नौ, केचिद्भूतान्तरे, उत सर्वे अग्नावेव लीयन्त इति संदेह इत्यर्थः । **विपर्यय इति** ॥ भूतान्तरेऽपि लय इत्यर्थः । येऽत्र विशिष्योक्तेभ्य इति । वाङ्मनसि' इत्याद्यधिकरणत्रयोक्तेभ्यः वारुणीशेषसौपर्णीसुपर्णचतुर्मुखेभ्योऽन्ये ये देवाः तेषां यथायोगं पञ्चस्वपि भूतेषु लयः, न तु अग्नावेवेति नियम इत्यर्थः । यद्यपि वारुण्यादिचतुर्णाम् इन्द्रादिवदस्ति वायौ देहलय इति, उक्तेभ्योऽन्येषां भूतेषु लय इति न वक्तव्यम्, तथापि न भूताभिमानित्वं तद्देहलयप्रयोजकं, किन्तु प्राणत्वमेव । भूतेषु लयप्रतिपादक 'वरुणोश्विनौ' इत्यादिश्रुतौ 'वायाविन्द्र' इति विशिष्योक्तः । अन्यथा वायाविन्द्रादय इत्यवक्ष्यत् इति भावेन विशिष्योक्तेभ्योऽन्य इत्युक्तम् ।

**पूर्वपक्षस्तु** अग्नावेव सर्वेषां देवानां लयो न तु ऋभूणां पृथिव्याम्, अग्नीनामग्नौ, अश्विनोर्वरुणे, वायाविन्द्रस्य, साध्यानामाकाश इति सिद्धान्त्यभिमतो विभागेन भूतेषु लयः । 'अग्नौ सर्वे देवा विलीयन्त' इति श्रुतेः । विपर्यये च प्रमाणाभावात् । अतोऽशेषदेवानामग्नौ लयादुक्तमयुक्तमिति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु** नाऽग्नावेव सर्वेषां लयः विशिष्योक्तेभ्योऽन्येषां योग्यतानुसारेण तत्तद्भूतेषु लयः । 'भूतेषु देवा विलीयन्ते' इति श्रुतेः । न च 'अग्नौ सर्वे देवा' इति श्रुतिविरोधः । 'भूतेषु' इति निरवकाशबहुवचनश्रवणबलेन पूर्वश्रुतेः सङ्कोचनीयत्वात् । अतः सर्वेषामग्नौ लयाभावादुक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रागुक्तन्यायबाध इति ।** योऽधमस्स उत्तमे लीयत इति न्यायबाधः । अधमेऽप्युत्तमलयप्राप्तेरित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र सर्वे देवाः किमग्नावेव लीयन्त उत सर्वेष्विति चिन्ता । तदर्थमग्नौ सर्वे देवा विलीयन्त इति श्रुतेः सङ्कोचकल्पकं विशेषप्रमाणं नास्त्युतास्तीति ॥ **अन्याधीनत्वमिति** ॥ इन्द्रादीनां वायुवरुणरूपभूतान्तराधीनत्वमित्यर्थः । नन्वग्नौ सर्वे देवा इति सर्वशब्दस्य सङ्कोचः किं न स्यादसंकुचितार्थत्वं कुत इत्यतस्तच्छ्रुतेरिति सूत्रनिरस्यमर्थक्लृप्तिरित्युक्तन्यायं प्रदर्शयितुमाह ॥ **विपर्यय इति** ॥ केषाञ्चित् भूतान्तरे लय इत्यत्र विशेषप्रमाणाभावेन निर्बाधयाऽनयैव श्रुत्या सर्वदेवानामग्नौ लय इत्यसङ्कुचितार्थक्लृप्त्युपपत्तेरिति भावः । युक्तिरूपं विपर्ययबोधकं प्रमाणमाशङ्क्यापाकरोति ॥ **न चेति** ॥ अश्विप्रभृतीनां वरुणाद्यधीनत्वादित्यर्थः ॥ **नियामकानामिति** ॥ अश्विप्रभृतिनियामकानां वायुवरुणादिभूतानां बाहुल्येनेत्यर्थः । अत एव च सर्वाणीति सूत्रात्सर्वाणीत्यनुवर्तते । तथा च देवा इति लभ्यते । पूर्वविरोधपरिहाराय पूर्वोक्तेभ्योऽन्य इत्युपस्कर्तव्यम् । तथा च वाङ्मनसीत्याद्यधिकरणत्रये शेषसुपर्णचतुर्मुखपरमात्मसु लीयमानत्वेनोक्तेभ्यो वारुणीसुपर्णीशेषसुपर्णचतुर्मुखेभ्योऽन्ये देवाः भूतेषु भूताभिमानिषु लीयन्ते । न त्वेकस्मिन्नग्नावेव । कुतः तच्छ्रुतेः भूतेषु देवानां लयस्य श्रवणादिति भावेन व्याचष्टे ॥ **येऽत्रेति** ॥ अनेन समानलोप इत्युक्तसिद्धान्तन्यायोऽपि भूतेषु देवा इति मानसाहित्यात्पञ्चस्वपि भूतेषु लोपो लयः न त्वग्नाविति सूत्रारूढो भवति । यद्यपि न्यायविवरणे-नैतौ पूर्वोत्तरपक्षन्यायावेतदधिकरणत्वेन योजितौ तथापि सम्बन्धदीपिकायां शङ्कराचार्यैरे-तदधिकरणेऽप्येतयोर्न्याययोर्व्याख्यातत्वादत्राप्यनुसन्धेयौ । तर्हि सोऽध्यक्ष इत्यत्राप्येवमेव शङ्कापरिहारश्चेति न्यायविवरणे पूर्वातिदेशवदत्रोत्तरानुकर्षो व्याख्येयः । प्रथमातिक्रमे कारणाभावश्चेति चेन्न । अस्याधिकरणस्य सामान्यतः भूतेषु देवा विलीयन्त इति सामान्यप्रमाणप्रदर्शकतया

(वाक्यार्थमुक्तावली)

प्रष्टव्यत्वादुत्तरस्याभ्यधिकाशङ्कायां विशेषप्रमाणोपन्यासेन तत्परिहाराय प्रवृत्तत्वात्तस्य प्राधान्यविवक्षायां तद्भेदाधिकरणत्वविजिज्ञापयिषया च न्यायविवरणे तत्रैव न्यायस्य विवृतत्वेऽप्यत्र तदनुकर्षाविरोधात् । स्पष्टं चैतत्सर्वं शङ्कराचार्यकृतसम्बन्धदीपिकायाम् । आकाश उर्वीं च गुरुं प्रविश्य । शक्रं मरुद्गणः । सोमस्तु वारीशयुतोऽनिरुद्धमित्यनुव्याख्यानवचनानि मनसि निधायाह ॥ **आकाशोर्व्योरित्यादिना ॥**

## तत्त्वसुबोधिनी

**अग्नावेव सर्वलय इति ॥** पूर्वाधिकरणेषु वागादीनां मन आदिषु लये तन्नियम्य न्यायतोऽधमत्वं यद्धेतुतयोक्तं तन्न युक्तम् । अग्नौ सर्वे देवा विलीयन्ते इति अग्न्युत्तमानामप्यग्नौ लयस्य श्रुतत्वेन व्यभिचारादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **किमिति ॥** केचित् देवाः अग्नौ केचित् भूतान्तरेऽपीत्यर्थः । **अन्याधीनत्वमिति ॥** इन्द्राश्विन्यादीनां वायुवरुणरूपभूतान्तराधीनत्वमित्यर्थः ॥ **विपर्यय इति ॥** भूतान्तरे लय इत्यर्थः ॥ **नियामकानां बाहुल्येनेति ॥** अश्विनिप्रभृतिनियामकानां वायुवरुणादिभूतानां च बाहुल्यमित्यर्थः । अत्र विशिष्योक्तेभ्यः वारुणीसौपर्णीशेषसुपर्णचतुर्मुखेभ्य इत्यर्थः । तेषां विशिष्यलयोक्तेरुक्तसंदेहाविषयत्वादिति भावः । तथापि न भूताभिमानित्वं तद्देहलयाधिकरणतावच्छेदकं किं तु प्राणत्वमेव । इन्द्रादिदेहलयाधिकरणतावच्छेदकं तु भूताभिमानित्वम् । वायाविति तत्प्रतिपादकश्रुतौ इन्द्रियकानां ग्रहणात् वारुण्यादीनामग्रहणादिति द्रष्टव्यम् ॥ **भूतेषु देवा इति ॥** तथा च विपर्यये प्रमाणाभावोऽसिद्ध इत्यर्थः । न चाग्नौ सर्वे देवा इति श्रुतिविरोधः । भूतेष्विति बहुवचनस्य निरवकाशत्वेन श्रुतिबाधितत्वात् । वक्ष्यमाणश्रुत्यनुसारेण निर्णयोपपत्या नियामकबाहुल्येनातिनिर्णयोऽपि चेति भावः । आकाशत्वेन आकाश उर्वीं च गुरुं प्रविश्य इत्यनुव्याख्यानं मनसि निधायाह ॥ **आकाशोर्व्योरिति ॥ भूतवाय्वोरिति ॥** शक्रं मरुद्गणा इत्यन्यत्रोक्तेरिति भावः ॥

## वाक्यार्थविवरणम्

**प्रागुक्तेति ॥** अधमानामुत्तमेषु लयो नोत्तमानामधमेष्विति पूर्वोक्तन्यायबाधः स्यादित्यर्थः । 'आकाश उर्वीं च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम्' इत्युक्तं मनसि निधायाह ॥

(वाक्यार्थविवरणम्)

**आकाशोर्व्योरिति** ॥ विघ्नेशभूदेव्योरित्यर्थः ॥ **बृहस्पतिद्वारेति** ॥ बृहस्पतिशक्रसौपर्णी-सुपर्णसरस्वतीद्वारा परे लय इत्यर्थः । शक्रं मरुद्गणा इत्युक्तिं हृदि निधायाह ॥ **भूतवाय्वोरिति** ॥ **इन्द्रद्वारेति** ॥ इन्द्रसौपर्णीसुपर्णवाणीचतुर्मुखद्वारा परे लय इत्यर्थः ॥ **अपां सोमद्वारेति** ॥ वरुणस्य सोमानिरुद्धकामवारुणीशेषवाणीचतुर्मुखद्वारा परे लय इत्यर्थः ।

## वाक्यार्थमञ्जरी

**प्रागुक्तेति** ॥ अत एव च सर्वाण्यनु इत्युक्तस्याधमानामुत्तमेषु लयस्य बाध इत्यर्थः ॥ **अन्याधीनत्वमिति** ॥ इन्द्राश्विन्यादीनां वायुवरुणरूपभूतान्तराधीनत्वमित्यर्थः ॥ **विपर्यय इति** ॥ भूतान्तरलय इत्यर्थः । **नियामकबाहुल्येनेति** ॥ अश्विनीप्रभृतिनियामकानां वायुवरुणरूपभूतानां बाहुल्येनेत्यर्थः ॥ ॐ भूतेषु तच्छ्रुतेः ॐ ॥ प्रागुक्तेभ्योऽन्ये देवा भूतेषु पञ्चसु देहाभिमानिषु लीयन्ते न त्वेकस्मिन्नग्नौ कुतः तच्छ्रुतेः तस्य भूतेषु देवलयस्य भूतेषु देवा इति श्रवणादित्यर्थः ॥ **अत्र विशेष्योक्तेभ्य इति** ॥ वाङ्मनसीत्याद्यधिकरणत्रये शेषसुपर्णचतुर्मुखपरमात्मसु क्रमेण लीयमानत्वेनोक्तेभ्यो वारुणीसौपर्णीशेषसुपर्णचतुर्मुखेभ्य इत्यर्थः । तेषां विशिष्यलयोक्तेरुक्त-सन्देहाविषयत्वादिति भावः ॥

॥ इति भूताधिकरणम् ॥ ४ ॥

## ५. अनेकलयाधिकरणम्

### ॐ नैकस्मिन् दर्शयतो हि ॐ ॥ ६ ॥

नैकस्मिन् भूते सर्वेषां देवानां लयः। 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते। मृत्यवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्त' इति महोपनिषच्चतुर्वेद-शिखा च दर्शयतः। अतोऽग्नौ देवा विलीयन्त इति तत्र निर्दिष्टानामेव ॥

॥ इति अनेकलयाधिकरणम् ॥ ५ ॥

### तत्त्वप्रदीपिका

नैकस्मिन् भूते सर्वेषां देवानां लय इत्यस्य भाष्यस्यार्थ उच्यते। न तावदेकैकस्मिन् भूते सर्वेषां देवानां लयः। विरोधात्। न च कदाचिदेकस्मिन् कदाचिदन्यस्मिन्नित्यविरोधः। मुक्तौ प्रवेशप्रकारस्य श्रुतिषु नियतत्वात् ॥

'उक्तश्च विम्बप्रतिविम्बभावः पिङ्गश्रुतावुक्तलयानुसारतः।
बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा' इति च ॥

नाप्येकस्मिन् भूते देवानां लयः। तस्यान्यस्मिंस्तस्यान्यस्मिन्नित्यतो भूतेष्वित्युक्तिः। प्रमाणाभावात्। किन्तु केषाञ्चिद्देवानामेकस्मिन्नन्येषामन्यस्मिन्नित्येवं प्रकारेणाङ्गीकार्यः। अग्नयोऽग्निपुत्राः, ''वायाविन्द्रः सोम आदित्यो बृहस्पतिरिति''ति बृहस्पत्यादयः सर्वेऽपि देवा यथानुकूलं वायौ विलीयन्त इत्यर्थः। इतिशब्दस्याद्यार्थत्वात् ॥

'आकाश उर्वी च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम्।
सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ तु वारुणीम् ॥
सा शेषदेवं स गिरं च सैव वायुं विशत्यञ्ज इतीह निर्णयः।
सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम्।
तया सुपर्णं सह तेन वार्णी ब्रह्माणमेतद्गत एव याति' इति च ॥

(तत्त्वप्रदीपिका)

भूतवाय्वादयो मरुत इन्द्रादिद्वारेण मारुते ।
प्रयाति धर्मं निर्ऋतिस्तु शक्रं मरुद्गणाः पारपदास्तथैव ।
सर्वेऽनिरुद्धं पृतनाधिपाद्याः तुरश्रुतिर्हीत्थमियं विमुक्तिरि'ति च ॥

न चेदं स्वमनीषितम् । 'उक्तं समस्तं परमश्रुतौ हि' इति ह्याह । अत एव च सर्वाण्यन्विति यथाश्रुत्यनुकूलं यथाबिम्बप्रतिबिम्बभावानुकूलं च सर्वाणि दैवानि विलीयन्त इति यः प्रतिज्ञातो लयः सः प्रणिगदितः प्राचुर्येणानुव्याख्यानिकानां श्लोकानां कियताञ्चिदुदाहरणेन । तदुपजीवकत्वेऽप्यस्य ग्रन्थान्तरत्वात् न कृत्स्नोदाहरणम् । ग्रन्थबाहुल्यभयाच्च । अतोऽग्नौ देवा विलीयन्त इति तत्र निर्दिष्टानामेव । अयमर्थः । यत एते एवं दर्शयतः, अतो नैतदाशङ्कनीयं, 'अग्नौ सर्वे देवा विलीयन्त' इति वचनादेकस्मिन्नेवाग्निदेवे सर्वदेवानां लय इति । अनयोरुक्तानामग्निपुत्राणामेव तत्र लयः । विशेषश्रुतिबाहुल्यात् । सर्वशब्दस्य तदविरोधेन कृत्स्नाग्निपुत्रविषयत्वोपपत्तेः ॥

## तत्त्वप्रकाशिका

अत्र पुनर्देवानां मुक्त्यर्थं सर्वभूतेषु लयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोत्तमानामधमेषु लयप्रसङ्गात्समर्थनीयमेतत् । प्रकृतदेवा एवात्र विषयः । किं सर्वभूतेषु लीयन्ते उताग्नावेवेति सन्देहः । उक्तमेव सन्देहबीजम् । अग्नावेव सर्वेषां लय इति पूर्वः पक्षः । 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतेः । न च 'भूतेषु देवा विलीयन्ते' इति श्रुतिविरोधः । एकस्मिन्नग्नावेव सर्वदेवलयाङ्गीकारेऽपि तदुपपत्तेः । अस्ति तावद् भूतानामुत्पत्तिक्रमवैपरीत्येन लयः । उत्पत्तिश्चाकाशादिक्रमेण 'आत्मन आकाशः' इति श्रुतेः । मुक्तिश्च प्रलयविशेषः । तथा चाग्नावेव सर्वदेवानां लयाङ्गीकारेऽपि भूतेष्वित्युपपद्यते । अग्नेर्वायौ वायोराकाशे विलयात् । न च वाच्यं मुख्यार्थः किं न स्यादिति । 'अग्नौ सर्वे देवा विलीयन्ते' इत्येतच्छ्रुत्यन्यथानुपपत्तेर्निरवकाशत्वात् । न चात्र विशेषप्रमाणमस्ति । अतोऽग्नावेव सर्वदेवानां विलयादुक्तव्यवस्थानुपपत्तिरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **नैकस्मिन्निति** ॥ नैकस्मिन्नग्नावेव भूते सर्वदेवानां लयो वाच्यः । 'पृथिव्यामृभव' इत्यादिश्रुतिभ्यां प्रत्येकं भूतेषु देवतालयस्योक्तत्वात् । येषां देवानां यस्मिन्भूते लय उच्यते तत्तद्देवानां तत्तद्भूतोद्भूतत्वाच्च । न चाश्विप्रभृतीनां वरुणाद्यनुत्पन्नत्वान्न तत्र लयोपपत्तिरिति वाच्यम् । तेषां तदुत्पन्नत्वाभावे विशेषवचनाभावे च स्वसमानावादिदेवतालयस्थाने वरुणादौ लयोपपत्तेः । अतो यदन्यथाव्याख्यानं तदयुक्तमिति भावः । अत्र वायुमारुतपदाभ्यां हिरण्यगर्भ उच्यते । तत्रेन्द्रस्य लय उक्तक्रमेण सोमस्य

(तत्त्वप्रकाशिका)

**चानिरुद्धकामवारुणीशेषवाणीद्वारेण सूर्यस्य बृहस्पतिशक्रसौपर्णीसुपर्णवाणीद्वारेण मरुतामपीन्द्रादिद्वारा भूताभिमानिनां चान्योन्यलयाभावादन्यथाव्याख्यानमयुक्तम् । न चोत्पत्तिश्रुतिविरोधः । अत्र जडानां मुख्योत्पत्त्यभिधानात् । देवतानां त्वनुसर्गप्रतिपादनात् । ननु तर्हि 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुतेः का गतिरित्यत आह ॥ अत इति ॥ यत एवं पृथक् प्रत्येकं भूतेषु लयः सिद्धोऽतो 'अग्नौ सर्वे देवा विलीयन्ते' इति श्रुत्योदाहृतश्रुतावग्नौ विलीयमानत्वेन निर्दिष्टानामेव लयोऽभिधीयत इत्यङ्गीकार्यमिति भावः । उपलक्षणमेतत् । प्रायेणाधमानां सर्वेषां भूतान्तराप्रवेशिनां तत्रैव लयः । अतोऽग्नावेव सर्वेषां लयाभावादुक्तव्यवस्था युक्तेति सिद्धम् ॥**

## गुर्वर्थदीपिका

अग्नावेव सर्वदेवानां लयाङ्गीकारेऽपीत्यत्र 'देवाः सर्वेऽग्नावेव लीयन्ते' स त्वग्निः स्वाभिमन्यमानजडतेजोनाशक्रमाय वायुभूते आकाशभूते प्रविश्य गच्छतीत्यर्थोपपत्तेरिति शङ्कितुर्भावः । स्वसमानाबादिदेवतालयस्थान इत्यत्र 'वरुण आप' इति श्रुत्युक्तानामश्विनीसमानतयोक्तशतस्थादभिमानिदेवतानां वरुणे लयोक्त्या वरुणादनुत्पन्नयोरप्यश्विनोस्तत्र लयसम्भवादित्यर्थः । 'विष्वक्सेनोऽश्विनौ तौ गणपतिधनपावुक्तशेषाः शतस्था देवाश्च' इति प्राचां वचनाच्छतस्थदेवानामश्विनोश्च साम्यादिति भावः । देवानां त्वनुसर्गेत्यत्रानुसर्गोऽवान्तरसृष्टिः । यद्यपि 'भूतेषु देवा विलीयन्त' इति पूर्वाधिकरणेऽपि देवानां भूतेषु लयस्समर्थितः तथाऽप्यग्नौ सर्वदेवानां लयेऽपि तस्य वायौ वायोराकाश इत्यनेनाकारेण बहुवचनान्तभूतश्रुतेरपि सावकाशत्वात्पुनः 'अग्नौ सर्वे देवा लीयन्त' इत्यभ्यधिकाशङ्कयाऽधिकरणान्तरारम्भ इति ज्ञेयम् ॥

## भावबोधः

**अत्र पुनरिति ॥** यदुक्तं पूर्वाधिकरणेऽग्नावेव सर्वदेवलयाङ्गीकारे भूतेषु इति बहुवचनविरोध इति तदयुक्तम् । अग्नावेव सर्वदेवलयाङ्गीकारेऽपि अग्नेः वायौ वायोश्चाकाशे लयेऽग्नौ लीनानां भूतेषु लयसम्भवेन बहुवचनोपपत्तिरिति आक्षेपोत्थानादन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र देवाः किमग्नावेव लीयन्ते उत पञ्चस्वपि भूतेष्विति चिन्ता । तदर्थमग्नावेव सर्वदेवलयाङ्गीकारे बाधकत्वेनोक्तं भूतेषु इति बहुवचनं किममुख्यार्थमुत मुख्यार्थमिति चिन्ता । तदर्थं अग्नौ सर्वे देवाः इति

(भावबोधः)

श्रुतिः निरवकाशेत सावकाशेति । तदर्थं पञ्चस्वपि भूतेषु देवानां प्रत्येके लये विशेषप्रमाणं नास्त्युतास्तीति । भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चैकस्मिन् भूते सर्वलयोऽर्थतः क्लृप्त इति पूर्वपक्षयुक्तिप्रदर्शकन्यायविवरणस्याकाङ्क्षाक्रमेण अन्वयप्रदर्शनपूर्वकमभिप्रायमाह– **एकस्मिन्नग्नावेवेत्यादिना ।** तत्र एकस्मिन्नग्नौ इत्यनेन एकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः क्लृप्त इत्यंशस्य, अस्ति तावद्भूतानामित्यनेन भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेरित्यंशस्य, मुक्तिश्च प्रलयविशेष इत्यनेन मुक्तिप्रलययोर्विशेषाभावाच्चेत्यंशस्य व्याख्यानं कृतम् ॥

ननु प्रलयकालीनभूतलयस्य उत्पत्तिक्रमविपरीतक्रमकत्वेऽपि मुक्तिकालीनदेवतालय प्रतिपादकश्रुतिगतस्य भूतेषु इति बहुवचनस्योपपत्तिः कथमित्यत आह– **मुक्तिश्च प्रलयविशेष इति ॥ मुख्यार्थ इति ॥** भूतेषु इति श्रुतेर्देवानां साक्षादेव भूतेषु लय इत्येवंरूपमुख्यार्थ इत्यर्थः । दर्शयतो हि इति सूत्रादिनिवर्तनीयपूर्वपक्षयुक्तिमाह– **न चात्र विशेषप्रमाणमस्तीति ॥ पृथिव्यामृभवः इत्यादिश्रुतिभ्यामिति ॥** अनेन विशेषश्रुतेश्चेति न्यायविवरणांशोऽपि व्याख्यातो भवति । तत्तद्भूतोद्भवत्वात् तत्तद्देवतानामिति न्यायविवरणं व्याचष्टे– **येषां देवानामिति ॥** तत्समानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न चाश्विप्रभृतीनामिति ।** तदनुत्पन्नत्वेऽपि स्वसमानदेवतालयस्थानत्वेन यदि तत्र देवतानां लयस्तर्हि सौपर्ण्यादीनां स्वसमानवारुण्यादिलयस्थाने शेषादौ लयः स्यादित्यत उक्तम्– **विशेषवचनाभावे चेति ॥** सौपर्ण्यादीनां विशिष्यलयस्योक्तत्वादिति भावः । अबादिदेवतेत्यत्र वरुणव्यतिरिक्तानां ग्रहणम् ॥ **अन्यथाव्याख्यानमिति ॥** भूतेषु देवाः इति श्रुतेरग्नेर्वायावित्यादिना कृतमित्यर्थः ॥ **उक्तक्रमेणेति** ॥ इन्द्र उमायामित्युक्तक्रमेणेत्यर्थः ।

सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ च वारुणीम् ।
सा शेषदेवं सगिरं च सैव वायुम्.... .... ... ॥

इत्यनुव्याख्यानं मनसि निधायाह– **सोमस्य चेति ॥**

सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम् ।
तया सुपर्णं सह तेन वार्णी ब्रह्माणमेतद्गत एव याति ॥

(भावबोधः)

इत्यनुव्याख्यानं हृदि कृत्वाऽऽह– **सूर्यस्येति ॥** शक्रं मरुद्गणाः इत्यनुव्याख्यानं हृदि कृत्वाऽऽह– **मरुतामपीति ॥** आदिपदेन सौपर्णीसुपर्णवाण्यौ ग्राह्याः । भूताभिमानिनां चान्योन्यं लयाभावादिति । तेजोवाय्वभिमानिनाग्निप्रवहादीनां वाय्वाकाशाभिमानिनोः प्रवहादिविनायकयोर्लयाभावादित्यर्थः । पूर्वमन्यथाव्याख्यानं विशेषश्रुतिबलादिहेतुना निराकृतम् । अधुना अन्योन्यलयाभावरूपहेतुनेति भावः । अत एव अन्योन्यलयाभावाच्चेति चशब्दसम्बन्धः । उत्पत्तिश्रुतिविरोध इति ॥ 'आकाशाद्वायुः वायोरग्निः' इति श्रुतिविरोध इत्यर्थः । विपर्ययेणोत्क्रमोऽत उपपद्यते च इत्यत्र सर्वदेवानामुत्पत्तिक्रमवैपरीत्येन लयस्य निर्णीतत्वादिति भावः । ननु 'भूतं भूताभिमानी च' इत्यनुव्याख्याने आकाशादिपदैर्देवानामपि गृहीतत्वात् कथमेतदित्यत आह– **अनुसर्गप्रतिपादनादिति ॥** आदिसर्गे वैपरीत्येनैव देवादीनां देहलय इति भावः । अग्नौ सर्वे देवाः इति श्रुतिगतसर्वशब्दस्य 'विशन्ति शिष्टा अपि हव्यवाहम्' इत्यनुव्याख्यानानुसारेण विषयान्तरमाह– **उपलक्षणमेतदिति ॥**

## भावदीपः

**पुनर्देवानामिति ॥** एतेन प्रागुक्तप्रमेयस्यैतत्साधकश्रुत्यन्यथोपपत्त्याऽसिद्धिशङ्कायां विशेषवचनबलेन समर्थनात्पूर्वसङ्गतिरपि सूचिता । प्राचीनरीत्यास्यापूर्वेणैकाधिकरण्येऽपि न्यायभेदेनाधिकरणभेदोऽत्राश्रितः ॥ **भूतेषु लय इति ॥** सामान्यतोऽनुक्तौ साक्षात्परम्परारूपविशेषचिन्तानवसरात् । अत एव प्राङ् न न्यायविवरणयोजना कृता ॥ **अधमेषु लय इति ॥** तथा च प्राचीनाधिकरणेषूक्तस्वोत्तरेषु लयोऽयुक्तः स्यादिति भावः ॥ **उक्तमेवेति ॥** श्रुतिरन्याधीनत्वं चेत्युक्तमेवेत्यर्थः । विशेषशङ्कोत्थापनाय प्रागुक्तहेतुमाह ॥ **इति श्रुतेरिति ॥** पूर्वसिद्धान्तीयश्रुतिमाशङ्क्य तदन्यथासिद्धिरूपविशेषशङ्कामाह ॥ **न चेत्यादिना ॥** कथं तदुपपत्तिरित्यतः भूतानामुत्पत्तिवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चेत्यन्यत्रोक्तं विवृण्वन् अन्यथोपपत्तिं व्यनक्ति ॥ **अस्ति तावदिति ॥** विपर्ययेण तु क्रमोऽत इत्यत्र द्वितीये तथोक्तेरिति भावः ॥ **तथा चेति ॥** उत्पत्तिक्रमवैपरीत्येन लये सति मुक्तिलययोरविशेषे च सतीत्यर्थः । कथमित्यतो व्यनक्ति ॥ **अग्नेरिति ॥** एकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः क्लृप्त इति न्यायविवरणेऽर्थत इत्यस्यार्थापत्तितः अग्नौ सर्वे देवा इति श्रुत्यन्यथानुपपत्तित इत्यर्थमुपेत्य

(भावदीपः)
शङ्कानिवर्तकतया तद् व्यनक्ति ॥ **न चेति** ॥ मुख्यार्थः साक्षाल्लयरूपः ॥ **निरवकाशत्वादिति** ॥ अग्नितोऽन्यत्र लयरूपावकाशविरहादित्यर्थः ॥ **न चात्रेति** ॥ साक्षादेवाग्नौ लय इत्यर्थः । येनार्थापत्तिर्बाधिता स्यादिति भावः ॥ **अत इति** ॥ अग्नौ सर्व इति श्रुतेर्निरवकाशत्वाद्भूतेष्विति श्रुतेश्च सावकाशत्वादित्यर्थः ॥ **उक्तेति** ॥ स्वस्वोत्तमेषु लय इति व्यवस्थेत्यर्थः । भाष्यं व्याचष्ट ॥ **नैकस्मिन्निति** ॥ भूते **भूतमानिनि** ।

नन्वेवं स्वस्वजनके लयस्यासिद्धिप्रसङ्ग इत्यतस्तद्भूतोद्भवत्वात्तत्तद्देवानामित्यन्यत्रोक्तहेतुं चाह ॥ **येषामिति** ॥ तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरित्यन्यत्रोक्त-युक्तिं हेत्वसिद्धिनिरासकतया योजयति ॥ **न चेत्यादिना** ॥ इन्द्रादावप्येवं स्यादित्यत आह ॥ **विशेषेति** ॥ इन्द्र उमायामुमा रुद्र इत्यादिविशेषवचनाभाव इत्यर्थः ॥ **अत इति** ॥ विशेष-प्रमाणाभावादित्यर्थः ॥ **अन्यथाव्याख्यानमिति** ॥ अग्नेर्वायौ वायोराकाशे इत्युक्तं भूतेष्विति श्रुतेरन्यथाव्याख्यानमित्यर्थः । सर्ववेदान्तनयन्यायेन श्रुत्यन्तरोक्तक्रमोऽत्र ग्राह्य इति भावेनाह ॥ **इन्द्रस्येति** ॥ इन्द्र उमायामित्यादिश्रुत्युक्तक्रमेणेत्यर्थः । सोमस्तु वारीशयुत इत्याद्यनुभाष्य-दिशाऽऽह ॥ **सोमस्येत्यादि** ॥ इन्द्रादीत्यादिपदेन प्रागुक्तसौपर्णीसुपर्णवाणीग्रहः । एवं देवा-नामन्योन्यद्वारा लयोक्तौ प्रकृते किमायातमित्यतो भावमाह ॥ **भूतेति** ॥ **अन्यथेति** ॥ अग्नेर्वायावित्यादिनोक्तेत्यर्थः । अस्ति तावदित्यादिनोक्तचोद्यमनूद्य निराह ॥ **न चोत्पत्तीति** ॥ **जडानामिति** ॥ तेषां च वारिणा हृतगन्धा भूः सलिलत्वाय कल्पत इत्याद्येकादशस्कन्धो-क्त्योत्पत्तिक्रमवैपरीत्येनैव लयोपगमादिति भावः । वियत्पादे आकाशादेरभिमानिदेवतापरत्व-मप्यङ्गीकृतत्वादाह ॥ **देवानां त्विति** ॥ आदिसर्गोऽत्र नोच्यते किंत्वनुसर्गः । आदिसृष्टौ तु येन क्रमेणोत्पत्तिस्तद्वैपरीत्यक्रमेणैव देवानां लयोऽगीक्रियत एव । अत आत्मन आकाश इति श्रौत-क्रमवैपरीत्येन लयाङ्गीकारेऽपि न दोष इति भावः ॥ **सिद्ध इति** ॥ उदाहृतश्रुतिभ्यामित्यर्थः । तत्रेत्यस्यार्थः उदाहृतश्रुताविति । अग्नावग्नय इति श्रुतौ निर्दिष्टानां कृत्स्नाग्निपुत्राणामेवेत्यर्थः ॥ **एतदिति** ॥ तत्र निर्दिष्टानामेवेत्यर्थः । विशंति शिष्टा अपि हव्यवाहम्' इत्यनुभाष्योक्त्याऽग्नि-पुत्रेभ्योऽन्येषामपि सर्वे देवा इत्यत्र सर्वशब्देन ग्राह्यत्वादिति भावः ॥ **अत इति** ॥ प्रत्येकं भूतेषु लयकथनादित्यर्थः ॥ **उक्तेति** ॥ स्वस्वनियामके लय इत्युक्तव्यवस्थेत्यर्थः ।

## अभिनवचन्द्रिका

**अत्र पुनरिति** ।। भवेदेवाग्नावेव सर्वदेवानां लयः । अग्नेर्भूतवायौ, भूतवायोश्चाकाशे लयाङ्गीकारात् इत्यभ्यधिकाशङ्कापरिहाराय पुनः समर्थ्यत इति भावः । न चाऽश्विप्रभृतीनामिति ।। 'वरुणेऽश्विनौ' इत्युक्तावपि नाऽश्विप्रभृतीनां वरुणादौ लयः । तेषां वरुणाद्युत्पन्नत्वाभावात् । किन्तु वरुणादिशब्द एव तदुत्पत्तिस्थानस्य लक्षक इति न वाच्यमित्यर्थः ।। **तेषामिति** ।। अश्विप्रभृतीनां वरुणाद्युत्पन्नत्वाभावेऽपि वरुणादीनां स्वसमानाबादिदेवतालयस्थानत्वादुत्तमत्वेन लयाऽसम्भवाभावात् । 'वरुणेऽश्विनौ' इत्यादिविशेषश्रुतेश्च विशेषवचनाभावेऽपवादकाभावे यथाश्रुतस्यैव ग्राह्यत्वेन लक्षणास्वीकारायोगादिति भावः । एतेन 'वरुणेऽश्विनौ' इति विशेषवचन-बलादेवाऽश्विप्रभृतीनां स्वसमानाबादिलयस्थाने वरुणादौ लय इति वक्तव्यत्वेन विशेषवचनाभावे लय इति कथनमयुक्तमिति परास्तम् । विशेषवचनाऽभाव इत्यनेनाऽपवादाऽभावे श्रौतार्थो न त्याज्य इत्यर्थस्य विवक्षितत्वात् ।। **अन्यथाव्याख्यानमिति** ।। 'भूतेषु देवा विलीयन्त' इति श्रुतेः । 'अग्नेर्वायौ' इत्यादिना कृतमित्यर्थः । मुक्तिप्रकरणत्वात्पूर्वश्रुतौ वायुग्रहणम्, उत्तरश्रुतौ मारुतग्रहणं चाऽयुक्तमित्यत आह ।। **अत्र वायुमारुतपदाभ्यामिति** ।। **उक्तक्रमेणेति** ।। 'इन्द्रस्य सौपर्ण्यां, सौपर्ण्याः सुपर्णे, सुपर्णस्य वाण्यां, वाण्या ब्रह्मणि, इत्युक्तक्रमेणेत्यर्थः । अत्र श्रुतौ सोम आदित्ये, बृहस्पतिर्वायौ, लीयत इत्यर्थोऽभिमतः । तद्धटनाय सोमस्य शेषमार्गस्थत्वात्सोमस्य वायौ लये द्वाराण्याह – **सोमस्येति** ।। सूर्यस्य गरुडमार्गस्थत्वात् द्वाराण्याह – **सूर्यस्येति** ।। 'मरुतो मारुत' इत्येतद्धटयति ।। **मरुतामिति** ।। इन्द्रसौपर्णी सुपर्णवाणीद्वारेत्यर्थः । **अनुसर्गप्रतिपादनादिति** ।। 'अनन्तरभाविसर्गोऽनुसर्गः । स एव 'आकाशाद्वायुः' इत्यत्र देवानामुच्यते न तु प्राथमिको मुख्यसर्गः । स एव लयप्रयोजको नाऽनुसर्ग इति भावः । **निर्दिष्टानामेवेति** ।। 'अग्रावग्रय' इत्यत्र निर्दिष्टानामग्नीनामेवेत्यर्थः ।

ननु अत्र निर्दिष्टानामेव 'अग्नौ सर्वे देवा विलीयन्त' इत्यनेन लय उच्यत इत्यनुपपन्नं, तथात्वे विशिष्याऽनुक्तानां लयाऽभावेन मोक्षो न स्यादित्यत आह ।। **उपलक्षणमेतदिति** ।। 'अग्रावग्रय' इति श्रुतिगतमग्रय इति पदं देवान्तरोपलक्षणमित्यर्थः । 'अग्रावग्रय' इति श्रुतेरुपलक्षणतया सर्वसङ्ग्राहकत्वेन एतच्छ्रुत्युक्तानामेव 'अग्नौ सर्वे देवा विलीयन्त' इत्यत्र लयः प्रतिपाद्यत इत्युक्तिरुपपन्नेति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** अग्नावेव सर्वेषां देवानां लयः 'अग्नौ सर्वे देवा विलीयन्त' इति श्रुतेः । न च भूतेषु देवा विलीयन्त' इति श्रुतिविरोधः । सर्वेषां देवानामग्नौ, अग्नेर्वायौ, वायोराकाशे लयाङ्गीकारेण भूतेषु लयस्याङ्गीकृतत्वात् अतोऽग्नावेव सर्वेषां देवानां लय इति अधमानामुत्तमेषु लय इत्युक्तव्यवस्थानुपपत्तिरिति ॥

**सिद्धान्तस्तु** एकस्मिन्नग्नावेव भूते सर्वदेवानां लयो न वाच्यः । 'पृथिव्यामृभवो विलीयन्ते, आकाश एव साध्या विलीयन्त' इति श्रुतिभ्यां पञ्चस्वपि भूतेषु लयाभिधानात्, का तर्हि 'अग्नौ सर्वे देवा विलीयन्त' इति श्रुतेर्गतिरिति चेत् एतच्छ्रुतिबलेन सर्वशब्दं सङ्कुच्य अग्नौ लययोग्यानामेव देवानां लयपरत्वमिति ब्रूमः । अतोऽग्नावेव सर्वेषां लयाभावादुक्तव्यवस्था युक्तेति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**अत्र पुनरिति ॥** यदुक्तं भूतेषु देवा लीयन्त इति बहुवचनश्रुतेर्नाग्नौ देवतालय इति तन्न । सर्वदेवानां साक्षादग्निप्रवेशेऽप्यग्नेर्वायौ वायोराकाशे प्रवेशेन भूतेष्विति बहुवचनसम्भवादित्यभ्यधिकाशङ्कया प्रवृत्तेरनन्तरसङ्गतिरिति भावः । नन्वेवं पूर्वसूत्रोपात्तश्रुतेस्सावकाशत्वाशङ्कया प्रवृत्तमुत्तरं गुणसूत्रमेव स्यान्नाधिकरणान्तरम् । तथात्वे गुणसूत्रमात्रोच्छेदप्रसङ्गः । विषयसंशयपूर्वपक्षादिभेदाभावात् । पूर्वसूत्रप्रकृतशङ्कापरिहारस्य गुणसूत्रेषु सर्वत्र नियतत्वात् । न्यायविवरणे अधिकरणभेदज्ञापकाभावात् । प्रत्युत सन्न्यायरत्नावल्यामेकाधिकरणत्वेन व्याख्यातत्वात् । प्राचीनैरेवं कृतायामुपन्यासमुखभाष्यतात्पर्यप्रकाशिकायां न्यायरत्नावल्यामेकाधिकरणत्वेन व्याख्यातत्वादिति चेन्न । अर्थक्लृप्तिसमानलोपन्याययोः शब्दसाम्येऽप्यर्थभेदेन न्यायान्तरत्वमापन्नयोः शङ्कराचार्यैः तदधिकरणेऽपि योजितत्वेन पृथगधिकरणत्वस्योपपादित्वात् । अन्तर्भेदाधिकरणत्वविवक्षया टीकाप्रवृत्त्युपपत्तेरिति ज्ञेयम् । अत एव सर्वाण्यन्विति प्रतिज्ञातस्य प्रपन्नमिति न गतार्थता । तदुक्तं तत्वप्रदीपे । अत एव च सर्वाणीति यथाश्रुतानुकूलं यथाबिम्बं प्रतिबिम्बभावानुकूलं च सर्वे देवा विलीयन्त इति यः प्रतिज्ञातो लयः सः प्रणिगदित इति ॥ **किमिति ॥** अत्र देवाः किमग्नावेव लीयन्त उत पञ्चस्वपि भूतेष्विति चिन्ता । तदर्थमग्नावेव लयाङ्गीकारे बाधकत्वेनोक्तं भूतेष्विति बहुवचनं किं पारम्पर्यविवक्षयाऽमुख्यार्थतया सावकाशमुत साक्षाद्विवक्षया मुख्यार्थतया निरवकाशमिति गतार्थतामाशङ्क्य निषेधति ॥ **न चेति ॥**

(वाक्यार्थमुक्तावली)

कुतो न वाच्यमित्यतो नैकस्मिन्निति सूत्रखण्डव्यवच्छेद्यमर्थक्लृप्तिरित्युक्तपूर्वपक्षन्यायं व्यनक्ति ॥ **एकस्मिन्निति** ॥ **तदुपपत्तेरिति** ॥ भूतेष्विति बहुवचनोपपत्तिरित्यर्थः । कथमुपपत्तिरित्यत आह ॥ **अस्तीति** ॥ एतच्च वायाविन्द्रस्सोम आदित्यो बृहस्पतिरित्यत्र वारीशलयाधिकरणसोमस्य अग्निलयाधिकरणेन्द्रस्य आकाशोर्वीलयाधिकरणस्य बृहस्पतेश्च वायावेव लयोक्त्या मुक्त्यर्थं लये आदिसृष्टौ चाकाशादिक्रमेणोत्पत्तेस्तद्वैपरीत्येन लयस्य निषेधितत्वात्तद्व्यवच्छेद्यमिति ज्ञेयम् ।

ननु प्रलयकालीनभूतलयस्योत्पत्तिक्रमविपरीतक्रमत्वेऽपि मुक्तिकालीनदेवतालयप्रतिपादक-श्रुतिगतस्य भूतेष्विति बहुवचनस्य कथमुपपत्तिरित्यत आह ॥ **मुक्तिश्च प्रलयविशेष इति** ॥ **मुख्यार्थ इति** ॥ अग्नौ देहक्षयेऽप्यग्निद्वारा भूतेषु प्रवेशमात्रमित्यनुव्याख्यानार्थमपहाय साक्षादेव भूतेषु देहलय इति मुख्यार्थः किं न स्यादित्यर्थः ॥ **अग्नौ लीयन्त इति** ॥ तत्र निर्दिष्टानामे-वेत्युत्तरभाष्ये सर्वशब्दस्य सावकाशत्वोक्तेस्तद्व्यवच्छेद्यं मुख्यार्थानुपपत्तावमुख्यार्थक्लृप्तौ च बीजमर्थापत्तेर्निरवकाशत्वमाह ॥ **अग्नाविति** ॥ अग्नौ सर्व इति सर्वशब्दः सङ्कोच्यतामित्यतो दर्शयत इति सूत्रखण्डनिवर्तनीययुक्तिमाह ॥ **न चात्रेति** ॥ भूतेष्वित्यतो वचनव्यत्ययेन भूते इत्यनुवर्तते । देवानां लय इति लभ्यते । हि यस्मात्तथा महोपनिषच्चतुर्वेदशिखे दर्शयत इति सूत्रार्थं स्पष्टयति ॥ **नैकस्मिन्निति** ॥ दर्शयतीत्यनेनोक्तं समानलोप इति न्यायं भूतेषु देवानां देहलोपः समानो, मानाभ्यां सहित इत्यर्थत्वेन विवृणोति ॥ **पृथिव्यामृभव इत्यादिश्रुतिभ्यामिति** ॥ उक्तं च न्यायविवरणे विशेषश्रुतेश्चेति । तदनुत्पन्नानां कथं तत्र लय इत्यत आह ॥ **येषामिति** ॥ साक्षात्परंपरया वा तत्तद्भूतोत्पन्नत्वादित्यर्थः । तत्र वायाविन्द्र इत्यादीनां मरुतां च परम्परयेति वक्ष्यति । साक्षादुत्पन्नतयोक्तेष्वग्निवरुणाकाशपुत्रेषु न विवादः पुत्रत्वादेव । तज्जन्यत्वाश्विनोः साध्यादीनां च कथं वरुणाकाशादिजन्यत्वं विशेषप्रमाणाभावादित्याशङ्क्य वरुणेऽश्विनौ वरुणे आपः आकाशे साध्याः आकाशे विनायका इति समानलोपश्रुतिसूचितं समानलोप इत्युक्तन्यायं व्यञ्जयन् प्रतिक्षिपति ॥ **न चेति** ॥ विशेषवचनाभावेऽत एव तदुत्पन्नत्वाभावे चाश्विन्यादि-समानाबाह्यावान्तराभिमानिलयस्थाने वरुणादौ लयोपपत्तेरित्यर्थः । ननु तदुत्पन्नत्वेऽपि स्वसमान-देवतालयस्थाने लयाङ्गीकारे सौपर्ण्यादीनां शेषादौ लयः स्यादित्यतो वोक्तम् ॥ **विशेषवचनाभावे चेति** ॥ तत्र सुपर्णादौ लये विशेषवचनमस्तीति भावः ।

(वाक्यार्थमुक्तावली)

यद्वा यथाश्विप्रभृतीनां वरुणाद्युत्पन्नत्वे लयवाक्यातिरिक्तं विशेषप्रमाणं नास्ति तथा तेषां तदुत्पन्नत्वाभावेऽपि विशेषप्रमाणाभावे स्वसमानोत्पत्तिस्थानमेव स्वोत्पत्तिस्थानमिति समानाब्रादि-देवतालयस्थाने वरुणादौ लयस्योत्पत्तेरित्यर्थः । न च न सोऽश्व नासत्यदस्रौ क्रमशः प्रसूता इत्यादिकमेतदुत्पन्नत्वाभावे विशेषप्रमाणमिति वाच्यम् । तत्र वरुणादुत्पत्त्यनिषेधात् । 'स्रष्टुस्तु ग्रासभूतस्तु देहस्तत्र लयं व्रजेत्' इति स्रष्टर्येव देहलय इति नियमग्राहकप्रमाणेन वरुणेऽश्विना-वित्यनेनैव तस्मादुत्पत्तिसिद्धश्चेति स्वरसोऽयमर्थः । तदुक्तं न्यायविवरणे तत्तद्भूतोत्पन्नत्वात्तत्तद्देवानां तत्तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोत्पत्तेरिति । अत्र तत्समानां चेति देहिलीदीपन्यायेनोभयत्र सम्बध्यते ॥ **अन्यथाव्याख्यानमिति** ॥ भूतेषु देवा इति श्रुतेः अग्नेर्वाया-वित्यादिनाग्नावेव देहलयस्सर्वेषां भूतेषु तु तद्द्वारा प्रवेशमात्रमित्यन्यथाव्याख्यानमित्यर्थः ॥ **उक्त-क्रमेणेति** ॥ इन्द्र उमायामिति श्रुत्युक्तक्रमेणेत्यर्थः । 'सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ सुपर्णम् । सा शेषदेवं सगिरं च सैव वायु' इत्यनुव्याख्यां मनसि निधायाह ॥ **सोमस्येति** ॥

सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम् ।
तया सुपर्णं सह तेन वार्णी ब्रह्माणमेतद्गत एव याति ॥

इत्यनुव्याख्यां मनसि निधायाह ॥ **सूर्यस्येति** ॥ शक्रं मरुद्गण इत्येतत् हृदि कृत्वाऽऽह ॥ **मरुतामपीति** ॥ एवमग्नौ सर्वदेवतालयः अग्न्यादिभूतानां चोत्तरोत्तरं देहलय इति व्याख्यानमयुक्तं महोपनिषच्चतुर्वेदशिखाविरोधादिति विशेषप्रमाणेन निराकृत्य प्रमाणाभावेन च निराकरोति ॥ **भूताभिमानिनामिति** ॥ **न चोत्पत्तीति** ॥ आकाशाद्वायुरिति श्रुतौ अन्योन्योत्पत्तिश्रवणाद्विपर्ययेण तु क्रम इति सूत्रे तद्विपर्ययेण लयोक्तेश्च तद्विरोध इत्यर्थः ॥ **तत्र जडानामिति** ॥ आकाशादीनां प्रधानोत्पत्त्यभिधानादित्यर्थः । ननु भूतं भूताभिमानी चेति देवानां च गृहीतत्वादित्यत आह ॥ **देवानामिति** ॥ यद्यपि 'महदाद्यण्डपर्यन्तं सवर्गोऽण्डे ब्रह्मणस्तु यः । अनुसर्ग इति प्रोक्तः' इति वचनादयं सर्ग एव नानुसर्गः । तथापि जडविवक्षया सर्गत्वं, देवताविवक्षयाऽनुसर्गत्वमेव । सूक्ष्म-सृष्टेरेवादिसर्गत्वात् । तद्वैपरीत्येनैव देवतालयस्वीकारात् । अत एव जडानां मुख्योत्पत्त्यभिधाना-दित्युक्तमिति भावः । निर्दिष्टानामेव । अग्नावग्नय इति निर्दिष्टानामेवेत्यर्थः । तदुक्तं तत्वप्रदीपे । सर्वशब्दस्य कृत्स्नाग्निपुत्रविषयत्वोपपत्तेरिति भाव इति । 'विशन्ति शिष्टा अपि हव्यवाहम्'

(वाक्यार्थमुक्तावली)

इत्यनुव्याख्यानं मनसि निधाय सर्वशब्दस्यार्थान्तरमाह ॥ **उपलक्षणमिति** ॥ अनुव्याख्याने वर्णाश्रमाचारयुता मनुष्या धर्ममिति शिष्टा इत्युक्तनियमन्यायोदितत्वात् प्रायेणेत्युक्तम् ।

## तत्त्वसुबोधिनी

**अत्र पुनरिति** ॥ यदुक्तं पूर्वाधिकरणे अग्नावेव सर्वदेवलयाङ्गीकारे भूतेष्विति बहुवचनविरोध इति तदग्नावेव सर्वदेवलयाङ्गीकारेऽपि अग्नेः वायौ वायोश्चाकाशे लये अग्नौ लीनानां तेषु लय-सम्भवेन बहुवचनोपपत्तेरित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **उक्तमेवेति** ॥ श्रुतिः अन्याधीनत्वं चेत्यर्थः । बहुवचननोपपत्तिमेव दर्शयति ॥ **अस्ति तावदिति** ॥ 'विपर्ययेण तु क्रमोऽत उपपद्यते च' इत्युक्तेरिति भावः । ननु प्रलयकालीनभूतलयस्योत्पत्तिक्रमविपरीतक्रमत्वेऽपि मुक्तिकालीनदेवतालयप्रतिपादकश्रुतिगस्येति भूतेष्विति बहुवचनस्योपपत्तिः कथमित्यत आह ॥ **मुक्तिश्च प्रलयविशेष इति** । तावता बहुवचनोपपत्तिः कथमितित्यत आह ॥ **अग्नेरिति** ॥ **मुख्यार्थ इति** ॥ भूतेष्विति श्रुतेः देवानां साक्षादेव भूतेषु लय इत्येवंरूपमुख्यार्थ इत्यर्थः । दर्शयतो हि इत्यनेन निवर्तनीयपूर्वपक्षमाह ॥ **न चात्रेति** ॥ द्रष्टव्यः ॥ **तेषामिति** ॥ तदनुत्पन्नत्वे समान-देवतापरस्वतत्वेन यदि तत्र देवतानां लयः तर्हि सौपर्ण्यादीनां स्वसमानवारुण्यादिलयस्थाने शेषादौ लयः स्यादित्यतः उक्तं विशेषवचनाभावेऽपीति । सौपर्ण्यादीनां विशिष्य गरुडादौ लयस्य उक्त-त्वादिति भावः । अबादिदेवतेत्यत्र वरुणव्यतिरिक्तानां ग्रहणम् ॥ **अन्यथाव्याख्यानमिति** ॥ भूतेषु देवा इति श्रुतेः अग्निः वायौ इत्यादिना कृतमित्यर्थः ॥ **उक्तक्रमेणेति** ॥ इन्द्र उमायामिति श्रुत्युक्तक्रमेणेत्यर्थः । अग्नावग्रय इति भाष्ये सोमस्य चेति अग्रय इत्यग्निपुत्रा इत्यस्तु वारीशयुतोऽनिरुद्धमित्यनुव्याख्यानोक्तेरिति भावः ॥ **सूर्यस्येति** ॥ सूर्योऽग्नियुक्तो गुरुमित्यन्यत्रोक्तेः इति भावः । अत्रादिपदेन सौपर्णीसुपर्णवाण्यो ग्राह्याः ॥ **भूताभिमानिनां चेति** ॥ तेजोवाय्वाभिमानिनामग्निप्रवहादीनां वाय्वाद्याकाशमानिनोः प्रवहादिविनायकयोः लयाभावादित्यर्थः ॥ **उत्पत्तिश्रुतिविरोध इति** ॥ आकाशाद्वायुः वायोरग्निरिति श्रुतिविरोध इत्यर्थः । विपर्ययेण तु इत्यत्र सर्वदेवानामुक्तोत्पत्तिक्रमवैपरीत्येन लयस्य निर्णीतत्वादिति भावः । ननु भूताभिमानीत्यत्रा-काशादिपदैः देवानामपि गृहीतत्वात् कथमेतत् इत्यत आह ॥ **अनुसर्गप्रतिपादनादिति** ॥ विशन्ति शिष्टा अपि हव्यवाहमित्यन्यत्रोक्तेरिति भावः ।

## वाक्यार्थविवरणम्

**मुख्यार्थ इति** ॥ भूतेषु देवा इति श्रुतेः देवानां भूतेषु लयरूपमुख्यार्थ इत्यर्थः ॥ **एतच्छ्रुत्यन्यथानुपपत्तेरिति** ॥ अग्नौ सर्वदेवलयानङ्गीकारे 'अग्नौ सर्वे देवा' इति श्रुतिरनुपपन्ना स्यादित्यर्थः ॥ **अत्रेति** ॥ अग्नौ सर्वदेवानां लयो नास्तीत्यत्र विशेषप्रमाणं नास्तीत्यर्थः ॥ **उक्तव्यवस्थेति** ॥ 'वाङ्मनसि, तन्मनः प्राणे, सोऽध्यक्ष' इत्युक्तव्यवस्थेत्यर्थः ॥ **अत्रेति** ॥ 'पृथिव्यामृभवो विलीयन्तं ऋभवः पृथिव्यामिति श्रुतिद्वय इत्यर्थः । अश्विप्रभृतीनामित्यत्र प्रभृतिशब्देनोक्तशेषशतस्थदेवान्तर्गतानां केषाञ्चिद्ग्रहणम् ॥ **न तत्रेति** ॥ तथा च वरुणेऽश्विनाविति उक्तमनुपपन्नमित्यर्थः ॥ **स्वसमानाबादिदेवतेति** ॥

ननु अब्देवताया वरुणस्याश्विनोः सकाशादत्युत्तमत्वेन कथमश्विसमानत्वमिति चेन्न । अतद्गुणसंविज्ञानबहुव्रीहिणा अब्देवतां वरुणं विहायाकाशाभिमानिगणपतेर्विष्वक्सेनस्य वा कुबेरस्य वा ग्रहणम् । 'विष्वक्सेनोऽश्विनौ तौ गणपतिधनपा' इत्युक्तत्वेन गणपत्यादीनामश्विसमानत्वात् । तथा चायं विवेकः । 'आकाशमुर्वीं च गुरुं प्रविश्य' इत्युक्तत्वादश्विनोः समानाकाशाभिमानिगण-पतिलयस्थाने बृहस्पतौ लयोपपत्तेरित्यर्थः । अथवा अनिरुद्धं पृतनाधिपाद्या इत्युक्तत्वादश्विनोः स्वसमानपृतनाधिपशब्दवाच्यविष्वक्सेनलयस्थाने अनिरुद्धे लयोपपत्तेरिति । यद्वा । 'सुरानुगाः सर्वे कुबेरं स च सोममेव' इत्युक्तत्वादश्विनोः स्वसमानकुबेरस्थाने सोमे लयोपपत्तेरित्यर्थः । तथा च वरुणादावित्यत्र वरुणेऽश्विनावित्यत्र वरुणशब्देन जहत्स्वार्थलक्षणया बृहस्पतेरनिरुद्धस्य सोमस्य वा ग्रहणं इति ज्ञातव्यमिति महान् सम्प्रदायः ॥ **उक्तक्रमेणेति** ॥ सौपर्णी सुपर्णवाणी-द्वारा हिरण्यगर्भे विलीयत इत्यर्थः । शक्रं मरुद्गणा इत्युक्तत्वादाह ॥ **मरुतामपीति** ॥ **इन्द्रादि-द्वारेति** ॥ इन्द्रसौपर्णीसुपर्णवाणीद्वारा हिरण्यगर्भे लय इत्यर्थः । 'भूतेषु देवा लीयन्त' इति श्रुतिरुपपद्यते । 'अग्नेर्वायौ वायोरकाशे विलयात्' इत्यन्यथाव्याख्यानं विशेषश्रुतिद्वयबलहेतुना निराकृत्याधुनाऽ-न्योऽन्यलयाभावरूपहेतुना पराचष्टे ॥ **भूताभिमानी चेति** ॥ तेजोऽभिमानिनोऽग्नेर्भूतवाय्वभिमानिनि प्रवहे वाय्वभिमानिनः प्रवहस्याकाशाभिमानिन विनायके लयाभावादिति भावः ।

**उत्पत्तिश्रुतिविरोध इति** ॥ आकाशाद्वायुरित्यादि, उत्पत्तिश्रुतिस्तावदस्ति । तथा च तद्विपरीतक्रमेणैव लयो वक्तव्यः । अन्यथोत्पत्तिश्रुतिवैय्यर्थ्यापत्तेरिति भावः ॥ **अत्रेति** ॥

(वाक्यार्थविवरणम्)

आकाशाद्वायुरित्यादिश्रुतौ ॥ **अनुसर्गेति** ॥ ब्रह्माण्डान्तरुत्पत्तिरित्यर्थः । तथा चादिसृष्टि-वैपरीत्येनैव देवानां देहलयः । आदिसृष्टिस्तु नैवमिति भावः इति श्रुत्या लयोऽभिधीयत इति । सम्बन्धः केषामित्यत उक्तम् ॥ **उदाहृतश्रुताविति** ॥ 'पृथिव्यामृभव' इत्यादिश्रुतावित्यर्थः ॥ **निर्दिष्टानाम्** ॥ 'आग्नावग्नयो,' 'अग्नयस्तेजसि' इति निर्दिष्टानाम् । तथा च 'अग्नौ सर्वे देवा' इत्यत्र सर्वदेवशब्देन 'अग्नावग्नयोऽग्नयस्तेजसि' इति प्रधानाग्नौ लीयमानत्वेन निर्दिष्टाः । ये एकोन-चत्वारिंशदग्नयः त एव ग्राह्या इत्यर्थः । अत एव प्रधानाग्नेरनलकुलेन्द्रत्वप्रसिद्धिरित्यवगन्तव्यम् । 'अग्नौ सर्वे देवा इत्यस्य 'विशन्ति शिष्टा अपि हव्यवाहम्' इत्यनुव्याख्यानानुसारेण विषयान्तरमाह ॥ **उपलक्षणमेतदिति** ॥ अनुव्याख्यानोक्तशिष्टपदार्थमाह ॥ **प्रायेणाधमानामिति** ॥ **व्यवस्थेति** ॥ 'वाङ्मनसि, तन्मनः प्राण' इत्यादिनोक्ता व्यवस्थेत्यर्थः । श्रुतौ 'आकाशे विनायका विलीयन्त' इत्यत्र पूर्वश्रुत्यनुसारेण विनायका इत्यस्य साध्या इत्यर्थो ज्ञातव्यः । अथवा एतच्छ्रुत्यनुसारेण 'साध्या' इत्यस्य 'विनायका' इत्यर्थो द्रष्टव्यः । तथा च विनायकाः क्षुद्रविघ्नाभिमानिनो देवाः आकाशे विघ्नेशे विलीयन्त इत्यर्थो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

**तदेवोपपादयति** ॥ **अस्तीत्यादिना** ॥ ननु प्रलयकालीनभूतलयस्योत्पत्तिक्रम विपरीत-क्रमवत्त्वेऽपि मुक्तिकालीनदेवतालयप्रतिपादकश्रुतिगतस्य भूतेषु देवा इति बहुवचनस्योपपत्तिः कथमित्यत आह ॥ **मुक्तिश्चेति** ॥ **मुख्यार्थ इति** ॥ भूतेष्विति श्रुतेर्देवानां साक्षादेव भूतेषु लय इत्येवंरूपं मुख्यार्थ इत्यर्थः । अत्र उक्तमुख्यार्थे ॥ ॐ नैकस्मिन् दर्शयतो हि ॐ ॥ एकस्मिन्नग्नावेव सर्वदेवानां लयः कुतो हि यस्मात्पृथिव्यामृभव इति ऋभवः पृथिव्यामिति श्रुती प्रत्येकं भूतेषु दर्शयतो इत्यर्थः । युक्तिं चाह ॥ **येषामिति** ॥ ननु यदि तदनुत्पन्नत्वेऽपि स्वसमानदेवतालयस्थानत्वेन तत्र देवानां लयस्तर्हि सौपर्ण्यादीनां स्वसमानवारुण्यादिलयस्थाने शेषादौ लयः स्यादित्यत उक्तम् ॥ **विशेषवचनाभावे चेति** ॥ सौपर्ण्यादीनां तु विशिष्य गरुडादौ लयस्योक्तत्वादिति भावः ॥ **अन्यथाव्याख्यानमिति** ॥ भूतेषु देवा इति श्रुतेरग्नेर्वायावित्यादिना कृतमित्यर्थः ॥ **उक्तक्रमेणेति** ॥ इन्द्र उमायामिति श्रुत्युक्तक्रमेणेत्यर्थः । युक्त्यन्तरेणा-न्यथाव्याख्यानं निराकरोति ॥ **भूताभिमानिनामिति** ॥ तेजोवाय्वभिमानिनामग्निप्रवहादीनां

(वाक्यार्थमञ्जरी)

वाय्वाकाशाभिमानिनोः प्रवहविनायकयोर्लयाभावादित्यर्थः । लयाभावाच्चेति सम्बन्धः ॥ **उत्पत्तिश्रुतिविरोध इति ॥** आकाशाद्वायुर्वायोरग्निरिति श्रुतिविरोध इत्यर्थः । विपर्ययेण तु क्रमोऽत उपपद्यते चेत्यत्र सर्वदेवानामुत्पत्तिक्रमवैपरीत्येन लयस्य निर्णीतत्वादिति भावः । ननु भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः । हरिश्चाकाशशब्दोक्त इत्यनुव्याख्याने आकाशादिशब्दैर्देवानामपि गृहीतत्वात्कथं जडमात्रग्रहणमित्यत आह **॥ देवानां त्विति ॥** आदिसर्गान्तर्भावी अनुसर्गः आदिसर्गवैपरित्येनैव देवानां लय इति भावः ॥

॥ इति अनेकलयाधिकरणम् ॥ ५ ॥

## ६. समनाधिकरणम्

**॥ ॐ समना चाऽसृत्युपक्रमादमृतत्वं चाऽनुपोष्य ॐ ॥ ७ ॥**

देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना । संसारानुपक्रमात्स्वत एवामृतत्वं तस्याः । बृहच्छ्रुतिश्च– 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चेतौ ज्ञात्वा विमुच्यत' इति । नैतावता साम्यम् ॥

### तत्त्वप्रदीपिका

'तेजः परस्यां देवतायाम्' इति श्रुतेः श्रीदेव्याश्चेतरदेववत् परमात्मप्रवेशात्मको मोक्षोऽस्तीत्याशङ्कायां पुनः प्रत्यभिधत्ते । समना चेत्यादि सूत्रम् ॥ समनेति बहुव्रीहिसमासात् मुख्यार्थत्वान्न स्वरूपमात्रेण, देशतः कालतश्च व्याप्तिः, ज्ञानानन्दात्मभिर्देहेन्द्रियादिभिरपीत्यङ्गीकर्तव्यम् । प्रथमायाः षष्ठ्यर्थत्वेन तस्याः श्रीदेव्याः संसारानुपक्रमादित्यन्वयः । कदाचिदपि संसारो नासीदित्येतदर्थमनुपक्रमादिति भाष्यपदम् । न तु वयं कदाचिदपि सूत्रपदं व्याख्यातुमिच्छामः शक्नुमो वा । न हि देवजातिरपि कोऽपि वेदैकपतेः साक्षात्परमपुरुषस्य श्रीमद्बादरायणभगवतोऽनन्तसद्गुणस्य सकलविषयसततविकसितसुमतेर्मतिविलसितं समवगाहितुं शक्नुयात् । यस्यानन्तदेशकालव्यापिनि विज्ञाने बत परमाणुतामणति निखिलोऽपि निगमसमूहसम्भृतोऽर्थसार्थः । यत्तु खलु गिरिशगरुडादिगुरवोऽप्यत्याश्चर्यमनुवर्णयाञ्चक्रुः–

'वेदा ह्यनन्ता इति हि श्रुतिराहाप्यनन्तताम् ।
अनन्तवेदनिर्णीतिर्महाप्रलयवारिधेः ॥
उत्तारणोपमेत्यस्मान्न ज्ञेयोऽत्र समन्वयः ।
इति शङ्कापनोदार्थं स आह करुणाकरः ॥
अशक्योत्तारणत्वेऽपि ह्यागमापारवारिधेः ।
निर्णीयते मयैवायं रोमकूपलयोदिना ॥
यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानुषैः ।
मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुताम् ॥
इति प्रकाशयन् वेदपतिराह प्रमेयताम् ।
निखिलस्यापि वेदस्य गतिसामान्यमञ्जसा ॥

(तत्त्वप्रदीपिका)

को नाम गतिसामान्यमनन्तागमसम्पदः ।
ज्ञानसूर्यमृते ब्रूयात्तमेकं बादरायणम्' इति ॥

तस्यैतस्य सर्वश्रुतीतिहासपुराणतन्त्रयुक्तिमूलं परमात्मतत्वविषयनिर्णयात्मकं सूत्रजातं जगति सुरवरपुरस्सरकविजनमनस्सरसिजसमूहसहस्रकिरणेभ्यो गुरुतमभाष्यकारभट्टारकेभ्य एभ्योऽपरः को व्याचक्षीत । किन्तु प्राज्ञतमानामेषामाज्ञाबलमवलम्ब्य आरूढप्रौढदुरधिगममार्गाः कतिचन भाष्यपदानि व्याचिख्यासवस्सूत्रमिह गुरुभिरुदीरितमुदाहराम एव केवलम् । क्वापि च मुखतो विवृतमपि किमपि पदमभिमुखविकसितकरतलविलसितामलकवदविरतमनुवीक्ष्यमाणसूत्रार्थजातानां दुर्विगाहमतिमहासमुद्राणां मितपदं चेदं भाष्यं बह्वर्थमिह कुर्वतां कृपालूनामनुग्रहादर्थाक्षिप्तमर्थं प्रतिदर्शयाम इति । चशब्दोऽवधारणे । स्वत एवामृतत्वं तस्येति व्याख्यातत्वात् । उक्तन्यायेनाप्रलयाद्देव्याः 'तेजः परस्यां देवतायाम्' इति समीपस्थित्यर्थं योजयितव्यं गुरौ वसतीतिवत् । जगत्प्रवृत्त्यभावार्थं च व्याख्याद्यनुक्तविशेषान् सप्रमाणकं प्रमापयितुं चायं पुनरुपन्यासः ॥

## तत्त्वप्रकाशिका

अत्र प्रकृतेर्विष्णौ लयाभावसमर्थनादस्ति शास्त्रादिसङ्गतिः । प्रकृतेर्भगवति लयेऽधिकारित्वप्रसङ्गादुक्तबाध इत्युपपादनीयमेतत् । प्राणादुत्तमा प्रकृतिर्विषयः । परमात्मनि लीयते न वेति सन्देहः । भगवदधीनत्वं नित्यमुक्तत्वं च सन्देहबीजम् । लीयत इति पूर्वः पक्षः । भगवदधीनत्वात् । न च तदनिर्णायकम् । 'तेजः परस्यां देवतायाम्' इति विशेषश्रुतेश्च । अन्यथा वागादीनां मनःप्रभृतिपूक्तलयोऽपि न स्यात् । न च प्रकृतेरसंसारित्वस्योक्तत्वाल्लयाभावः । असंसारित्वस्यैवानुपपत्तेः । तथात्वे भगवता सर्वसाम्यापातात् । न च गुणान्तरवैषम्यम् । नित्यं संसारराहित्ये सर्वगुणोपपत्तेः । न च सर्वसाम्यमङ्गीकर्तुं शक्यम् । सिद्धान्तविरोधात् । अतस्तस्यास्संसारित्वाद्भगवति लयसद्भावादधिकारित्वेनाधिकारिणां प्राणावसानत्वोक्तिरयुक्तेति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **समनेति** ॥ अत्राद्यश्चशब्दः पूर्वसूत्रान्नञोऽनुकर्षार्थः । न प्रकृतिर्लीयते । यतस्तस्या अनुपोष्यानुपास्य स्वत एवामृतत्वम् । न हि नित्यमुक्ताया लक्ष्म्या लयः सम्भवति । नित्यमुक्तत्वमेव तस्याः कुतः । कदापि संसारोपक्रमणाभावात् । तदपि कुतः । परमपुरुषवन्नित्यत्वात्सर्वगतत्वाच्च । न हि संसारित्वे तदुपपत्तिरिति भावः । एतेन 'तदधीनत्वात्' इति प्रत्युक्तम् । न च श्रुतिविरोधः । अतिसामीप्यार्थतयोपपत्तेः । 'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः

(तत्त्वप्रकाशिका)

**प्रकीर्तितः' । इति वचनात् । यदुक्तं प्रकृतेरीश्वरवन्नित्यसर्वगतत्वेनानुपक्रान्तसंसारित्वान्नित्यमुक्तत्वं तत्कुत इत्यत आह ।। बृहदिति ।। नन्वेवं प्रकृतेरपि नित्यमुक्तत्वाङ्गीकारे भगवता सर्वसाम्यमापतितमित्यत आह ।। नेति ।।**

## भावबोधः

प्रकृतेर्विष्णौ लयाभावसमर्थनादिति ।। ननु श्रियो देहलयाभावप्रतिपादकस्या स्याधिकरणस्य कथमस्मिन् देहक्षयप्रतिपादकेऽन्तर्भाव इति चेदुच्यते सोऽध्यक्षे तदुपगमादिभ्यः इत्यत्र साक्षाच्चतुर्मुखस्य परमात्मन्येव लयोऽभिहितः । स न युक्तः । प्रमाणाभावात् । न च प्राणः परमुपगच्छति इत्यादिश्रुतिरेव मानमिति वाच्यम् 'प्राणस्तेजसि' इति विशेषश्रुतिबलेन तेजोद्वारा परमात्मोपगमादिप्रतिपादकत्वेन तस्याः सावकाशत्वात् । न च 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्' इति स्मृत्या 'प्राणस्तेजसि' इति श्रुतेर्गतिरुक्तेति वाच्यम्; अनुपपत्त्यभावेन गतिकथनस्याप्ययोगात् । न च तेजसि लये परमात्मनि लयाभावात् कथं मोक्ष इति वाच्यम्; चतुर्मुखस्य परमात्मनि लयेन चतुर्मुखे लीनानां देवानां मोक्षवत्तेजसोऽपि परमात्मनि लयेन तत्प्रलीनस्य चतुर्मुखस्य मोक्षोपपत्तेः । एवं चतुर्मुखस्य साक्षाद्विष्णौ देहलयस्य श्रियस्तत्र देहलयाभावसमर्थनं विनाऽसिद्धेस्तत्साधकत्वेन 'हानौ तूपायनशब्दशेषत्वात्' इत्यादिना उपासनापादान्तर्भाववदस्यापि सम्भवत्येवात्रान्तर्भावः । किं च 'कामादितरत्र' 'तत्र चायतनादिभ्यः', इत्याद्यधिकरणस्योपासने अधिकाराभावप्रतिपादकस्यापि उपासनापादेऽन्तर्भाववदस्याप्यत्रान्तर्भावोपपत्तिरिति । अत्र यदि तत्तद्देवानां तत्तद्भूतोद्भवत्वयुक्त्या 'पृथिव्यामृभवो विलीयन्ते' इत्यादिविशेषश्रुत्या ऋभ्वादीनां पृथिव्यादौ लयस्तर्हि लक्ष्म्या अपि पराधीनविशेषलाभवत्त्वेन परमात्मोद्भूतत्वात् 'तेजः परस्यां देवतायाम्' इति विशेषश्रुतेश्च परमात्मनि लयः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति ।। **परमात्मनीति ।।** अत्र प्रकृतिः परमात्मनि लीयते उत न लीयत इति चिन्ता । तदर्थं 'तेजः परस्यां देवतायाम्' इति श्रुतिः परमात्माधीनत्वयुक्तिश्च किमबाधितविषयोत बाधितविषयेति । तदर्थं तद्बाधकं प्रकृतेर्नित्यमुक्तत्वादिकं नास्त्युतास्तीति । तदर्थं नित्यमुक्तत्वाद्यङ्गीकारे प्रकृतेः परमात्मना सर्वसाम्यमुत पारमेश्वरगुणान्तरराहित्येन किञ्चित्साम्यं वेति । तदर्थं प्रकृतेः किञ्चित्परमात्मसाम्याङ्गीकारे सर्वात्मनाऽसाम्यप्रतिपादिका 'असमैव' इति श्रुतिविरोधो भवत्युत न भवतीति ।

(भावबोधः)
तदर्थं सा श्रुतिः प्रकृतिविषयोत जीवमात्रविषयेति । तदर्थं प्रकृतेः परमात्मना किञ्चित्साम्यादौ विशेषप्रमाणं **नास्त्युतास्तीति ॥ अन्यथा वागादीनामीति ॥** एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मनआदौ लयस्य साधितत्वादत्र तयोरसाधकत्वे तत्राप्यसाधकत्वप्रसङ्गादिति भावः ।

प्रकृतेः संसाराभावादिनेशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वात्, सर्वसाम्यमेवेश्वरेण न चेत् संसारित्वमेवेति न्यायविवरणे न चेत्संसारित्वं प्रकृतेः तर्हि संसाराभावादिनेश्वरेण सर्वसाम्यमेवेत्यन्वयमभिप्रेत्य तद्भागं व्याचष्टे– **तथात्व इति ॥** ईशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वादिति न्यायविवरणांशं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न च गुणान्तरवैषम्यमिति ॥** स्वातन्त्र्यादिगुणान्तरेण वैषम्यमित्यर्थः ॥ **नित्यसंसाराहित्य इति ॥** अनेन संसाराभावादिनेत्यस्येशेनेत्यत्रापि सम्बन्धप्रदर्शनपूर्वकं ईशेनान्यथा स्वनियम्यत्वापूर्णत्वादेः कर्तुमशक्यत्वेन स्वातन्त्र्यस्य सुदृढत्वादिति न्यायविवरणांशो व्याख्यातो भवति । न चेत् सर्वसाम्यमेवेति न्यायविवरणांशस्य सम्बन्धमभिप्रेत्याह– **न च सर्वसाम्यमित्यादिना ॥** तथा च सिद्धान्तविरोधात् सर्वसाम्यं न चेत् संसारित्वमिति व्याख्यातं भवति ॥ **नित्यत्वाच्चेति ॥** देहतोऽपि नित्यत्वादित्यर्थः । अत एव परमेश्वरवदित्युक्तम् । तेन न जीवेषु व्यभिचार इति बोध्यम् । **तदधीनत्वादिति ॥ प्रत्युक्तमिति ॥** उक्तयुक्तेः प्राबल्येन तया बाधितत्वादिति भावः ।

## भावदीपः

**लयाभावेति ॥** लयापवादस्यापि लयोक्तिपरपादादिसङ्गतत्वादिति भावः । सम्मतमेतत्पूर्वतन्त्रादावपि । एतेन तदधीनत्वविशेषश्रुत्यादिरूपपूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरापवादिक्यनन्तरसङ्गतिरपि सूचिता ॥ **उक्तेति ॥** कामादितरत्र तत्र चेत्यत्रोक्तोपासनानधिकारित्वबाध इत्यर्थः । यद्वा इयदित्यत्रोक्तेत्यर्थः । प्रकृतेरप्रकृतत्वशङ्कानिरासायाह ॥ **प्राणादिति ॥** यद्वा परमात्मनि लीयते न वेत्येवंरूपसंदेहादिघटनायोक्तम् ॥ **प्राणादिति ॥** कामादिति नयसिद्धत्वादाह ॥ **भगवदित्यादि ॥** अस्य पूर्वापवादरूपत्वात्तदधीनत्वविशेषश्रुतिभ्यां पूर्वसिद्धान्तरीत्यैवेह पूर्वपक्षं भाष्यादौ कण्ठतोऽनुक्तमप्यर्थादुक्तप्रायं स्वयं व्यनक्ति ॥ **लीयत इतीत्यादिना ॥** वागादिवदिति भावः । उक्तहेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति ॥** उक्तहेतुद्वयभावेऽपि लयाभाव इत्यर्थः । प्रागुक्तप्रयोगे संसारित्वमुपाधिः तस्य च वागादौ साध्यव्यापकस्य साधनवतः पक्षाद्व्यावृत्तत्वेन लयरूपसाध्यस्यापि व्यावर्तकत्वादिति शङ्कते ॥ **न चेति ॥** उक्तत्वात् कामादित्यत्रेति भावः ।

(भावदीपः)

तदाक्षेपेण पूर्वपक्षप्रवृत्तिं असृत्युपक्रमादिति सौत्रहेतुव्यावर्त्यमाह ॥ **असंसारित्वस्यैवेति** ॥ एतेन कामादित्यनेनागतार्थत्वं विभावितं ध्येयम् । कुतोऽनुपपत्तिरित्यतः संसाराभावादिना सर्वेषां साम्यमेवेश्वरेणेत्यन्यत्रोक्तं तदपीतेरिति सूत्रव्यावर्त्यं बाधकमुक्त्वा अनुपपत्तिं व्यनक्ति ॥ **तथात्व इति** ॥ सर्वपदतात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति ॥ **न चेत्यादिना** ॥ असंसारित्वादन्यगुणैर्वैषम्यमित्यर्थः । इष्टापादनत्वं निराह ॥ **न चेति** ॥ संसारित्वमिति न्यायविवरणांशतात्पर्यं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ **अत इति** ॥ असंसारित्वे भगवता सर्वसाम्यापत्तिरूपबाधकादित्यर्थः ॥ **प्राणावसानत्वोक्तिरिति** ॥ इयदामननादित्यत्रेति भावः । एतेनाधिकारिणां प्राणावधित्वनिर्णयात् श्रियोऽनधिकारित्वाल्लयायोग इति प्रत्युक्तम् । **तस्यैवाक्षेपादिति** ॥ अन्तिमचशब्दस्यावधारणार्थत्वं स्वत एवेति भाष्येण चशब्दोऽवधारण इति तत्वप्रदीपोक्त्या च व्यक्तमिति आद्यस्यार्थं स्वयमाह ॥ **आद्य इति** ॥ प्रकरणाल्लीयत इत्यन्वेति । प्राणादुत्तमत्वेन श्रौततेजःपदेन च प्रकृतिर्बुद्धौ सन्निधापितेति भावः । तत्र हेतुतया व्युत्क्रमेण सूत्रभाष्ये योजयति ॥ **यत इत्यादिना** ॥ आत उत्वं छान्दसमित्युपेत्याह ॥ **अनुपास्येति** ॥ एतस्य व्याख्यानं स्वत एवेत्येतदिति दर्शयति ॥ **स्वत एवेति** ॥ चशब्दार्थ एवेति भावः । हेतोरप्रयोजकत्वं निराह ॥ **न हीति** ॥ उपक्रमणं सम्बन्धः । तत्पदोक्तितात्पर्यं कदापीति । देशत इत्यादेर्भावार्थः परमेत्यादि । देहतोऽपि नित्यत्वाच्चेत्यर्थः । हेत्वोरसिद्धिरव्याप्तिश्च निरसिष्यत इति भावः । अप्रयोजकतां हेतोर्निराह ॥ **न हीति** ॥ प्रागुक्तलयानुमानविरोध इत्यत आह ॥ **एतेनेति** ॥ सर्वगत्वादिना लयप्रयोजकसंसाराभावकथनेनेत्यर्थः । प्रत्युक्तं सोपाधिकत्वेन निरस्तमित्यर्थः ॥ **श्रुतीति** ॥ तेजः परस्यामिति श्रुतीत्यर्थः ॥ **अतिसामीप्येति** ॥ गुरौ वसतीतिवदिति भावः । एकादशस्कन्धे चतुर्विंशाध्यायतात्पर्योक्तमाह ॥ **हरेरिति** ॥ **नित्येति** ॥ नित्यत्वेन सर्वगतत्वेन चेत्यर्थः । पूर्वसूत्रोक्तामृतत्वहेतोस्तर्कपराहतिनिरासकत्वेनोत्तरसूत्रसम्बन्धभाष्यमवतारयति ॥ **नन्विति** ॥ एवं नित्यसर्वगतत्वेनेत्यर्थः ।

## अभिनवचन्द्रिका

**अस्ति शास्त्रादिसङ्गतिरिति** ॥ अस्याधिकरणस्य, शास्त्रेणाऽन्तर्भावलक्षणा सङ्गतिः अध्यायपादाभ्यां प्रासङ्गिकी सङ्गतिरस्तीत्यर्थः । एतेन प्रकृतेर्विष्णौ लयाऽभावसाधनादस्ति

(अभिनवचन्द्रिका)

शास्त्रादिसङ्गतिरित्ययुक्तम् । लयसमर्थनस्यैवान्तर्भावप्रयोजकत्वेन लयाभावसमर्थनस्य तद्विरोधित्वादिति परास्तम् ॥ **उक्तबाध इति** ॥ अधिकारिणां प्राणावसानत्वबाधः स्यादित्यर्थः ॥ **भगवदधीनत्वं नित्यमुक्तत्वं चेति** ॥ प्रकृतेस्तावान्नित्यमुक्तत्वं श्रूयते । नित्यमुक्तत्वं चोत्पत्ति लयादिविरोधि । तथा भगवदधीनत्वं श्रूयते । पराधीनस्य च लयो नियतः । एवं च नित्य मुक्तत्वं पराधीनत्वं च विरुद्धम् । किमत्र तत्वमिति न जानीम इति विमर्शवतः सन्देह उपजायते किं भगवदधीनत्वात्प्रकृतिर्लीयते इत्यभ्युपगन्तव्यम्, उत नित्यमुक्तत्वमिति । एतेन लयस्य मुक्त्यर्थत्वात् नित्यमुक्तत्वदर्शने च लयाभावनिर्णयात्सन्देहानुपपत्तिरिति परास्तम् । ननु कामस्य रुद्राधीनत्वेऽपि तत्र लयाऽभावेन व्यभिचारान्न तदधीनत्वं तत्र लये प्रमाणं, किंतु सम्भावकं, न च सम्भावकनिरूपणमात्रेणाऽर्थः सिध्यतीति प्रमाणं वाच्यम् । न चाऽत्र प्रमाणमस्ति । ततो न प्रकृतिः परमात्मनि लीयत इत्याशङ्क्य निषेधति – **न चेति** ॥ **तेजः परस्यां देवतायामिति** ॥ न वयं सम्भावकमात्रेणाऽर्थं साधयामः, किन्नामसम्भावनया श्रुत्या चेति भावः ॥ **अन्यथेति** ॥ श्रुत्यनादर इत्यर्थः । अत्र सूत्रे अनुपोष्याऽमृतत्वमुच्यते । न चैतावता लयाऽभावः सिध्यति । तन्मोक्षस्योपवासव्रतजन्यत्वनिषेधेऽपि श्रवणाद्युपासनासाध्यत्वाऽनिषेधात् इत्याशङ्क्य परिहाराय 'अनुपोष्य' इति पदमनूद्य तल्लक्ष्यार्थमाह – **अनुपोष्येति** ॥ **कदापि संसार इति** ॥ कदापि संसारसम्बन्धाभावादित्यर्थः । संसारसम्बन्धाऽभावादित्येतावता पूर्णे यत् 'कदापि' इति वचनं तत् सीताद्यवतारेषु दुःखश्रवणात् तदा संसारोऽस्तीति भ्रमनिरासायेति बोध्यम् । एतेन संसारस्याऽनादित्वेन संसारोपक्रमस्य क्वाप्यभावात् महालक्ष्म्यास्तदभावाऽभिधानमसङ्गतमिति परास्तम् ॥ **परमपुरुषवत्सर्वगतत्वादिति** ॥ परमपुरुषवदिति नित्यत्वविशेषणम् । यथा हि परमपुरुषस्य रामकृष्णादिसर्वरूपेण नित्यत्वम् । एवं महालक्ष्म्या अपि सीतारुक्मिण्यादिरूपेण नित्यत्वादसंसारः । न हि संसारिणो देवदत्तादेः देवदत्तादिसंज्ञकदेहावच्छिन्नतया नित्यत्वं विद्यत इति भावः । एतेन नित्यानामेव जीवानां संसारदर्शनात्संसाराऽभावसिद्धये नित्यत्वाऽभिधानं न युक्तमिति परास्तम् ।

## वाक्यार्थमुक्तावली

॥ **शास्त्रादिसङ्गतिरिति** ॥ नन्वत्र देहक्षयस्यानुक्तत्वात् कथं अध्यायपादसङ्गतिरिति चेन्न । प्रकृतेः परमात्मनि देहक्षये प्राणस्य प्रकृतावेव देहक्षयस्योपपत्तेः 'प्राणस्य तेजसि लयो मार्गमात्र-

मुदाहृतम्' इति प्रागुक्तस्यायोगात् सोऽध्यक्ष इत्येतदयुक्तमित्याक्षेपनिरासेन प्राणस्य परमात्मन्येव देहलयोपपादनाय प्रकृतेर्लयाभावसमर्थनपरस्याप्यस्याध्यायपादान्तर्भावसम्भवात् । विस्तरस्तु भावबोधे । यद्वा शास्त्रेणान्तर्भावलक्षणाध्यायपादाभ्यां प्रासङ्गिकी सङ्गतिरिति टीकार्थः । अत एव तत्वप्रदीपे 'अवसितः प्रासङ्गिकः प्रकृतिस्वरूपनिरूपणाप्रकारः' इति वक्ष्यतीति ज्ञेयम् ॥ **उक्तबाध इति** ॥ इयदामननादिति प्राणावसानत्वोक्तबाध इत्यर्थः । अत्र यदि तत्तद्देवानां तत्तद्भूताधीनत्वयुक्त्या पृथिव्यामृभव इत्यादिविशेषश्रुत्या च तत्तद्भूतेषु लयस्तर्हि महालक्ष्म्याः अपि भगवदधीनत्वात् 'तेजः परस्यां' इति विशेषश्रुतेश्च परमात्मनि लयः स्यादन्यथा तदपि न स्यादित्याक्षेपेणोत्थाना-दनन्तरसङ्गतिः । प्राणादुत्तमेति सरस्वतीव्यावृत्तये । प्राणस्तेजसि तेजः परस्यामिति विषय-वाक्यसूचनाय च । प्रकृतिः परमात्मनि लीयते न वा इति चिन्ता । तदर्थं सा संसारिणी न वेति । तदर्थं असंसारित्वे भगवत्साम्यं प्रसज्यते न वेति । पूर्वन्यायेन पूर्वपक्षयति ॥ **भगवदिति** ॥ **न च तदिति** ॥ शेषदेवाधीनायाः अपि सौपर्ण्यास्तत्र लयाभावदर्शनादिति भावः । यद्वा मुक्तानां भगवदधीनानामपि लयाभावदर्शनादिति भावः ॥ **अन्यथेति** ॥ एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मन आदौ लयस्य साधितत्वादत्र तयोः असाधकत्वे तत्राप्यसाधकत्वप्रसङ्गादिति भावः । कामादितरत्रेत्यत्र नित्यमुक्तत्वस्य समर्थितत्वात् गतार्थतेत्यत आह ॥ **न चेति** ॥ कुतो न वाच्यमित्यतो नैतावता साम्यं तदपीतेरिति सूत्रभाष्यनिरस्यं सुदार्ढ्यमिति न्यायं दर्शयति ॥ **तथात्व इति** ॥ संसाराभावे ईश्वरवत् तस्यापि सुदृढत्वात् भगवता सर्वसाम्यापातादित्यर्थः ।

ननु नित्यमुक्तत्वेऽपि न सर्वसाम्यमीश्वरस्य परतत्वादिति सूत्रखण्डे ईश्वरेच्छानुसारेणेति भाष्ये चोक्तत्वादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो नेत्यतो न्यायं प्रकारान्तरेण व्यनक्ति ॥ **नित्यमिति** ॥ नित्यं संसारराहित्ये अत एवेशेनापि अन्यथाकर्तुमशक्यत्वेन सुदृढत्वात्सर्व-गुणोपपत्तेरित्यर्थः ॥ **आद्य इति** ॥ द्वितीयस्तु एवार्थः । अनुपोष्यैवेति सम्बध्यते । यत इति हेत्वर्थे च । बृहच्छ्रुतिसमुच्चायकेति भावः ॥ **प्रकृतिरिति** ॥ समनेति हेतुगर्भविशेषणस्येदं विशेष्य-मध्याह्रीयत इति भावः । समनाया इति षष्ठ्यंततया विपरिणाममङ्गीकृत्योक्तं तस्या इति । उक्तं च तत्वप्रदीपे । चशब्दोऽवधारणे । स्वत एवामृतत्वं तस्या इति व्याख्यातत्वात् । प्रथमायाः षष्ठ्यर्थत्वेन तस्या देव्याः संसारानुपक्रमादित्यन्वय इति । असृत्युपक्रमादित्यत्रा सृतेरिति वाच्ये

(वाक्यार्थमुक्तावली)
उपक्रमादित्युक्तिस्तु उपक्रम उपगमनं उपसंक्रमणं सम्बन्ध इति यावत् । तथा च कदापि संसारसम्बन्धाभावद्योतनायेति भावेनोक्तं कदापि संसारोपसंक्रमणाभावादिति ।

उक्तं च तत्वप्रदीपे । कदापि संसारो नासीदित्येतदर्थं अनुपक्रमादिति भाष्यपदं न तु वयं कदाचित्सूत्रपदं व्याख्यातुमिच्छाम इति । समनेति हेतुगर्भं विशेषणं व्यावर्त्यपूर्वं व्याचष्टे ॥ **तदपीति** ॥ **नित्यत्वादिति** ॥ देहतोऽपि नित्यत्वादित्यर्थः ॥ **न हीति** ॥ संसारित्वे शरीरावच्छेदस्य देहनाशस्य च वाच्यत्वात्सर्वगतत्वनित्यत्वयोरयोग इति भावः । तथा च समनायाः ईश्वरेण देशतः कालतश्च व्याप्त्या ईश्वरसमतया नित्याया देव्या असृत्युपक्रमात् कदापि संसारसम्बन्धाभावात् । अनुपोष्यानुपास्यैवामृतत्वमतस्समना प्रकृतिरध्यक्षे न लीयत इति सूत्रार्थः । ननूपस्थितेस्तद्वचनादित्यत्रैव प्रकृतेर्नित्यत्वेन संसाराभाव उपपादित इति चेदत्रोक्तं तत्वप्रदीपे । व्याप्त्याद्यनुक्तविशेषवर्णनात् सप्रमाणकं प्रमापयितुं चायं पुनरुपन्यास इति ॥ **अतिसामीप्येति** ॥ उपलक्षणमेतत् । जगत्प्रवृत्त्यभावार्थतयेत्यपि द्रष्टव्यम् । सुप्तिश्च प्रकृतेः प्रोक्ता अतीव भगवद्रतिः । अनास्थाऽन्यत्र च प्रोक्तेति । तत्वप्रदीपे च तेजः परस्यां देवतायामिति समीपस्थित्यर्थं योजयितव्या गुरौ च वसतीतिवत् जगत्प्रवृत्त्यभावार्थं चेति ।

## तत्त्वसुबोधिनी

**प्रकृतेः विष्णौ लयाभावसमर्थनादिति** ॥ न च श्रियो लयाभावप्रतिपादकस्यास्य कथमत्र पादेऽन्तर्भाव इति वाच्यम् । सोऽध्यक्षे इत्यत्र साक्षाच्चतुर्मुखस्य परमात्मन्येव लयोऽभिहितः स न युक्तः । प्रमाणाभावात् । न च प्राणः परमुपगच्छतीति श्रुतिः प्रमाणं प्राणस्तेजसीति विशेषबलेन तस्याः सावकाशत्वात् । न च प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतमित्यनेन तस्याः गतिरुक्तेति वाच्यम् । अनुपपत्त्यभावेन गतिकथनायोगात् । न च तेजसि लये परमात्मनि तदभावादयं मोक्ष इति वाच्यम् । चतुर्मुखस्य परमात्मनि तदभावात् कथं मोक्ष इति वाच्यम् । चतुर्मुखस्य परमात्मनि लयेन चतुर्मुखे लीनानां मोक्षवत् तेजसोऽपि परमात्मनि लयेन तत्रालीनस्य चतुर्मुखस्य मोक्षोपपत्तेः । एवं चतुर्मुखस्य साक्षाद्विष्णौ देहलयस्याश्रयत्वं तत्र देहलयाभावसमर्थनं विनासिद्धेः तत्साधनत्वेन हानौ त्वित्यादीनामुपासनापादान्तर्भाववदस्यापि सम्भवत्येवान्तर्भावः । किं च कामादितरत्र चायतनादिभ्यः इत्यस्योपासने अधिकाराभावप्रतिपादकस्याप्युपासनापादान्तर्भाववदस्यापि अन्तर्भावो-

(तत्त्वसुबोधिनी)

पपत्तेरिति ध्येयम् । अत्र यदि तत्तद्देवानां तत्तद्भूतोद्भवत्वयुक्त्या पृथिव्यामृभव इत्यादिविशेषश्रुत्या च ऋभ्वादीनां पृथिव्यादौ लयः तर्हि लक्ष्म्या अपि पराधीनत्वविशेषलाभवत्वेन परमात्मोदितत्वात्तेजः परस्यां देवतायामिति विशेषश्रुतेश्च परमात्मनि लयः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **अन्यथा वागादीनामिति** ॥ एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मन आदौ लयस्य साधितत्वात् ॥ अत्र तयोः असाधकत्वेन तत्राप्यसाधकत्वप्रसङ्गादिति भावः ॥ **न च गुणान्तर-वैषम्यमिति** ॥ स्वातन्त्र्यादिगुणान्तरवैषम्यमित्यर्थः ॥ **नित्यत्वाच्चेति** ॥ देहतोऽपि नित्यत्वा-दित्यर्थः । अत एव परमेश्वरवदित्युक्तम् । तेन न जीवेषु व्यभिचार इति बोद्धव्यम् । एतेन तदधीनत्वादिति **प्रत्युक्तमिति** । नित्यमुक्तत्वात्तेन संसारित्वाख्योक्तयुक्तेः प्राबल्यात्तया-बाधितत्वादित्यर्थः ।

## वाक्यार्थविवरणम्

**उक्तबाध इति** ॥ इयदामननादित्यनेनाधिकारिणां प्राणावसानत्वोक्तिबाधादित्यर्थः ॥ **अनुपपत्तेरिति** ॥ सीतादिरूपेण संसारदर्शनादित्यर्थः ॥ **एतेनेति** ॥ परमपुरुषवत् सर्वगतत्व-नित्यत्ववचनेनेत्यर्थः ॥ **प्रत्युक्तमिति** ॥ भगवदधीनत्वमात्रस्य लयाप्रयोजकत्वादिति भावः । **श्रुतीति** ॥ तेजः परस्यामिति श्रुतीत्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ इयदामननादित्यत्रोक्तस्याधिकारिणां प्राणावसानत्वस्य बाध इत्यर्थः ॥ **तेज इति** ॥ तेजोऽभिमानिनी रमा परस्यां देवतायां परमात्मनि संपद्यत इत्यर्थः ॥ **अन्यथेति** ॥ एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मनआदौ लयस्य साधितत्वात् अत्र तयोरसाधकत्वे तत्राप्य-साधकत्वप्रसङ्गादिति भावः ॥ **उक्तत्वादिति** ॥ कामादितरत्रेत्यर्थः ॥ **गुणान्तरेति** ॥ स्वातन्त्र्या-दीत्यर्थः ॥ **सर्वगुणेति** ॥ संसाराभावे ईशनियम्यत्वाभावेन स्वातन्त्र्यादेरपि सम्भवादिति भावः ॥ ॐ समना चाऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ॥ समो देशकालाभ्यां व्याप्त्या समो ना परमपुरुषो यस्याः सा समना रमा हरौ न लीयते कुतः यतोऽस्या अनुपोष्य चानुपास्यैवामृतत्वं मुक्तत्वं तदेव कुतः असृत्युपक्रमात् सृतिः संसारः कदापि संसारोपक्रमणाभावात्तदपि कुत इत्यतः

(वाक्यार्थमञ्जरी)
समानेति हेतुगर्भं विशेषणं उपक्रमणं सम्बन्धः ॥ **प्रत्युक्तमिति** ॥ उक्तयुक्तेः प्राबल्येन तथाऽधीनत्वयुक्तेर्बाधितत्वादिति भावः । वचनादेकादशतात्पर्ये अत्र रमाया अत्यन्तसामीप्यं नाम जगद्व्यापारत्यागेन वटजलाभरणरूपेण केवलहरिसेवारतत्वं बोध्यम् ।

## सूत्रभाष्यम्

### ॐ तदपीतेः संसारव्यपदेशात् ॐ ॥ ८ ॥

**'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तावसमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेति' इति सौपर्णश्रुतेः ॥**

## तत्त्वप्रदीपिका

कतिपयैर्धर्मैरेव साम्यं बहुभिर्वैलक्षण्यमित्याह– नैतावता साम्यमिति सम्बन्धभाष्येण ॥ **तदापीतेः संसारव्यपदेशात्** ॥ आ समन्तादपीतेरित्यविज्ञातत्वात्प्रवेशस्योक्तम् । 'अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते' इति वचनस्य 'अप्ययोऽयं समुद्दिष्टस्तदन्येषामदर्शनम्' इति वचनात्सावकाशत्वं स्यादिति तदापीतेरित्युक्तम् । स्वस्याप्यविज्ञात एव तदा प्रकृतौ प्रवेश इत्यर्थः । यद्यप्युमुच्यमानानामपि विष्णौ प्रवेशः । स स्वस्याप्यविज्ञातस्तथाऽपि प्रकृतिबन्धनिमग्नत्वात्प्रकृताविति युज्यते । अतो 'विलीनः परमे ह्यमृतत्वमेति' इति वचनं तत्वज्ञानिविषयमिति गम्यते ॥

## तत्त्वप्रकाशिका

नित्यमुक्तत्वाद्यस्तीत्येतावता न प्रकृतिपुरुषयोः सर्वसाम्यमित्येतत्कुत इति । तत्र हेतुतया सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥ **तदिति** ॥ प्रकृतिपुरुषयोर्नित्यत्वादिना साम्यमेव न तु सर्वसाम्यम् । प्रकृतौ विलयस्य संसारहेतुत्वेनेश्वरे लयस्य मुक्तिहेतुत्वेन श्रुतिसिद्धत्वात् । मोचकत्वामोचकत्ववतोः सर्वसाम्यायोगादिति भावः ॥

## भावबोधः

**नित्यत्वादिना साम्यमेवेति** ॥ नित्यत्वादिनैवेत्येवकारसम्बन्धः । अनेन 'समावेतौ' इत्यादिनित्यमुक्तावित्येतच्छ्रुत्युदाहरणस्य प्रयोजनमुक्तं भवति ॥ **प्रकृताविति** ॥ अनेन सूत्रे तस्मादपीति-

(भावबोधः)
स्तदपीतिस्तदपीतेरिति च हेतौ पञ्चमीत्युक्तं भवति । साम्याभावलक्षणसाध्येन हेतोः सामानाधिकरण्यायाह– **मोचकत्वामोचकत्ववतोरिति** ॥

## भावदीपः

भाष्यं विवृण्वन्नेवोत्तरवाक्यमवतारयति ॥ **नित्येति** ॥ हेतुहेतुमद्भावं पूर्वोत्तरभाष्यार्थयोर्व्यनक्ति ॥ **प्रकृतीति** ॥ भाष्ये साम्यपदं सर्वसाम्यपरमित्युपेत्य सर्वपदव्यावर्त्यं व्यनक्ति ॥ **नित्यत्वेत्यादि** ॥ श्रुत्युक्तनित्यसर्वगतत्वनित्यमुक्तत्वसाम्यमेवेत्यर्थः । प्रकृतावित्यादिना सूत्रस्येहेश्वरापीतेर्मुक्तिव्यपदेशादित्यस्यापि उपलक्षकत्वमुपेत्य तदक्षरार्थोऽप्युक्तो भवति । तत्वप्रदीपे तु तदापीतेरिति पाठमुपेत्यापीतिर्नाम स्वाप्ययोऽयं समुद्दिष्टस्तदन्येषामदर्शनमित्युक्त्या अन्यैरज्ञातप्रवेशः । नैतावानेव किन्तु आसमन्तादपीतिः । स्वस्याप्यविज्ञातप्रवेशस्तस्यामिति वक्तुं तदापीतेरित्युक्तमिति व्याख्यातम् । हेतोरप्रयोजकत्वं निराह ॥ **मोचकत्वेति** ॥

## वाक्यार्थमुक्तावली

सूत्रे तदपीतेरिति पञ्चमी । सूत्रस्य सम्बन्धभाष्येणान्वय इत्यभिप्रेत्य महिमेत्युक्तन्यायं प्रदर्शयन् सूत्रार्थमाह ॥ **प्रकृतीति** ॥ अत्र तदापीतेस्संसारेति तत्वप्रदीपे सूत्रेपाठः । केचित्प्राचीना भाष्यव्याख्यातारस्तदापीते संसारेति सप्तम्यंततया पठित्वा व्याचक्षते । तत्प्रकारश्चान्यत्र प्रदर्शितः ।

## तत्त्वसुबोधिनी

**नित्यत्वादिना साम्यमेवेति** ॥ नित्यत्वादिनैवेत्येवकारसम्बन्धः । अनेन समावेतावित्यादि नित्यमुक्तावित्येतच्छ्रुत्युदाहरणस्य प्रयोजनमुक्तं भवति । अनेन स्मृतिसूत्रे तस्यां अपीतिस्तदपीतेरिति हेतौ पञ्चमीत्युक्तं भवति । आसमन्तात्तदपीतेः इत्यविज्ञातत्वात्प्रवेशस्योक्तं अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यत इति वचनस्य स्वाप्ययोऽयं समुद्दिष्टः तदन्येषामदर्शनमिति वचनात् सावकाशत्वशङ्का स्यादित्यतः तदापीतेरित्युक्तं स्वस्याप्यविज्ञात एव । तदा प्रकृतौ प्रवेश इत्यर्थः । साम्याभावलक्षणसाध्येन हेतोः सामानाधिकरण्यमाह ॥ **मोचकत्वामोचकत्ववतोरिति** ॥

## वाक्यार्थविवरणम्

सूत्रे तदापीतेरिति आ अपीतेः इति पदच्छेदः ।। तस्यां सम्यगपीति मत इत्यर्थः । तस्याः परमात्मनः सकाशात् अबन्धः बन्धाभावः । ऊष्मावत्वं सामर्थ्यविशेषवत्त्वम् । बाधः सङ्कोचः ।

## वाक्यार्थमञ्जरी

तदपीतेः तस्यां रमायामपीतेर्लयस्य संसारव्यपदेशात् विलीनो हीति श्रुतौ संसारकारणत्वेनोक्तेरित्यर्थः ।।

## सूत्रभाष्यम्

**ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ।। ९ ।।**

**सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च ।**

**'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः ।**
**ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोः' इति च तुरश्रुतिः ।।**

## तत्त्वप्रकाशिका

**हेत्वन्तरेण प्रकृतिपुरुषयोः सर्वसाम्यं प्रतिषेधयत्सूत्रं पठित्वा व्याचष्टे ।। सूक्ष्ममिति ।। 'प्रकृतेरपि ब्रह्म सूक्ष्मं ज्ञानानन्दादिगुणपरिमाणेन चाधिकं सर्वतः' इति श्रुतेः । ततोऽपि न सर्वसाम्यमिति भावः ।।**

## भावबोधः

प्रकृतेरपि ब्रह्म सूक्ष्ममित्यादिना ईश्वरस्य महामहिमत्वादिति न्यायविवरणांशोऽप्युक्तार्थ इति तात्पर्यम् । गुणपरिमाणेन चाधिकमिति । अनेन सूत्रभाष्ययोः ''प्रमाण''शब्दः ''परिमाण'' वाचकः । सूत्रे चाधिकमिति शेष इत्युक्तं भवति ।

## भावदीपः

सूत्रे चशब्दादाह ॥ **हेत्वंतरेणेति** ॥ न केवलं तदुभयामप्यस्य बन्धमुक्तिव्यपदेशबलात् । किंतु परमसूक्ष्मत्वादिहेतुनापीत्यर्थः । भाष्यसूत्राविसंवादाय सूत्राक्षराणि योजयति ॥ **प्रकृतेरपीति** ॥ अधिकमिति शेषं मत्वाऽऽह ॥ **अधिकमिति** ॥ उपलब्धेरित्यस्यार्थः । सर्वत इति **श्रुतेरिति** । पूर्वसाध्यानुषङ्गमुपेत्याह ॥ **ततोऽपीति** ॥

## वाक्यार्थमुक्तावली

पूर्वसूत्रात्तदिति विभज्यानुवर्तते आवर्तते च । आद्यं पञ्चम्यन्तम् । तस्याः प्रकृतेरित्यर्थकम् । द्वितीयमध्यक्षशब्देन प्रकृतब्रह्मपरामर्शकं प्रमाणत इत्यतः परमधिकमिति शेषः । अत इति च शेषः । नैतावता साम्यमिति सम्बन्धभाष्येणान्वय इति व्याचष्टे ॥ **प्रकृतेरपीति** ॥ **गुण-परिमाणेनेति** ॥ अनेन सूत्रभाष्ययोः प्रमाणशब्दः परिमाणवाचक इत्युक्तं भवति ।

## तत्त्वसुबोधिनी

**गुणपरिमाणेन चाधिकमिति** । अनेन सूत्रभाष्ययोः प्रमाणशब्दः परिमाणार्थः । सूत्रे चाधिकमिति शेष इत्युक्तं भवति ।

## वाक्यार्थमञ्जरी

ब्रह्म रमापेक्षयाऽतिसूक्ष्मं प्रमाणतो गुणपरिमाणतश्च ततोऽधिकं कुतः तथोपलब्धेः सर्वतः प्रकृतिरिति श्रुतौ तथा दर्शनादित्यर्थः ।

## सूत्रभाष्यम्

**ॐ नोपमर्देनातः ॐ ॥ १० ॥**

**अतस्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम् ।**

**'देशतः कालतश्चैव समा प्रकृतिरीश्वरे ।**
**उभयोरप्यबद्धत्वं तदबन्धः परात्मनः ।**
**स्वत एव परेशस्य सा चोपास्ते सदा हरिम् ॥**

(सूत्रभाष्यम्)

**प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना ।**
**नियता नैव केनापि नियता हि हरेर्गुणा' इति भविष्यत्पर्वणि ॥**

## तत्त्वप्रकाशिका

**यदि प्रकृतेर्न पुरुषेण सर्वसाम्यं तर्हि नित्यमुक्तत्वादिसाम्यमपि न स्यात् ब्रह्मादिवत् । तथा च लयसद्भाव इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ अतः साम्यतदभावयोरेवं साधितत्वाद्ये परमेश्वरस्यासाधारणगुणाः स्वातन्त्र्यादयस्तेषामसाधारण्यमनुपमृद्यास्त्येव प्रकृतेः पुरुषेण नित्यमुक्तत्वादिसाम्यमिति भावः । यदि नित्यमुक्तत्वादिसाम्यं तर्ह्यस्त्येव विशेषगुणोपमर्दः । नित्यमुक्तत्वे प्रकृतेः स्वातन्त्र्यादेरप्यापातादित्यत आह ॥ देशत इति ॥ ईश्वरे ईश्वरेण । एवं नित्यमुक्तत्वादिसाम्येऽपि न स्वातन्त्र्यादिप्रकृतेरित्येतदुच्यते ॥ तदबन्ध इति ॥**

## भावबोधः

**असाधारण्यमनुपमृद्येति** ॥ लक्ष्म्या अपि स्वातन्त्र्यादौ न विष्णौ तद्गुणोपमर्दः । किं तु तेषां विष्णुमात्रनिष्ठत्वलक्षणासाधारण्योपमर्द एवेत्यभिप्रेत्य भाष्ये तेषामित्युक्तमिति भावेनासाधारण्यं पूरितमिति अवधेयम् । एवं नित्यमुक्तत्वादिसाम्येऽपीति । अनेन नित्यमसंसारित्वस्य नित्यतदनुग्रहणोपपत्तेरित्यादिन्यायविवरणांशोऽप्युक्तार्थो भवति ।

## भावदीपः

पूर्वयोगद्वयोक्तार्थे बाधकनिरासकत्वेनोत्तरयोगमवतारयति ॥ **यदीति** ॥ भाष्यं व्याचष्टे ॥ **अत इति** ॥ श्रियः सर्वसाम्येऽपि नेशगुणोपमर्द इत्यतोऽसाधारण्यमनुपमृद्येत्युक्तम् ॥ **विशेषगुणेति** ॥ विशेषगुणासाधारण्योपमर्द इत्यर्थः । समानार्थकयोगे तृतीयोक्तेराह ॥ **ईश्वरेणेति** ॥ स्मृतिशेषोक्तेरुपयोगमाह ॥ **एवमिति** ॥

## अभिनवचन्द्रिका

ननु अनेन वचनेन प्रकृतेः स्वातन्त्र्यपरिहारो नोपलक्ष्यते । ततश्च देशतः कालतश्च' इति प्रमाणोदाहरणमयुक्तमित्यत आह – **एवं नित्यमुक्तत्वादिसाम्येऽपीति** ॥ भाष्ये द्विधा हीदमवदृश्यत इति ॥

## वाक्यार्थमुक्तावली

पूर्वसूत्रे स्वातन्त्र्यादिगुणानामसाधारण्यस्योक्त्वात् स्वातन्त्र्यगुणसाधारण्यस्येति लभ्यते साम्यमिति शेषः । तथा च अतः स्वातन्त्र्यदिगुणासाधारण्यानुपमर्देनैव तस्याः प्रकृतेस्तेन साम्यमिति सूत्रार्थं सिद्धवत्कृत्य व्याचष्टे ॥ **नेति** ॥ लक्ष्म्याः स्वातन्त्र्यादिमत्वेऽपि न विष्णौ गुणोपमर्दः किं तु तेषामसाधारण्यस्यैवेति भावेनोक्तम् **असाधारण्यमिति** ॥ स्मृतौ तद असम्बन्धस्तस्या असम्बन्धः परमात्मनः सकाशादित्यर्थः । परेशस्य तु, स चासावसम्बन्धश्च तदसम्बन्धः स्वत एवेति योज्यम् । तदुपपादनं प्रकृतेः प्राकृतस्यापीति । प्राकृतं ब्रह्मादि । अबद्धत्वे उपासनावैय्यर्थ्यमित्यत उपासनं स्वभावान्न फलेच्छयेत्युक्तं सा चेति ।

## तत्त्वसुबोधिनी

**असाधारण्यमनुपमृद्येति** ॥ लक्ष्म्या अपि स्वातन्त्र्यादौ विष्णौ न तद्रूपोपमर्दः । किं तु तेषां विष्णुमात्रनिष्ठत्वलक्षणसाधारण्योपमर्दक एवेत्यभिप्रेत्य तेषामित्युक्तमिति भावेनासाधारण्यं पूरितमित्यवधेयम् । तदबन्धः परात्मन इत्यस्य परमात्मनः सकाशात्तस्याः प्रकृतेरबन्ध इत्यर्थः ।

## वाक्यार्थमञ्जरी

अतः साम्यतदभावयोरेवं साधितत्वात् नोपमर्देनासाधारणगुणानुपमर्देनैव साम्यमित्यर्थः ।

## सूत्रभाष्यम्

### ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥ ११ ॥

**‘द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति । अथानूष्मावत्प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति जानन्ति च’ इति सौपर्णश्रुतेः किञ्चित्साम्योपपत्तेः ॥**

## तत्त्वप्रदीपिका

वदति च सौपर्णश्रुतिरूष्मादिकम् । ऊष्मावत्परं ब्रह्मान्यदनूष्मावदिति वैलक्षण्य-मुक्त्वाऽदृश्यत्वादिकमेव उक्त्वा प्रकृत्यादेर्दृश्यत्वादिकमदृश्यत्वादिकं च वक्ति । तच्च वचनं देवदेव्योः किञ्चित्साम्योपपत्तेरेव ।

## तत्त्वप्रकाशिका

**युक्त्यन्तरेण किंचित्साम्यं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ अस्यैवेति ॥** ईश्वरस्योष्मावत्त्वं प्रकृतेरूष्मावत्त्वमनूष्मवत्त्वं च वदन्ती श्रुतिरस्यैवार्थस्य किंचित्साम्यस्योपपत्तेरर्थे भवत्युपपादिका भवति । अतोऽप्यस्ति किंचित्साम्यमिति भावः ॥

## गुर्वर्थदीपिका

श्रुतौ विद्यमानमनूष्मावत्पदं 'न जिघ्रन्ति जिघ्रन्ति' इत्यादिद्विविधफलपर्यालोचन योष्मावत्वस्याप्युपलक्षणमिति भावेनोक्तं प्रकृतेरूष्मावत्त्वमनूष्मावत्त्वं चेति । प्रकृतेरित्युपलक्षणं प्राकृतस्यापीति ग्राह्यम् । उष्मावत्वं च 'उष दाह' इति धातोः पराभितापनसामर्थ्यविशेषवत्त्वम् ॥ **तच्च परमात्मनि ।** 'भासस्तवोग्राः प्रतपन्ति विष्णौ' इति वचनात्स्वभावतस्सर्वदा विद्यते । अतोऽसौ महास्वतन्त्रः । कदाचित्तद्दयया अङ्घ्र्या घ्राणदर्शनादिकं न त्वनूष्मावत्त्वस्यापि सत्वा-दिति भावेन 'यत्र जिघ्रन्ति न पश्यन्ति' इत्याद्युक्तम् । लक्ष्म्यादीनां तु हरिं प्रति सा शक्तिरेव नास्ति । अन्यत्रास्ति च । अत ईषत्स्वातन्त्र्यमेव । न तु तद्वन्महास्वातन्त्र्यमिति भावः । इति सौपर्णश्रुतेश्चेति वदता भाष्यकारेणोष्मेति सौत्रपदस्योष्मावत्त्वप्रतिपादकश्रुतेरित्यर्थ उक्तो भवति । एवं च भगवत ऊष्मावत्त्वप्रतिपादकश्रुतिबलादस्यैव किञ्चित्साम्यस्यैवोपपत्तेरुपपन्नत्वादिति सूत्रवाक्ययोजनापि सूचिता ।

## भावबोधः

अत्र सूत्रे 'ऊष्मा' इति पदं तत्पदोपेतश्रुतिसूचकमित्यभिप्रेत्याह– **ईश्वरस्यैवेति ॥**

## भावदीपः

सूत्रे चशब्दादाह ॥ **युक्तयन्तरेणेति** ॥ न केवलमतीतयोगैरुक्तसाम्यं तदभावान्यथानुपपत्त्या । किन्तु धर्मान्तरवैलक्षण्ययुक्त्याऽपीत्यर्थः । सूत्रे ऊष्मपदमूष्मपदघटितश्रुतिपरमिति ज्ञानपादे समन्वारम्भणादित्यत्रैवोक्तं मत्वा सूत्राक्षरार्थमाह ॥ **ईश्वरस्येति** ॥

## अभिनवचन्द्रिका

**इदम्** परब्रह्म, प्रकृतिशब्दितं चेति वस्तुद्वयम् । द्विधा दृश्यते कथम् – ऊष्मावदनूष्मावत् । तत्रैकं परेन्द्रियाऽभिभवशक्तिमत् । अन्यत्तु ऊष्मावच्चाऽनूष्मावच्च दृश्यते । तत्रोष्मावत्परं ब्रह्म । तत्र हेतुमाह – **यत्र जिघ्रन्तीत्यादिना** ॥ अत्र प्रकृतिः महा लक्ष्मीः । **प्राकृतं** सीतारुक्मिण्यादि । **अनूष्मावत्** ईश्वरेन्द्रियाऽभिभवशक्तिविधुरम् । उपलक्षणमेतत् । तदन्येन्द्रियाऽभिभवशक्तियुक्तं च । उभयत्र हेतुमाह – **यत्र जिघ्रन्ति जिघ्रन्तीत्यादिना** ॥ तत्रेश्वरः स्वातन्त्र्येण तदाघ्राणादिकं करोति । ऋजवस्तु तदनुग्रह एव साकल्येन जिघ्रन्ति । तदन्ये तु महालक्ष्म्याऽपहृतेन्द्रियशक्तयः साकल्येन न जिघ्रन्तीत्यर्थः ।

**पूर्वपक्षस्तु** प्रकृतिः परमात्मनि लीयते । 'तेजः परस्यां देवतायाम्' इति श्रुतेः । न च असम्भावितत्वात् 'उत्ताना वै देवगवा वहन्ति' इति श्रुत्या देवगवानामुत्तानानां वहनाऽसिद्धिवत् प्रकृतेर्लयश्रवणेऽपि तदसिद्धिरिति वाच्यम् । तदधीनत्वे सम्भावितत्वात् । ततश्च भगवति लयसद्भावात् अधिकारिणां प्राणावसानत्वोक्तिरयुक्तेति ।

**सिद्धान्तस्तु** न प्रकृतिर्विलीयते । नित्यमुक्तत्वात्, कुतो नित्यमुक्तत्वं, संसारसम्बन्धाभावात् । तदपि कुतः विभुत्वात् । परमात्मवत्सीतारुक्मिण्यादिरूपेणाऽपि नित्यत्वाच्च । न हि मूलरूपवत्सीताद्यवताराणामपि नित्यत्वे गर्भवासादिरूपः संसारसम्बन्धः सम्भवति । न च एतावता साम्यम् । प्रकृतौ लीनस्य संसाराऽभिधानात् परमात्मनि लीनस्य मुक्तत्वाभिधानात् प्रकृतेरपि परमात्मनः सूक्ष्मत्वस्य, ज्ञानानन्दादिपरिमाणाधिक्यस्य चाऽभिधानाच्च । न च प्रकृतिपरमात्मनोः साम्यवचनान्यपि दृश्यन्ते । असाम्यवचनान्यपि दृश्यन्ते । ततो न किंचिदपि सिध्यतीति वाच्यम् । ये तस्य विशेषगुणा ज्ञानानन्दादिपरिमाणाधिक्यादय स्तेषामनुपमर्देन नित्यमुक्तत्वादिना

(अभिनवचन्द्रिका)

साम्याङ्गीकारे बाधकाभावात् । 'द्विधा हीदमवदृश्यत ऊष्मावदनूष्मावच्च' इत्यादिना किञ्चित्साम्योक्तेश्च । 'असमो वा एष पर' इति साम्यप्रतिषेधात् न प्रकृतेस्तत्साम्यमिति चेत्, न शारीरादेवात्र साम्यस्य प्रतिषिद्धत्वात् 'प्रकृतिर्वाव समाऽसमा' इति स्पष्टमाध्यन्दिनायनश्रुतेश्च । 'मत्स्यकूर्मवराहाद्या' इति स्मृतेश्च । अतः प्रकृतेर्नित्यमुक्तत्वादिना लयाऽभावात् युक्तं प्राणावसानत्वमधिकारिणामिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

अत्र सूत्रे ऊष्मेति पदं तत्पदोपेतश्रुतिसूचकमिति भावेन व्याचष्टे ॥ **ईश्वरस्येति** ॥ श्रुतावूष्मशब्देन सामर्थ्यमुच्यते । ऊष्मनामा स भगवान् समर्थत्वात् प्रकीर्तित इत्यैतरेयभाष्ये । अत एव तद्गन्धादेः घ्राणाद्यविषयत्वम् । ब्रह्ममीमांसान्यायभास्करे तु । अत्रोष्मवत्वं नाम यूपाहवनीयादि-पदवद्वैदिकव्युत्पत्त्या घ्राणाद्यविषयत्वं श्रियोऽनूष्मावत्वमूष्मावत्वं चास्ति । स्वतोवेद्यत्वेऽपि तदभि-मन्यमानाचेतनस्य घ्राणादिवेद्यत्वादनूष्मावत्वम् । ईश्वरस्यानभिमानिनस्तन्नास्तीत्यूष्मावत्वमेवेति प्राचीनैरेवोक्तम् । अस्मदुक्तार्थोपपादनमन्यत्र बोध्यम् ।

## तत्त्वसुबोधिनी

अत्र सूत्रे ऊष्मेति पदं तत्पदोपेतश्रुतिसूचकमित्यभिप्रेत्याऽह । **ईश्वरस्येति** ॥

## वाक्यार्थमञ्जरी

ऊष्मा ऊष्मपदोपेतश्रुतिः । अस्यैव किंचित्साम्यस्यैवोपपत्तेः उपपत्त्यर्थं भवतीत्यर्थः ॥ ऊष्मा-वत्वं नाम परेन्द्रियशक्तितिरोधायकत्वमूष्मसूर्यमण्डलादिसाधारणं विवक्षितम् । अत एवेश्वरस्य सर्वेन्द्रियागोचरत्वोक्त्या तदुपपद्यत इति बोध्यम् ॥ उपपत्तेरिति षष्ठ्या अपेक्षितं पूरयितुमर्थमाह ॥ **उपपादकेति** ॥

## सूत्रभाष्यम्

**ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ १२ ॥**

(सूत्रभाष्यम्)

'असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्ति । अथ परो न जायते न म्रियते पूर्णश्चैष भवति' इति चतुर्वेदशिखायां साम्यप्रतिषेधान्नेति चेन्न । शारीराद्धि साम्यं प्रतिषिध्यते ।

## तत्त्वप्रदीपिका

'सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च' इत्यादौ देशव्याप्त्यादिप्रतिषेधात् । परमव्यतिरिक्तानां सर्वेषामविशेषेण विवक्षितसाम्यमपि नास्तीति चेन्न । शारीराद्धि साम्यं तत्र प्रतिषिध्यते । न प्रकृतेः । तस्य ह्यणुत्वादि प्रसिद्धम् ॥

## तत्त्वप्रकाशिका

किंचित्साम्यमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ **प्रतिषेधादिति** ॥ न च प्रकृतिपुरुषयोर्देशकालव्याप्त्यादिनापि साम्यम् । 'असमो वा एष परमः' इति श्रुतौ परमेश्वरस्यैव नित्यसर्वगतत्वादि । अन्येषां तदभावमुक्त्वा प्रतिषिद्धत्वात् । अतोऽस्ति प्रकृतेर्लय इति भावः । छिद्रा दोषिणः । पूर्णः सर्वगतः । चशब्दाददोषश्च । परिहारांशं व्याचष्टे ॥ **नेति** ॥ भवेदेत-द्यद्येतस्यां श्रुतौ प्रकृतेर्भगवत्साम्यप्रतिषेधो भवेत् । नैतदस्ति । किं तर्हि शरीरेणैव साम्यमीश्वरस्य प्रतिषिध्यते । तस्य शरीरत्वेन नित्यसर्वगतत्वाद्ययोगादिति भावः ॥

## भावबोधः

**तदभावमुक्त्वा प्रतिषिद्धत्वादिति** । 'सर्वे ह्येतेऽणवः' इत्यादिना तदभावमुक्त्वा 'असमो वा' इति प्रतिषिद्धत्वादित्यर्थः । अत्राद्ये– प्रकृतेर्लयाभावसाधकनित्यमुक्तत्वे सर्वगतत्वादिहेतूक्तिः । द्वितीये– तस्यामुक्तत्वाङ्गीकारे परमात्मना सर्वसाम्यं स्यादित्याशङ्कानिरासाय तस्या अमोच-कत्वोक्तिः । तृतीये– ब्रह्मणः सूक्ष्मत्वे ज्ञानानन्दादिगुणाधिक्ये च प्रमाणोक्तिः । प्रकृतेः सर्व-साम्याभावे नित्यमुक्तत्वादिकमपि न स्यादित्याशङ्कापरिहाराय, चतुर्थे– पूर्वसूत्रसिद्धहेतुना किञ्चि-त्साम्यसाधनम् । पञ्चमे– किञ्चित्साम्य एव श्रुतिरूपप्रमाणोक्तिः । षष्ठे– प्रकृतेः परमात्मना किञ्चित्साम्यस्य 'असमो वा' इति श्रुतिविरोधमाशङ्क्य तच्छ्रुतेर्जीवविषयत्वोक्त्या तद्विरोध-परिहारः । सप्तमे– सामान्यश्रुतेः जीवविषयत्वसिद्धये ईश्वरेण प्रकृतेः किञ्चित्साम्ये जीवानाम-त्यन्तासाम्यश्रुतिरूपप्रमाणोक्तिः । अष्टमे– तत्रैव विशेषस्मृतिरूपप्रमाणोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

साध्यार्पकतया किञ्चित्साम्यमिति पदमनुवर्त्य नञध्याहारेणान्वयमुपेत्य भाष्यं व्याचष्टे ॥ **न च प्रकृतीति** ॥ इति चतुर्वेदशिखायामित्यस्यार्थ इति श्रुताविति । साम्येत्यतः प्राक् भाष्ये शेषमाह ॥ **परमेत्यादि** ॥ सर्वे हीत्यादिनोक्त्वाऽसमो वेत्यादिपूर्वांशेन प्रतिषिद्धत्वात्साम्यस्येत्यर्थः । नेत्यादिभाष्यं व्याचष्टे ॥ **भवेदित्यादिना** ॥ शारीरपदोक्तिसूचितयुक्तिमाह ॥ **तस्येति** ॥

## वाक्यार्थमुक्तावली

अस्येत्यनुवर्तते । नेत्यावर्तते । अस्य किञ्चित्साम्यस्य प्रतिषेधादिदं देशकालादिना किञ्चित्साम्यं नेति चेन्न । शारीराज्जीवात्साम्यस्यास्यां श्रुतौ प्रतिषेधादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **नेत्यादिना** ॥ **तदभावमिति** ॥ सर्वे ह्येतेऽणव इत्यादिना तदभावमुक्त्वा असमो वेति प्रतिषिद्धत्वादित्यर्थः । जीवादित्यनुक्त्वा शारीरादित्युक्तेर्भावमाह ॥ **तस्य शरीरत्वेनेति** ॥ शरीराभिमानित्वेनोत्पत्तेस्तत्परित्यागेन मरणात् । शरीरावच्छेदेनावस्थानेन महत्वाभावात् । शरीरत्वादेव दुःखादित्युक्तत्वाच्चेति भावः ।

## तत्त्वसुबोधिनी

**तदभावमुक्त्वा प्रतिपिद्धत्वादिति** ॥ 'सर्वे ह्येते अणव' इत्यादिना तदभावमुक्त्वा असमो वेति प्रतिषिद्धत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

सर्वे ह्येत इति श्रुतावीशान्येषु देशकालव्याप्त्यादिनापि साम्यस्य प्रतिषेधान्न रमायाः किञ्चित्साम्यमपीति चेन्न । तत्र शरीरिणो जीवादेवेशस्य देशादिव्याप्तिसाम्यप्रतिषेधादित्यर्थः ॥ **तदभावमुक्त्वा प्रतिषिद्धत्वादिति** ॥ सर्वे ह्यवरा इत्यादिना तदभावमुक्त्वाऽसमो वेति प्रतिषिद्धत्वादित्यर्थः ॥ **शरीरत्वेनेति** ॥ अनित्यदेहपरिच्छिन्नत्वेनेत्यर्थः ।

## सूत्रभाष्यम्

कुतः

**ॐ स्पष्टो ह्येकेषाम् ॐ ॥ १३ ॥**

'अथातः समाश्वासमाश्वाभिधीयन्ते समासमाश्वाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं चाथ समाऽसमा प्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा च' इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ॥

## तत्त्वप्रदीपिका

'छिद्रा ह्येते भवन्ति' इत्युक्तमपूर्णत्वं न जीवानामेवेति चेत्, अत एव देव्याः समासमत्वमस्यां श्रुतावस्पष्टमिति स्पष्टो हि माध्यन्दिनायनानां समादिवाद इत्याह । समवादोऽसमवादः समासमवादश्चेत्यर्थः ।

## तत्त्वप्रकाशिका

नन्वस्याः श्रुतेः सामान्यरूपत्वादत्र शारीरेण साम्यं प्रतिषिध्यते परमात्मनो न प्रकृतेरिति कुत इत्याक्षिपति ॥ **कुत इति** ॥ तत्परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ **स्पष्ट इति** ॥ सत्यमियं सामान्यश्रुतिरिति तथाप्युक्तं युज्यते । यतः स्पष्टश्रुतौ जीवानामेवासमत्वमुक्त्वा प्रकृतेः समासमत्वमुच्यते । विशेषश्रुत्या च सामान्यश्रुतेर्बाधोपपत्तेरिति भावः । आयतिः प्रवृत्तिः । प्रजापतिर्दक्षः ॥

## भावदीपः

सूत्रादौ हिर्हेतावित्युपेत्य साध्यमध्याहृत्य भाष्यं योजयति ॥ **सत्यमित्यादिना** ॥ समादिवाद इत्यस्यार्थमाह ॥ **असमत्वमुक्त्वेत्यादि** ॥

## वाक्यार्थमुक्तावली

हिशब्दो हेतौ । समादिवाद इति शेषः । अतश्शरीरादेव साम्यप्रतिषेधात् श्रिया साम्यप्रतिषेध इति नेति पूर्वेणान्वय इति भावेनाह ॥ **तथापीति** ॥ ये के च देवा इत्यस्य येऽन्ये देवा इत्यर्थः ।

## तत्त्वसुबोधिनी

अस्तु समासमत्ववचनं प्रकृतेः ततः किमित्यत आह ॥ **विशेषश्रुत्या चेति** ॥ नियतिरित्यनेन पौनरुक्त्या आह ॥ आयतिः **प्रवृत्तिरिति** ॥ ब्रह्मेत्यनेन पौनरुक्त्या आह ॥ **प्रजापतिर्दक्ष इति** ॥

## वाक्यार्थमञ्जरी

एकेषां माध्यन्दिनानामथासमा इति श्रुतौ जीवानामसमत्वादिवादः स्पष्टोऽस्ति हि यस्मात्तच्छरीरादेवासमत्वोक्तिरित्यर्थः ।

## सूत्रभाष्यम्

**ॐ स्मर्यते च ॐ ॥ १४ ॥**

**'मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः ।**
**ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा' इति वाराहे ॥ १४ ॥**

**॥ इति समनाधिकरणम् ॥ ६ ॥**

## तत्त्वप्रकाशिका

**न केवलं सामान्यश्रुतेर्विशेषश्रुत्या बाधोऽपि तु विशेषस्मृत्या चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां स्मृतिमुदाहरति ॥ स्मर्यते चेति ॥ अतः प्रकृतेरीश्वरवन्नित्यमुक्तत्वादिना लयाभावाद्युक्तं प्राणावसानत्वमधिकारिणामिति सिद्धम् ॥**

## भावदीपः

सौत्रचशब्दार्थाभिव्यक्तिर्न केवलमित्यादि ॥ **अत इति** ॥ देशकालव्याप्त्येशेन किञ्चित्साम्यभावादित्यर्थः ॥ **नित्यमुक्तत्वादिनेति** ॥ कदापि संसारित्वाभाव आदिपदार्थः ।

## वाक्यार्थमुक्तावली

समादिवाद इति सम्बध्यते। अत्राद्ये प्रकृतेर्लयाभावे नित्यमुक्तत्वादिहेतोरुक्तिः। नित्यमुक्तत्वे भगवता सर्वसाम्यमाशङ्क्य द्वितीयतृतीययोर्वैषम्योक्त्या तन्निरासः। चतुर्थे मोचकत्वपरम-सूक्ष्मत्वाद्यभाववन्नित्यमुक्तत्वमपि मा भूदित्याशङ्क्य देशकालव्याप्तिनित्यमुक्तत्वरूपकिञ्चि-त्साम्यसाधनम्। पञ्चमे तत्रैव श्रुत्युपन्यासः। षष्टे उक्तविधिकिञ्चित्साम्यमात्रस्य श्रुतिनिषेध-माशङ्क्य श्रुतेः सावकाशत्वोक्तिः। सप्तमाष्टमयोस्साम्यप्रतिषेधिकायास्सामान्यश्रुतेर्जीवविषयत्वेन सावकाशत्वसिद्धये ईश्वरेण प्रकृतेः किञ्चित्साम्ये जीवानां तदभावे च श्रुतिस्मृत्युपन्यास इति सूत्रक्रमः।

## तत्त्वसुबोधिनी

अत्राद्ये सूत्रे सर्वगतत्वादिहेतूक्तिः। द्वितीये तस्या अमोचकत्वोक्तिः। तृतीये सूक्ष्मत्वादौ प्रमाणोक्तिः। चतुर्थे किञ्चित्साम्यसाधनम्। पञ्चमे किञ्चित्साम्ये श्रुतिरूपप्रमाणोक्तिः। षष्ठे समावेताविति श्रुतिविरोधपरिहारः। सप्तमे जीवानामत्यन्तासाम्ये श्रुतिरूपप्रमाणोक्तिः। अष्टमे तत्रैव विशेषस्मृतिरूपप्रमाणोक्तिरिति सूत्रक्रमः।

## वाक्यार्थमञ्जरी

जीवानामेवासमत्वादिकं ब्रह्माद्या इति स्मर्यते चेत्यर्थः।

॥ इति समनाधिकरणम् ॥ ६ ॥

## ७. परा(लया)धिकरणम्

**ॐ तानि परे तथा ह्याह ॐ ॥ १५ ॥**

प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते । 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्य' इति कौषारवश्रुतिः ॥

॥ परा(लया)धिकरणम् ॥ ७ ॥

### तत्त्वप्रदीपिका

अवसितः प्रासङ्गिकः प्रकृतिस्वरूपनिरूपणाप्रकारः । सम्प्रति प्रस्तुतशेषमुपसंहरति– **तानि परे तथा ह्याह ॥** तानि सर्वाणि दैवतानि श्रुत्यन्तरोदितद्वारान्तरप्रवेशपूर्वकं प्राणद्वारेण भूतवृत्त्या प्राणशब्दवाच्यविरिञ्चद्वारेण परमात्मनि लीयन्ते प्राणप्रवेशोऽप्यनन्तगरुडयोरन्यतरद्वारेणैवेति निर्णयः । सर्वाणि दैवानीति सम्यग्दर्शी देवभाग एव सङ्गृहीतो वेदितव्यः ।

'वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काल' इति च ॥

### तत्त्वप्रकाशिका

अत्र चतुर्मुखेतरदेवानां मोक्षे भगवत्प्राप्तिसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ज्ञानिनां मोक्षाभावप्रसङ्गात्समर्थनीयमेतत् । 'सर्वे देवा भूतेषु विशन्ति' इत्युक्तं, ते देवा अत्र विषयः । भगवति लीयन्त उत नेति सन्देहः । उभयथापि सम्भवः सन्देहबीजम् । न देवानां हरौ लयः इति पूर्वः पक्षः । 'प्रतिबिम्बो हरेः प्राणः प्राणस्यान्याः कलाः क्रमात्' इति वचनात्सर्वदेवानां क्रमेण प्राणप्रतिबिम्बत्वात्तस्यैकस्यैव परमात्मप्रतिबिम्बत्वात्प्रतिबिम्बस्यैव बिम्बे लयनियमात् । अतो वेदगर्भेतरदेवानां परमात्मनि लयाभावाज्ज्ञानिनामपि मोक्षाभाव इति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **तानीति ॥** येषां देवानां पूर्वं भूतप्रवेशो निगदितस्तानि सर्वाणि दैवतानि परमात्मनि विशन्त्येव । न च प्राणप्रतिबिम्बत्वविरोधः । तत्प्रतिबिम्बत्वेन तद्द्वारा परमात्मनि लयाङ्गीकारात् । न च देवानां तदभाव एव । सामान्यतोऽशेषजीवानां भगवत्प्रतिबिम्बत्वात् । विरिञ्चप्रविष्टानां विरिञ्चस्य चेश्वरप्रवेशे परमात्मप्रवेशस्यापरिहार्यत्वात् । न चात्र प्रमाणाभावः । 'सर्वे देवाः' इति विशेषश्रुतिसद्भावादेवेति भावः । अतो देवानां परमात्मनि लयसद्भावायुक्तमुक्तमिति सिद्धम् ॥

## भावबोधः

**चतुर्मुखेतरदेवानामिति ॥** पूर्वाधिकरणे तेजसः परमात्मनि लयाभावसमर्थनेन प्राणपदोदित-चतुर्मुखस्य साक्षात्परमात्मनि लये सिद्धे तत्र तदितरदेवानां परमात्मप्राप्त्यर्थं तद्द्वारा परमात्मनि लयसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **भगवतीति ॥** अत्र देवाः किं परमात्मनि न लीयन्त उत लीयन्त इति चिन्ता । तदर्थं तेषां भगवत्प्रतिबिम्बत्वं **नास्त्युतास्तीति ॥** तदर्थं तेषां प्राण-प्रतिबिम्बत्वादिकं भगवत्प्रतिबिम्बत्वादिबाधकं **उत साधकमिति ॥** अन्यदेवानां प्राणाधीनत्वात् तत्प्राप्तिनियमात् । परप्राप्तिर्नास्त्येवेति न्यायविवरणोक्तयुक्तिमाह– 'प्रतिबिम्बो हरेः प्राणः' इत्यादिना । न च तदभाव एवेति । परमात्मनि लयाभाव एवास्त्वित्यर्थः । साधकाभावादिति भावः । 'सर्वे देवाः' इति विशेषश्रुतीति । उपलक्षणं चैतत् । 'प्राणं प्राप्य' इति न्याय-विवरणोक्तश्रुतिरपि ग्राह्या ।

## भावदीपः

**चतुर्मुखेत्यादि ॥** एतेन पूर्वत्र विलीनः परमे ह्यमृतत्वमेतीत्युक्तावस्तु तर्हि सोऽध्यक्ष इत्युक्तस्य प्राणस्य मोक्षः न तु भूतेष्वित्यादिनोक्तदेवानामिति शङ्कोदयात्पूर्वसङ्गतिरपि सूचिता । **ज्ञानिनामित्यादि ॥** तथा चानियम इत्युक्तिरयुक्ता स्यादिति भावः ॥ **उभयथापीति ॥** स्वोत्तमेषु लयस्य परंपरया हरौ प्रवेशेनाप्रवेशेन च सम्भव इत्यर्थः । अन्यदेवानां प्राणाधीनत्वात् । तत्प्राप्तिनियमात्परप्राप्तिर्नास्त्येवेत्यन्यत्रोक्तप्रतिज्ञाहेतू विवृणोति ॥ **न देवानामिति ॥ प्रति-बिम्बत्वादिति ॥** प्राणाधीनत्वादित्यर्थः । किञ्चित्तत्सदृशत्वे सति तदधीनत्वस्यैव प्रतिबिम्ब-शब्दार्थत्वेनात एव चोपमेत्यत्र व्यक्तत्वात् हेतोरसिद्धिनिरासाय इति वचनादित्युक्तम् ॥ **अत इति ॥** प्राण एव देवानां लयस्य न्यायप्राप्तत्वादित्यर्थः । सौत्रतच्छब्दार्थव्यक्तिपूर्वं सूत्राक्षरार्थतया भाष्यं व्याचष्टे ॥ **येषामिति ॥** पूर्वं भूतेष्वित्यादौ । अत्र सर्वाणि दैवतानीत्युक्त्या सम्यग्दर्शित-दैवभागमात्रग्रहः । वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काल इत्युक्तेरित्युक्तं तत्वप्रदीपे । प्रागुक्तशङ्कानिरासकतया प्राणद्वारेणेत्येतद् व्यनक्ति ॥ **न चेत्यादिना ॥ तद्द्वारेति ॥** भूतपूर्वगत्या प्राणशब्दितविरिञ्चद्वारेत्यर्थः । अत्र विरिञ्चप्रवेशोऽप्यनन्तगरुडयोरन्यतरद्वारा ज्ञेयः ॥ **तदभाव एवेति ॥** भगवत्प्रवेशाभाव एवेत्यर्थः । हेत्वभावादिति भावः ॥ **सामान्यत इत्यादि ॥**

(भावदीपः)

आभास एव चेत्यादौ तथोक्तेरिति भावः ॥ **न चात्रेति** ॥ प्राणद्वारा परानुप्रवेशे विशेषप्रमाणाभाव इत्यर्थः ॥ **अत इति** ॥ युक्तिश्रुत्योर्भावादित्यर्थः ॥ **उक्तमिति** ॥ अनियमः सर्वेषामित्युक्तमित्यर्थः ॥

## अभिनवचन्द्रिका

**उभयथासम्भव इति** ॥ तथा हि देवानां भूतेषु लयः । देवविशिष्टानां भूतानां प्राणे, सर्वदेवविशिष्टस्य प्राणस्येश्वरे लय इत्येकः प्रकारः । अस्मिंस्तु पक्षे भूतेषु लीनानां देवानां परमात्मनि लयसम्भवः । अपरस्तु केषाञ्चित्साक्षात्, अन्येषां तु परंपरयेति सर्वेषां प्राणे लयः । प्राणस्तु स्वस्मिन् लीनान् देवान् बहिर्निष्कास्य स्वयमेक एव परमात्मनि लीनो भवति । तद्यथा अमात्यो गजतुरगपदातिभिर्युक्तो राजद्वारपर्यन्तमागत्य तान् बहिः प्रस्थाप्य स्वयमेक एव राजद्वारमाविशतीति । अस्मिंस्तु कल्पे न देवानां परमात्मनि लय इति भूतेषु लयोक्तेरुभयथासम्भवः सन्देहबीजमित्यर्थः ॥ **न देवानामिति** ॥ न देवानां प्राणेन सह परमात्मनि लयः । अपि तु वाण्याः प्राणे लयपर्यन्तमेव सर्वदेवाऽनुवृत्तिः । प्राणलयावसरे तु अमात्यभृत्यन्यायेन बहिर्भाव इत्यर्थः । स्वोत्तमेषु लीनानां वाणीलयपर्यन्तमनुवृत्तौ हेतुं, तथा प्राणलयकाले बहिर्भावे च हेतुं, प्रमाणोदाहरणपूर्वकमाह– **प्रतिबिम्बो हरिरिति** ॥ अमात्यभृत्यन्यायेन प्रवृत्तं पूर्वपक्षं निषेधति– **न चेति** ॥

**पूर्वपक्षस्तु** न देवा परमात्मनि लीयन्ते । तत्प्रतिबिम्बत्वशून्यत्वात् । किंतु प्राणे । तत्प्रतिबिम्बत्वात् । श्रूयते हि देवानां प्राणप्रतिबिम्बत्वं, परमात्मप्रतिबिम्बत्वाभावश्च । 'प्रतिबिम्बो हरेः प्राणः प्राणस्याऽन्याः कला' इत्यादिना । अतो हिरण्यगर्भेतरदेवानां हिरण्यगर्भं प्रविष्टानाममात्यभृत्यन्यायेन हिरण्यगर्भलयकाले बहिर्भावं कृत्वा तस्यैकस्यैव परमात्मनि लयात्, न देवानां मोक्ष इति ।

**सिद्धान्तस्तु** देवाः प्राणद्वारा परमात्मनि लीयन्त एव । तत्प्रतिबिम्बत्वात् । 'सर्वे देवाः प्राणमाविश्य' इति श्रुतेश्च । अतो देवानां परमात्मनि लयसद्भावादुक्तं युक्तमिति सिद्धमिति ॥

## वाक्यार्थमुक्तावली

सर्वे देवा भूतेषु विशन्तीतित्युक्तं ते देवा त्र **विषय इति** ॥ एतेनैकस्मिन्निति सूत्रे प्रकृतदेवानामत्र हरौ लयविचारादनन्तरसङ्गतिरिति भावः । समानाधिकरणं तु प्रासङ्गिकमित्युक्तमेव । अवसितः प्रासङ्गिकः प्रकृतिस्वरूपनिरूपणाप्रकारः सम्प्रति प्रस्तुतमुपसंहरतीति तत्वप्रदीपवचनात् । देवा भगवति न लीयन्त उत लीयन्त इति चिन्ता । तदर्थं सर्वेषां भगवत्प्रतिबिम्बत्वं **नास्त्युतास्तीति** । नन्वत्र भगवति शरीरलयोऽस्ति न वेति न सन्देहावकाशः सिद्धान्तेऽपि भगवति शरीरलयाभावात् । न चान्ततः प्रविशन्ति न वेति सन्देह इति वाच्यं । किं साक्षात्प्रविशन्ति न वेति उत प्राणद्वारेति । नाद्यः सिद्धान्तिनाऽनङ्गीकारात् । द्वितीये पूर्वपक्षिणाप्यङ्गीकार्यत्वात् । सोऽध्यक्ष इति सर्वदेवगर्भितस्य भगवति प्रवेशस्योक्तत्वात् । अत एव चतुर्मुखेतरदेवानामित्युक्तत्वादिति चेदत्रोच्यते । स्वस्वोत्तमेषूक्तक्रमेण शरीरलयवतां स्वस्वोत्तमान्तर्गततया हिरण्यगर्भं प्रविष्टानां हिरण्यगर्भस्य परमात्मनि प्रवेशानन्तरं मुक्तौ ब्रह्मविदाप्नोति परमित्युक्तब्रह्मप्राप्तिरूपः साक्षाद्धरिप्रवेशोऽस्ति न वेति विचार्यते । अत एव श्रुतौ प्राणमाविश्य देवे मुक्तौ लयं परमे यान्त्यचिन्त्य इति तथोक्तिरिति ध्येयम् । उक्तं चैतद्ब्रह्ममीमांसान्यायभास्करे । सूत्रे परमात्मनि उत्तमे प्रत्यक्चैतन्ये बिम्बभूते हरौ लयं यान्तीत्युक्तव्यवच्छेद्यं परतन्त्रेत्युक्तन्यायं विशदयति ॥ **प्रतिबिम्ब इति** ॥ **क्रमेणेति** ॥ तथा च स्वबिम्बपरतन्त्राणां तान्यतिहायान्यत्र प्रवेशो न सम्भवति । न ह्यन्यत्राविष्टस्यान्यत्र प्रवेश इति भावः ॥ **तत्प्रतिबिम्बत्वेनेति** ॥ भगवत्प्रतिबिम्बत्वेनेत्यर्थः ॥ **तदभाव एवेति** ॥ परमात्मप्रतिबिम्बत्वाभावस्तत्र लयाभावश्चेत्यर्थः ॥ **सामान्यत इति** ॥ आभास एव च । रूपं रूपं प्रतिरूपो बभूवेत्यादेर्ज्ञानानन्दादिसादृश्यमात्रेण स्वहृदि स्थितभगवत्प्रतिबिम्बत्वादित्यर्थः ॥ **अपरिहार्यत्वादिति** ॥ अन्यथा ब्रह्मविदाप्नोति परमिति श्रुतब्रह्मप्राप्तिरूपमोक्षविरोधादिति भावः । विशेष इत्युक्तसिद्धान्तन्यायप्रदर्शकत्वेन सर्वे देवा इति विशेषप्रमाणसूचकं तथा ह्याहेत्यंशं व्याचष्टे ॥ **न चेति** ॥

## तत्त्वसुबोधिनी

**चतुर्मुखेतरदेवानामिति** ॥ पूर्वाधिकरणे तेजसः परमात्मनि लयाभावसमर्थनेन प्राणपदोदितचतुर्मुखस्य साक्षात्परमात्मनि लयु सिद्धेः तदितरदेवानां परमात्मप्राप्त्यर्थं तद्द्वारा परमात्मनि

(तत्त्वसुबोधिनी)

लयसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **प्रतिबिम्बस्यैवेति** ॥ तथा च प्रतिबिंबत्वान्न तेषां तत्र लय इति भावः । न च तदभाव एवेति परमात्मनि लयाभाव एवास्तु इत्यर्थः । साधकाभावादिति भावः ।

## वाक्यार्थविवरणम्

**मोक्षाभाव इति** ॥ भगवत्प्रवेशस्यैव मोक्षत्वादिति भावः ॥ **तदभाव एवेति** ॥ साधकप्रमाणाभावात् परमात्मनि लयाभाव एवास्त्वित्यर्थः । प्रतिबिम्बत्वयुक्तिरेव साधिकाऽस्तीत्याह ॥ **सामान्यत इति** ॥

## वाक्यार्थमञ्जरी

**ज्ञानिनामिति** ॥ देवानामित्यर्थः । तथा चानियम इत्युक्तव्याघात इति भावः । अन्याः रुद्रादिदेवताः कलाः प्रतिबिंबांशाः क्रमात् प्राणस्य रुद्रस्तस्येन्द्र इत्यादिक्रमात् ॥ ॐ तानि परे तथा ह्याह ॐ ॥ तानीतरदैवतानि परे परमात्मनि विरिंचिद्वारा लीयन्ते कुतः हि यस्मात्सर्वे देवा इति श्रुतिस्तथाऽऽहेत्यर्थः । पूर्वं भूतेषु तच्छ्रुतेरित्यत्र तदभाव एवेति परमात्मनि लयाभाव एवास्त्वित्यर्थः । साधकाभावादिति भावः ॥ **भगवत्प्रतिबिंत्वादिति** ॥ तथा च साधकाभावोऽसिद्ध इति भावः । विरिंचे लयाङ्गीकारात्कथं भगवति लय इत्यत आह ॥ **विरिञ्चप्रविष्टानामिति** ॥

॥ इति परा(लया)धिकरणम् ॥ ७ ॥

## ८. अविभागाधिकरणम्

**ॐ अविभागो वचनात् ॐ ॥ १६ ॥**

'एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसङ्कल्पा यथानिकाममन्तर्बहिः परिचरन्ति' इति गौपवनश्रुतिः । तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम् । 'कामेन मे कामः आगाद्धृदयाद्धृदयं मृत्योरिति वचनात् ।

'मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु ।
कामानुकूलकामत्वं नान्यत्तेषां विधीयत' इति ब्राह्मे ॥

॥ इति अविभागाधिकरणम् ॥ ८ ॥

### तत्त्वप्रदीपिका

तेषां मुक्तानां वक्ष्यमाणस्यादुःखानन्दभोगविशेषस्योपपत्त्यर्थं सत्यकामत्वमभिस्पृहणीयम्, श्रूयते च, तथा च परमेशितुरन्येषां च सत्यकामत्वे विरोधप्राप्तिमाशङ्क्यमानां परिहर्तुमाह– अविभागो वचनात् ॥ परमेश्वरकामसङ्कल्पाविभागेनैव मुक्तानां सत्यकामत्वं सत्यसङ्कल्पत्वं च । विषयभेदादविभाग उच्यते । यथा ह्यैकमत्यादिव्यवहारो लोके च । अत ईश्वरस्य यं यं प्रति यथा यथाऽभीष्टं भवति तस्य तस्य स्वात्मानमन्यं प्रति च तथा तथाऽभीष्टं भवतीत्येतत्सत्यकामत्वं मुक्तानामतो न विरोधः । 'कामेन मे काम आगाद्धृयाद्धृदयं मृत्योः' इति लुङर्थे लोटः प्रार्थनात्मकत्वात् । 'यदमीषामदः प्रियम् । तदेतूपमामभि' इति वाक्यशेषाच्च । यदमीषां सर्वसंहारकभगवत्प्रमुखानां देवानां प्रियं तन्मां प्रति प्रियमभ्युपैत्वित्यर्थः । न चात्र मुक्तानां परमाभेदोऽभिप्रेतः । प्रवेशवचनात् । न हि प्रविष्टः प्रवेशस्थानं भवति । न च मुक्तौ प्रवेश एवासिद्ध इति युक्तम् । बहुप्रमाणप्रसिद्धिप्रतिपादनात् । वागादिशब्दानां चाभिमानिदेवेषु वेदव्यवहारतो मुख्यवृत्त्यभ्युपगमात् । अभिमानिव्यपदेशस्त्विति प्रागेव प्रसाधितत्वाच्च । निर्विशेषब्रह्माभेदे मुच्यमानस्योत्क्रान्तिगत्युक्तिविरोधश्च । न च सा सगुणमुक्तिविषयेत्यादरणीया । निर्गुणमुक्तेस्तमोगतिव्यतिरेकेणाभावात् । 'न तस्य प्राणा उत्क्रामन्ति' इति प्रविष्टविषयम् । न च प्रवेशे दुःखाशङ्का । देहसम्बन्धादिहेतुकं दुःखलेशममृष्यतो मुक्तस्थानं चानुबुभूषतोऽपरोक्षीकृतस्वात्मभूतचिदानन्दात्मकदेहेन्द्रियादिमतस्तस्य चिच्छरीरेन्द्रियप्राणविलयस्य चिरात्प्रतीक्षितस्याहिनिलयनीनिरासवत्सुखरूपत्वात् ।

## तत्त्वप्रकाशिका

अत्र देवानां मुक्तौ भगवदधीनत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा भगवतः सर्वोत्तमत्वहानिप्रसङ्गात्समर्थनीयमेतत् । देवा एव प्रकृता विषयः । किं मुक्तौ स्वतन्त्रा वर्तन्त उतास्वतन्त्रा इति सन्देहः । मुक्तत्वं स्वातन्त्र्यस्य भगवद्धर्मत्वं च सन्देहबीजम् । स्वतन्त्रा एव वर्तन्त इति पूर्वः पक्षः । मुक्तत्वादेव । अस्वातन्त्र्ये संसारिवद्दुःखादिप्राप्तेः । 'एते देवाः' इति सायुज्यं प्राप्तानां देवानां सत्यकामत्वादिश्रुतेश्च । न हि परतन्त्रेषु सत्यकामत्वादि सम्भवति । अतो मुक्तानामपि स्वातन्त्र्यात्परमात्मनः सर्वोत्तमत्वोक्तिर्विरुद्धेति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अविभाग इति** ॥ परमात्माधीना एव मुक्ता न तु स्वतन्त्राः । न चैवं श्रुत्यादिविरोधः । श्रुतिर्यत्सत्यकामत्वं वक्ति तत्तेषां सत्यकामत्वं परमेश्वरेच्छानुसारेणैवेत्यङ्गीकारात् । अत एव न दुःखादिप्राप्तिः । यदा खलु भगवदिच्छाननुसारेणेच्छति तदा तदलाभेन दुःखादि स्यात् । मुक्तास्तु भगवत्कामानुसारेणैव कामयन्तेऽतो भगवत्कामनिमित्तेन मुक्तकामानन्तरमेव कामितप्राप्तेर-स्वतन्त्राणामपि सत्यकामत्वाददुःखित्वाद्युपपन्नमिति भावः । सत्या नित्याः । सत्यकामत्वश्रुतेः कुतोऽमुख्यार्थतेत्यत आह ॥ **कामेनेति** ॥ मृत्योः कामेनेच्छया मे कामः कामितमागात् । आगतं तदिच्छानन्तरप्राप्तत्वात् । कथमीश्वरेच्छया ममेच्छा भगवदिच्छानुसारिणीत्यर्थः । अत्र स्मृतिं चाह ॥ **मुक्तानामिति** ॥ सामर्थ्यं चेश्वराधीनमिति शेषः । अतो मुक्तानामस्वातन्त्र्याद्विष्णोरेव सर्वोत्तमत्वमिति सिद्धम् ॥

## भावबोधः

**भगवदधीनत्वसमर्थनादिति** । यदुक्तं पूर्वाधिकरणे भगवत्प्रतिबिम्बत्वेन देवानां भगवति लय इति तदयुक्तम्, तेषां मुक्तत्वादिना स्वतन्त्रत्वात्तदधीनत्वरूपतत्प्रतिबिम्बत्वस्यैव अयोगादित्याक्षेपो-त्थानादनन्तरसङ्गतिरिति भावः । अत एवोपासनासम्बन्ध्यर्थप्रतिपादकानां ''व्यतिहारो विशिंषन्ति हीतरवत्'' इत्यादीनां उपासनापादेऽन्तर्भाववत्, भगवल्लीनदेवानां भगवदधीनत्वप्रतिपादकस्याप्यस्य पादेऽन्तर्भावो युक्त एव । अत एव वक्ष्यति– देवा एव प्रकृता इति ॥ **किमिति** ॥ अत्र भगवल्लीनत्वेन प्रकृता देवाः किं मुक्तौ स्वतन्त्रा उत भगवदधीना इति चिन्ता । तदर्थं तेषां मुक्तत्वसत्यकामत्वादिकं स्वातन्त्र्यसाधकं भवत्युत न भवतीति । तदर्थं सत्यकामत्वादिकं किमीश्वर इव मुख्यं उत ईश्वरकामाद्यनुसारित्वादिरूपममुख्यमिति । तदर्थं तेषां विवक्षितसत्यकामत्वे

(भावबोधः)

दुःखप्राप्तिर्न भवत्युत भवतीति ॥ **मुक्तत्वादेवेति** ॥ अनेन सत्यसङ्कल्पादेरिति न्यायविवरणे आदिपदेन मुक्तत्वं ग्राह्यमित्युक्तं भवति ॥ **अस्वातन्त्र्य इति** ॥ अनेन संसारसमानर्धमत्वं मुक्तेः इति न्यायविवरणांशो व्याख्यातः ॥ **सत्यकामत्वादिश्रुतेश्चेति** ॥ अनेन सत्यसङ्कल्पत्वादेरिति न्यायविवरणोक्तसत्यसङ्कल्पत्वहेतोरसिद्धिः परिहृता भवति । श्रुतिर्यत्सत्यकामत्वं वक्तीति । 'तत्' इत्यतः पूर्वं भाष्ये शेषोक्तिरियम् । तत्परमेश्वरकामाद्यविभागेनेति भाष्यव्याख्यानपरेणानेन सत्य-सङ्कल्पत्वादेः ईश्वरसङ्कल्पाद्यनुसारित्वनियम इति न्यायविवरणांशस्यापि तात्पर्यमुक्तं भवति । नन्वेवं सत्यस्वातन्त्र्यापातेन दुःखादिप्राप्त्या संसारसमानधर्मत्वं मुक्तेरिति न्यायविवरणेऽभिहितमित्यत आह– **अत एवेति** ॥ सत्यसङ्कल्पत्वादेः ईश्वरसङ्कल्पाद्यनुसारित्वनियमादेवेत्यर्थः । कृतार्थत्वेनैव विशेषोपपत्तेरिति न्यायविवरणं विवृण्वन्, अत एवेत्युक्तमेव दर्शयति– **यदा खल्वित्यादिना** ॥ मुक्तास्त्वित्यादिना कृतार्थत्वेनेत्येतत् मुक्तत्वेनेति अस्वतन्त्राणामपीत्यनेन अवधारणं, स्वातन्त्र्यादिव्यावर्तकमिति अदुःखित्वाद्युपपन्नमित्यनेन विशेषोपपत्तेरित्येतत् दुःखाभाव-सत्यसङ्कल्पत्वादिविशेषोपपत्तेरिति व्याख्यातं भवति । स्वकामितागमनमीश्वरेच्छया कथमित्यत आह– **तदिच्छानन्तरमिति** ॥ स्वकामितागमने स्वेच्छाया एव कारणत्वादीश्वरेच्छायाः कथं कारणत्वमित्याक्षिपति– **कथमिति** ॥ तदुत्तरत्वेन हृदयाद्धृदयं मृत्योरित्येतद्व्याख्याति – ईश्वरेच्छया ममेच्छेति । तात्पर्यमाह– **भगवदिच्छानुसारिणीति** ॥

## भावदीपः

**भगवदित्यादि** ॥ एतेन पूर्वत्रोक्ततदधीनत्वरूपभगवत्प्रतिबिम्बत्वाक्षेपसमाधिरूपत्वादस्य पूर्वानन्तर्यमिति सूचितम् ॥ **सर्वोत्तमत्वेति** ॥ तथा च व्यतिहारादिनयोक्तार्थो न युक्त इति भावः ॥ **भगवद्धर्मत्वं चेति** ॥ तदनन्यत्वादिनयसिद्धत्वात्तस्येति भावः । मुक्तानामिति भाष्य-सूचितहेतुमाह ॥ **मुक्तत्वादिति** ॥ हेतोरप्रयोजकत्वनिरासार्थं सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पानु-सारित्वनियमे संसारसमानधर्मत्वं मुक्तेरित्यन्यत्रोक्तं तात्पर्यतो विपक्षबाधकत्वेन विवृणोति ॥ **अस्वातन्त्र्य इति** ॥ हेतूच्छित्तिरेव बाधिकेत्यर्थः । एत इत्यादिभाष्यसूचितहेत्वन्तरमाह ॥ **एत इति** ॥ भाष्योक्तश्रुतेश्चेत्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ **न हीति** ॥ **अत इति** ॥ मुक्तत्वा-त्सत्यकामत्वादिमत्त्वाच्चेत्यर्थः । सङ्गतत्वलाभाय प्रागुक्तश्रुतियुक्तिनिरासकतया सूत्रभाष्ये व्याकुर्वन्

(भावदीपः)

फलितार्थं तावदाह ॥ **परमात्मेति** ॥ श्रुत्यादीत्यादिपदेन मुक्तत्वयुक्तिः । श्रुतिः एत इत्यादिश्रुतिः । भाष्यं योजयति ॥ **श्रुतिर्यदित्यादिना** ॥ प्रागुक्तविपक्षबाधकमपि निराह ॥ **अत एवेति** ॥ एतदेव व्यनक्ति ॥ **यदेत्यादिना** ॥ **अमुख्यार्थतेति** ॥ भगवत्कामनिमित्तेन मुक्तकामानंतरमेव कामितप्राप्तिमत्त्वादिरूपामुख्यार्थतेत्यर्थः । हृदयादिश्रुतिशेषमवतार्य व्याचष्टे ॥ **कथमिति** ॥ फलितार्थमाह ॥ **भगवदिति** ॥ **अत्रेति** ॥ सत्यकामत्वश्रुतेरमुख्यार्थत्व इत्यर्थः ॥ **अत इति** ॥ श्रुतियुक्त्योरन्यथोपपत्त्या पारतन्त्र्याविरोधकत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**शास्त्रादिसङ्गतिरिति** ॥ शास्त्रेणाऽन्तर्भावलक्षणा, अध्यायपादाभ्यां प्रासङ्गिकी सङ्गतिरित्यर्थः ॥ **किं मुक्तौ स्वतन्त्रा इति** ॥ यद्यपि मुक्तानां श्रूयमाणं सत्यकामत्वं किं मुख्यं, अथ भगवत्कामानुसारित्वादमुख्यमिति संदेहः । मुख्यमेवेति पूर्वःपक्ष इत्यादिवक्तव्यम्, सूत्रे 'अविभाग' इति तस्यैव साध्यत्वोक्तेः, भाष्ये 'परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम्' इत्युक्तेश्च, तथापि स्वतः सत्यकामत्वं स्वातन्त्र्यमेव नान्यदिति द्योतनाय स्वतन्त्रा इत्याद्युक्तम् । श्रुतिं चाह – **एते देवा इति** ॥ सत्यकामत्वस्वातन्त्र्ययोरभेदात्स्वातन्त्र्यसिद्धये सत्यकामत्वश्रुत्युदाहरणं युक्तमिति बोध्यम् । संसारिष्वविद्यमानानियमेन भगवदिच्छया कामितप्राप्तिः कथं मुक्तानां स्यात् । भगवत्सङ्कल्पवैपरीत्येन कामनासम्भवादित्याक्षिपति – **कथमिति** ॥ उक्ताऽऽशङ्कानिवर्तकत्वेन 'हृदयाद्धृदयं मृत्योः' इत्यंशं व्याचष्टे – **ईश्वरेच्छाया इति** ॥

**पूर्वपक्षस्तु** मुक्ताः स्वतन्त्राः न पराधीनाः मुक्तत्वात् । 'एते देवा' इति सायुज्यभाजां सत्यकामत्वश्रुतेश्च । अतो मुक्तानां स्वातन्त्र्यात्, परमेश्वरस्य सर्वोत्तमत्वोक्तिर्विरुद्धेति ।

**सिद्धान्तस्तु** परतन्त्रा एव मुक्ताः । मुक्तत्वात् । न हि स्वतन्त्रस्य संसारो युज्यते । यतो मुक्तिर्नाम स्यात् । नापि मुक्तौ स्वातन्त्र्ये मुक्तिर्नाम घटते । न हि प्रेक्षापूर्वकारिणो निगडबद्धं स्वाधीनं सन्तं मुक्तौ स्वातन्त्र्यसम्भवे मोचयन्ति । अपि तु मुक्तावपि स्वाधीनमेव । येनेह मुक्तौ स्वतन्त्रान् प्रेक्षापूर्वकारी परमेश्वरो मोचयतीति प्रतिपद्येमहि । न च श्रुतिविरोधः । श्रुत्या परमेश्वरकामानुसारिकामित्वरूपपारिभाषिकसत्यकामत्वस्यैवाऽभिधानात् 'कामेन मे काम आगात्' इति

(अभिनवचन्द्रिका)

श्रुतेः । 'मुक्तानां सत्यकामत्वम्' इति स्मृतेश्च । अतो मुक्तानां स्वातन्त्र्याभावात्परमेश्वरस्यैव सर्वोत्तमत्वमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**भगवदधीनत्वसमर्थनादिति ॥** यदुक्तं पूर्वाधिकरणे भगवत्प्रतिबिम्बत्वेन देवानां तत्र लय इति तदयुक्तम् । तेषां मुक्तत्वादिना स्वतन्त्रत्वात्तदधीनत्वरूपतत्प्रतिबिम्बत्वस्यैवायोगादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । न चात्र लयानिरूपणात् पादानन्तर्भाव इति वाच्यम् । लयाक्षेपसमाधानार्थत्वेन पादप्रवेशसम्भवात् । उपासनासम्बन्ध्यर्थानां व्यतिहारो विशिंषन्तीत्यादीनामुपासनापादेऽन्तर्भाववद्भगवति लयाक्षेपसमाधायकस्याप्यत्रान्तर्भाव एवेति । यद्वा तेषां मुक्तानां वक्ष्यमाणस्यानन्दविशेषभोगस्योपपत्यर्थं सत्यकामत्वमुच्यमानमाशङ्क्य परिहर्तुमाहेति तत्वप्रदीपोक्तेः । सत्यकामत्वादिकं मुक्तानां किं स्वतन्त्रमुत भगवदिच्छापरतन्त्रमिति प्रसङ्गाच्चिन्त्यत इति न्यायभास्करोक्तेश्च प्रासङ्गिकमिदमधिकरणम् ॥ **किमिति ॥** देवाः किं मुक्तौ स्वतन्त्रा उत परतन्त्रा इति चिन्ता । तदर्थं परतन्त्रत्वे श्रुतं सत्यकामत्वादि न सम्भवत्युत सम्भवति । मुक्तत्वमप्रयोजकमित्याशङ्क्य सिद्धान्ते मुक्तानां भगवदिच्छानुसारेणेच्छोत्त्याऽवच्छेद्यं समानधर्म इत्युक्तन्यायं व्यनक्ति ॥ **अस्वातन्त्र्य इति ॥** अविभाग इति सूत्रनिरस्यं तमेव न्यायं प्रकारान्तरेण व्यनक्ति ॥ **एते देवा इति ॥** तथा च सत्यकामत्वादिना भगवत्समानधर्मत्वान्न पारतन्त्र्यमिति भावः ॥ **श्रुत्यादिविरोध इति ॥** भाष्योदाहृतश्रुतिविरोधः । आदिपदेन मुक्तत्वहेतुविरोधस्तदनुग्राहकदुःखादिप्राप्तिरूपतर्कविरोधश्चेत्यर्थः । भाष्ये गौपवनश्रुतिरित्यनन्तरं तदित्यतः पूर्वमध्याहरति श्रुतिर्यत्सत्यकामत्वं वक्तीति । श्रुतिरित्यतः परं यत्सत्यकामत्वं वक्तीत्यध्याहार इत्यर्थः । भाष्ये परमेश्वरकामादीत्यादिपदेन सङ्कल्पपरिग्रहः । सत्यकामत्वमिति सत्यसङ्कल्पस्याप्युपलक्षणम् । अविभागेनेत्यस्य तात्पर्यमनुसारेणेति ॥ **अत एवेति ॥** परमेश्वरेच्छानुसारेणैव मुक्तानामिच्छातश्च फलाव्यभिचार इत्यङ्गीकारादेवेत्यर्थः । अदुःखित्वादीत्यादिपदेन मुक्तत्वं गृह्यते ॥ **अस्वतन्त्राणामपीति ॥ मुक्ता इति ॥** एतेन कृतार्थेति न्यायोऽप्यविभागोपपादकत्वेन विवृतो भवति । अस्वतन्त्राणामपि सत्यकामत्वसम्भवेन मुक्तत्वमप्रयोजकमिति भावः । सूत्रे पूर्वपक्षिणा स्वातन्त्र्योपपादकसत्यकामत्वे एते देवाः सत्यकामा इति श्रुत्युदाहरणात् बुध्द्युपस्थापितत्वात्

(भावदीपः)

फलितार्थं तावदाह ॥ **परमात्मेति** ॥ श्रुत्यादीत्यादिपदेन मुक्तत्वयुक्तिः । श्रुतिः एत इत्यादिश्रुतिः । भाष्यं योजयति ॥ **श्रुतिर्यदित्यादिना** ॥ प्रागुक्तविपक्षबाधकमपि निराह ॥ **अत एवेति** ॥ एतदेव व्यनक्ति ॥ **यदेत्यादिना** ॥ **अमुख्यार्थतेति** ॥ भगवत्कामनिमित्तेन मुक्तकामानंतरमेव कामितप्राप्तिमत्त्वादिरूपामुख्यार्थतेत्यर्थः । हृदयादिश्रुतिशेषमवतार्य व्याचष्टे ॥ **कथमिति** ॥ फलितार्थमाह ॥ **भगवदिति** ॥ **अत्रेति** ॥ सत्यकामत्वश्रुतेरमुख्यार्थत्व इत्यर्थः ॥ **अत इति** ॥ श्रुतियुक्त्योरन्यथोपपत्त्या पारतन्त्र्याविरोधकत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**शास्त्रादिसङ्गतिरिति** ॥ शास्त्रेणाऽन्तर्भावलक्षणा, अध्यायपादाभ्यां प्रासङ्गिकी सङ्गतिरित्यर्थः ॥ **किं मुक्तौ स्वतन्त्रा इति** ॥ यद्यपि मुक्तानां श्रूयमाणं सत्यकामत्वं किं मुख्यं, अथ भगवत्कामानुसारित्वादमुख्यमिति संदेहः । मुख्यमेवेति पूर्वःपक्ष इत्यादिवक्तव्यम्, सूत्रे 'अविभाग' इति तस्यैव साध्यत्वोक्तेः, भाष्ये 'परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम्' इत्युक्तेश्च, तथापि स्वतः सत्यकामत्वं स्वातन्त्र्यमेव नान्यदिति द्योतनाय स्वतन्त्रा इत्याद्युक्तम् । श्रुतिं चाह – **एते देवा इति** ॥ सत्यकामत्वस्वातन्त्र्ययोरभेदात्स्वातन्त्र्यसिद्धये सत्यकामत्वश्रुत्युदाहरणं युक्तमिति बोध्यम् । संसारिष्वविद्यामानानियमेन भगवदिच्छया कामितप्राप्तिः कथं मुक्तानां स्यात् । भगवत्सङ्कल्पवैपरीत्येन कामनासम्भवादित्याक्षिपति – **कथमिति** ॥ उक्ताऽऽशङ्कानिवर्तकत्वेन 'हृदयाद्धृदयं मृत्योः' इत्यंशं व्याचष्टे – **ईश्वरेच्छाया इति** ॥

**पूर्वपक्षस्तु** मुक्ताः स्वतन्त्राः न पराधीनाः मुक्तत्वात् । 'एते देवा' इति सायुज्यभाजां सत्यकामत्वश्रुतेश्च । अतो मुक्तानां स्वातन्त्र्यात्, परमेश्वरस्य सर्वोत्तमत्वोक्तिर्विरुद्धेति ।

**सिद्धान्तस्तु** परतन्त्रा एव मुक्ताः । मुक्तत्वात् । न हि स्वतन्त्रस्य संसारो युज्यते । यतो मुक्तिर्नाम स्यात् । नापि मुक्तौ स्वातन्त्र्ये मुक्तिर्नाम घटते । न हि प्रेक्षापूर्वकारिणो निगडबद्धं स्वाधीनं सन्तं मुक्तौ स्वातन्त्र्यसम्भवे मोचयन्ति । अपि तु मुक्तावपि स्वाधीनमेव । येनेह मुक्तौ स्वतन्त्रान् प्रेक्षापूर्वकारी परमेश्वरो मोचयतीति प्रतिपद्येमहि । न च श्रुतिविरोधः । श्रुत्या परमेश्वरकामानुसारिकामित्वरूपपारिभाषिकसत्यकामत्वस्यैवाऽभिधानात् 'कामेन मे काम आगात्' इति

(अभिनवचन्द्रिका)

श्रुतेः । 'मुक्तानां सत्यकामत्वम्' इति स्मृतेश्च । अतो मुक्तानां स्वातन्त्र्याभावात्परमेश्वरस्यैव सर्वोत्तमत्वमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**भगवदधीनत्वसमर्थनादिति ॥** यदुक्तं पूर्वाधिकरणे भगवत्प्रतिबिम्बत्वेन देवानां तत्र लय इति तदयुक्तम् । तेषां मुक्तत्वादिना स्वतन्त्रत्वात्तदधीनत्वरूपतत्प्रतिबिम्बत्वस्यैवायोगादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । न चात्र लयानिरूपणात् पादानन्तर्भाव इति वाच्यम् । लयाक्षेपसमाधानार्थत्वेन पादप्रवेशसम्भवात् । उपासनासम्बन्ध्यर्थानां व्यतिहारो विशिंषन्तीत्यादीनामुपासनापादेऽन्तर्भाववद्भगवति लयाक्षेपसमाधायकस्याप्यत्रान्तर्भाव एवेति । यद्वा तेषां मुक्तानां वक्ष्यमाणस्यानन्दविशेषभोगस्योपपत्यर्थं सत्यकामत्वमुच्यमानमाशङ्क्य परिहर्तुमाहेति तत्वप्रदीपोक्तेः । सत्यकामत्वादिकं मुक्तानां किं स्वतन्त्रमुत भगवदिच्छापरतन्त्रमिति प्रसङ्गाच्चिन्त्यत इति न्यायभास्करोक्तेश्च प्रासङ्गिकमिदमधिकरणम् ॥ **किमिति ॥** देवाः किं मुक्तौ स्वतन्त्रा उत परतन्त्रा इति चिन्ता । तदर्थं परतन्त्रत्वे श्रुतं सत्यकामत्वादि न सम्भवत्युत सम्भवति । मुक्तत्वमप्रयोजकमित्याशङ्क्य सिद्धान्ते मुक्तानां भगवदिच्छानुसारेणेच्छोक्त्याऽवच्छेद्यं समानधर्म इत्युक्तन्यायं व्यनक्ति ॥ **अस्वातन्त्र्य इति ॥** अविभाग इति सूत्रनिरस्यं तमेव न्यायं प्रकारान्तरेण व्यनक्ति ॥ **एते देवा इति ॥** तथा च सत्यकामत्वादिना भगवत्समानधर्मत्वान्न पारतन्त्र्यमिति भावः ॥ **श्रुत्यादिविरोध इति ॥** भाष्योदाहृतश्रुतिविरोधः । आदिपदेन मुक्तत्वहेतुविरोधस्तदनुग्राहकदुःखादिप्राप्तिरूपतर्कविरोधश्चेत्यर्थः । भाष्ये गौपवनश्रुतिरित्यनन्तरं तदित्यतः पूर्वमध्याहरति श्रुतिर्यत्सत्यकामत्वं वक्तीति । श्रुतिरित्यतः परं यत्सत्यकामत्वं वक्तीत्यध्याहार इत्यर्थः । भाष्ये परमेश्वरकामादीत्यादिपदेन सङ्कल्पपरिग्रहः । सत्यकामत्वमिति सत्यसङ्कल्पस्याप्युपलक्षणम् । अविभागेनेत्यस्य तात्पर्यमनुसारेणेति ॥ **अत एवेति ॥** परमेश्वरेच्छानुसारेणैव मुक्तानामिच्छातश्च फलाव्यभिचार इत्यङ्गीकारादेवेत्यर्थः । अदुःखित्वादीत्यादिपदेन मुक्तत्वं गृह्यते ॥ **अस्वतन्त्राणामपीति ॥ मुक्ता इति ॥** एतेन कृतार्थेति न्यायोऽप्यविभागोपपादकत्वेन विवृतो भवति । अस्वतन्त्राणामपि सत्यकामत्वसम्भवेन मुक्तत्वमप्रयोजकमिति भावः । सूत्रे पूर्वपक्षिणा स्वातन्त्र्योपपादकसत्यकामत्वे एते देवाः सत्यकामा इति श्रुत्युदाहरणात् बुध्युपस्थापितत्वात्

(वाक्यार्थमुक्तावली)
प्रस्तुतदेवादिमुक्तानां सत्यकामादेरीति सम्बध्यते । तथा च मुक्तानां सत्यकामादेरीशेच्छादितोऽविभागः विभागो व्यभिचारः अविभागोऽव्यभिचारः ईशेच्छां विनाऽभाव इति यावत् ।

यद्वा विभागो विसंवादः अविभागोऽविसंवादः । तत्काम्यकामितेति यावत् । यद्वाऽविभागोऽभेदस्तादात्म्यं बाधितमिति विषयैक्यं लक्ष्यते न काम्यकामितेति यावत् । तदुक्तं न्यायभास्करे । यदि भगवन्मुक्तयोरन्यतरकामेनान्यतरकामो विभागेन विसंवादेन स्यात्तर्ह्यविभाग इति । तत्त्वप्रदीपे च परमेश्वरकामसङ्कल्पाविभागेनैव मुक्तानां सत्यकामत्वं सत्यसङ्कल्पत्वं च विषयाभेदादविभाग उच्यत इति । आद्योऽर्थस्तु टीकातः स्पष्टं ज्ञायते ॥ **अमुख्यार्थतेति** ॥ अस्वातन्त्र्येण सत्यकामत्वरूपामुख्यार्थतेत्यर्थः ॥ **त्वदिच्छेति** ॥ कामितस्य तवेच्छानन्तरं प्राप्तत्वात् कथमीश्वरेच्छयाऽऽगतमिति त्वयोच्यत इति प्रश्नाभिप्रायः । तत्परिहाराय हृदयात् हृदयमित्येतद्व्याचष्टे ॥ **ममेच्छा भगवदिच्छानुसारिणीति** ॥ इच्छानुसारित्वमिच्छासमानविषयत्वं चेह विवक्षितम् । तदिच्छेति कचित्पाठः । तत्रैवं योज्यम् । मृत्योः कामनाऽऽगतत्वमित्येतत्कुत इत्यत आह ॥ **तदिच्छेति** ॥ स्वकामितागमने स्वकामस्यैव हेतुत्वात् कथमीश्वरेच्छायाः कारणत्वमित्याक्षिप्य कथमिति तदुत्तरत्वेन हृदयात् हृदयमित्येतत् व्याख्याति ॥ **ईश्वरेच्छा ममेच्छेति** ॥ तात्पर्यार्थमाह ॥ **भगवदिति** ॥

## तत्त्वसुबोधिनी

**भगवदधीनत्वसमर्थनादिति** । यदुक्तं पूर्वाधिकरणे भगवत्प्रतिबिंबत्वेन देवानां भगवति लय इति तदयुक्तम् । तेषां मुक्तत्वादिना तदधीनत्वरूपतत्प्रतिबिंबत्वस्यैवायोगादिति आक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । अत एवोपाधिसम्बन्ध्यर्थप्रतिपादकानामुपासनेऽन्तर्भाववत् भगवल्लीनदेवानां भगवदधीनत्वप्रतिपादकस्याप्यस्यात्र पादेऽन्तर्भावो युक्त एवेति ध्येयम् । श्रुतिर्यत्सत्यकामत्वं वक्तीति तदित्यतः पूर्वं भाष्ये शेषोक्तिरियम् । नन्वेवं च स्वातत्र्यापातेन दुःखादिप्राप्त्या संसारसमानधर्मत्वं मुक्तेरित्युक्तमित्यत आह ॥ **अत एवेति** ॥ तस्य सङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमादेवेत्यर्थः । अत इति भगवत्कामलक्षणनिमित्तेन मुक्तकामानन्तरमेवेत्यर्थः । स्वकामितागमनमीश्वरेच्छया कथमित्यत आह ॥ **तदिच्छानन्तरप्राप्तत्वादिति** ॥ स्वकामितागमने स्वेच्छाया एव कारणत्वादीश्वरेच्छयाः कथं कारणत्वमित्याक्षिपति ॥ **कथमिति** ॥ तदुत्तरत्वेन

(तत्त्वसुबोधिनी)

हृदयाद् हृदयं मृत्योरित्येतद्व्याख्याति । **ईश्वरेच्छया ममेच्छेति** ॥ तात्पर्यमाह ॥ **भगवदिच्छानुसारिणीति** ॥ स्मृतिस्थसामर्थ्यं चेत्यस्यानन्वयात् तदर्थं शेषं पूरयति ॥ **सामर्थ्यं चेश्वराधीनमिति** ॥

## वाक्यार्थविवरणम्

**मृत्योः** । मारकस्य भगवतः । स्वकामितागमनं कथमीश्वरेच्छयेत्यत आह ॥ **तदिच्छानन्तरमिति** ॥ ईश्वरेच्छायाः कारणत्वमाक्षिपति ॥ **कथमिति** ॥ तदुत्तरत्वेन 'हृदयाद्धृदयं मृत्योः' इत्येदव्याख्याति ॥ **ईश्वरेच्छया ममेच्छेति** ॥ तत्तात्पर्यमाह ॥ **भगवदिति** ॥

## वाक्यार्थमञ्जरी

मुक्तानां सत्यकामत्वादेरीशेच्छातोऽविभागोऽपृथक्त्वं तदनुसारित्वमिति यावत् कुतः । 'कामेन मे काम आगात्' इति वचनादित्यर्थः ॥ **अत एवेति** ॥ सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पानुसारित्वनियमादेवेत्यर्थः । तदेव विवृणोति यदेति ॥ **सत्या नित्या इति** ॥ सदातनं सत्यमिति नित्यमेवोच्यते बुधैरित्युक्तेरित्यर्थः । स्वकामितागमनमीश्वरेच्छया कथमित्यत आह ॥ **तदिच्छानन्तरमिति** ॥ स्वकामितागमने स्वेच्छाया एव कारणत्वादीश्वरेच्छायाः कथं कारणत्वमित्याक्षिपति ॥ **कथमिति** ॥ तदुत्तरत्वेन हृदयाद्धृदयं मृत्योरित्येतद्व्याख्याति ॥ **ईश्वरेच्छाया इति** ॥ तात्पर्यमाह ॥ **भगवदिच्छेति** ॥

॥ **इति अविभागाधिकरणम्** ॥ ८ ॥

## ९. हृदयाग्रज्वलना(तदोकोऽ)धिकरणम्

**ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥ १७ ॥**

उत्क्रान्तिकाले हृदयस्याग्रे ज्वलनं भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतत' इति श्रुतेः । तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात् ।

'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः' ॥

इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च ।

'आचार्यस्तु ते गतिं वक्ता' इति हि लिङ्गम् ।

'हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु ।
उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेत्' इति चाध्यात्मे ।

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति' इति च ॥

### तत्त्वप्रदीपिका

तदोकोऽग्रज्वलनमित्यादि सूत्रम् ॥ यदा वागादीनां लयः तदोत्क्रान्तिकाले तस्य विदुषो जीवस्य हृदयाग्रज्वलनं भवति । 'प्रद्योतः' प्रभा प्रादुर्भवति । सर्वेषां च विदुषां भुवि जातानामुत्क्रान्तेः पश्चात्तनस्य मोक्षस्य तदपेक्षाभावात् तच्छब्देन परामर्शोपपत्तिः । अपि च देवतानामुत्तरोत्तरविलयध्यानपूर्वकं तद्विलयपर्यवसानस्थानस्य परब्रह्मणो ध्यानमुत्क्रमिष्यतः कर्तव्यमिति श्रुतिस्मृतिगतिपर्यालोचनया गम्यते । गत्यनुस्मृतिवदेव गतेः पश्चाद्भाविनश्च मोक्षस्य स्वबिम्बभूतदेवतापरम्परापरस्परप्रवेशाविनाभूतत्वात् । तच्च नित्यं तत्प्रतिपत्त्यभ्यासवत एव सुकरतरं भवतीति तदर्थोऽभ्यासः कार्यः । तदर्थं तत्स्वरूपपरिज्ञानाय तद्विलयप्रकारपरीक्षा कर्तव्येति साऽत्र प्रकृता । तद्भावनावतस्तस्य तदोत्क्रान्तिकाल इति युक्त एव तच्छब्दः । अतो नैतदाशङ्कनीयम्, गतेः पश्चाद्भावित्वात्प्रवेशस्य गतिं भोगं चान्तरा वक्तव्यः प्रवेश इति । उक्तन्यायेनात्राभिधाने

(तत्त्वप्रदीपिका)

प्रयोजनप्रतिलम्भात् । तदिहोत्क्रान्तिः किमितरवदेव विदुषोऽप्यथवा विशिष्टेति संशये प्राप्ते प्रारब्धकर्मभोगान्तर्भूतत्वादुत्क्रान्तेः, तस्य गुरुणाऽज्ञानिष्विव ज्ञानिष्वप्यचाल्यत्वात्, स्वकीयफलदाने तस्याविशेष एवान्येभ्य इति, अत आह । तस्य ज्ञानिन उत्क्रान्तिकाले हृदयाग्रज्वलनं भवतीति सप्रमाणकम् । न चाप्रारब्धकर्मनिवृत्तेः ज्ञानफलोदयोपरोध इति वाच्यम् । जीवन्मुक्त्यवस्थाभावप्रसङ्गात् । उदयात्प्रभृत्येव फलदं ज्ञानं, तथा च ज्ञानसामर्थ्यमुक्तम् ॥

## तत्त्वप्रकाशिका

अत्र देवानां मोक्षमुक्त्वा मनुष्याणां मुक्त्यर्थं देहोत्क्रमणस्याज्ञमरणविलक्षणत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ज्ञानस्यातिशयासिद्धेः साधनीयमेतत् । देवानामन्योन्यप्रवेशेन देहलयो भवतीत्युक्तम् तेनेतरज्ञानिनां देहादुत्क्रमणं सिध्यति । तज्ज्ञानिनां देहादुत्क्रमणं विषयः । किं पृथग्जनमरणवदेव भवत्युत वैलक्षण्येनेति सन्देहः । मरणत्वं ज्ञानिसम्बन्धित्वं च सन्देहबीजम् । पृथग्जनमरणवदेवेति पूर्वः पक्षः । तस्याप्यन्यमरणवत्प्रारब्धनिबन्धनत्वात् । न च तदा प्रारब्धाभावः तस्य देहत्यागाद्यवसानत्वात् । न च सत्यपि प्रारब्धकर्मणि विलक्षणं ज्ञानिमरणं विशेषकारणाभावात् । अतो ज्ञानिमरणस्यान्यमरणाविशिष्टत्वान्न ज्ञानस्य सामर्थ्यातिशय इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तदिति** ॥ न ज्ञानिमरणस्याज्ञमरणाविशिष्टता । अस्त्येव विशेषः । यत उत्क्रान्तिकाले भगवदोकसो हृदयस्याग्रं प्रकाशत इत्यर्थः । तत्कुत इत्यत आह ॥ **तस्येति** ॥ हृदयाग्रप्रकाशनेऽपि ज्ञान्युत्क्रमणस्यान्यमरणस्य को विशेष इत्यत आह ॥ **तदिति** ॥ यतो ज्ञानी तेन प्रकाशेन प्रकाशितनाडीद्वारः सन् देहान्निष्क्रामति न तु तथाऽज्ञानी । अतोऽस्ति विशेष इति भावः । ननु ज्ञानिनः प्रारब्धकर्मवतः कथमयं विशेष इत्यत आह ॥ **विद्येति** ॥ प्रारब्धकर्मसद्भावेऽपि भगवत्साक्षात्कारसामर्थ्याद्विशिष्टोत्क्रान्तिर्ज्ञानिनो युज्यते । ज्ञानस्य स्वोदयमारभ्यैव फलप्रदत्वादिति भावः । तदुक्तम् ।

प्रारब्धकर्मशेषस्तु विरजातरणावधिः ।<br>स्वोदयात्फलदं ज्ञानमादेहं कर्म वा रवेः ॥ इति ।

यदि ज्ञानसामर्थ्यादेवमुत्क्रमणं भवति तर्हि ज्ञानिनः प्रथममरण एवैवं किं न स्यादित्यत आह ॥ **यं यमिति** ॥ न केवलं ज्ञानसामर्थ्येनैवंविधोत्क्रमणं येनातिप्रसङ्गः किं नाम स्वहृदयमारभ्य

(तत्त्वप्रकाशिका)

**या ब्रह्मपर्यन्ता गतिस्तस्याः शरीरत्यागकालेऽनुस्मरणाच्च । न चैवं सति ज्ञानिनामुत्क्रमणं ज्ञानफलं न भवति । गत्यनुस्मरणस्य ज्ञानशेषत्वात् । न हीति कर्तव्यतामपेक्षमाणो हेतुरहेतुर्भवति । गत्यनुस्मृतिश्च कर्मावसानसमय एव न मरणान्तरे ।**

**ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।**
**विष्णुमाया तदा तेषां मनो बाह्यं करोति हि ॥ इति स्मृतेः ।**

**गत्यनुस्मरणं तत्प्राप्तिकारणमित्येव कुतः । 'यं यं वापि' इति स्मृतेरेवेति भावः । ननु तथाऽपि गत्यनुस्मरणं तत्प्राप्तिकारणमिति न विशेषप्रमाणमित्यत आह ॥ आचार्यस्त्विति ॥ यदि गतिस्मरणमन्तरेणैव तत्प्राप्तिः स्यात्तर्ह्याचार्यस्तु ते गतिं वक्तेति स्मरणार्थं गतिश्रवणं व्यर्थं स्यात् । अतः स्मरणार्थं गतिश्रवणलिङ्गेनास्ति गतिस्मरणस्य तत्प्राप्त्यर्थत्वमिति ज्ञायत इति भावः । ननु किं ज्ञानसामर्थ्येन गत्यनुस्मरणयुक्तेन स्वतन्त्रेणैवमुत्क्रमणं भवति । नेति ब्रूमः । किं तर्हि ज्ञानादिना प्रसन्नस्य भगवतोऽनुग्रहेणैवेत्याह ॥ हृदीति ॥ हरिणा सह प्रकाशितनाडीद्वारो निष्क्रामतीत्युक्तम् । तत्र नाड्यामपि विशेषोऽस्तीति भावेनाह ॥ शतमिति ॥ विष्वगुत्क्रमणे लोकान्तरगमनार्थम् ॥**

## गुर्वर्थदीपिका

तस्य देहत्यागाद्यवसानत्वादित्यत्र आदिपदेनार्चिरादिमार्गेण गमनं विरजायां लिङ्गभङ्गश्च सङ्गृह्यते । विरजानद्यवगाहनविरहितानामधमजीवानां प्रारब्धकर्मावसाने सति लिङ्गदेहभङ्गस्तु स्वपरिपाकदशायामहेस्त्वगिव स्वस्वसाधनपरिपूर्तौ स्वत एव निवर्तत इति विवेको द्रष्टव्यः । प्रथम-मरण एवेत्यत्र यस्मिञ्जन्मनि ज्ञानोदयस्तस्मिन्नेव जन्मनि मरणे जन्मान्तरेषु मरणेऽपि विष्ण्विच्छया मनोव्याक्षेपे सत्यर्चिरादिस्मरणाभावान्नार्चिरादिमार्गेण गमनम् । न वा ब्रह्मलोकः । किं त्वन्तरिक्षे स्वर्गादिलोकेष्वपि वा प्रारब्धकर्मानुभवन्तस्तिष्ठन्ति । यदा तु प्रारब्धकर्मणां परिपाककालस्तदा हर्यनुग्रहेण मार्गस्मरणसद्भावाद्ब्रह्मनाड्योत्क्रम्यार्चिरादिमार्गेण गत्वा किञ्चित्कालं चतुर्मुखलोके विष्णुलोके वा स्थित्वा परान्तकाले ब्रह्मणा सह मुक्तिं प्राप्नुवन्ति । अतः प्रथममरणेऽर्चिरादि-गमनाभावं मनसि निधायाऽऽक्षेप इति ज्ञेयम् । विष्वगुत्क्रमणे लोकान्तरगमनार्थमित्यस्यान्या नाड्यः विष्वक् परित उत्क्रमणे सति लोकान्तरगमनार्थं भवन्तीति श्रौतकर्तृपदेन श्रौतक्रियया च योजना ।

## भावबोधः

अनन्तरसङ्गतिं दर्शयन् विषयमाह– **देवानाग्न्योन्येति । किमिति ।** अत्र ज्ञानिनां मोक्षार्थं देहादुत्क्रमणमज्ञमरणसदृशमुत तद्विलक्षणमिति चिन्ता । तदर्थमपरोक्षज्ञानं गत्यनुस्मृतिसहकृतं हृदिस्थहर्यनुग्रहद्वारा हृदयाग्रज्वलनादिजनकतया विशिष्टोत्क्रमणहेतुर्न भवत्युत भवतीति । तदर्थं रश्मीनां सहकारित्वं न सम्भवत्युत सम्भवतीति । तदर्थं रात्रौ पर्यवसितकर्मणां रात्रौ रश्म्यभावेन विशिष्टोत्क्रमणाभावान्मोक्षाभावः । तदुत्क्रमणस्य वैलक्षण्यं वेति मोक्षाभाववैलक्षण्यापत्तिः प्राप्नोत्युत न प्राप्नोतीति । तदर्थं दिवैवादित्यरश्मिग्राहकप्रत्यक्षानुसारेण नाडीनामहन्येवादित्यरश्मि-सम्बन्धोऽङ्गीकार्य उत 'संसृष्टा वा एते रश्मयश्च नाड्यश्च' इति श्रुत्यनुसारेण रात्रौ बाह्यादित्य-रश्म्यभावेऽपि अन्तर्गतादित्यरश्मिभिः नाडीनां सम्बन्धमादाय यावद्देहमहोरात्रं नाड्यादित्यर-श्मिसम्बन्धोऽङ्गीकार्य इति । तदर्थं ज्ञानिनां मोक्षार्थमुत्क्रमणं रात्रौ नास्त्युतास्तीति । तदर्थं 'दक्षिणे मरणाद्याति' इति स्मृतेः कालविशेषपरत्वमुत दक्षिणायनादिसंज्ञकरश्मिविशेषपरत्वमिति । तदर्थं तत्र विशेषप्रमाणं नास्त्युतास्तीति । विशेषप्रमाणाभावे स्मृतेः कालपरत्वेन प्रमाणाभावेन च ज्ञानिनां मोक्षार्थं रात्रावुत्क्रमणासिद्धेः दिवैवादित्यरश्मिविषयकप्रत्यक्षानुसारेण दिवस एव नाडीरश्मिसम्बन्धस्याङ्गीकार्यत्वे रात्रौ पर्यवसितकर्मणां मोक्षाभावतदुत्क्रमणावैलक्षण्यान्यतरप्राप्त्या रश्मीनां सहकारित्वासम्भवे हृदयाग्रज्वलनादिजनकतयाऽपरोक्षज्ञानस्य विशिष्टोत्क्रमणहेतुत्वासम्भव इति पूर्वपक्षे फलफलिभावः ।

'उत्तरं दक्षिणमिति त एव तु निगद्यते' ॥ इति विशेषप्रमाणसद्भावे तु 'दक्षिणे मरणात्' इत्यादिस्मृतेः तत्संज्ञकरश्मिविशेषपरत्वेन तद्विरोधाभावात्, 'न तु कालविशेषोऽस्ति ज्ञानिनाम्' इति प्रमाणबलेन ज्ञानिनां रात्रावप्युत्क्रमणसिद्धौ मोक्षार्थं ज्ञान्युत्क्रमणस्य रश्म्यनुसारित्व-ग्राहकमहर्लोकादिगन्तारः (रात्रावप्युत्क्रमणे) 'उत्तरायणरश्मिभिः' इति प्रमाणबलेन 'संसृष्टा वा' इति श्रुत्यनुसारेण रात्रावपि नाडीनामन्तर्गतादित्यरश्मिसम्बन्धस्य यावद्देहमहोरात्रमङ्गीकार्यत्वे, रात्रौ पर्यवसितकर्मणामपि मोक्षार्थमुत्क्रमणस्य रश्म्यनुसारित्वे सिद्धे तेषां मोक्षाभावतदुत्क्रमणा-वैलक्षण्यान्यतरप्राप्त्यभावेन रश्मीनां सहकारित्वसम्भवे युक्तमेवापरोक्षज्ञानस्य हृदयाग्र-ज्वलनादिजनकतया विशिष्टोत्क्रमणहेतुत्वमिति सिद्धान्ते फलफलिभावः । प्रारब्धकर्मशेषत्वात् उत्क्रान्तावविशेषो ज्ञानिन इति न्यायविवरणोक्तयुक्तिमाह– तस्याप्यन्यमरणवदित्यादिना ।

(भावबोधः)

ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुकृतेरिति न्यायविवरणानुसारेण विद्यासामर्थ्यादिति भाष्यं व्याचष्टे– **प्रारब्धकर्मसद्भावेऽपीत्यादिना** ॥ **स्वोदयमारभ्यैवेति** । न तु लिङ्गभङ्गादिमात्र-फलकमित्यर्थः । ननु किं प्रारब्धकर्मसद्भावमङ्गीकृत्य ज्ञानसामर्थ्येनैव विशिष्टोत्क्रमणोपपादानेन सञ्चितस्येव प्रारब्धस्यापि ज्ञानेनेव विनाशमङ्गीकृत्य ज्ञानसामर्थ्येनैव विशिष्टोत्क्रमणं कुतो नोपपद्यत इत्याशङ्कां परिहरन् ज्ञानस्य स्वोदयमारभ्य फलदत्वे न्यायविवरणोदाहृतं प्रमाणमाह– **तदुक्त-मिति** ॥ कर्मदेहमारभ्य फलदमिति सम्बन्धः । स्वोदयादिति ल्यब्लोपनिमित्ता पञ्चमी । स्वोदय-मारभ्येत्यर्थः । अधिकारिभेदेन व्यवस्थितविकल्पोऽयम् । अत्र प्रारब्धकर्मणः फलदत्वोक्त्या ज्ञानिनामपि तत्सद्भावोऽवगम्यते । ननु यदि कर्म आ देहमा रवेर्वा फलदं तर्हि तदनन्तरमेव लिङ्गभङ्ग स्यात् । न चैवम् । 'ब्रह्मणा सह भिधत्ते' इति प्रमाणबलेन तदर्नी लिङ्गभङ्गाभावादित्यत उक्तम्– **प्रारब्धकर्मशेषस्त्विति** । सूर्यादौ निःशेषतया कर्मनाशाङ्गीकारान्नोक्तदोष इति भावः ॥ **हरिणा सहेति** ॥ तस्यैवानुग्रहेणेत्युक्तत्वान्न तृतीयायाः करणार्थत्वमिति भावः ।

## भावदीपः

**अत्रेति** ॥ समर्थनादित्यनेनान्वयः । पूर्वतनलयपेटिकयाऽस्यानन्तरसङ्गतिमाह ॥ **देवानां मोक्षमुक्त्वेति** ॥ **मुक्त्यर्थमिति** ॥ भगवत्प्राप्तिरूपमोक्षार्थमित्यर्थः । तेन शास्त्रसङ्गत्युपपादनं बोध्यम् । ननु देवेभ्योऽन्येषामुत्क्रमणमस्तीत्येतदविचार्य तस्येतरवैलक्षण्यरूपधर्मचिन्तनं अभित्ति-चित्रायत इत्यत आह ॥ **देवानामिति** ॥ **उक्तमिति** ॥ **वाङ्मनसीत्यादिना इतरज्ञानिनामिति** ॥ एतच्च बाहुल्याभिप्रायम् । प्रत्यक्षोपदेशादित्यत्र भाष्ये केचिदत्रैव मुच्यन्ते नोत्क्रामन्तीति वक्ष्यमाणत्वात् ॥ **तदिति** ॥ एवमर्थात्सिद्धमित्यर्थः ॥ **पृथग्जनेति** ॥ पामरेत्यर्थः । पामरस्तु पृथग्जन इत्यमरोक्तेः । प्रारब्धकर्मशेषवत्त्वादुत्क्रान्तावविशेषो ज्ञानिन इत्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **पृथग्जनमरणवदेवेति** ॥ पृथग्जनानामिव ज्ञानिनामपि मरणमित्यर्थः । शेषपदतात्पर्यं व्यनक्ति ॥ **न चेत्यादिना** ॥ देहत्यागादीत्यादिपदेन रविमण्डलप्राप्त्यादिग्रहः । विद्यासामर्थ्या-दित्येतद्व्यावर्त्यं शङ्कापूर्वं व्यनक्ति ॥ **न च सत्यपीत्यादिना** ॥ **अत इति** ॥ प्रारब्धनिमित्त-कत्वाद्विशेषकारणाभावाच्चेत्यर्थः ।

(भावदीपः)

न चाविशेष इत्यन्यत्रोक्तप्रतिज्ञामेवोक्त्वा तत्र हेतुत्वेन भाष्यं योजयति ॥ **न ज्ञानीति** ॥ फलितार्थमाह ॥ **अस्त्येवेति** ॥ तदोकत इत्यस्य हृदयस्येति फलितार्थोक्तिपरमिति भावेनाह ॥ **भगवदिति** ॥ उत्क्रान्तिकाल इत्यत्र लब्धस्योक्तिरिति भावः । तत्वप्रदीपे तु तदेत्यपि विच्छेदोपगमेनोत्क्रान्तिकाल इत्यर्थोक्तिः । न चैवं तदोकोग्रेत्यादिनिर्देशापत्तिरिति शङ्का । ओमाङोश्चेति चकारेणान्यत्रापि पररूपत्वोपगमादित्याहुः ॥ **कुत इति** ॥ हृदयाग्रज्वलनं कुतो मानादित्यर्थः । प्रागुक्तशङ्कानिरासकतया हेत्वंशं व्याचष्टे ॥ **नन्वित्यादिना** ॥ ननु सति प्रारब्धकर्मणि कथं विद्यासामर्थ्यं कार्यकारीत्यतो ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुवृत्तेरित्यन्यत्रोक्तभावमाह ॥ **ज्ञानस्येति** ॥ **तदिति** ॥ प्रारब्धकर्मशेषसत्त्वं तथापि ज्ञानस्य फलदत्वमित्येतदुक्तम् । न्यायविवरणोक्तश्रुतावित्यर्थः । कर्म आदेहं आरवेर्वा फलदमित्यर्थः । स तेजसि सूर्ये सम्पन्न इत्यादेः । योगाच्चेति चशब्दार्थं व्यञ्जयन् व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **न केवलमिति** ॥ **एवंविधेति** ॥ प्रकाशितनाडीद्वारतयोत्क्रमणमित्यर्थः ॥ **ज्ञानशेषत्वादिति** ॥ ज्ञानेन फलजननेऽपि अस्योपकारकत्वरूपतदितिकर्तव्यतारूपत्वाद्दर्शपूर्णमासादिना फले जनयितव्ये प्रयाजादिरिवेत्यर्थः । अस्तु गतिस्मृतिरप्याद्यमृतावित्यत आह ॥ **गतीति** ॥ **इति स्मृतेरिति** ॥ द्वितीये गीताभाष्योक्तगारुडस्मृतेरित्यर्थः । तत्र बाह्यमित्यस्येश्वरान्यविषयमित्यर्थत्वेऽपि गतेरीश्वरपर्यन्तत्वाद्भवतीयमुक्तार्थसंवादिनीति भावः ॥ **स्मृतेरेवेति** ॥ सा चाष्टमे गीताभाष्य एव व्याख्यातेति भावः । आचार्यस्तु सत्यकामस्तु । ते उपकोसलायेत्यग्नीनां वाक्यं व्यक्तमेतदन्तर उपपत्तेरित्येतद्विषयवाक्ये । हरिणेति सहयोगे तृतीया । तेन तस्यैवानुग्रहेणेत्यपुनरुक्तिरिति भावेनाह ॥ **हरिणा सहेति** ॥ **नाड्यामपि विशेषोऽस्तीति** ॥ अत्रावान्तरविशेषस्तु षष्ठे बृहद्भाष्ये चतुर्थब्राह्मणे

देवलोके चिरं रत्वा यस्तु मुक्तिं व्रजिष्यति ।
स तु तद्देवताद्वारेणोत्क्रामति न संशयः ॥
विष्णोर्लोकं परं गच्छन्नुत्क्रामेन्मूर्ध्न एव तु ।
तथैव ब्रह्मणो लोकं सुषुम्नाया विभेदतः ॥ इत्युक्तेर्बोध्यः ।

## अभिनवचन्द्रिका

**मुक्त्यर्थमिति** ॥ मनुष्याणां मुक्त्यर्थं जायमानस्य देहोत्क्रामस्याऽपरोक्षज्ञानाऽतिशयसिद्ध्येऽज्ञमरणविलक्षणत्वसमर्थनादित्यर्थः ॥ **अन्योन्यप्रवेशेनेति** ॥ उत्तमोत्तमप्रवेशेनेत्यर्थः ॥

(अभिनवचन्द्रिका)

**देहादुत्क्रमणं विषय इति** ॥ चरमोत्क्रमणं विषय इत्यर्थः ॥ **तस्यापीति** ॥ चरममरणस्यापि ज्ञानिसम्बन्धिमरणान्तरवत्प्रारब्धनिबन्धनत्वादित्यर्थः । इदमुक्तं भवति । ज्ञानिनस्तावन्नैकमेव मरणं किन्तु बहूनि मरणानि । तत्र चरममरणव्यतिरिक्तानि मरणानि अज्ञमरणव्यतिरिक्तानि मरणानि । अज्ञमरणवदेव भवन्ति । तत्र च ज्ञानिप्राचीनमरणवत् अज्ञमरणवदेव प्रतिपत्तव्यमिति ॥ **न च सत्यपीति** ॥ चरममरणदशायां ज्ञानिपूर्वमरणदशायामिव प्रारब्धकर्मणि सत्यपि अज्ञमरणाद्विलक्षणमेव ज्ञानिचरममरणं, न तु पूर्वमरणवदज्ञमरणसदृशमिति न वाच्यमित्यर्थः ॥ **विशेषकारणेति** ॥ पूर्वं मरणाच्चरममरणस्य विशेषे कारणाऽभावात्कार्यवैलक्षण्यमनुपपन्नमिति भावः ॥ **तत्कुत इति** ॥ कुतः प्रमाणादित्यर्थः । तर्हि विरजातरणात्प्राक् ज्ञानं सर्वथा फलप्रदं न भवतीत्यागतमित्यत आह – **स्वोदयादिति** ॥ स्वोदयमारभ्यैव ज्ञानं फलप्रदं न तु प्रारब्धकर्मणा प्रतिबद्धं सत् सर्वथा कार्याक्षममित्यर्थः । तर्हि ज्ञानेन प्रतिबद्धं कर्म सर्वथा न कार्यक्षममिति प्राप्तमित्यतो नेत्याह – **आदेहमिति** ॥ प्रारब्धकर्म केषाञ्चिदादेहं फलप्रदं केषाञ्चिद्रविप्राप्तिपर्यन्तम् । उपलक्षणमेतत् । केषाञ्चिद्वैश्वानरपर्यन्तम्, अन्येषां द्युनदीपर्यन्तम् । एषु स्थानेषु अधिकारिभेदेन सर्वं दुष्कर्म क्षीयते । ततःपरं केवलपुण्यप्रारब्धयुक्तस्य शिंशुमारप्राप्तिरिति ज्ञेयम् ॥ **लोकन्तरगमनार्थमिति** ॥ देवलोके चिरं रत्वा यस्तु मुच्यते तस्य नाड्यन्तरेणोत्क्रमणमिति भावः । तदुक्तं 'देवलोके चिरं रत्वा यस्तु मुक्तिं व्रजिष्यति । स तु तद्देवताद्वारेणोत्क्रामति न संशयः ॥ विष्णोर्लोकं परं गच्छन्नुत्क्रामेन्मूर्ध्न एव तु । तथैव ब्रह्मणो लोकं सुषुम्नायाविभेदतः' इति । नाड्यन्तस्तमसैव गमनं स्यादिति । ततश्चातिवैलक्षण्यापादकत्वलक्षणं महामाहात्म्यं न स्यादिति शेषः । एतेन नाड्यन्तस्तमसैव गमनं नाऽनिष्टं, द्वारमारभ्य प्रकाशसद्भावेन ज्ञानिमरणस्य वैलक्षण्यसम्भवेन तदविघातकत्वादिति निरस्तम् । यदनन्तकालसम्बद्धं तदुच्यते – **सर्वदेति** ॥ यथाऽऽकाशः सर्वदा, वेदाः सर्वदेति । यदसार्वकालिकमपि कालीवशेषे नियमेनास्ति तदप्युच्यते – **सर्वदेति** ॥ तद्यथा शुश्रूषमाणं विनीतं शिष्यमाह, **अलं सेवया भुङ्क्ष्वेति** ॥ स गुरुमाह मम भोजनं सर्वदाऽस्ति भवत्सेवैव दुर्लभेति । यदपि यावद्देहभावि तदप्युच्यते – **सर्वदेति** ॥ तद्यथा सर्वदा अयं साधुरिति । एवं च 'सर्वदा सम्बन्धात्' इति भाष्यस्य त्रेधाऽप्यर्थसम्भवं मनसि कृत्वा पृच्छति – **नाडीरश्मिसम्बन्ध इति** ॥ एतेन देहपातपूर्वकालीन इति द्वितीयकल्पाऽप्रसक्तिरिति निरस्तम् ॥

## वाक्यार्थमुक्तावली

**मुक्त्यर्थं देहोत्क्रमणस्येति** ॥ चरमदेहोत्क्रमणस्येत्यर्थः ॥ **अज्ञमरणेति** ॥ शरीरान्तरारम्भककर्मक्षयरहिता अज्ञाः ज्ञानपरिपाकाभावात् तन्मरणविलक्षणत्वसमर्थनादित्यर्थः । एवमुत्तरत्र ज्ञान्यज्ञानिशब्दार्थो विवक्षणीयः ॥ **अन्यथेति** ॥ चरममरणस्याप्यन्यमरणविलक्षणत्वाभावे विशिष्टोत्क्रान्त्यहेतुत्वेन ज्ञानस्यातिशयासिद्धेरित्यर्थः । ज्ञानिनां देहानुत्क्रमणस्य पूर्वमप्रस्तुतत्वात्तस्य कथमन्यमरणवैलक्षण्यविचारावसर इत्यत आह ॥ **देवानामिति** ॥ पूर्वाधिकरणद्वये मुक्तौ ब्रह्मप्रवेशित्वेनेश्वराधीनसत्यकामत्वेन मानुषाणामपि प्रकृतत्वात्तेषामेवेह चरमोत्क्रान्तिविचारादनन्तरसङ्गतिः । उक्तं च तत्वप्रदीपे । सर्वाणि दैवतानीति । समग्रदेवताभाग एव सङ्गृहीतो वेदितव्यः । वर्णाश्रमाचाररुता मनुष्या धर्मं मनुं सोऽपि समेति काले इति चेति ॥ **किमिति** ॥ चरमशरीरोत्क्रमणं किं तत्पूर्वशरीरोत्क्रमणवदेव भवत्युत वैलक्षण्येनेति चिन्ता । तदर्थं सत्यपि प्रारब्धकर्मशेषे चरममरणस्येतरमरणवैलक्षण्ये विशेषकारणं नास्त्युतास्तीति ॥ विद्यासामर्थ्यादिति सूत्रखण्डव्यावर्त्यं कृतशेषतेत्युक्तन्यायं दर्शयन् पूर्वपक्षयति ॥ **तस्यापीत्यादिना** ॥ सूत्रे तदिति भिन्नं समस्तं च पदम् । आद्ये उत्क्रान्तिकाल इति भाष्यं ज्ञापकम् । द्वितीये हार्दानुगृहीतः हृदयस्थेन हरिणेति सूत्रस्मृती ज्ञापिके इति भावेन व्याचष्टे ॥ **उत्क्रान्तीति** ॥ तानि पर इति भगवतः प्रस्तुतत्वात्तच्छब्देन परामर्श इति भावः । ननु प्रारब्धकर्मसद्भावात्कथं विशिष्टोत्क्रान्तिरित्यतो शश्वदनुप्रवृत्तिरित्युक्तन्यायं प्रदर्शयन् तात्पर्यमाह ॥ **ज्ञानस्येति** ॥ अन्यथा जीवन्मुक्त्यवस्थाभावप्रसङ्ग इति भावः । प्रारब्धसद्भावे तस्य विशिष्टोत्क्रान्त्यप्रतिबन्धकत्वे च प्रमाणमाह ॥ **तदुक्तमिति** ॥ प्रारब्धकर्मशेषस्त्वित्यस्यायमर्थः । लिङ्गशरीरापादकप्रारब्धकर्मशेषः विरजानदीतरणावधिः वैकुण्ठपरिखारूपलक्ष्म्यात्मकविरजायाः गुणत्रयात् परतो गमने सति तत्र तरणे स्नानावधिकः ज्ञानं अपरोक्षाख्यं स्वोदयमारभ्य कर्मक्षयादिफलप्रदं कर्मलिङ्गदेहापादकातिरिक्तं जन्ममरणदुःखादिहेतुभूतं प्रारब्धं कर्म भोगोपमर्दाभ्यामवशिष्टम् । आदेहं चरमदेहपर्यन्तम् आरवेः रविमण्डलपर्यन्तं वा । अधमानामादेहं, उत्तमानामारवेरिति योज्यम् । उपलक्षणमेतत् ।

वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा ।
विधूय सर्वपापानि याति किंस्तुघ्न केशवम् ॥

(वाक्यार्थमुक्तावली)

इति भागवततात्पर्योक्तमप्युत्तमाधिकारानुसारेणेति ज्ञेयम् । न चावश्यभोक्तव्यत्वाद्विरोधः । 'आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः' इत्युक्तत्वादास्तां विस्तरः ॥ **अनुस्मरणाच्चेति** ॥ अनुस्मृत्याख्योपायादिति सूत्रखण्डार्थ इति भावः ॥ **कर्मावसानसमय एवेति** ॥ चरमशरीरारम्भककर्मावसानसमय एवेत्यर्थः ॥ **तत्प्राप्तिसमय एवेति** ॥ हृदयमारभ्य ब्रह्मपर्यन्तमनुस्मृतगतिप्राप्तिकारणमित्येतत्कुतः प्रमाणादित्यर्थः । ननु किं ज्ञानसामर्थ्येनेति गत्यनुस्मरणयुक्तेनापरोक्षज्ञानसामर्थ्येनैवोत्क्रमणं भवत्युत ज्ञानमनपेक्ष्य स्वातन्त्र्येण हरिणैवमुत्क्रमणं भवतीति शङ्काभिप्रायः । पक्षद्वयमपि नेत्याह ॥ **नेति ब्रूम इति** ॥ सहयोगे तृतीयेत्याह ॥ **हरिणा सहेति** ॥ एतेन हार्दानुगृहीत इत्यस्य हार्देन साकं हार्देनानुगृहीत इत्यर्थ उक्तो भवति ॥ **नाड्यामपि विशेष इति** ॥ एकशतनाडीषु शताधिकया सुषुम्नयेति सूत्रखण्डार्थ इति भावः ॥ **लोकान्तरेति** ॥

देवलोके चिरं रत्वा यस्तु मुक्तिं गमिष्यति ।
स तु तद्देवताद्वारेणोत्क्रामति न संशयः ॥

इति वचनात्तेषां नाड्यन्तरेणोत्क्रमणमिति भावः । सूत्रार्थस्त्वतिरोहितः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं दर्शयन् विषयमाह ॥ **देवानामन्योन्येति** ॥ तदा मरणकाले । विद्यासामर्थ्यादिति भाष्यं व्याचष्टे । प्रारब्धकर्मसद्भावमङ्गीकृत्य ज्ञानसामर्थ्येनैव विशिष्टोपक्रमणप्रतिपादनेन संचितस्य प्रारब्धस्यापि ज्ञानेन विनाशमङ्गीकृत्य विशिष्टोपक्रमणं तु तान्नोपपद्यते इत्याशङ्कां परिहरन् ज्ञानस्य स्वोदयमारभ्य फलदत्वे न्यायविवरणोदाहृतप्रमाणमाह ॥ **तदुक्तमिति** ॥ स्वोदयादिति ल्यब्लोपनिमित्ता पञ्चमी । स्वोदयमारभ्येत्यर्थः । कर्म प्रारब्धं आदेहं वा आरवेर्वा फलदमित्यर्थः । एतद्देहशतपर्यन्तं वा रविलोकप्राप्तिपर्यन्तं वेत्यर्थः । अधिकारिभेदेन व्यवस्थितविकल्पोऽयम् । उपलक्षणमेतत् । वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा ॥ विधूय सर्वपापानि इत्यादिप्रमाणोक्तमपि ग्राह्यम् । अत्र प्रारब्धकर्मणः फलदत्वोक्त्या ज्ञानिनामपि तत्सद्भावोऽवगम्यते । ननु यदि कर्म आदेहमारवेर्वा फलदं तर्हि तदनन्तरमेव लिङ्गभङ्गः स्यात् । न चैवं ब्रह्मणा सह भिद्यते इति वक्ष्यमाणत्वेन तदा लिङ्गभङ्गाभावादित्यत उक्तम् । **प्रारब्धकर्मशेषस्त्विति** ॥ न वयं सूर्यादौ निःशेषप्रारब्धविनाशं ब्रूमः । येन प्रमाणविरोधः स्यात् । किं तु

(तत्त्वसुबोधिनी)
सविशेषमेव । तच्छेषस्तु विरजातरणावधिः । तत्र लिङ्गभङ्गस्तु विद्यत एव । अन्यथा शरीराव-स्थानस्य निर्भिन्नबन्धनत्वापत्तेः । ननु गत्यनुस्मृतिसापेक्षत्वात् ज्ञानस्य न विशिष्टोपक्रमणार्थत्व-मित्यत आह ॥ **न हीति** ॥ **हरिणा सहेति** ॥ तस्यैवानुग्रहेणेत्युक्तत्वात् । न तृतीयायाः करणार्थत्वमिति भावः ।

## वाक्यार्थविवरणम्

**पृथग्जनः** मूर्खजनः ॥ **विशिष्टेति** ॥ विलक्षणेत्यर्थः ॥ **प्रथममरणमिति** ॥ यस्मिन् जन्मन्य-परोक्षज्ञानमुत्पन्नं तद्देहपातरूपं तत् प्रथममरणमेवेत्यर्थः ॥ **एवमेवेति** ॥ तदोकोऽग्रज्वलन-मित्युक्तप्रकारेणेत्यर्थः । ज्ञानफलं न भवतीति । किन्तु गत्यनुस्मरणफलमेवेत्यर्थः । उत्तरमाह ॥ **गत्यनुस्मरणस्येति** ॥ **ज्ञानशेषत्वात्** ॥ ज्ञानसहकारित्वात् ॥ **कारणमिति** ॥ कारणमित्यत्र उत्तरवाक्यमवतारयति ॥ **प्रकाशितेति** ॥

## वाक्यार्थमञ्जरी

**पृथग्जनेति** ॥ अज्ञजनेत्यर्थः ॥ उत्क्रान्तिकाले तदोकसः भगवद्देहरूपस्य हृदयस्याग्रे ज्वलनं प्रभा प्रादुर्भवति ततोऽधिकारी तत्प्रकाशितद्वारस्तेन प्रकाशेन प्रकाशितनाडीद्वारवान् हार्देन हृद्गतेन परमात्मनाऽनुगृहीतोऽनुगृहवानेव विद्यासामर्थ्यादपरोक्षज्ञानशक्त्या तच्छेषगत्यनुस्मृतियोगात्तस्याः विद्यायाः शेषाङ्गभूतायाः हृदयमारभ्य ब्रह्मप्राप्तिपर्यन्तायाः गतेः अनुस्मृतिरनुस्मरणं तद्योगा-त्तत्साहित्यात् शताधिकया शतनाडीतो अधिकया सुषुम्नाख्यनाड्या देहान्निर्यातीत्यर्थः ॥ **स्वोदय-मारभ्यैवेति** ॥ न तु लिङ्गदेहभङ्गमारभ्यैवेत्यर्थः । कर्म प्रारब्धम्, आदेहमारवेर्वा फलदमिति सम्बन्धः ॥ **ज्ञानफलं न भवतीति** ॥ गत्यनुस्मरणफलत्वादिति भावः । इति स्मृतेः गीताभाष्यो-दाहृतायाः ॥ **न विशेषप्रमाणमिति** ॥ उदाहृतस्मृतौ गतिवाचकशब्दाभावादिति भावः ॥

## सूत्रभाष्यम्

### ॐ रश्म्यनुसारी ॐ ॥ १८ ॥

**निष्क्रामति । 'सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वातातास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैव निर्गच्छति' इति पौत्रायणश्रुतिः ॥**

## तत्त्वप्रदीपिका

योऽयं प्रद्योतः तं सुषुम्नाख्यं रश्मिमनुसरन् सुषुम्नया निष्क्रामति ॥

## तत्त्वप्रकाशिका

ननु यदि प्रकाशितनाडीद्वारो निष्क्रामति तर्ह्यज्ञवन्नाड्यन्तस्तमसैव गमनं स्यात् । यद्यन्तरेऽप्यस्ति प्रकाशस्तर्हि द्वारपदवैयर्थ्यमित्याशङ्कां परिहरत्सूत्रं पठित्वा तच्छेषमेव पूरयति ॥ **रश्मीति** ॥ न ज्ञानिनो नाड्यन्तस्तमसोत्क्रमणं येनाज्ञमरणसाम्यं स्यात् । नाड्यन्तरा ततसौररश्म्यनुसारेणोत्क्रमणात् । अत एव नाड्यन्तर्गतस्य प्रकाशान्तरत्वाद् द्वारपदावैयर्थ्यमिति भावः । तदुक्तम् ।

तदा विष्णोः स्वतेजसा ।
द्योतते हृदयाग्रं च तेन द्वारेण केशवः ।
निष्क्रामे ज्जीवमादाय प्राण एनमनुव्रजेत् । इति ।

नाड्यन्तराततसौररश्म्यनुसारेणोत्क्रामतीत्येतत्कुत इत्यत आह ॥ **सहस्रमिति** ॥

## गुर्वर्थदीपिका

नाड्यन्तर्गतस्य प्रकाशान्तरत्वादित्यत्र नाड्यन्तस्थसौरप्रकाशः जीवमादाय हरौ मूर्धद्वारसमीपं प्रति गते सत्यधस्थात् पीठभूतार्कस्यैव विलोपात् वायुभिः सह नष्ट एव भवति । तस्माद्द्वारप्रदर्शनाय हरिप्रकाश एवापेक्षित इति भावः ।

## भावदीपः

अज्ञमृतिसाम्यनिरासकतया पूर्वोक्तेर्द्वारपदसार्थक्योपपादकतया चोत्तरयोगमवतारयति ॥ **नन्विति** ॥ उक्तशङ्कानिवर्तकतया भाष्यं तात्पर्यतो व्याचष्टे ॥ **न ज्ञानिन इत्यादिना** ॥ **अत एव** सौरालोकत्वादेवेत्यर्थः । नन्वत्र भाष्यानुक्तोऽपि द्वारप्रकाशो वैष्णवो न सौर इति कुतो ज्ञायत इत्यतः षष्ठे बृहद्भाष्योक्तमित्याह ॥ **तदुक्तमिति** ॥ जीवमादायेत्युक्त्या ज्ञानिनो निष्क्रामन्तीति यदत्रोक्तं तद्बृहद्भाष्यविरुद्धमिति प्रत्युक्तम् । पराधीनगतिमादाय जीवो निष्क्रामतीत्येतद्ग्रन्थोक्त्युपपत्तेरिति ॥

## वाक्यार्थमुक्तावली

**यदि प्रकाशितनाडीद्वार इति** ॥ ब्रह्मरंध्ररूपनाड्यग्रद्वार इत्यर्थः ॥ **सौररश्म्यनुसारेणेति** ॥ तन्त्रसारे हृत्पद्मकीर्णकाप्रदेशो सूर्यमण्डलोक्तेरिति भावः ॥ **प्रकाशान्तरत्वादिति** ॥ द्वारस्थ-भगवत्प्रकाशापेक्षया प्रकाशान्तरत्वादित्यर्थः । आसु नाडीषु सहस्रनाडीषु । श्वेतः सुषुम्नो ब्रह्मयान इति रश्मिविशेषस्य विशेषणम् । श्वेतो वर्णतः । सुषुम्नो नामतः । ब्रह्मयानो ब्रह्मयापक इति क्रियातः ॥

## तत्त्वसुबोधिनी

अत एवेत्यस्य विवरणं **नाड्यन्तर्गतस्य प्रकाशान्तरत्वादिति** ॥

## वाक्यार्थविवरणम्

**द्वारपदवैय्यर्थ्यमिति** ॥ नाडीद्वारप्रकाशो विष्णुतेजसा विष्णुप्रकाशेनैव भवति । अतो द्वारपदम् । नाड्यन्तर्विद्यमानप्रकाशस्तु सौररश्मिप्रकाश इति प्रकाशयोर्भेदोऽस्तीति भावः ॥ **सहस्रमिति** ॥ तथा च तत्र रश्मिषु श्वेतः सुषुम्नो ब्रह्मयानः तन्नामकः आदित्यरश्मिः सुषुम्ना-नाड्यन्तरातत इत्यर्थो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

ज्ञानी नाड्यन्तर्गतव्याप्तरश्म्यनुसारी निर्यातीत्यर्थः ॥

## सूत्रभाष्यम्

### ॐ निशि नेति चेन्न सम्बन्धात् ॐ ॥ १९ ॥

**रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेन्न । सर्वदा सम्बन्धाद्रश्मीनाम् ॥**

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ **निशीति** ॥ किं सर्वज्ञानिनां रश्म्यनुसारेणोत्क्रमणं किं वा केषाञ्चित् । आद्ये रात्रौ पर्यवसितकर्मणामपि ज्ञानिनामपेक्षितो-

(तत्त्वप्रकाशिका)

**त्क्रान्तिर्न स्यात् । रात्रौ रश्म्यभावात् । तथा च प्रतिबन्धककर्माभावेऽपि संसारानिवृत्तौ सदा निवृत्तिप्रसङ्गः । न द्वितीयः । केषाञ्चिज्ज्ञानिनामुत्क्रमणस्या विलक्षणत्वापातादिति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ सर्वज्ञानिनामप्यस्ति रश्म्यनुसारेणोत्क्रमणम् । न चोक्तदोषः । निशि बाह्यादित्याभावेऽप्यन्तस्थादित्यरश्मीनां सर्वदा नाडीसम्बन्धादिति भावः ॥**

## गुर्वर्थदीपिका

अन्तस्थाऽऽदित्यरश्मीनामित्यत्र हरेः पीठतया हृन्मध्यस्थाऽऽदित्यरश्मीनामित्यर्थः ।

## भावदीपः

भाष्ये न युक्तमितीष्टापादनं दिवोत्क्रांत्युपपत्त्या रश्म्यनुसारित्वाक्षतेरित्यतो विकल्पेन भाष्यं घटयति ॥ **किमिति** ॥ उत्क्रान्तावविशेष इत्यन्यत्रोक्तमेव हेतुत्वेनात्र योजयति ॥ **केषाञ्चिदिति** ॥ नेति नञस्तात्पर्यमाह ॥ **सर्वेति** ॥ भाष्यशेषं व्याचष्टे ॥ **न चेत्यादिना** ॥

## वाक्यार्थमुक्तावली

**रात्रौ रश्म्यभावादिति** ॥ नाड्यन्तरः सौरप्रकाशो बाह्यसूर्यप्रकाश इति शङ्कितुरभिप्रायः । कर्मणां रात्रौ पर्यवसितत्वेऽपि प्रातरेवोत्क्रमणमस्त्वित्यत आह ॥ **तथा चेति** ॥ निशि रात्रौ रश्मयो न सन्ति । अतो निशि पर्यवसितकर्मणामुत्क्रमणमपि न सम्भवतीति चेन्न । रश्मीनां निश्यपि नाडीसम्बन्धादित्यर्थः ।

## तत्त्वसुबोधिनी

**न चोक्तदोष इति** । रात्रौ पर्यवसितकर्मणां ज्ञानिनां अपेक्षितोत्क्रान्त्यभावरूपदोषो न चेत्यर्थः ।

## वाक्यार्थविवरणम्

**अविलक्षणत्वेति** ॥ अज्ञमरणसाम्यं स्यादित्यर्थः ॥ **अन्तस्स्थेति** ॥ चक्षुरन्तरस्थेत्यर्थः । **सदातनः** नित्यः ।

## वाक्यार्थमञ्जरी

रात्रावादित्यरश्मिसंयोगो नास्तीति चेन्न सम्बन्धात् अन्तस्थादित्यरश्मीनां तदापि सम्बन्धादित्यर्थः ॥ **पर्यवसितेति** ॥ समाप्तेत्यर्थः ॥ **सदेति** ॥ नाडीनां देहसापेक्षत्वेन देहस्य च सदाभावादिति भावः ॥ **कदाचिदिति** ॥ पूर्वं सतोऽप्युत्क्रान्तिकालेऽभावोपपत्तेरिति भावः ।

## सूत्रभाष्यम्

कियत्कालम् ?—

**ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ॥ २० ॥**

**यावद्देहो विद्यते तावद्रश्मिसम्बन्धोऽस्त्येव । 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तत' इति माध्यन्दिनायनश्रुतिः ॥**

## तत्त्वप्रकाशिका

सर्वदेति पदस्य सामान्यवचनत्वात्पृच्छति ॥ **कियदिति** ॥ नाडीरश्मिसम्बन्धः सर्वदास्तीति कोऽर्थः । किं सदातनः किं वा देहपातपूर्वकालीनः उत यावद्देहभावी । नाद्यः । सदा नाडीनामभावात् । न द्वितीयः । कदाचिज्ज्ञानिनोऽपि तमसोत्क्रान्तिप्रसङ्गात् । नापि तृतीयः । तन्नियमे प्रमाणाभावादिति भावः । एतत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ **यावदिति** ॥ नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वाङ्गीकारात् । न पक्षान्तरदोषः । न चात्राप्युक्तो दोष इति वाच्यम् । संसृष्टा इति श्रुतिसद्भावादिति भावः ॥

## भावदीपः

प्रश्नबीजं व्यनक्ति ॥ **कोऽर्थ इत्यादिना** ॥ तृतीयपक्षाङ्गीकारपरतया भाष्यं व्यनक्ति ॥ **नाडीति** ॥

## अभिनवचन्द्रिका

**कदाचित् ज्ञानिन इति** ॥ रश्मिसम्बन्धस्य बहुकालानुवृत्त्यभावात् गमनकाले दीपानुज्ञावतोऽपि राजभृत्यस्य दीपधारिविलम्बेन क्षणमात्रं तमसागमनवत् ज्ञानिनोऽपि ईषत्तमसा गमनं स्यादिति

(अभिनवचन्द्रिका)

भावः । साक्षान्मोक्षस्य सुषुम्नैकगम्यत्वादिति । साक्षान्मोक्षस्य मुख्यब्रह्मलोकस्य, सत्यलोक-विष्णुलोकरूपस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

**सामान्यवचनत्वादिति ॥** सङ्कोचासङ्कोचाभ्यामिति शेषः । सूत्रे सम्बन्धादिति षष्ट्यन्त-मनुवर्तते । चशब्दः पक्षान्तरशेष इति साध्यस्य समुच्चायकः । नापि नियमे प्रमाणाभाव इत्यस्यापि समुच्चायकः । यतो यावद्देहभावं दर्शयतीति हेत्वर्थे चेति भावेन व्याचष्टे ॥ **नाडीति ॥** एतै रश्मिभिः मार्गं पश्यति । एतैः रश्मिभिः प्रकाशितमार्गे उत्क्रामति । एतैः प्रवर्तते रश्मिभिः । प्रकाशेन निमित्तेनोत्क्रान्त्यर्थं प्रयतत इत्यर्थः ।

## तत्त्वसुबोधिनी

**न पक्षान्तरदोष इति ॥** सदा नाडीनां भावादित्यादिरूप इत्यर्थः ॥ **न चात्रापीति ॥** विशेषप्रमाणाभावरूप इत्यर्थः ।

## वाक्यार्थविवरणम्

**देहपातपूर्वकालीन इति ॥** पाताव्यवहितपूर्वकालीन इत्यर्थः ॥ **सदेति ॥** देहपातानन्तरं नाडीनामभावेन न सदातनत्वं सम्भवतीति भावः ॥ **कदाचिदिति ॥** पाताव्यवहितकालापेक्षया तत्पूर्वकाल इत्यर्थः ॥ **तमसैवेति ॥** तदानीं रश्मीनामभावादिति भावः ॥ **पक्षान्तरेति ॥** आद्यद्वितीयपक्षोक्तदोषेत्यर्थः ।

## वाक्यार्थमञ्जरी

नोक्तदूषणावकाशः कुतः यावद्देहभावित्वात् नाडीरश्मिसम्बन्धस्य देहसमानकालीनत्वात् । कुतः यस्मात्संसृष्टा वा इति श्रुतिस्तथा दर्शयतीत्यर्थः ॥ **इति वचनादिति ॥** यथात्र स्मृतौ दक्षिणायनोत्क्रान्तेः स्वर्गसाधनत्वोक्त्या तत्रोत्क्रान्त्यभावोऽङ्गीक्रियते तथा रात्रौ बाह्यादित्य-रश्मिसम्बन्धाभावात्तदोत्क्रान्तिरेव नेत्यङ्गीकारोपपत्तेरित्यर्थः ।

## सूत्रभाष्यम्

**ॐ अतश्चायनेऽपि हि दक्षिणे ॐ ॥ २१ ॥**

'दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायण' इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते ।

'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तार उत्तरायणरश्मिभिः ।
निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः ॥
उत्तरं दक्षिणमिति त एव तु निगद्यते ।
न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ॥
ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।
अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ॥' इति नारायणाध्यात्मे ॥

॥ इति हृदयाग्रज्वलना(तदोको ऽ)धिकरणम् ॥ ९ ॥

## तत्त्वप्रदीपिका

अतश्चायनेऽपि हि दक्षिणे ॥ अतः सर्वदा सम्बन्धाद्रश्मीनां 'दक्षिणे मरणाद्याति' इत्युक्तेऽपि दक्षिणायनोत्क्रान्तिर्युज्यते । तस्यान्यार्थत्वात् । तमर्थमाह– 'शतं पञ्चैव सूर्यस्य' इत्यादिना ।

महर्लोकादिगन्तार उत्तरायणरश्मिभिः ।
निर्गच्छन्तीतरैश्चैव यैरेष्टव्येतरा गतिः ॥

इतरैर्दक्षिणायनरश्मिभिः निर्गच्छन्त्यपरे । यैर्महर्लोकादिभ्य इतरा स्वर्गादिगतिः प्राप्तव्या । 'उत्तरं दक्षिणमिति त एव तु निगद्यते' तयोरेकैकमेवेत्यर्थः । उत्तरायणरश्मिपञ्चशतकमुत्तरायणं निगद्यते । दक्षिणायनरश्मिपञ्चशतं दक्षिणायनम् ॥

## तत्त्वप्रकाशिका

ननु व्यर्थोऽयं ज्ञानिनो रात्रावुत्क्रमणसम्भवप्रतिपादनायासः । 'दक्षिणे मरणात्' इति वचनान्मोक्षार्थं ज्ञानिनो दक्षिणायनोत्क्रान्त्ययोगात्तद्वद्रात्रावपि तदभावोपपत्तेरित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। **अतश्चेति** ।। न च स्मृतिबलेन ज्ञानिनो दक्षिणायनोत्क्रान्त्ययोगदृष्टान्तेन रात्रावपि तदभावो वाच्यः । 'दक्षिणे मरणात्' इति स्मृतिसद्भावेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिसम्भवात् । कुतः सौररश्मिसहस्रस्य नाडीसम्बन्धसद्भावादिति भावः । सूत्रार्थं स्मृत्या विशदयति ।। **शतमिति** ।। शतं पञ्चेति पञ्चशतानीत्यर्थः । साक्षान्मोक्षस्य सुषुम्नैकगम्यत्वान्महर्लोकादीत्युक्तम् । तेषां चापुनरावृत्तिस्थानत्वेन ब्रह्मलोकत्वाद् ब्रह्मोत्तरायण इत्यनेनैकार्थता । महर्लोकादीत्यतद्गुणसंविज्ञानः । 'निगद्यते दक्षिणे मरणात्' इति स्मृतौ न तु कालविशेषोऽस्ति भवति । कुतोऽयमर्थो 'दक्षिणे मरणात्' इति स्मृतेरित्यत आह ।। **न त्विति** ।। उत्क्रमणायेति शेषः । कुतो नास्तीत्यत आह ।। **नियमादिति** ।। ज्ञानमिति शेषः । ज्ञानिनामुत्क्रान्तौ कालनियमाभावे कथं भीष्मादीनामुत्तरायणप्रतीक्षणमित्यत आह ।। **काल इति** ।। भीष्मादप्युत्तमानां सर्वकालस्याप्यतिशयकारणत्वान्न कालविशेषेणातिशयः । अतो ज्ञानिनामुत्क्रमणस्याज्ञमरणविलक्षणत्वादुक्तं ज्ञानमाहात्म्यं युक्तमिति सिद्धम् ।।

## गुर्वर्थदीपिका

ज्ञानिनोऽपि दक्षिणायनोत्क्रान्तिर्युज्यत इति वदता भाष्यकारेण ज्ञानिनां दक्षिणायनोत्क्रान्तौ रात्रावुत्क्रान्तावपि दक्षिणायनरश्मीनामिवोत्तरायणरश्मीनामपि दक्षिणायने रात्रौ चास्मिन्नेव देहे सदा सम्बन्धवत्त्वाज्ज्ञानसामर्थ्येन । क्षीरनीरसमायोगे हंसो नीरमिव दक्षिणायनरश्मीन्विहायोत्तरायणरश्मिभिरेव गच्छति । अतो दक्षिणायने । उपलक्षणं चैतत् । रात्रौ मरणे च ज्ञानिनां न काचित्क्षतिः । यैर्ज्ञानरहितैरितरा गतिरेष्टव्या ते दक्षिणायनरश्मिभिर्गच्छन्ति । अतोऽज्ञानिनां न ज्ञानिसमानयोगक्षेमतेति सूत्राभिप्रायस्सूचितः ।

## भावबोधः

**उत्क्रान्तिसद्भावादिति** ।। अनेन 'अयनेऽपि हि' इति सूत्रगतो 'हि'शब्दो हेतावित्युक्तं भवति । दक्षिणायने ज्ञानिनामुत्क्रमणाभावः 'किं दक्षिणे मरणात्' इति स्मृत्यनुरोधादुच्यते उत

(भावबोधः)

हेत्वभावात् । नाद्यः । स्मृतेरन्यविषयत्वेन व्याख्यास्यमानत्वात् इत्यभिप्रेत्य द्वितीयस्योत्तरत्वेन सूत्रगत 'अत:' शब्दं व्याचष्टे– **सौररश्मीति ॥ साक्षान्मोक्षस्येति ॥** लिङ्गभङ्गस्येत्यर्थः ॥ ननु ''आजनान्न जनिर्भुवि' इत्यादिना जनआदिलोकस्यैवापुनरावृत्तिस्थानत्वेनोक्तत्वात् कथमेतदित्यत आह– **महर्लोकादीत्यतद्गुणसंविज्ञान इति ॥** तत्राद्ये ज्ञानिमरणवैलक्षण्याय ज्ञानिमरणस्य सहेतुकं हृदयाग्रज्वलनप्रकाशितद्वारवत्त्वरूपवैशिष्ट्योक्तिः । द्वितीये यदि प्रकाशितनाडीद्वारा निष्क्रामति तर्ह्यज्ञवत्, नाड्यन्तस्तमसैव गमनं स्यादित्याशङ्कापरिहाराय नाड्यन्तराततसौररश्म्यनुसारित्व-रूपवैशिष्ट्यान्तरोक्तिः । तृतीये रात्रावपि पर्यवसितकर्मणां ज्ञानिनां मोक्षार्थोत्क्रमणसिद्ध्यर्थं रात्रौ रश्म्यभावमाशङ्क्य सदा रश्मिसद्भावोक्तिः । चतुर्थे 'सम्बन्धात्' इति सदा सत्त्वोक्त्या प्राप्ताति-प्रसङ्गपरिहाराय तेषां रश्मीनां सप्रमाणकं यावद्देहभावित्वोक्तिः । पञ्चमे 'दक्षिणे मरणाद्याति स्वर्गम्' इत्यादिस्मृत्या दक्षिणायने मरणाभावसिद्धौ तद्वदत्रापि उत्क्रमणाभावात् तदा रश्मि-सद्भावप्रतिपादनं व्यर्थमित्याशङ्कापरिहाराय ।

'उत्तरं दक्षिणमिति त एव तु निगद्यते' इति स्मृत्यनुसारेण स्मृतेरश्म्यर्थत्वेन कालार्थत्वा-भावान्न तद्विरोध इत्यभिप्रेत्य दक्षिणायनेऽपि ज्ञानिनां मरणोक्तिरिति सूत्रक्रमः ।

## भावदीपः

योगद्वयोक्तार्थसार्थक्योक्तिपरतयोत्तरयोगमवतारयति ॥ **नन्विति** ॥ इत्युक्तेऽपीति भाष्यसूचित-शङ्कां निराह ॥ **न चेति** ॥ तत्र हेतुत्वेन भाष्यं व्यनक्ति ॥ **दक्षिण इति** ॥ सर्वदा सम्बन्धा-द्रश्मीनामिति पूर्वभाष्यमत्रापि युज्यत इत्यनन्तरमनुवर्त्यार्थमाह ॥ **सौरेति** ॥ साक्षान्मोक्षस्य साक्षाद्विष्णुप्राप्तेरित्यर्थः । विष्णोर्लोकं परं गच्छन्निति प्रागुक्तस्मृतेः । आजनान्न जनिर्भुवीत्युक्तेराह ॥ **अतद्गुणेति** ॥ निगद्यत इति स्मृतिस्थपदमनूद्य कुत्रेत्याकाङ्क्षां पूरयति ॥ **निगद्यत इति** ॥ भाष्योक्तावित्यर्थः । स्मृतिस्थवाक्यानुरोधेनास्तीत्यस्यार्थमाह ॥ **न त्विति** ॥ दक्षिणे मरणादिति स्मृतावुत्तरं दक्षिणमिति कालविशेषो न भवति । किं तु त एव रश्मय एवोत्तरं दक्षिणमिति निगद्यत इति भाष्ययोजना सूचिता । अस्तीत्यस्य यथा श्रुतार्थमेवार्थमुपेत्य पूर्वोक्तार्थहेतुसमर्पकतयापि तदेव वाक्यमन्यथापि व्याचष्टे ॥ **कुतोऽयमर्थ इत्यादिना** ॥ यतो ज्ञानिनामुत्क्रमणाय कालविशेषो

(भावदीपः)

नास्तीति योजनामुपेत्याह ॥ **उत्क्रमणायेति शेष इति** ॥ स्मृतिशेषार्थो भीष्मादपीत्यादि ॥ **अत इति** ॥ प्रकाशेन निर्गतिमत्त्वादज्ञस्य तदभावादित्यर्थः ।

## अभिनवचन्द्रिका

नन्वेवं तर्हि 'ब्रह्मोत्तरायण' इति वचनविरोधः । तत्र उत्तरायणमरणस्य ब्रह्मलोकप्राप्तिफलकत्वाभिधानादित्यत आह – **तेषां चेति** ॥ ननु 'आजनान्नजनिर्भुवि' इत्यादिना जनादिलोकस्यैवाऽपुनरावृत्तिस्थानत्वेनोक्तत्वात् कथमेतदित्यत आह – **महर्लोकादीति** ॥ ननु 'न तु कालविशेषोऽस्ति' इत्ययुक्तं, कालविशेषस्य प्रमाणसिद्धत्वादित्यत आह – **न तु काल इति** ॥ अत्र कालविशेष इत्यनन्तरं विवक्षित इति शेषः । अस्तीत्यस्य व्याख्यानं भवतीति । ततश्चैवं मूलयोजना – 'दक्षिणे मरणाद्याति' इति स्मृतौ दक्षिणादिशब्दैःनाड्यो निगद्यते=निगंद्यते, नतु कालविशेषो विवक्षितो भवतीति । 'दक्षिणे मरणाद्यातीति स्मृतिवचनस्य नाडीमरणमेव मोक्षादिहेतुतया विवक्षितं, न तु कालविशेषमरणमिति व्याख्यानपरतया 'उत्तरं दक्षिणम्' इति भाष्योदाहृतप्रमाणं व्याख्याय, 'न तु कालविशेषोऽस्तीतीममंशं प्रकारान्तरेण योजयितुमवतारयति– **कुतोऽयमिति** ॥

**पूर्वपक्षस्तु** ज्ञानिचरममरणं प्रारब्धनिबन्धनत्वात् तत्पूर्वमरणवत् पृथग्जनमरणसदृशं, ततश्च ज्ञानिमरणस्याऽज्ञमरणवैलक्षण्याभावात् न ज्ञानमतिशयवदिति ॥

**सिद्धान्तस्तु** नाऽज्ञमरणवत् ज्ञानिनश्चरममरणं, कथं तर्हि ज्ञानसामर्थ्यात् । तस्य सामर्थ्यात् तस्य हृदयस्याऽग्रं प्रद्योतते परमात्मा, तत्प्रकाशितद्वारं जीवमादाय सुषुम्नानाड्या निष्क्रामति प्राणा एनमनुव्रजति । न च ज्ञानसामर्थ्यात् पूर्वमरणस्याप्येवंविधत्वप्रसङ्गः गत्यनुस्मरणरूपसहकारिविरहात् नाड्यन्तस्तु सौररश्मिप्रकाशेन गच्छति । न चैवं सति रात्रौ देहारम्भककर्मक्षयेऽपि मरणाभावः । रात्रौ बाह्यादित्याभावेऽपि अन्तरादित्यस्य सत्त्वात् । तद्रश्मिसम्बन्धस्य सर्वदा नाडीषु सद्भावेन रात्रावेव मरणोपपत्तेः । तदुक्तं 'संसृष्टा वा एते आदित्यस्य रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरम् । अत एतैः पश्यति एतैरुत्क्रामति, एतैः प्रवर्तत' इति । अत एव दक्षिणायने मरणं युज्यते । न च 'दक्षिणे मरणाद्याति' इति स्मृतिविरोधः । स्मृतेः

(अभिनवचन्द्रिका)

दक्षिणायनसंज्ञकनाडीमरणस्य स्वर्गहेतुत्वं, उत्तरायणसंज्ञकनाडीमरणस्य जनलोकादि-हेतुत्वमित्यर्थत्वात्। 'शंत पञ्चैव सूर्यस्य' इति वचनात्। अयमत्र विवेकः ये सद्यो विष्णुलोकं गच्छन्ति ते सुषुम्नया निष्क्रामन्ति। ये सत्यलोकं गच्छन्ति ते सुषुम्नाप्रभेदेन। ये तु जनलोकादिषु चिरं रत्वा विष्णुलोकं गच्छन्ति त उत्तरायणरश्मिभिर्निर्गच्छन्ति इति। अतो ज्ञानिनामुत्क्रमण-स्याऽज्ञमरणविलक्षणत्वात् ज्ञानमाहात्म्यं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**रात्रावपीति** ॥ न च पर्यवसितकर्मणां ज्ञानिनां कथमपेक्षितोत्क्रमणाभाव इति वाच्यम्। दक्षिणायने पर्यवसितकर्मणां कथमिति साम्यात्तदा कर्मपर्यवसानमेव नेति वा पर्यवसानेऽपि ज्ञानिनां तदोत्क्रमणापेक्षैव नेति चेत् प्रकृतेऽपि साम्यादित्यर्थः। साध्यसमुच्चये चशब्दः। अपिशब्दो दक्षिणे मरणादिति स्मृतिसद्भावेऽपीति स्मृतिसमुच्चायकः। हिशब्दो यस्मादित्यर्थ इति भावेन व्याचष्टे ॥ **न चेत्यादिना** ॥ तथा च हि यतः अपि दक्षिणे मरणादिति स्मृतिसद्भावेऽपि दक्षिणे अयने दक्षिणायनलक्षणकाल उत्क्रान्तिः सम्भवति। अतस्तद्दृष्टान्तेन रात्रावपि तदभावो वाच्य इति योजना ॥ **कुत इति** ॥ दक्षिणायने मुक्त्यर्थमुत्क्रमणनिषेधेऽपि कुतः स्मृतिमुल्लङ्घ्य दक्षिणायने उत्क्रमणमुच्यत इत्यर्थः। तत्परिहारायात इत्यर्थान्तरमाह ॥ **सौरेति** ॥ अत इत्यनेन पूर्वसूत्रे सम्बन्धादित्युक्तं परामृश्यत इति भावः। इदमुक्तं भवति। दक्षिणे मरणादित्यत्र दक्षिणायनादि-शब्देन कालो न गृह्यते किंतु तत्संज्ञितरश्मय एव। तथा च स्मृतेरन्यार्थत्वेन तद्विरोधाभावात्सर्वदा रश्मिसहस्रस्य देहसम्बन्धसत्वाद्दक्षिणायनेऽप्युत्तरायणसंज्ञितरश्मिभिर्ब्रह्मगमनोपपत्तेर्न तद्दृष्टान्तेन रात्रावुत्क्रमणाभाव इति ॥ **स्मृत्येति** ॥ हिशब्दसूचितयेति भावः। साक्षान्मोक्षस्येत्यप्रतीका-लम्बनप्राप्यवैकुण्ठान्यमुक्तस्थानस्य सुषुम्नाप्रधानब्रह्मनाडीगम्यत्वादित्यर्थः। ब्रह्मलोकस्य सुषुम्ना-प्रभेदवज्रिकादिगम्यत्वाच्चेति ज्ञेयम्। भावबोधे तु लिङ्गभङ्गस्येत्यर्थ उक्तः। नन्वाजनान्न जनिर्भुवीति जनादिलोकस्येवापुनरावृत्तिस्थानत्वेनोक्तत्वात्कथं महर्लोकस्य तदित्यत आह ॥ **महर्लोकादीत्य-तद्गुणसंविज्ञानबहुव्रीहिरिति** ॥ तस्यान्यपदार्थस्य यो गुण उपसर्जनभूतो पदार्थस्तस्य कार्य-संविज्ञानमभ्यनुज्ञानं न विद्यते यस्मिन् बहुव्रीहौ सोऽतद्गुणसंविज्ञान इत्यर्थः।

(भावदीपः)

नास्तीति योजनामुपेत्याह ॥ **उत्क्रमणायेति शेष इति** ॥ स्मृतिशेषार्थो भीष्मादपीत्यादि ॥ **अत इति** ॥ प्रकाशेन निर्गतिमत्त्वादज्ञस्य तदभावादित्यर्थः ।

## अभिनवचन्द्रिका

नन्वेवं तर्हि 'ब्रह्मोत्तरायण' इति वचनविरोधः । तत्र उत्तरायणमरणस्य ब्रह्मलोकप्राप्तिफलकत्वाभिधानादित्यत आह – **तेषां चेति** ॥ ननु 'आजनान्नजनिर्भुवि' इत्यादिना जनादिलोकस्यैवाऽपुनरावृत्तिस्थानत्वेनोक्तत्वात् कथमेतदित्यत आह – **महर्लोकादीति** ॥ ननु 'न तु कालविशेषोऽस्ति' इत्ययुक्तं, कालविशेषस्य प्रमाणसिद्धत्वादित्यत आह – **न तु काल इति** ॥ अत्र कालविशेष इत्यनन्तरं विवक्षित इति शेषः । अस्तीत्यस्य व्याख्यानं भवतीति । ततश्चैवं मूलयोजना – 'दक्षिणे मरणाद्याति' इति स्मृतौ दक्षिणादिशब्दैःनाड्यो निगद्यते=निगंद्यते, नतु कालविशेषो विवक्षितो भवतीति । 'दक्षिणे मरणाद्यातीति स्मृतिवचनस्य नाडीमरणमेव मोक्षादिहेतुतया विवक्षितं, न तु कालविशेषमरणमिति व्याख्यानपरतया 'उत्तरं दक्षिणम्' इति भाष्योदाहृतप्रमाणं व्याख्याय, 'न तु कालविशेषोऽस्तीतीममंशं प्रकारान्तरेण योजयितुमवतारयति– **कुतोऽयमिति** ॥

**पूर्वपक्षस्तु** ज्ञानिचरममरणं प्रारब्धनिबन्धनत्वात् तत्पूर्वमरणवत् पृथग्जनमरणसदृशं, ततश्च ज्ञानिमरणस्याऽज्ञमरणवैलक्षण्याभावात् न ज्ञानमतिशयवदिति ॥

**सिद्धान्तस्तु** नाऽज्ञमरणवत् ज्ञानिनश्चरममरणं, कथं तर्हि ज्ञानसामर्थ्यात् । तस्य सामर्थ्यात् तस्य हृदयस्याऽग्रं प्रद्योतते परमात्मा, तत्प्रकाशितद्वारं जीवमादाय सुषुम्नानाड्या निष्क्रामति प्राणा एनमनुव्रजंति । न च ज्ञानसामर्थ्यात् पूर्वमरणस्याप्येवंविधत्वप्रसङ्गः गत्यनुस्मरणरूपसहकारिविरहात् नाड्यन्तस्तु सौररश्मिप्रकाशेन गच्छति । न चैवं सति रात्रौ देहारम्भककर्मक्षयेऽपि मरणाभावः । रात्रौ बाह्यादित्याभावेऽपि अन्तरादित्यस्य सत्त्वात् । तद्रश्मिसम्बन्धस्य सर्वदा नाडीषु सद्भावेन रात्रावेव मरणोपपत्तेः । तदुक्तं 'संसृष्टा वा एते आदित्यस्य रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरम् । अत एतैः पश्यति एतैरुत्क्रामति, एतैः प्रवर्तत' इति । अत एव दक्षिणायने मरणं युज्यते । न च 'दक्षिणे मरणाद्याति' इति स्मृतिविरोधः । स्मृतेः

(अभिनवचन्द्रिका)

दक्षिणायनसंज्ञकनाडीमरणस्य स्वर्गहेतुत्वं, उत्तरायणसंज्ञकनाडीमरणस्य जनलोकादि-हेतुत्वमित्यर्थत्वात् । 'शंत पञ्चैव सूर्यस्य' इति वचनात् । अयमत्र विवेकः ये सद्यो विष्णुलोकं गच्छन्ति ते सुषुम्नया निष्क्रामन्ति । ये सत्यलोकं गच्छन्ति ते सुषुम्नाप्रभेदेन । ये तु जनलोकादिषु चिरं रत्वा विष्णुलोकं गच्छन्ति त उत्तरायणरश्मिभिर्निर्गच्छन्ति इति । अतो ज्ञानिनामुत्क्रमण-स्याऽज्ञमरणविलक्षणत्वात् ज्ञानमाहात्म्यं युक्तमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**रात्रावपीति** ॥ न च पर्यवसितकर्मणां ज्ञानिनां कथमपेक्षितोत्क्रमणाभाव इति वाच्यम् । दक्षिणायने पर्यवसितकर्मणां कथमिति साम्यात्तदा कर्मपर्यवसानमेव नेति वा पर्यवसानेऽपि ज्ञानिनां तदोत्क्रमणापेक्षैव नेति चेत् प्रकृतेऽपि साम्यादित्यर्थः । साध्यसमुच्चये चशब्दः । अपिशब्दो दक्षिणे मरणादिति स्मृतिसद्भावेऽपीति स्मृतिसमुच्चायकः । हिशब्दो यस्मादित्यर्थ इति भावेन व्याचष्टे ॥ **न चेत्यादिना** ॥ तथा च हि यतः अपि दक्षिणे मरणादिति स्मृतिसद्भावेऽपि दक्षिणे अयने दक्षिणायनलक्षणकाल उत्क्रान्तिः सम्भवति । अतस्तद्दृष्टान्तेन रात्रावपि तदभावो वाच्य इति योजना ॥ **कुत इति** ॥ दक्षिणायने मुक्त्यर्थमुत्क्रमणनिषेधेऽपि कुतः स्मृतिमुल्लङ्घ्य दक्षिणायने उत्क्रमणमुच्यत इत्यर्थः । तत्परिहारायात इत्यर्थान्तरमाह ॥ **सौरेति** ॥ अत इत्यनेन पूर्वसूत्रे सम्बन्धादित्युक्तं परामृश्यत इति भावः । इदमुक्तं भवति । दक्षिणे मरणादित्यत्र दक्षिणायनादि-शब्देन कालो न गृह्यते किंतु तत्संज्ञितरश्मय एव । तथा च स्मृतेरन्यार्थत्वेन तद्विरोधाभावात्सर्वदा रश्मिसहस्रस्य देहसम्बन्धसत्वाद्दक्षिणायनेऽप्युत्तरायणसंज्ञितरश्मिभिर्ब्रह्मगमनोपपत्तेर्न तद्दृष्टान्तेन रात्रावुत्क्रमणाभाव इति ॥ **स्मृत्येति** ॥ हिशब्दसूचितयेति भावः । साक्षान्मोक्षस्येत्यप्रतीका-लम्बनप्राप्यवैकुण्ठान्यमुक्तस्थानस्य सुषुम्नाप्रधानब्रह्मनाडीगम्यत्वादित्यर्थः । ब्रह्मलोकस्य सुषुम्ना-प्रभेदवज्रिकादिगम्यत्वाच्चेति ज्ञेयम् । भावबोधे तु लिङ्गभङ्गस्येत्यर्थ उक्तः । नन्वाजनान्न जनिर्भुवीति जनादिलोकस्येवापुनरावृत्तिस्थानत्वेनोक्तत्वात्कथं महर्लोकस्य तदित्यत आह ॥ **महर्लोकादीत्य-तद्गुणसंविज्ञानबहुव्रीहिरिति** ॥ तस्यान्यपदार्थस्य यो गुण उपसर्जनभूतो पदार्थस्तस्य कार्य-संविज्ञानमभ्यनुज्ञानं न विद्यते यस्मिन् बहुव्रीहौ सोऽतद्गुणसंविज्ञान इत्यर्थः ।

(वाक्यार्थमुक्तावली)

ननु ईयुस्त्रीन्कर्मणा लोकान् ज्ञानेनैव तदुत्तरानित्यादौ महर्लोकस्य ज्ञानैकसाध्यत्वोक्तेः कथमुत्तरायणरश्मिप्राप्यत्वाभावः । येनातद्गुणसंविज्ञानाश्रयणमिति चेन्न । महर्लोकस्य सामान्यदर्शनसाध्यत्वस्य तत्रोक्तत्वेऽपि योग्यापरोक्षसाध्यत्वे प्रमाणाभावात् । सामान्यदर्शनाल्लोका इति वचनात्सामान्यदर्शनसाध्यमहर्लोक उत्तरायणे रश्मिप्राप्यत्वनियमाभावादिति । त एव तु निगद्यत इत्यस्य तयोरेकैकमेव निगद्यते । उत्तरायणरश्मिशतमुत्तरायणं निगद्यते । दक्षिणायनरश्मिशतं दक्षिणायनं निगद्यत इत्यर्थस्तत्वप्रदीपे उक्तः । ननु कालविशेषोऽस्तीत्यनुवादेन भवतीति व्याख्या कालविशेषार्था न भवति स्मृतेरित्यर्थः । प्रकारान्तरेणावतार्य व्याचष्टे ॥ **कुत इत्यादिना** ॥ अत्राद्ये भगवत्प्रकाशप्रकाशितनाडीद्वारेण विशिष्टोत्क्रमणोक्तिः । द्वितीये मध्येमार्गं अन्धकारेण गमनशङ्कायां तत्रादित्यरश्मिभिर्गमनोक्तिः । तृतीये रात्रौ पर्यवसितकर्मणां तदभावमाशङ्क्य तदाप्यान्तरादित्यरश्मिसम्बन्धोक्तिः । चतुर्थे तस्यैव प्रपञ्चनम् । पञ्चमे स्मृत्या दक्षिणायने उत्क्रमणाभावात्तद्रात्रावप्युत्क्रमणाभावात्तदा रश्मिसम्बन्धप्रतिपादनं व्यर्थमित्याशङ्क्य स्मृतिगत्युक्त्या दक्षिणायने रात्रौ चोत्क्रमणमिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

**उक्तीति सम्भवादिति** ॥ अनेनायने हीति सूत्रगतो हिशब्दः हेतावित्युक्तं भवति । दक्षिणायने ज्ञानिनामुत्क्रमणाभावः किं दक्षिणे मरणादिति स्मृत्यनुरोधादुच्यते । उत हेत्वभावात् । नाद्यः स्मृतेरन्यविषयत्वेन व्याख्यास्यमानत्वादित्यभिप्रेत्यद्वितीयोत्तरत्वेन सूत्रगतातःशब्दं व्याचष्टे ॥ **सौररश्मीति** ॥ **साक्षान्मोक्षस्येति** ॥ लिङ्गभङ्गस्येत्यर्थः । ननूत्तरायणरश्मिभिः गतानां महर्लोकादिप्राप्तिश्चेत् ब्रह्मोत्तरायण इत्यनेन विरोधः । तत उत्तरायणरश्मिभिर्गतस्य ब्रह्मप्राप्तेरुक्तत्वात् इत्यत आह ॥ **तेषां चेति** ॥ नन्वाजनान्न जनिर्भुवीत्यादिना जनादिलोकस्यैवापुनरावृत्तित्वेनोक्तत्वात्कथमेतदित्यत आह ॥ **महर्लोकादीत्यतद्गुणसंविज्ञान इति** ॥ तस्यान्यपदार्थस्य गुणो वा तत्पदार्थः । न वा कार्या संविज्ञायते यस्मिन् बहुव्रीहौ सोऽतद्गुणसंविज्ञान इत्यर्थः । समस्यमानानि यानि पदानि तेषामर्थो यत्र बहुव्रीहौ अन्यपदार्थस्यावयवसत्कार्या न स्यात् सोऽतद्गुणसंविज्ञानबहुव्रीहिरिति भावः । अत्राद्ये ज्ञानिमरणस्य प्रकाशितद्वारवत्वरूपवैशिष्ट्योक्तिः । द्वितीये सौररश्म्यनुसारित्वरूपवैशिष्ट्यांतरोक्तिः । तृतीये सदा रश्मिसद्भावोक्तिः । चतुर्थे रश्मीनां सप्रमाणकं यावद्देहभावित्वोक्तिः । पञ्चमे दक्षिणायनेऽपि ज्ञानिनां मरणोक्तिरिति सूत्रक्रमः ।

(तत्त्वसुबोधिनी)

## वाक्यार्थविवरणम्

भाष्ये दक्षिणायनरश्मयः उत्तरायणरश्मयः तन्नामका रश्मय इत्यर्थः । ननु उत्तरायणरश्मिभिर्गन्तारो महर्लोकादिगन्तार इति किमर्थम् । कार्याकार्यब्रह्माधिष्ठितसत्यलोकवैकुण्ठलोकप्राप्तिरेव तेषां किं न स्यादित्यत आह ॥ **साक्षान्मोक्षस्येति** ॥ कार्याकार्यब्रह्मप्राप्तिरूपमोक्षस्येत्यर्थ इत्येके । यद्वा उत्क्रान्तियोग्यानां लिङ्गभङ्गरूपमोक्षस्य सुषुम्नैकसाध्यत्वादिति भावबोधेऽभिप्रेतत्वान्न व्याख्यानान्तरेऽप्यनुपपत्तिः । ननु उत्तरायणरश्मिभिर्गन्तारो महर्लोकादिगन्तार इत्युक्तम् । ब्रह्मोत्तरायण इति भाष्ये उत्तरायणरश्मिभिर्गतानां ब्रह्मलोकप्राप्तिरुच्यते । न हि तद्युक्तम् । महरादिलोकानां ब्रह्मलोकत्वाभावात् । अतस्तयोर्वाक्ययोर्विसंवाद इत्यत आह ॥ **तेषां चेति** ॥ ननु 'आजनान्न जनिर्भुवि' इति वचने जनलोकादीनामेवापुनरावृत्तिलोकत्वोक्तेर्महर्लोकस्य पुनरावृत्तिलोकत्वेन अपुनरावृत्तिलोकत्वाभावात् कथं ब्रह्मलोकत्वमित्यत आह ॥ **महर्लोकादीति** ॥ तस्य गुणाः प्रधानक्रियान्वितत्वेन न संविज्ञायन्त इति अतद्गुणसंविज्ञानः चित्रगुमानयेति यथा । तथा च अत्रापि महर्लोकगन्तार इत्युक्तगमनक्रियया नान्वेतीत्यर्थः । तथा च महर्लोकं विना जनलोको ग्राह्यः । तथा च जनलोकादिगन्तार इत्यर्थो द्रष्टव्यः ॥ **निगद्यत इति** ॥ उत्तरं दक्षिणमिति पदाभ्यां त एव रश्मय एव निगद्यते निगद्यन्त इत्यर्थः । यद्वा उत्तरं दक्षिणमिति त एवोच्यन्त इति प्रमेयं स्मृतौ निगद्यते इत्यर्थः ॥ **भवतीति** ॥ प्रतिपाद्य इति शेषः ॥

## वाक्यार्थमञ्जरी

दक्षिणायनेऽपि ज्ञानिनः उत्क्रान्तिर्युक्ता कुतः अत्रायनपदस्य रश्मिपरत्वेन तत्सम्बन्धस्य नाडीषु सर्वदा सत्वादित्यर्थः ॥ **साक्षान्मोक्षशरीरस्येति** ॥ लिङ्गशरीरभङ्गस्येत्यर्थः ॥ आजनान्नजनिर्भुवीत्यादिना जनलोकादेरेवापुनरावृत्तिस्थानत्वेनोक्तत्वात्कथं महर्लोकस्याप्यपुनरावृत्तिस्थानत्वेन कथनमित्यत आह ॥ **महर्लोकादीत्यतद्गुणसंविज्ञान इति** ॥ तस्य गुणस्यान्यपदार्थस्य परपदार्थे प्रत्युपसर्जनीभूतस्यान्यपदार्थे संविज्ञानं विशेषत्वेनोपादानं यस्मिन्बहुव्रीहौ नास्ति स अतद्गुणसंविज्ञानः । यथा च चित्रगुमानयेत्यादौ तथा च महर्लोक एव आदिर्येषां जनो लोकादीनां तद्गन्तार इत्यर्थः ॥ कालविशेषस्य वस्तुतः सत्वात्तन्निषेधायोगादित्यत आह ॥ **भवतीति** ॥ स्मृत्युक्तदक्षिणायनोत्तरायणपदप्रतिपाद्य इति शेषः ॥ **अन्यथेति** ॥

(वाक्यार्थमञ्जरी)

सहकार्यभावादिति भावः । पूर्वोक्तिः गत्यनुस्मृतियोगादित्युक्तिः । स्मृतिविरोध इति यं यं वापीति स्मृतिविरोध इत्यर्थः ॥ **लिङ्गस्यापीति** ॥ आचार्यस्तु ते गतिं वक्तेति यदाचार्योपदेशरूपलिङ्गमुक्तं तस्यापीत्यर्थः ॥ **गतेःकालकृतत्वादिति** ॥ गत्यनुस्मरणस्य ज्ञानशेषत्व इव कालज्ञानशेषत्वे मानाभावादिति भावः ॥ **संपूर्णेति** ॥ चतुर्विध इत्यर्थः । गत्यतिरिक्तहेतुत्वादित्यर्थः ॥

॥ इति हृदयाग्रज्वलना(तदोकोऽ)धिकरणम् ॥ ९ ॥

## १०. प्रतिस्मरणाधिकरणम्

**ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ ॥ २२ ॥**

न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ज्ञानयोगिनः कर्मयोगिनश्च ।

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तत'

इत्यत्र योगीति विशेषणात्स्मरणनिमित्ते चैते गती ।

'गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरतः काले स्मरणं प्राप्य वै गतिः' इत्यध्यात्मे ॥ २२ ॥

॥ इति प्रतिस्मरणाधिकरणम् ॥ १० ॥

॥ इति श्री आनन्दतीर्थभगवत्पादाचार्य विरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥

### तत्त्वप्रदीपिका

'कालेऽनुगणे फलं किञ्चिद्विशिष्यत' इत्यत्राह । पूर्वपक्षादि च विवक्षितम् । 'अग्निर्ज्योतिरहः शुक्ल' इत्यादौ कालादिकृते ब्रह्मचन्द्रगती प्रतीयेते । 'यत्र काले त्वनावृत्तिम्' इत्यादिनोपक्रमादित्यत आह– योगिनः प्रतिस्मर्येते स्मार्ते चैते ॥ न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । अयमर्थः न केवलं ज्ञानं कर्म च विना तत्तत्कालमृतिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ज्ञानयोगिनो ब्रह्मगतिः कर्मयोगिनश्चन्द्रगतिः । अतः ''गच्छन्ति ब्रह्म ब्रह्मविद'' इत्यत्र ब्रह्मगतिर्ब्रह्मविद एवेति सिद्धत्वात् । उत्तरत्र योगीति विशेषणात् । योग उपायः पूर्वत्र ज्ञानमेव योग उत्तरत्र कर्मेति ज्ञापयितुं ज्ञानयोगिनः कर्मयोगिनश्चेत्याह । न चायोगिनामपि तत्तत्कालमृतिकृते । न हि 'अग्निर्ज्योतिरहः शुक्ल' इत्यादिनोत्क्रान्तिकालो विवक्षित इति शोभते । किन्तूत्क्रान्तस्य गतिमार्गः । अग्न्यादि-देवप्राप्तिपूर्वकत्वाद्ब्रह्मगतेः । तं चोत्तरपादे प्रपञ्चयिष्यति । 'यत्र काले त्वनावृत्तिम्' इत्यादेरर्थस्तु गीतातात्पर्य एव दर्शितः– 'यत्र कालाभिमानिदेवतासु मृत्यनन्तरमेव प्रयाताः, अग्निर्ज्योतिर्धूमा-

(तत्त्वप्रदीपिका)

नामकालाभिमानित्वेऽपि कालप्राचुर्यात्काल इत्युच्यते । तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमा-नामयोग' इत्यादि । न च केवलं तत्तत्कालादिदेवताप्रयाणकृते एव स्मर्येते । ज्ञानकर्मभ्यां विना तत्प्रयाणस्यैवाभावोक्तेः । किमर्थं मार्गोक्तिरित्यत आह– **स्मरणनिमित्ते चैते गती इति ॥** तयोश्च ज्ञानकर्मयोगिनोर्यथोक्तमार्गविशेषस्मरणनिमित्ते चैते ब्रह्मचन्द्रगती । हन्तैवं ज्ञानिनोऽपि गतिप्रकार-मभावयतो गत्यभावात्समप्रयोजकत्वं ज्ञानगतिस्मृत्योरित्यत आह– 'अननुस्मरतः काले स्मरणं प्राप्य वै गतिः' इति । ब्रह्मविदः पूर्वं गतिप्रकारमभावयतोऽपि ज्ञातब्रह्मप्रसादादुत्क्रान्तिकाले स्मरणं प्राप्य गतिर्भवत्येव । अतो ज्ञानस्य प्राधान्यम् । एतदेव ह्याह– विद्याशेषगत्यनुस्मरणयोगाच्चेति । अतो न तयोः समत्वमाशङ्कनीयम् । विद्यासामर्थ्यादिति विद्याया एव प्राधान्योक्तेर्गत्यनुस्मरणस्य शेषत्वोक्तेश्च । अतश्च न ब्रह्मविदामुत्क्रान्तिकाले बुद्धिमोहो भ्रंशो वाऽऽशङ्कनीयः । प्रारब्धकर्मणा प्राप्तक्लेशस्यापि तावत्तत्काले स्मरणं प्राप्य गतिरिति वचनादेव ।

॥ इति श्री त्रिविक्रमपण्डिताचार्य विरचित तत्वप्रदीपिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तौ गत्यनुस्मरणादेरावश्यकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ज्ञानस्य मोक्षहेतुत्वाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृता गतिरेव विषयः । किं विद्यागतिस्मृतिसापेक्षा न वेति सन्देहः । पूर्वोक्तिः स्फुटप्रमाणादर्शनं च सन्देहबीजम् । न गत्यर्थं विद्यानुस्मृती अपेक्षिते इति पूर्वः पक्षः । 'अग्निर्ज्योतिः' इत्यादौ केवलकालाद्यधीनत्वस्मरणात् । न ह्यनयोः श्लोकयोर्ब्रह्म-चन्द्रगत्योः प्राप्तौ तत्तत्कालादिमरणं विनाऽन्यत्कारणमुच्यते । लोके फलानुस्मृतिमन्तरेणैव फलप्राप्तिदर्शनाच्च । न हि लोकाननुसार्यङ्गीकर्तुं शक्यते । न च स्मृतिविरोधः । तस्या लोकाननु-सारित्वेनार्थान्तरे योज्यत्वात् । लिङ्गस्यापि ज्ञानमात्राद्यर्थत्वोपपत्तेः । अतो गतेः कालादिकृतत्वान्न ज्ञानस्य सम्पूर्णमोक्षार्थतेति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **योगिन इति** ॥ यदुक्तमग्निर्ज्योति-रित्यादिना ब्रह्मचन्द्रगती केवलकालादिकृते स्मर्येते अतो न गत्यर्थं विद्यानुस्मृती अपेक्षिते इति तन्न युक्तम् । यतोऽत्र विद्यादिकृते एव स्मर्येते न तु कालादिकृते इति भावः । कुत एतदित्यत आह ॥ **अग्निरिति** ॥ उपलक्षणमेतत् । ब्रह्मविद इति च ज्ञातव्यम् । कालमरणमत्र न विवक्षित-मिति सविस्तरमन्यत्रोक्तत्वादत्र नोक्तम् । अस्तु विद्यापेक्षा गतौ तदनुस्मृतिर्मास्त्वित्यत आह ॥ **स्मरणेति** ॥ कुत इत्यत आह ॥ **गतीति** ॥ न च लोकाननुसारिता । यथा खलु छेदनादौ न

(तत्त्वप्रकाशिका)

**कर्षणाद्यावृत्तिरपि तु परशोरुद्यम्योद्यम्य दारुणि निपातावृत्तिः । कृष्यादौ तु नासौ किं तु कर्षणाद्यावृत्तिरेव । न तावता लोकाननुसारिता । अवान्तरविशेषाणां वैलक्षण्येऽप्यनुवृत्तिमात्रस्योभयत्र साम्यात् । तथा प्रकृतेऽप्यवधारितक्रियामनोवृत्तित्वविशेषस्यानुवृत्तिमात्रस्य लौकिकवैदिकसाधनयोः साम्यात् । अतो विशिष्टोत्क्रमणस्य विद्यादिसापेक्षत्वाद्युक्तं ज्ञानस्य सम्पूर्णमोक्षसाधनत्वमिति सिद्धम् ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां चतुर्थाध्यायस्य द्वितीयः पादः ॥**

## गुर्वर्थदीपिका

प्रकृतेऽप्यवधारितेत्यत्रावधीरणं नाम निराकरणमित्यर्थः साधनपदेन मुक्तेर्ग्रामस्य च प्राप्तिसाधनभूतौ लौकिकालौकिकमार्गौ गृह्येते । तत्र वारं वारं गमनेन क्रियानुवृत्तिर्लौकिके मार्गे । वारं वारं स्मरणेन मनोनुवृत्तिरलौकिके मार्गे । एवं च क्रियानुवृत्तिमनोनुवृत्तित्वरूपविशेषमादाय साम्याभावेऽप्यनुवृत्तित्वमात्रेण साम्यम् । कृषिकुठारयोरिवोक्तयोर्लौकिकालौकिकसाधनमार्गयोरप्यस्ति । अतो न लौकिकाननुसारित्वम् । फलानुस्मृतिस्तु कृष्यादौ नास्ति । मध्ये वृष्ट्याद्यभावशङ्कया फलसन्देहात् । ज्ञानाख्यालौकिकसाधने तु फलस्य निश्चितत्वात् मार्गानुस्मृतिवत्फलं भवत्येवेत्यनुस्मृतिरपेक्षिता । इदमपि प्रागेव निर्णीतफलस्य नापितादेः शिरोमुण्डनाख्यकृषौ लावनादिकृषौ दृष्टत्वान्न लोकाननुसारीति भावः ।

**॥ श्री वादिराजतीर्थविरचितायां गुर्वर्थदीपिकायां द्वितीयः पादः ॥**

## भावबोधः

**गत्यनुस्मरणादेरिति ।** पूर्वाधिकरणे विद्यासामर्थ्याद्गत्यनुस्मरणयोगादिति पञ्चम्या गत्यनुस्मरणादेर्ब्रह्मनाड्योत्क्रमणेनार्चिरादिगतौ हेतुत्वमित्युक्तम् । तस्यात्र समर्थनादनन्तरसङ्गतिरिति भावः ॥ **किमिति ॥** अत्र गतिः किं विद्यागतिः स्मृतिसापेक्षा न भवत्युत भवतीति चिन्ता । तदर्थं सा किं केवलकालकृता भवत्युत न भवतीति । तदर्थं 'अग्निर्ज्योतिः' इति, गीतावाक्यं किं केवलकालपरं उत देवतापरमिति । तदर्थं तत्र देवतापरत्वज्ञापकं नास्त्युतास्तीति । न केवलं

(भावबोधः)

कालादिकृते ब्रह्मचन्द्रगती स्मर्येते इति भाष्योक्तयुक्तिमाह– **अग्निर्ज्योतिरित्यादावित्यादिना ॥** कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात्, स्वर्गमोक्षयोरपि तथात्वमिति न्यायविवरणं मनसि निधायाह– **लोके फलानुस्मृतिमन्तरेणैवेति ॥ न च स्मृतिविरोध इति ॥** 'यं यं वापि' इति स्मृतिविरोध इत्यर्थः ॥ **लिङ्गस्यापीति ॥** 'आचार्यस्तु ते गतिं वक्ता' इति यदाचार्योपदेशरूपं लिङ्गमुक्तं तस्यापीत्यर्थः । गतेः कालादिकृतत्वात्तत्र ज्ञानस्येति गत्यनुस्मरणस्य ज्ञानशेषत्व इव कालस्य ज्ञानशेषत्वे मानाभावादिति भावः । ननु 'अग्निर्ज्योतिः' इत्यत्र योगिपदाभावाद्योगीति विशेषणादिति कथमुक्तमित्यत आह– **उपलक्षणमेतदिति । अन्यत्रेति ।** गीताभाष्यतत्तात्पर्ययो-रेतच्छ्लोकव्याख्यानावसर एवोक्तत्वादित्यर्थः ।

'क्रियानुवृत्तिर्लौकिके साधने तु मनोनुवृत्तिर्वैदिके साधने स्यात् ।
फलं भवेत्सर्वथेत्येव तस्मात् स्मरेत्सदा निश्चितत्वेन विद्वान्'

इति श्रुतेस्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोः साम्यादतोऽत्र फलानुस्मरणं लवनादिकृष्याद्यनु-वृत्तिवत् द्रष्टव्यम् । वचनप्रामाण्यादिति न्यायविवरणं हृदि निधायाह– **यथा खल्वित्यादिना ॥** अत्राद्यमधिकरणपञ्चकं देवानां देहलयप्रतिपादकत्वेनैका पेटिका । तत्र 'वाङ्मनसि' इत्याद्येक-वाक्यगतलयप्रतिपादकतया आद्यमधिकरणत्रिकमेका पेटिका । तत्राद्ये वाचो मनसि लयसमर्थनम् । द्वितीये मनसः प्राणे लयसमर्थनम् । तृतीये तस्य प्राणस्य परमात्मनि लयसमर्थनमिति । देवानां भूतेषु लयप्रतिपादकत्वेन तदुत्तरमधिकरणद्वयमेका पेटिका । तत्राद्ये देवानां सामान्यतो भूतेषु लयप्रतिपादनम् । द्वितीये सर्वेषु विशेषतो लयसमर्थनमिति । षष्ठे प्रकृतेर्देहलयाभावप्रतिपादनम् । सप्तमे सर्वेषां देवानां परमात्मनि लयसमर्थनमिति । अष्टमे मुक्तानां भगवदधीनत्वसमर्थनम् । नवमदशमयोः उत्क्रमणतदुपयुक्तप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका । तत्राद्ये मनुष्याणां मोक्षार्थं देहोत्क्रान्तिसमर्थनम् । द्वितीये तदुपयुक्तगत्यनुस्मरणस्यावश्यकत्वसमर्थनमिति ॥

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचिततत्वप्रकाशिकाभावबोधे चतुर्थाध्यायस्य द्वितीयः पादः ॥**

## भावदीपः

**गत्यनुस्मरणादेरिति ॥** विद्यासामर्थ्यमादिपदार्थः । एतेन पूर्वोक्तार्थसाधकतयाऽस्य तदानन्तर्यं सूचितम् ॥ **प्रकृता गतिरिति ॥** स्वहृदयमारभ्य ब्रह्मपर्यन्ता या गतिः सेत्यर्थः । कृष्यादि-लौकिकसाधनस्य फलस्मरणानपेक्षत्वात्स्वर्गमोक्षयोरपि तथात्वमित्यन्यत्रोक्तप्रतिज्ञार्थं तावदाह ॥ **न गत्यर्थमिति ॥** न केवलमित्यादिभाष्यसूचितहेतुमाह ॥ **अग्निरिति ॥** कालादीत्यादिपदे-नाग्न्यादिप्रयाणग्रहः । कालमृत्यग्न्यादिप्रयाणाधीनत्वेत्यर्थः । अन्यत्रोक्तहेतुं चाह ॥ **लोक इति ॥ न च स्मृतीति ॥** यं यं वापीति स्मृतीत्यर्थः ॥ **लिङ्गस्यापीति ॥** आचार्यस्तु ते गतिं वक्तेत्युक्त-लिङ्गस्यापीत्यर्थः ॥ **अत इति ॥** अग्निर्ज्योतिरित्यादिस्मृतिबलाल्लोकानुसारात् यं यमित्यादि-स्मृतिलिङ्गयोः सावकाशत्वाच्चेत्यर्थः । न केवलमित्यादिभाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना ॥** किं त्वित्यादि योजयति ॥ **यत इति ॥ विद्यादीति ॥** कर्म आदिपदार्थः । न्यूनतामाशङ्क्याह ॥ **उपलक्षणमिति ॥** एतत् योगीति विशेषणादिति भाषणम् । ब्रह्मविद इति विशेषणादित्यपि ज्ञेयमित्यर्थः । ननु गीतायामष्टमे

> यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
> प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥

इति पूर्वभाष्ये प्रतिज्ञायाग्निर्ज्योतिरित्यादेरुक्तत्वात्कालमृतिमात्रपरमेवैतत्कुतो नेत्यत आह ॥ **कालमरणमिति ॥** अत्र स्मृतौ । अन्यत्र गीतातात्पर्ये । अष्टमेऽध्याये यत्र कालाभिमानिदेवतासु मृत्यनन्तरं प्रयाता इत्यादिनोक्तत्वादित्यर्थः । तत्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोः साम्यादित्य-न्यत्रोक्तं प्रागुक्तशङ्कानिवर्तकतया विवृणोति ॥ **न च लोकेत्यादिना ॥ अवधारितेति ॥** तिरस्कृतक्रियात्वमनोवृत्तित्वविशेषस्येत्यर्थः ॥ **साम्यादिति ॥** तथा च न गतिर्ज्ञानमात्रं किं तु तदनुस्मृतिरप्यपेक्षितैवेति भावः ॥ **अत इति ॥** विद्यागतिस्मरणवत एव गतेः स्मृत्युक्तत्वा-दित्यर्थः ॥

**॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते चतुर्थाध्यायस्य द्वितीयः पादः ॥**

## अभिनवचन्द्रिका

**आवश्यकत्वसमर्थनादिति ॥** साधनत्वसमर्थनादित्यर्थः ॥ **अन्यथेति ॥** कारणत्वसमर्थनाऽभावे अप्रामाणिकत्वात् ज्ञानस्य गतिरूपमोक्षकारणत्वाप्रसङ्गादित्यर्थः । उपलक्षणमेतत् । 'गत्यनुस्मृतेरपि गतिकारणत्वाभावप्रसङ्गात्' इत्यपि ग्रह्यम् ! 'गत्यनुस्मरणं नापेक्षितम्' इति साध्यांशे, हेत्वन्तरमाह– **लोक इति ॥ न च स्मृतिविरोध इति ॥** 'यं यं वापि स्मरन्भावम्' इति स्मृतिविरोध इत्यर्थः ॥ **तस्यालोकाननुसारित्वेनेति ॥** यं यमन्नाद्यं कामयमानः प्राणी प्राणं त्यजति । तच्छ्राद्धादौ तत्तदन्नाद्यं ब्राह्मणेभ्यो देयं, तेन च संतुष्टो भवतीत्येवमर्थान्तरे योज्यं, सति चैवं लोकानुगुण्यं लभ्यते । लोके हि श्राद्धदिने भार्यां प्रति वक्तारो भवन्ति, इदमन्नाद्यं पितुः प्रियतरं, त्वं साधु कुर्विति, सा च तथैव करोतीति भावः ॥ **लिङ्गस्यापीति ॥** 'आचार्यस्तु ते गतिं वक्त' इति लिङ्गस्येत्यर्थः । 'न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते किं तु ज्ञानयोगिनः कर्मयोगिनश्च' इति भाष्यं, गत्यर्थं विद्यानुस्मृती इव कालमरणमपि अपेक्षितमित्यन्यथाप्रतीतिनिरासाय, अपेक्षिताऽध्याहारेण व्याचष्टे – **यदुक्तमित्यादिना ॥** 'अनेन 'स्मर्येते' इत्यतः परम्, 'अतो न गत्यर्थं विद्यानुस्मृती अपोक्षिते इति यदुक्तं तदिति शेषः । तस्य च नञा सम्बन्धः । किंत्वितिशब्दो यत इत्यर्थे, 'न कर्मयोगिनश्च' इति चशब्द एवार्थ इत्युक्तं भवति । एतेन भाष्ये न केवलं कालादिकृते किंतु कालकृते इति निषेधात्, भाष्यटीकयोर्विरोध इति परास्तम् । ननु 'धूमो रात्रिः' इति श्लोके योगीतिपदवत् 'अग्निर्ज्योतिः' इति पूर्वश्लोके योगीतिपदाभावात् योगीति विशेषणादिति भाष्यमयुक्तमित्यत आह – **उपलक्षणमेतदिति ॥** योगीति विशेषणादित्युपलक्षणं, ब्रह्मविद इति विशेषणादित्यपि ग्राह्यमित्यर्थः ॥ **अन्यत्रोक्तत्वादिति ॥** गीताभाष्यतात्पर्ययोः एतच्छ्लोकव्याख्यानावसर इत्यर्थः ।

**पूर्वपक्षस्तु** न गत्यर्थं विद्यागत्यनुस्मृती अपेक्षिते । 'अग्निर्ज्योतिः' इति स्मृतौ केवलकालमरणभावेऽपि फलदर्शनेन तथैव इहापि कल्प्यत्वाच्च । ततश्च न ज्ञानं सम्पूर्णमोक्षसाधनमिति ।

**सिद्धान्तस्तु** स्मृत्युक्ते एते गती । ज्ञानकर्मयोगाभ्यामेव स्मर्येते । न कालमरणात् । 'अग्निर्ज्योतिः' इति श्लोके ब्रह्मविद इति विशेषणात् 'धूमो रात्रिः' इति श्लोके योगीतिविशेषणात् ।

(अभिनवचन्द्रिका)

न च लोकाननुसारिता । सर्वथा लोकानुसारित्वस्य छिदादावप्यभावेनाऽदोषत्वात् कथञ्चित्साम्यस्येहापि भावात् । अतो विशिष्टोत्क्रमणस्य विद्यादिसापेक्षत्वात् युक्तं ज्ञानस्य संपूर्णमोक्षसाधनत्वमिति सिद्धम् ॥

॥ इति श्रीमत्सत्यनिधितीर्थ श्रीचरण चरणाराधक श्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्वप्राकाशिकाव्याख्याऽभिनवचन्द्रिकायां चतुर्थाऽध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमुक्तावली

**गत्यनुस्मरणादेरिति** ॥ पूर्वाधिकरणे विद्यासामर्थ्याद्गत्यनुस्मृतियोगाच्चेति पञ्चम्या यद्गत्यनुस्मरणादेर्ब्रह्मनाड्योत्क्रमणेनार्चिरादिगतिहेतुत्वमुक्तं तस्यात्र समर्थनादनन्तरसङ्गतिरिति भावः ॥ **अन्यथाज्ञानस्येति** ॥ विद्याशब्दोक्तापरोक्षस्य गत्यनुस्मरणस्य चेत्यर्थः ॥ **किमिति** ॥ अत्र गतिः किं विद्यागतिः स्मृतिनिरपेक्षोत सापेक्षेति चिन्ता । तदर्थं सा किं केवलकालकृता भवत्युत न भवतीति । तदर्थमग्निर्ज्योतिरिति गीतावाक्यं केवलकालपरमुत देवतापरमिति । न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते इति भाष्योक्तयुक्तिमाह ॥ **अग्निरिति** ॥ आदिपदेनाग्निज्योतिषोर्ग्रहणम् । स्मरणनिमित्ते चैते गतीति भाष्ये अननुस्मरतः काल इति स्मृतौ च स्मरणलक्षणमनोवृत्तेः साधनत्वोक्त्या व्यवच्छेद्यं लोकोपमेत्युक्तपूर्वपक्षन्यायं व्यनक्ति ॥ **लोकेति** ॥ **न च स्मृतीति** ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥

इति स्मृतिविरोध इत्यर्थः ॥ **अर्थान्तर इति** ॥ अज्ञमरणविषयतया योज्यत्वादित्यर्थः ॥ **लिङ्गस्यापीति** ॥ आचार्यस्तु ते गतिं वक्तेति यदाचार्योपदेशरूपं लिङ्गमुक्तं तस्यापीत्यर्थः ॥ **गतेः कालादिकृतत्वादिति** ॥ न च गत्यनुस्मरणस्य ज्ञानशेषत्वमिव कालादेस्तच्छेषत्वे ज्ञानस्य मोक्षहेतुत्वमुपपद्यत इति वाच्यम् । गत्यनुस्मरणस्य तच्छेषत्व इवात्र प्रमाणाभावादिति भावः । भाष्ये न केवलं कालादिकृत इति केवलशब्दात्कालविद्ययोरुभयोरपि हेतुत्वं प्रतीयते । तच्च सिद्धान्तविरुद्धमिति । मैवम् । केवलमित्यादेः पूर्वपक्षानुवादरूपत्वादित्यभिप्रायेण भाष्यं व्याचष्टे ॥

(वाक्यार्थमुक्तावली)

**यदुक्तमित्यादिना ॥** एते ब्रह्मचन्द्रगती योगिनः प्रति ब्रह्मस्वर्गप्राप्त्युपायज्ञानकर्मवतः प्रतिस्मर्येते । कुतः ब्रह्मविदो योगीति विशेषणात् इति सूत्रखण्डार्थं स्पष्टयति ॥ **यत इत्यादिना ॥** अग्निर्ज्योतिरित्यत्र योगिपदाभावादुक्तमुपलक्षणमिति । ननु योगीत्यस्य कालस्मरणलक्षणोपायवानित्यर्थः किं न स्यादित्यत उक्तम् ॥ **कालस्मरणमिति ॥** अन्यत्र गीतातात्पर्यनिर्णये ॥ **विद्यापेक्षेति ॥** कर्मापेक्षेत्यपि द्रष्टव्यम् ॥ **इत्यत इति ॥** इत्यतः शश्वदनुप्रवृत्तिरिति न्यायस्फोरकं स्मार्तेत्यंशं व्याचष्ट इत्यर्थः । स्मृतेरिमे स्मार्ते । मनोवृत्तिरूपस्मृतिनिमित्ते चेत्यर्थ इति भावः । कुत इत्यत आहेति । कुतः प्रमाणादित्याशङ्कायामेते गती स्मार्ते स्मरणनिमित्ते इत्यपि स्मर्येते स्मृत्योच्येत इत्येवंपरतया स्मर्येत इत्यंशं पुनर्व्याचष्ट इत्यर्थः । अननुस्मरत इत्यस्याज्ञानादिनाऽननुस्मरतः कर्मयोगिनः जन्मान्तरे काले स्मरणं प्राप्यैव गतिः । न च ब्रह्मविदामुत्क्रान्तिकाले बुद्धिमोहो भ्रंशो वा शङ्कनीयः । प्रारब्धकर्मणा प्राप्तक्लेशस्यापि तत्काले स्मरणं प्राप्यैव गतिरिति वचनादेवेति तत्वप्रदीपेऽर्थ उक्तो ज्ञेयः ॥ पूर्वपक्षन्यायं प्रतिक्षिपन् सिद्धान्तन्यायं विशदयति ॥ **न च लोकेति ॥ अवधारितक्रियेति ॥** तिरस्कृतक्रियानुवृत्तित्वादिविशेषवत इत्यर्थः ॥

**॥ इति श्रीमद्विट्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन विरचितायां श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥**

## तत्त्वसुबोधिनी

**गत्यनुस्मरणादेरिति ।** पूर्वाधिकरणे विद्यासामर्थ्यात् गत्यनुस्मरणयोगादितिपञ्चम्या यद्गत्यनुस्मरणादेः नाड्योत्क्रमणेनार्चिरादिगतौ हेतुत्वमित्युक्तम् । तस्यात्र समर्थनादनन्तरसङ्गतिरिति भावः । न केवलं कालादिकृते ब्रह्मचंद्रगती स्मर्येते इति भाष्योक्तां युक्तिमाह ॥ **अग्निर्जोतिरिति ॥ लोक इति ॥** कृष्यादिलौकिकसाधन इत्यर्थः । ननु लोके यथा तथाऽस्तु प्रकृते तु ब्रह्मादिप्राप्तेः अनुस्मृत्यधीनत्वमस्त्वित्यत आह ॥ **न हीति ॥ न च स्मृतिविरोध इति ॥** यं यं वापीति स्मृतिविरोध इत्यर्थः ॥ **लिङ्गस्यापीति ॥** आचार्यस्तु ते गतिं वक्तेति यदाचार्योपदेशरूपलिङ्गमुक्तं तस्यापीत्यर्थः । गतेः कालादिकृतत्वात्तत्र ज्ञानस्येति गत्यनुस्मरणस्य ज्ञानशेषत्वे कालस्य ज्ञानशेषत्वे मानाभावादिति भावः । ननु अग्निर्जोतिरित्यत्र योगिपदाभावात् योगीति विशेषणादिति कथमुक्तमित्यत आह ॥ **उपलक्षणमेतदिति ॥ अन्यत्रेति ॥** गीताभाष्यतात्पर्ययोः एतच्छ्लोक-

(तत्त्वसुबोधिनी)

व्याख्यानावसरे एव उक्तत्वादित्यर्थः ॥ तथा प्रकृतेऽपीति ॥ अवधारितः परितः परित्यक्तः क्रियावृत्तित्वमनोवृत्तित्वरूपविशेषो यस्येति विग्रहः ।

॥ इति श्रीतत्त्वप्रकाशिकाविवृतौ तत्त्वसुबोधिन्यां पाण्डुरङ्गि आनन्दाचार्यसूनु श्रीनिवासाचार्यकृतायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थविवरणम्

**मोक्षेति** ॥ पूर्वपक्षोपसंहारे स्पष्टम् ॥ **स्मृतिविरोध इति** ॥ 'यं यं वाऽपि' इति स्मृतिविरोध इत्यर्थः ॥ **लिङ्गस्यापीति** ॥ आचार्यस्तु ते गतिं वक्तेति आचार्यकर्तृकमार्गोपदेशरूपलिङ्गस्यापीत्यर्थः ॥ **ज्ञानमात्रार्थत्वेति** ॥ न तु मार्गस्मरणार्थत्वमित्यर्थः ॥ **सम्पूर्णेति** ॥ मार्गस्यापि मोक्षत्वादिति भावः ॥ **अनुस्मृतिः** ॥ मार्गानुस्मृतिः । सूत्रस्थं योगिन इति पदं ज्ञानयोगिनः कर्मयोगिनश्चेति व्याख्यातम् । द्वितीयाबहुवचनमेतत् । तथा च एते ब्रह्मचन्द्रगती योगिनः ज्ञानयोगिनः कर्मयोगिनश्च प्रति विद्यागत्यनुस्मरणकृते एव स्मर्येते स्मृत्युक्ते । न तु कालादिकृते इति सूत्रार्थः । 'धूम' इति श्लोके योगीति विशेषणसद्भावेऽपि 'अग्निः' इति श्लोके योगीति विशेषणाभावादाह ॥ **उपलक्षणमेतदिति** ॥ **तदनुस्मृतिः** गत्यनुस्मृतिः ॥ स्मार्ते इत्यस्य व्याख्यानं **स्मरणनिमित्ते इति** ॥ **लोकाननुसारितेति** ॥ लोके फलादिस्मृतिमन्तरेणैव प्राप्तिदर्शनादित्यर्थः । 'क्रियानुवृत्तिर्लौकिके साधने तु मनोऽनुवृत्तिर्वैदिके साधने स्यात्' इत्यादिन्यायविवरणं मनसि निधाय लोकाननुसारित्वमत्र गुण एवेत्याह ॥ **यथा खल्वित्यादिना** ॥ **नासाविति** ॥ निपातावृत्तिरित्यर्थः ॥ **तावतेति** ॥ निपातावृत्तिकर्षणावृत्त्योर्वैलक्षण्यमात्रेणेत्यर्थः ॥ **अवधीरितेति** ॥ धृञ् अनादर इति धातोः । अवधीरितौ अनादृतौ यौ क्रियावृत्तिमनोवृत्तित्वरूपौ विशेषौ तद्वतोऽनुवृत्तिमात्रस्येत्यर्थः । एताववान्तरविशेषौ विहायानुवृत्तिमात्रमेव ग्राह्यम् । तदस्ति प्रकृते । वारं वारं मनोवृत्तेरेव स्मरणत्वादिति ज्ञेयम् । विद्यादीत्यादिपदेन गत्यनुस्मरणं ग्राह्यम् ॥ **सम्पूर्णमोक्षेति** ॥ कर्मक्षयोत्क्रान्तिमार्गभोगरूपचतुर्विधमोक्षेत्यर्थः ।

॥ इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासतीर्थकृते चतुर्थाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमञ्जरी

एते ब्रह्मचन्द्रगती योगिनः प्रति स्मर्येते अग्निर्ज्योतिरिति धूमो रात्रिरिति च स्मृतावुच्येते ज्ञानादिसाध्यतया स्मर्येते इति यावत् । न केवलं ज्ञानसाध्ये किं तु स्मार्ते च स्मृतेरिमे स्मार्ते गत्यनुस्मृतिसाध्ये स्मर्येते इत्यर्थः । योगिन इति द्वितीया । नन्वग्निर्ज्योतिरित्यत्र योगिपदाभावात्कथं योगीति विशेषणादित्युक्तमित्यत आह ॥ **उपलक्षणमिति** ॥ अत्र स्मृतौ अत्रेति गीतातात्पर्य-श्लोकव्याख्यानावसरे एवोक्तत्वादित्यर्थः । लौकिकसाधने क्रियानुवृत्तिः अलौकिकसाधने मनोवृत्तिरिति विवेकः ॥

**॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करा श्रीनिवासविरचितायां चतुर्थाध्यायस्य द्वितीयपादः समाप्तः ॥**

**॥ इति प्रतिस्मरणाधिकरणम् ॥ १० ॥**

# अथ चतुर्थाध्यायस्य तृतीयः पादः

## १. अर्चिराद्याधिकरणम्

मार्गो गम्यं चास्मिन्पाद उच्यते–

**॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ १ ॥**

'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्' इत्यर्चिषः प्राथम्यं श्रूयते। 'यदा ह वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' इति वायोः। तत्रार्चिषः प्राप्तिरेव प्रथमा।

'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम्।
धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात्॥
अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन्॥ इति॥
एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्' इति ब्रह्मतर्के॥ १॥

॥ इति अर्चिराद्याधिकरणम्॥ १॥

### तत्त्वप्रदीपिका

अथ यथोक्तमार्गेण शरीरादुत्क्रान्तस्य ब्रह्म जिगमिषोर्गतिर्मार्ग उच्यते। स्मरणनिमित्तत्वं हि गतेरुक्तम्। अतश्च गतिप्रकारो विचारणीय इति तद्गम्यविशेषश्च निरूप्यतेऽस्मिन्पादे। कार्यं बादरिरित्यादिना गम्यविचारः, तत्पर्यन्तं मार्गविचारः। अर्चिरादिना तत्प्रथितेः॥ 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्' इत्यादिश्रुतौ ब्रह्म यास्यतां मार्गस्थानां सम्भावकानां देवानामर्चिर्देवस्य प्राथम्यं श्रूयते। श्रद्धया ज्ञानादिरूपं ब्रह्मोपासत इत्यर्थः। 'यदा ह वै पुरुषोऽस्मांल्लोकात्प्रैति स वायुमागच्छति' इत्यत्र वायोः। तत्र संशयः। किं वायोः प्रथमप्राप्यत्वमुतार्चिर्देवस्येति। वायोरिति प्राप्तम्। यदाऽस्मांल्लोकात्प्रैति तदा वायुमागच्छतीति स्पष्टं श्रूयमाणस्यान्यथाकर्तुमशक्यत्वात्। न चार्चिःप्राप्तिरुत्क्रान्त्यनन्तरमेवेति श्रूयते। न चाभिसम्भवः प्राप्तिरिति निश्चेतुं शक्यते। न च तत्रोत्क्रान्तिः श्रूयते। 'उपासते तेऽर्चिषमभि-

(तत्त्वप्रदीपिका)

सम्भवन्ति' इति हि श्रुतिः । अत्रोच्यते । अर्चिष एव प्रथमप्राप्यत्वम् । 'सर्वे वा एत उत्क्रामन्ति तेऽर्चिषमेवाभियन्ति' इति श्रुत्यन्तरात् । अतोऽभिसम्भवन्तीति श्रुतेश्चायमर्थो गम्यते । अहरादीनां सहपठितानां श्रुत्यन्तरे प्राप्यत्वसिद्धेश्च । 'अर्चिषमेवाभिसंविशन्तीति' इति चास्यामेव स्थानान्तरे श्रूयमाणत्वात् । अतोऽर्चिरादिना मार्गेणैवोत्क्रान्ता यान्ति । तदेव स्पष्टयति– 'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम्' इति । न चाग्निर्ज्योतिरित्यादिवाक्यविरोध इत्याह– 'अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः' इत्यादिना ।

## तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति ॥ **मार्ग इति** ॥ ब्रह्मनाड्योत्क्रान्तानां यो मार्गो ब्रह्मप्राप्तौ यच्च तेन पथा गतानां गम्यं तदुभयमस्मिन्पादे कथ्यत इत्यर्थः । तत्रादौ सूत्रमेव पठति ॥ **अर्चिरादिनेति** ॥ अत्र ब्रह्मप्राप्तिमार्गस्यार्चिरादित्वप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । मार्गानिर्णये तदनुस्मृत्यसम्भवात्समर्थनीयमेतत् । गत्यनुस्मरणं तत्प्राप्त्यर्थं कार्यमित्युक्तम् । स ब्रह्मप्राप्तिमार्ग एव विषयः । किमर्चिरादिरुत वाय्वादिरिति सन्देहः । सन्देहबीजं श्रुतिविरोधं दर्शयति ॥ **तेऽर्चिषमिति** ॥ उभयोरपि प्राथम्यमिति पूर्वः पक्षः । श्रुतिद्वयस्यापि निरवकाशत्वात् । न चोभयोरपि प्राथम्यं विरुद्धम् । मार्गभेदेन द्वयोरपि प्राथम्योपपत्तेः । न चैकस्याधिकारिणो मार्गद्वयं विरुद्धम् । अधिकारिभेदेनोपपत्तेः । अतो मार्गनियमाभावादनुस्मृत्ययोग इति । सिद्धान्तयत्सूत्रं व्याचष्टे ॥ **तत्रेति** ॥ न मार्गभेदेनोभयोः प्राथम्यं कल्प्यं किं त्वेक एव मार्गः । स चार्चिरादिस्तेनार्चिरादिना मार्गेण ज्ञानी गच्छतीति भावः । नन्वेक एव मार्गः स चार्चिरादिरेवेत्येतत्कुतः । स्मृतौ प्रसिद्धत्वादेवेति भावेन तामुदाहरति ॥ **द्वाविति** ॥ नन्वग्निर्ज्योतिरिति स्मृतावग्नेः प्राथम्यं श्रूयते तत्कथमर्चिषो ज्योतिःशब्दाभिहितस्य द्वितीयप्राप्तस्य प्राथम्यमुच्यत इत्यत आह ॥ **अग्निरिति** ॥ तथापि पृथक्किं नोच्यते 'तेऽर्चिषम्' इत्यादिश्रुतावित्यत आह ॥ **एकस्मिन्निति** ॥ नन्वग्नेः सोमादनन्तरं प्राप्तिरतः कथमेतदित्यत आह ॥ **अग्नेरिति** ॥ न च वायुप्राथम्यश्रुतेरप्रामाण्यम् । प्रबलश्रुत्यनुसारेणार्चिरनन्तरार्थत्वोपपत्तेः । अतो मार्गनिर्णयादनुस्मृतिसम्भव इति सिद्धम् ॥

## गुर्वर्थदीपिका

नन्वग्नेः सोमादनन्तरं प्राप्तिरित्यत्र 'सोमं वैश्वानरम्' इति वक्ष्यमाणस्मृतौ सोमोपर्यग्नेर्वक्ष्यमाणत्वादित्यर्थः ॥

## भावबोधः

**ब्रह्मनाड्योत्क्रान्तानामिति ।** अनेन पूर्वपादेनास्य पादस्य सङ्गतिरुक्ता भवति । तेन पथा गतानामिति । उपलक्षणं चैतत् । देहलयवतामित्यपि ग्राह्यम् । अत एव सुधायां गम्य-प्रतिपादकाधिकरणपर्यालोचनया 'विमुक्तगम्यम्' इत्यनुव्याख्यानस्थ 'विमुक्त'पदस्योत्क्रान्तलीन-देहोभयपरत्वेन व्याख्यानं कृतम् । अनन्तरसङ्गतिं दर्शयन्विषयं दर्शयति– **गत्यनुस्मरणमिति ॥** **किमिति ॥** अत्र ब्रह्मप्राप्तिमार्गः किमर्चिर्वायूभयप्राथमिक उतार्चिर्मात्रप्राथमिक इति चिन्ता । तदर्थं ब्रह्मप्राप्तिमार्गेऽधिकारिभेदेनोभयोरपि प्राथम्यमुपपद्यत उत नोपपद्यत इति । तदर्थं ते 'अर्चिषमभि-सम्भवन्ति' इति । 'स वायुमागच्छति' इति श्रुतिद्वयस्यापि निरवकाशत्वं उत 'स वायुमागच्छति' इति श्रुतेः सावकाशत्वमिति । तदर्थमर्चिर्मात्रप्राथमिकत्वे मार्गस्य प्रमाणं नास्त्युतास्तीति । तत्र तत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथङ्मार्गक्रमोपपत्तिरिति न्यायविवरणोक्तप्रकारेण भाष्यसूचित-पूर्वपक्षयुक्तिमुपपादयति । श्रुतिद्वयस्यापि निरवकाशत्वादित्यादिना । किं त्वेक एव मार्ग इति । अनेन ज्ञानिनामेकमार्गस्यैव प्राप्तिरिति न्यायविवरणमुक्ततात्पर्यं भवति । उपलक्षणं चैतत् । 'एष एव ब्रह्मपथः । द्वे सृती पुनरावर्तिनः' इति न्यायविवरणोदाहृतश्रुतिस्मृतिष्वित्यपि द्रष्टव्यम् । अनेन सूत्रे 'प्रथितेः' इत्यस्य श्रुतौ स्मृतौ च प्रसिद्धेरित्यर्थ उक्तो भवति ॥ **सोमादनन्तरमिति ॥** 'सोमं वैश्वानरम्' इति प्रमाणबलादिति भावः । (अन्यथा न्यायविवरणे 'एष एव ब्रह्मपथः' इत्यव-धारणविरोधात् 'अन्यथा' इत्याद्ययुक्तं स्यात्)। **प्रबलश्रुत्यनुसारेणेति ॥** उदाहृतश्रुतिस्मृति-साहित्येन 'तेऽर्चिषमभिसम्भवन्ति' इति प्रबलश्रुत्यनुसारेणेत्यर्थः । अथ वा, 'सर्वे वा एते उत्क्रामन्ति' 'तेऽर्चिषमेवाभियन्ति । ततो वायुं ततोऽहः पूर्वपक्षः इत्येष एव ब्रह्मपथः' इति न्यायविवरणोदाहृत 'अर्चिषमेव' इत्यवधारणयुक्तत्वेन 'ततो वायुम्' इति वायोर्द्वितीयगम्यत्व-प्रतिपादकत्वेन 'एष एव' इति ज्ञानिमार्गैक्यप्रतिपादकत्वेन च प्रबला या श्रुतिस्तदनुसारेणेत्यर्थः ॥

## भावदीपः

पूर्ववत्पादार्थत्वाप्रतीतेराह ॥ **एतदिति ॥** प्रतिपाद्योक्तिः वृत्तवर्तिष्यमाणसङ्गतिसूचनायेति भावेन व्याचष्टे ॥ **ब्रह्मेति ॥** एतेनोत्क्रान्तानामेव मार्गो न तु देहलयवतामिति दर्शितम् ॥ **तदुभयमिति ॥** कार्यं बादरिरित्यादौ गम्योक्तिः ततः प्राङ्मार्गोक्तिरिति विवेकः । न चैवं पादभेदप्रसङ्ग इति शङ्क्यम् । चरमगम्येन सहितस्यैव मार्गत्वेन मार्गरूपैकार्थत्वेऽपि मार्गैकदेश-

(भावदीपः)

चरमगम्यस्य पृथग्विवक्षया तदुभयमित्युक्तेरिति भावः । एतेन यत्स्मृतिनिमित्तत्वमुत्क्रान्तेरुक्तं स मार्गोऽत्रोच्यते । अन्यथा तज्ज्ञानस्यैवायोगेनान्तकाले तत्स्मरणायोगादिति सूचितम् । सम्बन्धभाष्यत्वभ्रमनिरासायाह ॥ **तत्रादाविति** ॥ तत्र सङ्गत्यादौ निरूपणीये सतीत्यर्थः । सङ्गत्यादिजिज्ञासाजननायेति भावः । स्वयं तदाह ॥ **अत्रेति** ॥ अर्चिरादित्वमर्चिः प्रथमकत्वमित्यर्थः । अत्र ब्रह्मप्राप्तीति शास्त्रे मार्गस्येति पादे ब्रह्मप्राप्तिरूपमोक्षेत्यभिप्रेतत्वाद्वा प्राप्तीत्युक्त्यैव वा अध्याये च सङ्गतिरुपपादिता । पूर्वसङ्गतिफले आह ॥ **मार्गेति** ॥ एवमग्रेऽपि । विषयस्याप्रकृतत्वं निराह ॥ **गतीति** ॥ तच्छेषगत्यनुस्मृतीत्यत्रोत्क्रान्तिद्वारोक्तमित्यर्थः ॥ **किमिति** ॥ किमर्चिरादिरेव उत वाय्वादिरपीत्यर्थः । बहुव्रीहिः । सन्देहबीजोक्त्या पूर्वपक्षोऽपि सूचित इत्युपेत्याऽऽह ॥ **उभयोरिति** ॥

तत्र मार्गस्याऽन्यथोक्तेरित्यन्यत्रोक्तदिशा भाष्यसूचितहेतुमाह ॥ **श्रुतीति** ॥ अप्रामाण्येन हेतोरन्यथोपपत्तिमाशङ्क्य अधिकारिभेदेन पृथक् मार्गः सुक्रमोपपत्तिरित्यन्यत्रोक्तं श्रुतिद्वयाविरोधोपपादनं व्यनक्ति ॥ **न चेत्यादिना** ॥ एतेन श्रुतिविगानपरं द्वितीय एव निवेशोऽस्य स्यादिति प्रत्युक्तम् । श्रुत्यप्रामाण्येनेह पूर्वपक्षाप्रवृत्तेः । एवमग्रे ध्येयम् ॥ **अत इति** ॥ श्रुतिद्वयस्य निरवकाशत्वादुक्तन्यायेनाविरोधाच्चेत्यर्थः ॥ **मार्गनियमाभावादिति** ॥ अधिकारिभेदेन मार्गद्वयस्य व्यवस्थितत्वेऽप्यत्र मार्गेऽहमधिकारीत्यनिर्णये तदनुस्मृत्ययोग इति भावः । भाष्येऽर्चिषः प्राप्तिरेव प्रथमा वायोरपीत्यर्थमुपेत्य तात्पर्यतो भाष्यं पूर्वपक्षनिरासकतया व्याचष्टे ॥ **नेति** ॥ एकमार्गस्यैव प्राप्तत्वादित्यन्यत्रोक्त्यनुरोधेन फलितार्थमाह ॥ **किं त्वेक एवेति** ॥ सूत्रार्थमाह ॥ **तेनेत्यादिना** ॥ **सोमादनन्तरमिति** ॥ आतिवाहिकनये तथा प्रमाणस्य वक्ष्यमाणत्वादिति भावः ॥ **प्रबलश्रुतीति** ॥ तेऽर्चिषमिति श्रुतेः स्मार्तप्रसिद्धिसाहित्येन निरवकाशत्वात् स वायुमिति श्रुतेर्वक्ष्यमाणदिशा सावकाशत्वादिति भावः ॥ **अत इति** ॥ अर्चिराद्येकमार्गस्यैव श्रुत्यादिप्रसिद्धत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**एतत्पादार्थमिति** ॥ 'अध्यायस्य एकार्थत्वात् पादभेदः किं निबन्धन इत्यतः फलेऽप्यवान्तरभेदेन पादभेद उपपन्न इति भावेनेति वर्तते तस्याऽनेन सम्बन्धः ॥ **मार्गानिर्णय**

**इति** ॥ ननु 'आचार्यस्तु ते गतिं वक्ता' इति लिङ्गात् सर्वज्ञगुरूपदिष्टो मार्गमनुस्मरति न ग्रन्थपर्यालोचनया । एवं च ग्रन्थे तन्निर्णयकथनं व्यर्थमिति चेत् न । ग्रन्थोक्तमार्गेण मननं कुर्वत एव सर्वज्ञोपदेश इति नियमात् तत्सिध्यर्थमेवेह मार्गनिर्णयस्याऽऽवश्यकत्वात् । अतो **मार्गनियमेति** ॥ अयं मया स्मर्तव्यो मार्ग इति निश्चयाऽभावात् आचार्योपदेशात्प्राक् मार्गस्मरणानुपपत्तिरित्यर्थः । एतेनाऽऽचार्योपदेशेन मूर्तिविशेषस्य निर्णयेन ध्यानवत्, मार्गस्यापि मरणे स्मरणमनुपपन्नमिति परास्तम् ।

**पूर्वपक्षस्तु** द्वौ मार्गौ । तत्र एकस्मिन्मार्गेऽर्चिषो लोकः प्रथमः मार्गान्तरे तु वायुलोकः । 'तेऽर्चिषमभिसम्भवन्ति स वायुमागच्छति' इत्युभयविधश्रुतेः । ततश्च गुरूपदेशात्प्राक् मार्गनिर्णयाभावात् । स्मरणानुपपत्तिरिति ।

**सिद्धान्तस्तु** एक एव विपश्चितां मार्गः । 'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयादिति स्मृतेः । तत्र द्वावग्नेः सुतौ एकस्मिन्पुरे संस्थौ तत्र एकोऽग्निनामकः, अपरो ज्योतिर्नामकः । तदुभयाधिष्ठितस्य लोकस्य प्रथमप्राप्तिः । न च 'स वायुमागच्छति'ति श्रुतिविरोधः । प्रबलैतच्छुतिविरोधेन अर्चिरनन्तरार्थत्वोपपत्तेः । अतो मार्गनिर्णयादनुस्मृतिसम्भव इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

॥ **एतत्पादार्थमिति** ॥ अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यत इति पूरणीयम् ॥ **ब्रह्मनाड्योत्क्रान्तानामिति** ॥ अनेन पूर्वपादेनास्य पादस्य सङ्गतिरुक्ता भवति ॥ **तेन पथा गतानामिति** ॥ उपलक्षणं चैतत् । देहलयवतामित्यपि ग्राह्यम् । अत्र गम्यमुच्यते । तद्विविधम् । मार्गो, गम्यं परमगम्यं चेति । अतो मार्गो गम्यमित्यवान्तरभेदेऽपि पादैक्यमिति ज्ञेयम् । अत्रादावित्यतः परं शास्त्रादिसङ्गतिसूचनायेति पूरणीयम् । अत एव तत्सूचितां सङ्गतिमाह ॥ **अत्रेति** ॥

॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ अनन्तरसङ्गतिं सूचयति ॥ **मार्गानिर्णय इति** ॥ तथा च पूर्वाक्षेपेणास्य प्रवृत्तेरनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ किमर्चिरादिरेवोत वाय्वादि-

(वाक्यार्थमुक्तावली)

रपीत्यर्थः । तथा च किमर्चिरादिवाय्वादिश्रोतार्चिरादिरेवेति चिन्तेति योजना । तदर्थं ब्रह्मप्राप्तिमार्गेऽधिकारिभेदेनोभयोरपि प्राथम्यमुपपद्यत उत नोपपद्यत इति । तदर्थं तेऽर्चिषमभिसम्भवन्ति वायुमागच्छतीति श्रुतिद्वयस्यापि निरवकाशत्वमुत विशेषप्रमाणेन स वायुमागच्छतीति श्रुतेः **सावकाशत्वमिति** ॥ भाष्येऽर्चिषः प्राथम्यं श्रूयते वायोः प्राथम्यं श्रूयत इति तुल्यबलश्रुत्युदाहरणात्सूचितं सुक्रम इत्युक्तन्यायं व्यञ्जयन् पूर्वपक्षमाह ॥ **श्रुतिद्वयस्यापीत्यादिना** ॥ अधिकारिभेदेन मार्गद्वये सुष्ठु क्रमणस्य गमनस्योपपत्तेरित्यर्थः । उभयप्राथम्यं च इतोऽर्चिःप्राथम्यस्याविरुद्धत्वादर्चिरादिनेति सावधारणं विवक्षितमिति भावेन प्रवृत्तं तत्रार्चिर्वाय्वोर्मध्येऽर्चिषः प्राप्तिरेव प्रथमेति भाष्यं व्याचष्टे ॥ **न मार्गभेदेनेति** ॥ सूत्रे योगीत्यनुवर्तते । गच्छतीति लभ्यते । तथा च सर्वोऽपि ज्ञानी अर्चिरादिमार्गेणैव गच्छति । तत्प्रथितेस्तस्य मार्गस्यार्चिरादित्वस्य श्रुतिस्मृतिप्रसिद्धत्वादिति सूत्रार्थः । तत्प्रथितेरिति सूत्रखण्डं तस्यार्चिष एव द्विरूपत्वस्य प्रथितेः स्मृतिप्रसिद्धत्वादिति प्रकारान्तरेण व्याकुर्वद्भाष्यमवतार्य व्याचष्टे ॥ **नन्वित्यादिना** ॥ अग्निपुत्रोऽग्निरेकस्मिन्नग्निर्ज्योतिरिति रूपद्वयेन वर्तते । रूपद्वयं च ज्ञानिनां क्रमेण प्राप्यमतोऽर्चिषः प्राथम्योक्तिविरोधः । नापि पृथगुक्तिविरोधः लोकस्यैकत्वात् । नापि सोमं वैश्वानरमिति वक्ष्यमाणविरोधः । अस्य वैश्वानरपुत्रत्वादिति समुदायार्थः विशेषसम्प्राप्तिरित्युक्तन्यायं घटयितुमाशङ्क्य निषेधति ॥ **न चेति** ॥ स्मृतिसाहित्येन प्रबला या तेऽर्चिषमभिसम्भवन्तीति श्रुतिस्तदनुसारेणार्चिरनन्तरं प्राथम्याभिप्रायेण सावकाशत्वोक्तेरित्यर्थः । एतेन विशिष्यत इति विशेषश्रुतिः स्मृतिसहायेन प्रबला श्रुतिस्तदनुसारेणेत्यर्थः । यद्वा सर्वे वा एत उत्क्रमन्ति तेऽर्चिषमेवातियन्ति ततो वायुमिति स्पष्टनिरवकाशश्रुत्यनुसारेणेत्यर्थः ।

## तत्त्वसुबोधिनी

**ब्रह्मनाड्योत्क्रान्तानामिति** ॥ अनेन पूर्वपादेनास्य सङ्गतिरुक्ता भवति ॥ **तेन पथा गतानामिति** ॥ उपलक्षणं चैतत् । देहलयवतामित्यपि ग्राह्यम् ॥ अनन्तरसङ्गतिं दर्शयन् विषयं दर्शयति ॥ **गत्यनुस्मरणमिति** ॥ पूर्वपक्षमुपपादयति **श्रुतिद्वयस्यापीति** ॥ स्मृतौ प्रसिद्धत्वादेवेति । उपलक्षणं चैतत् । एष एव ब्रह्मपथः । द्वे सृती पुनरावृत्तिनः इति श्रुतिस्मृतिषु इत्यपि द्रष्टव्यम् । अनेन सूत्रे प्रथितेरित्यत्र श्रुतौ स्मृतौ च प्रसिद्धेरित्यर्थ इत्युक्तं भवति ॥ **अग्निरिति** ॥ तथा

(तत्त्वसुबोधिनी)

चार्चिषो लोकस्य द्वेधा प्रतिष्ठितेः उक्तत्वेन अर्चिषः प्राप्तिरित्युक्ते अग्निज्योतिषोः उभयोरपि प्राप्तिर्न भवतीति न तद्विरोध इति भावः । पृथक् किं नोच्यते इत्यर्थः ॥ **एकस्मिन्नितीति** ॥ तथा च एकस्मिन् पुरे द्विरूपस्य सत्वादेव लोकविवक्षया पृथग्वचनाभाव इति भावः ॥ **सोमादनन्तर-मिति** ॥ सोमं वैश्वानरमिति प्रमाणबलादिति भावः ॥ **अग्नेरितीति** ॥ तथा चाग्निसुतस्य रूपद्वयेनापि तस्यैवादौ प्राप्तिः न तु सोमादनन्तरं श्रुतस्य वैश्वानरस्येति भावः ॥ **प्रबलश्रुत्यनु-सारेणेति** ॥ उदाहृतश्रुतिस्मृतिसाहित्येन तेऽर्चिषं अभिसम्भवन्ति इति प्रबलश्रुत्यनुसारेणेत्यर्थः । अथवा सर्वे वा एते उत्क्रामन्ति ते अर्चिषमेवाभियान्ति ततो वायुं ततोऽहः पूर्वपक्षः इत्येष एव ब्रह्मपथ इति श्रुतेस्तेऽर्चिषमेवेत्यवधारणयुक्तत्वेन ततो वायुमिति वायोः द्वितीयगम्यत्वप्रतिपादकत्वेन एष एवेति ज्ञानिमार्गैक्यप्रतिपादकत्वे च प्राबल्यात्तदनुसारेणेत्यर्थः ।

## वाक्यार्थविवरणम्

**अर्चिरादित्वेति** ॥ तस्मिन् मार्गेऽर्चिषः प्रथमप्राप्यत्वेत्यर्थः ॥ **अग्निर्ज्योतिरिति** ॥ **स्मृताविति** । 'अग्निर्ज्योतिरहश्शुक्लम्' इति गीतायामित्यर्थः ॥ **पृथगिति** ॥ तेऽग्निमभिसम्भवन्ति । अग्नेर्ज्योतिरिति पृथगित्यर्थः ॥ **एकस्मिन्नितीति** ॥ तयोर्लोकभेदाभावादग्नेर्ज्योतिरिति नोक्तम् । एकस्मिन् पुरे लोके आदावग्निं गत्वा पश्चात्प्रदेशान्तरस्थं ज्योतिर्गच्छतीति भावः ॥ **सोमा-दनन्तरमिति** ॥ सोमं वैश्वानरमिति वक्ष्यमाणत्वादिति भावः । एतदिति प्रथमप्राप्यत्वमित्यर्थः ॥ **अग्नेः सुत इति** ॥ तथा च सोमादनन्तरं प्राप्यतयोक्तो वैश्वानरशब्दवाच्योऽग्निः प्रधानाग्निरेव । अत्र प्रथमप्राप्यतयोक्तो द्विरूपो अर्चिश्शब्दवाच्योऽग्निस्तु प्रधानाग्निपुत्र एवेति न दोष इति भावः ।

## वाक्यार्थमञ्जरी

अर्चिरेवादिर्यस्य तेन मार्गेण गच्छति कुतः, तत्प्रथितेः तस्योक्तमार्गस्य तेऽर्चिषमिति श्रुतौ प्रसिद्धेरित्यर्थः ॥ **अयोगेति** ॥ स्वगन्तव्यमार्गनिर्णयादिति भावः ॥ **सोमादनन्तरमिति** ॥ सोमं वैश्वानरं चेन्द्रमित्युक्तेरिति भावः ॥ **प्रबलश्रुत्यनुसारेणेति** ॥ उदाहृतश्रुतिस्मृतिसाहित्येन तेऽर्चिष-मभिसंविशन्तीति प्रबलश्रुत्यनुसारेणेत्यर्थः ।

॥ इति अर्चिराद्यधिकरणम् ॥ १ ॥

## २. वायुगत्यधिकरणम्

**ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ २ ॥**

अर्चिषो वायुं गच्छति । 'स वायुमागच्छति' इति सामान्यवचनात् । 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह्न आपूर्यमाणपक्षम्' इति विशेषवचनाच्च ॥

### तत्त्वप्रदीपिका

अर्चिर्देवं गत्वा ततो वायुं गच्छति । न प्रथमत एव । उक्तन्यायेन 'स वायुमागच्छति' इत्यस्य सामान्यवचनत्वात् । अर्चिषो वायुमेव गच्छति च वायोर्द्वितीयप्राप्यत्वे विशेषवचनात् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्ममार्गे वायोर्द्वितीयप्राप्यत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मार्गानिर्णयादनुस्मृत्यसिद्धेः समर्थनीयमेतत् । प्रकृतो मार्गो विषयः । किं तत्र वायुर्द्वितीयप्राप्य उताहरिति सन्देहः । 'वायुमागच्छति' 'अर्चिषोऽहः' इति श्रुतिविप्रतिपत्तिः सन्देहबीजम् । उभयोरपि पूर्ववदधिकारिभेदेन मार्गभेदाद् द्वितीयप्राप्यत्वमिति पूर्वः पक्षः । श्रुतिद्वयस्यापि प्रामाण्यात् । न च पूर्ववद्व्यवस्थाऽत्र काचित् सम्भवति । तादृशप्रमाणाभावात् । अतो मार्गनिर्णयाभावात्तदनुस्मृत्ययोग इति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **वायुशब्दादिति** ॥ न मार्गभेदेन द्वयोरपि द्वितीयप्राप्यत्वं मन्तव्यं किं त्वेक एव मार्गः । तत्रापि मार्गेऽर्चिपोऽनन्तरमेव वायुं गच्छति । न च श्रुत्यन्तरविरोधः । वायोरनन्तरमह्नः प्राप्तिसम्भवादिति भावः । कुत एतदित्यत आह ॥ **स इति** ॥ युक्तं वायोरेव द्वितीयत्वं सामान्यतः प्राथम्येन वायोः प्राप्यत्वे श्रुतिसद्भावात् । सामान्यश्रुतेश्च यावदर्थे विशेषश्रुतिविरोधस्तावन्मात्रस्यैव त्याज्यत्वेनात्र प्रसिद्धिविरोधेन प्राथम्यायोगेऽपि द्वितीयत्वस्याऽऽवश्यकत्वात् । न हि भवति यागीयपशुहिंसाविधिविरोधेन, 'न हिंस्यात्सर्वा भूतानि' इति वाक्यस्य तदन्यहिंसानिषेधकत्वाभाव इति भावः । न केवलमेतन्न्यायेन वायोर्द्वितीयप्राप्यत्वसिद्धिरपि तु विशेषश्रुतेश्चेति तामुदाहरति ॥ **स इति** ॥ अतो मार्गनिर्णयायुक्ता तदनुस्मृतिरिति सिद्धम् । वायुश्रुतेर्गतिप्रदर्शनार्थं चैतत्सूत्रम् । प्राथम्यश्रुतेः सामान्यत्वात्सामान्यस्य च विशेषश्रुत्या द्वितीयप्राप्यत्वं वदन्त्या बाधोपपत्तेर्द्वितीयप्राप्यत्वं वायोस्तदर्थ इति ।

## भावबोधः

**वायोर्द्वितीयप्राप्यत्वसमर्थनादिति** । 'तेऽर्चिषमेवाभियन्ति' 'ततो वायुम्' इति श्रुतौ क्रमानुसारेणार्चिषः प्रथमप्राप्यत्वं प्रथमाधिकरणे प्रतिपाद्यात्र वायोर्द्वितीयप्राप्यत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किं तत्रेति** ॥ अत्र ब्रह्मप्राप्तिमार्गः किं वायुरह उभयद्वितीयक उत वायुमात्रद्वितीयक इति चिन्ता । तदर्थं प्राप्तिमार्गेऽधिकारिभेदेनोभयोरपि द्वितीयत्वमुपपद्यत उत नोपपद्यत इति । तदर्थं 'अर्चिषोऽहः, स वायुमागच्छति,' इति श्रुतिद्वयस्यापि निरवकाशत्वं उत 'अर्चिषोऽहः' इति श्रुतेः सावकाशत्वमिति । तदर्थं वायुमात्रद्वितीयकत्वे विशेषप्रमाणं नास्त्युतास्तीति । स वायुमागच्छतीति । अस्याः श्रुतेः प्रागुक्तरीत्या वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वमिति भावः । अत्र भाष्ये एतच्छ्रुतिद्वयानुदाहरणं तु पूर्वमुदाहृतत्वात् । अत एव पूर्वं 'अर्चिषोऽहः' इत्यधिकांशोदाहरणमिति ज्ञातव्यम् । तत्र तत्रेत्यादिन्यायविवरणमेतदधिकरणपूर्वपक्षसम्बन्ध्यपि भवतीत्यभिप्रेत्याह– **उभयोरपि पूर्ववदिति** ॥

पूर्वन्यायेन दूषयितुं शक्यत्वात् कथमस्यायुक्तेरुपन्यास इत्यत आह– **न च पूर्ववद्व्यवस्थेति** । किं त्वेक एव मार्ग इति । अनेन ज्ञानिनामेकमार्गस्यैव प्राप्तेरिति न्यायविवरणमुक्ततात्पर्यं भवति । भाष्ये 'अविशेष' इति सूत्रांशव्याख्यानपरेण 'सामान्यवचनात्' इत्यनेन 'स वायुमागच्छति' इत्यस्य वायोर्द्वितीयत्वसाधकत्वं कथमुच्यते ? अनिर्णायकत्वादित्यतस्तदुपपादयति– **सामान्यश्रुतेश्चेत्यादिना** ॥ **प्रसिद्धिविरोधेनेति** ॥ 'तत्प्रथितेः' इत्युक्तप्रसिद्धिविरोधेनेत्यर्थः ॥ **तामुदाहरतीति** ॥ उपलक्षणं चैतत् । 'सर्वे वा एतदुत्क्रामन्ति' । 'तेऽर्चिषमेवाभियन्ति' 'ततो वायुं ततोऽहः' इति न्यायविवरणोदा हृतश्रुतिरपि वाय्वह्नोर्द्वितीयप्राप्यत्वप्रतिपादकत्वेनाप्यस्मिन्नर्थे विशेषश्रुतिरिति ज्ञातव्यम् । अनेन 'अविशेषविशेषाभ्याम्' सामान्यतो विशेषतश्च 'वायुशब्दात्' इति सूत्रार्थ उक्तो भवति । अविशेषविशेषाभ्यां वायुशब्दाद्वायुशब्दोपेतसामान्यश्रुतेः द्वितीयप्राप्यत्वप्रतिपादकतया वायुशब्दोपेतविशेषश्रुत्या बाधेन वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वं तदर्थ इति सूत्रस्यार्थान्तरप्रदर्शनपरतयापि भाष्यं व्याचष्टे– **वायुश्रुतेरिति** ॥ अनेन 'अर्चिषो वायुं गच्छति' इति भाष्ये इति श्रुत्यर्थ इति शेष इत्युक्तं भवति । सामान्यत्वादित्यनेन भाष्ये सामान्यवचनादिति भावप्रधान इत्युक्तं भवति ।

(भावबोधः)

ननु सामान्यवचनत्वादेव प्रथमप्राप्यत्वप्रतिपादकत्वं किं न स्यादित्यतः प्रवृत्तस्य 'स इतो गतो द्वितीयं गतिं वायुमागच्छति' इति विशेषवचनाच्चेति भाष्यस्याभिप्रायमाह– **सामान्यस्य चेति** ॥ अस्मिन् व्याख्याने 'वायोरहरह्न आपूर्यमाणपक्षः' इति श्रुत्युदाहरणस्य अनुपयोगात् तदनुरोधेन प्राचीनं व्याख्यानम् । अत एव तत्र वायोरनन्तरमह्नः प्राप्तिसम्भवादिति एतदुदाहरणस्योपयोग उक्तः ।

## भावदीपः

ब्रह्ममार्गे ब्रह्मप्राप्तिरूपमोक्षमार्ग इत्यर्थः ॥ **वायोरिति** ॥ वायोरेवेत्यर्थः । एतेन पूर्वत्र मोक्षमार्गे प्रथमप्राप्यदेवता निर्णीता । अत्र तु द्वितीयप्राप्या निर्णीयत इति पूर्वसङ्गतिरपि सूचिता ॥ **वायुरिति** ॥ वायुरेव ॥ **अहरिति** ॥ अहर्देवतापीत्यर्थः । एवं च सन्देहस्य न पूर्वपक्षानानुगुण्यमिति ध्येयम् । न्यायविवरणे चास्य पूर्वस्माच्छङ्कानिरासमात्रार्थतया पृथक्पूर्वोत्तरन्यायानुक्तेः पूर्वोक्तावेव पूर्वोत्तरन्यायावत्रापि योजयन् पूर्वत्रेवात्रापि पूर्वपक्षं व्यञ्जयति ॥ **उभयोरपीति** ॥ मार्गभेदप्रापकयोरप्रामाण्ये नोपपत्तिमाशङ्क्याह ॥ **श्रुतिद्वयस्येति** ॥ तत्रोपपत्तिरधिकारीत्यादिना प्रागेवोक्ता । एतेन द्वितीये निवेशः प्रत्युक्तः । तर्हि पूर्वेणैव गतार्थमेतदित्यत आह ॥ **न चेति** ॥ अर्चिषः प्राथम्यं तदानन्तर्यमितिवत् अह्नो द्वितीयत्वं वायोस्तदानन्तर्यमिति वायोरेव द्वितीयत्वमह्नस्तदानन्तर्यमिति वा काचिद् व्यवस्था न च सम्भवति । येन पूर्वेण गतार्थतेत्यर्थः ॥ **तादृशेति** ॥ द्वावेव मार्गावित्येवंरूपेत्यर्थः । एतेन पूर्ववैषम्येणाप्यत्र पूर्वपक्षप्रवृत्त्या प्रत्युदाहरणरूपा च पूर्वसङ्गतिः सूचिता ॥ **अत इति** ॥ द्वयोरपि द्वितीयप्राप्यत्वादित्यर्थः ॥ पूर्वत्रेव सिद्धान्तमाह ॥ **नेति** ॥ भाष्यं व्याचष्टे ॥ **अर्चिष इति** ॥ **श्रुत्यन्तरेति** ॥ अर्चिषोऽहरिति श्रुत्यन्तरेत्यर्थः ॥ **कुत इति** ॥ कुतो मानाद्वायोरानन्तर्यमह्न इत्यर्थः । कथं सामान्यवचनस्योक्तार्थसाधकतेत्यतो व्यनक्ति ॥ **युक्तमिति** ॥ **प्रसिद्धीति** ॥ प्रथितेरित्युक्तस्मृत्यादिप्रसिद्धीत्यर्थः ॥ **विधीति** ॥ पशुमालभेतेत्यादिविधीत्यर्थः ॥ **अत इति** ॥ वायोरेव द्वितीयप्राप्यत्वादित्यर्थः । एवं सूत्रस्य वायोरेव द्वितीयप्राप्यत्वनिर्णयार्थत्वमेकं फलमुक्त्वा वायुशाब्दादविशेषादित्येव पूर्तौ विशेषवचनोक्तिसार्थक्याय फलान्तरमाह ॥ **वायुश्रुतेरिति** ॥ यद्वा यावदर्थ इत्यादिपूर्वोक्तदिशा स वायुमिति सामान्यश्रुतेर्द्वितीयप्राप्यपरत्वसम्भवात्सूत्रं चेदमनर्थकमित्यत आह ॥ **वायुश्रुतेरिति** ॥ विशेषश्रुत्या द्वितीयप्राप्यपरत्वरूपगतीत्यर्थः । तदेव व्यनक्ति ॥ **प्राथम्येति** ॥

## अभिनवचन्द्रिका

सूत्रयोजना तु – 'सुपां सुपो भवन्ति' इति वचनात् पञ्चमीद्विवचनस्य पञ्चम्येकवचनादेशः । अविशेषविशेषाभ्यां सामान्यविशेषात्मकाभ्यां वायुशब्दोपेतश्रुतिभ्यां वायुरेव द्वितीयप्राप्य इति । इदं सूत्रं पृथगधिकरणतया योजयित्वा पूर्वाधिकरणशेषतयापि योजनां सूचयितुं प्रतिजानीते – **वायुश्रुतेरिति** ॥ अस्मिन्पक्षे वायुशब्दादिति पञ्चमी षष्ठ्यर्थे । वायुशब्दोपेतस्य 'स वायुमागच्छति' इति श्रुतिवाक्यस्य वायोर्द्वितीयप्राप्यत्वमेवार्थोऽवगन्तव्यः । सामान्यविशेषभावोपपन्नाभ्यां श्रुतिभ्यामेकस्यैवाऽर्थस्य प्रतिपत्तव्यत्वादिति सूत्रयोजना ।

**पूर्वपक्षस्तु** अधिकारिभेदेन मार्गभेदाद्वायुलोकस्येवाऽहर्लोकस्यापि द्वितीयप्राप्यत्वं 'स वायुमागच्छति अर्चिषोऽह'रित्युभयत्रापि श्रुतिसद्भावात् । न च एकस्य पूर्वत्वम्, अपरस्याऽऽनन्तर्यमिति व्यवस्था । विशेषप्रमाणाभावात् । अतो मार्गनिर्णयाभावादनुस्मृत्ययोग इति ।

**सिद्धान्तस्तु** नात्र मार्गभेदः किं तु एक एव मार्गः । तत्रापि अर्चिषो वायुं गच्छति तदनन्तरमहः 'स वायुमागच्छति' इति वायोः प्रथमप्राप्यत्वश्रुतेः, सामान्यश्रुतेश्च मुख्यप्राथम्यबाधेऽमुख्यप्राथम्यपरत्वात् । तद्यथा 'न हिंस्यात्' इति निषेधस्य यागीयपशुहिंसानिषेधपरत्वासम्भवेन बाह्यहिंसानिषेधपरत्वम् । 'स इतो गतो द्वितीयां गतिं वायुयागच्छती'ति विशेषश्रुतेश्च । अतो मार्गनिर्णयात् युक्ता तदनुस्मृतिरिरिति सिद्धम् । अथवा पुनरस्तु 'वायुशब्दादविशेषविशेषाभ्याम्' इति सूत्रं 'स वायुमागच्छति' इति श्रुतेरप्रामाण्यप्रसङ्गपरिहाराय गतिप्रदर्शनार्थं सत् पूर्वाधिकरणशेषः ॥

## वाक्यार्थमुक्तावली

**द्वितीयप्राप्यत्वेति** ॥ यदा पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छतीति श्रुतेरर्चिरनन्तरं वायोः प्राप्यत्वार्थकत्वेन यत्सावकाशत्वमुक्तं तन्निर्वाहाय द्वितीयप्राप्यत्वसमर्थनादनन्तरसङ्गतिः ॥ **किमिति** ॥ किं तत्र वायुरेव द्वितीयप्राप्य उताहरपीति सन्देह इत्यर्थः । ततश्च ब्रह्मप्राप्तिमार्गेऽधिकारिभेदेन वायुरहश्च द्वितीयः उत सर्वेषां वायुरेवेति चिन्ता । तदर्थं वायोरेव द्वितीयत्वे व्यवस्थापकं प्रमाणं नास्त्युतास्तीति । अस्याः श्रुतेः पूर्वोक्तरीत्या वायोर्द्वितीय प्राप्यत्वपर्यव-

(वाक्यार्थमुक्तावली)

सन्नत्वाद्द्वितीयप्राप्यत्वप्रतिपादकत्वमिति भावः । अत्र भाष्ये संशयबीजतया पूर्वपक्षसूचकतया चैतच्छ्रुतिद्वयानुदाहरणं तु पूर्वमुदाहृतत्वात् । अत एव पूर्वमर्चिषोऽहरित्यधिकांशोदाहरणं ज्ञेयम् । अत्रापि सुक्रम इत्युक्तन्यायेनैव पूर्वपक्षमाह ॥ **उभयोरपीति** ॥ पूर्वसिद्धान्तन्यायेन गतार्थत्वमाशङ्क्य तन्न्यायविषयत्वमाह ॥ **न चेति** ॥ सूत्रे अध्याहारपरमर्चिषो वायुं गच्छतीति भाष्यं व्याचष्टे ॥ **न मार्गभेदेनेत्यादिना** ॥ ननु सामान्यश्रुतिः कथमर्चिरनन्तरं प्राप्यत्वे प्रमाणमित्यत आह ॥ **सामान्यतः प्राथम्येनेति** ॥ यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छतीति प्रमाणान्तरे प्राप्त्युक्त्या प्राथम्येन वायोः प्राप्यत्वे श्रुतिसद्भावादित्यर्थः । ततश्च किमित्यत आह ॥ **सामान्यश्रुतेश्चेति** ॥ **प्राथम्यायोग इति** ॥ मुख्यप्राथम्यायोगेऽपि युवराजवत्तदनन्तरप्राथम्यस्यावश्यकत्वादित्यर्थः । सामान्यश्रुतेर्यावदर्थे विशेषश्रुतिविरोधस्तावन्मात्रस्यैव त्याज्यत्वं नातोऽधिकस्येत्येतद्दृष्टान्तेनाह ॥ **न हीति** ॥ अर्चिषोऽहरित्यत्राहर्द्वितीयमित्युक्त्यभावेन सावकाशत्वात्सामान्यश्रुतिरेव बलवतीति भावः ॥ **न्यायेनेति** ॥ न्यायानुगृहीतया सामान्यश्रुत्येत्यर्थः ॥ **विशेषश्रुतेश्चेति** ॥ एतेन सम्प्राप्तिरिति न्यायः सूत्रारूढो भवतीत्युक्तं भवति । ततश्चायं सूत्रार्थः । सामान्यविशेषाभ्यां श्रुतिभ्यां द्वितीयप्राप्ये वायुशब्दप्रयोगादर्चिषोऽनन्तरं वायुरेव द्वितीयप्राप्य इति । यद्वाऽविशेषविशेषाभ्यां सामान्याकारेण विशेषाकारेण च वायुशब्दाद्वायोर्द्वितीयप्राप्यत्वश्रुतेरर्चिषोऽनन्तरं वायुर्द्वितीयप्राप्य इत्यर्थः । केचित्तु वायुशब्दादिति विभक्तिव्यत्ययः । सामान्यविशेषात्मकाभ्यां वायुशब्दघटितश्रुतिभ्यामित्यर्थमाहुः । एवमिदं सूत्रं पृथगधिकरणतया योजयित्वा पूर्वगुणसूत्रतयापि योजयितुं प्रतिजानीते ॥ **वायुश्रुतेरिति** ॥ यदुक्तमर्चिष एव प्रथमप्राप्यत्वं प्रसिद्धेरिति तदयुक्तम् । वायुप्राथम्यश्रुतेरपि निरवकाशत्वादित्यतो वायुश्रुतेर्गतिप्रदर्शनार्थमिदं सूत्रमित्यर्थः । तत्कथमित्यतो भाष्यं सूत्रारूढतया करोति ॥ **प्राथम्येति** ॥ द्वितीयप्राप्यत्वं वायोस्तदर्थ इत्यनेनार्चिषो वायुं गच्छतीति साध्याध्याहारभाष्ये इति श्रुत्यर्थ इति शेष इत्युक्तं भवति । तत्र हेत्वाकाङ्क्षायां सूत्रम् । तत्र सामान्यविशेषाभ्यामित्यस्य सामान्याद्विशेषाच्चेति विवक्षितम् । वायुशब्दादित्यस्य षष्ठ्यन्ततया विपरिणामो यथाश्रुतं च विवक्षितम् । तत्र षष्ठ्यन्तत्वे वायुशब्दस्य स वायुमागच्छतीति वायुप्राथम्यश्रुतेः सामान्यात् । भावप्रधानो निर्देशः । सामान्यत्वादित्यर्थः । भाष्येऽपि स वायुमागच्छतीत्यस्य सामान्यवचनत्वादित्यर्थ इत्यभिप्रेत्य व्याचष्टे ॥ **प्राथम्यश्रुतेः सामान्यत्वादिति** ॥ ननु सामान्यवचनत्वेऽपि प्रथमप्राप्यत्वं किं न

(वाक्यार्थमुक्तावली)

स्यादित्यतो विशेषाद्वायुशब्दादिति सूत्रांशस्य विवरणपरं स इतो गच्छतीत्यादिभाष्यं तात्पर्यतो व्याचष्टे ॥ **सामान्यस्य चेति** ॥

## तत्त्वसुबोधिनी

**वायोर्द्वितीयप्राप्यत्वेति** ॥ तेऽर्चिषमेवाभियन्ति ततो वायुमिति श्रौतक्रमानुसारेणाहर्विदः प्रथमप्राप्यत्वं प्रथमाधिकरणे प्रतिपाद्यात्र वायोः द्वितीयप्राप्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः । **स वायुमागच्छतीति** ॥ अस्याः श्रुतेः प्राक् कूटाद्यावायोर्द्वितीयप्राप्यत्वं अह्नः तृतीयप्राप्यत्वमिति पूर्वन्यायेन दूषयितुं शक्यत्वात् कथमस्याः युक्तेः उपन्यास इत्यत आह ॥ **न च पूर्वव्यवस्थेति** ॥ **न च श्रुत्यन्तरविरोध इति** ॥ अर्चिषोऽहरिति श्रुत्यन्तरविरोधो नेत्यर्थः । भाष्ये अविशेष इति सूत्रांशव्याख्यानपरेण सामान्यवचनादित्यनेन स वायुमागच्छतीत्यस्य वायोः द्वितीयत्वसाधकत्वं कथमुच्यतेऽनिर्णायकत्वादित्यतः तदुपपादयति ॥ **सामान्यश्रुतेश्चेति** ॥ **प्रसिद्धिविरोधेनेति** ॥ तत्प्रथितेरिति उक्तप्रसिद्धिविरोधेनेत्यर्थः । ननु प्राथम्ये बाधश्चेत् द्वितीयत्वेऽपि बाधः स्यादेवेत्यत आह ॥ **न हीति** ॥ अन्यथा न हिंस्यादित्यस्य याज्ञीयहिंसान्यहिंसानिषेधकत्वमपि न स्यादिति भावः ॥ **तामुदाहरतीति** ॥ अनेन अविशेषविशेषाभ्यां सामान्यतो विशेषतः प्राप्यश्च वायुशब्दादिति सूत्रार्थ इत्युक्तं भवति । अविशेषविशेषाभ्यां सामान्यविशेषाभ्यां वायुशब्दात् वायुशब्दोपेतसामान्यश्रुतेः द्वितीयप्राप्यत्वप्रतिपादिकया वायुशब्दोपेतविशेषश्रुत्या बाधेन वायोः द्वितीयप्राप्यत्वप्रतिपादकत्वं तदर्थ इति सूत्रस्य अर्थान्तरप्रदर्शनपरतयापि भाष्यं व्याचष्टे ॥ **वायुश्रुतेरिति** ॥ **तदर्थ इति** ॥ अनेन अर्चिषो वायुं गच्छतीति भाष्ये इति श्रुत्यर्थ इति शेष इत्युक्तं भवति । सामान्यत्वादित्यनेन भाष्ये सामान्यवचनादिति भावप्रधानमित्युक्तं भवति । ननु सामान्यवचनत्वादेव प्रथमप्राप्यत्वप्रतिपादकत्वं किं न स्यादित्यतः प्रवृत्तस्याग्निं गतो द्वितीयां गतिं वायुमागच्छतीति विशेषवचनाच्चेति भाष्यस्य अभिप्रायमाह ॥ **सामान्यस्य चेति** ॥ अस्मिन् व्याख्याने वायोः अहरह्न आपूर्यमाणपक्षमिति श्रुत्युदाहरणस्यानुपयोगात् तदनुरोधेन प्राचीनो व्याख्यातः । अत एव तत्र वायोरनन्तरमह्नः प्राप्तिसम्भवादित्येतदुदाहरणस्यानुपयोग उक्तः ॥

## वाक्यार्थविवरणम्

**तादृशेति** ॥ व्यवस्थाकल्पकेत्यर्थः ॥ **श्रुत्यन्तरेति** ॥ अर्चिषोऽहरिति श्रुत्यन्तरेत्यर्थः । सामान्यश्रुतेर्विशेषश्रुतिविरोधे तन्मात्रपरित्यागेन तदन्यविषयत्वम् इत्येतत् दृष्टान्तेनोपपादयति ॥ **न हीति** ॥ तदन्यहिंसानिषेधकत्वाभावो न हि भवति । किन्तु 'न हिंस्यात्' इति श्रुतेरग्निषोमीयं पशुमालभेतेति श्रुतिविरोधेनाग्निषोमीयपशुहिंसामात्रपरित्यागेन तदन्यहिंसानिषेधकत्वमेव भवति तद्वदिति भावः ॥ **न्यायेनेति** ॥ सामान्यविशेषरूपोत्सर्गापवादन्यायेनेत्यर्थः ॥ **वायुश्रुतेरिति** ॥ स वायुमागच्छतीति वायुश्रुतेरित्यर्थः ॥ **गतिप्रदर्शनार्थं चेति** ॥ न केवलं मार्गनिर्णयार्थमिदं सूत्रं, किन्तु वायोर्द्वितीयप्राप्यत्वे स वायुमागच्छतीति प्रथमप्राप्यत्वश्रुतेर्निर्विषयत्वेनाप्रामाण्यं स्यादित्याशङ्कायां तस्याः गतिं दर्शयितुं चेदं सूत्रमित्यर्थः । तत्प्रकारं दर्शयति ॥ **प्राथम्यश्रुतेरिति** ॥ तदर्थः । स वायुमागच्छतीति श्रुत्यर्थः ।

## वाक्यार्थमञ्जरी

स वायुमागच्छतीत्यस्याः श्रुतेः प्रागुक्तरीत्या वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वमिति भावः ॥ व्यवस्था वायोरन्तरमह्नःप्राप्यत्वरूपा ॥ ॐ वायुशब्दादविशेषविशेषाभ्यां ॐ ॥ वायुर्द्वितीयप्राप्यः कुतः अविशेषविशेषाभ्यां सामान्यतो विशेषतश्च वायुशब्दाद्वायोर्द्वितीय प्राप्यत्वप्रतिपादकश्रुतेरित्यर्थः ॥ अथाविशेषविशेषाभ्यां सामान्यविशेषाभ्यां वायुशब्दाद्वायुशब्दोपेतसामान्यश्रुतेः द्वितीयप्राप्यत्वप्रतिपादकतया वायुशब्दोपेतविशेषश्रुत्या बाधेन वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वं तदर्थ इति सूत्रस्यार्थान्तरप्रदर्शनपरतया भाष्यं व्याचष्टे ॥ **वायुश्रुतेरिति** ॥

॥ इति वायुगत्यधिकरणम् ॥ २ ॥

## ३. तटिदधिकरणम्

**ॐ तटितोऽधि वरुणस्सम्बन्धात् ॐ ॥ ३ ॥**

'मासेभ्यस्संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकम्' इति कौण्डिन्यश्रुतिः । 'संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकम्' इति च गौपवनश्रुतिः । 'तत्र तटितो वरुणं गच्छति । तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते विविश्चति' इत्युपरिसम्बद्धत्वश्रुतेः ॥

### तत्त्वप्रदीपिका

'अह्न आपूर्यमाणपक्षं आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तन्मासेभ्यः संवत्सरं संवत्सरादादित्यम्' इति छन्दोगश्रुतौ । 'संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकम्' इति कौण्डिन्यश्रुतौ । संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकमिति गौपवनश्रुतौ । तत्रानुक्तित उक्तेर्बलवत्त्वादुभयश्रुत्यनुग्रहयोगाच्च संवत्सरादित्ययोरन्तराले प्रजापतेर्गम्यत्वमविचारेणैव सिद्धम् । तयोश्च श्रुत्योरेकैकस्यामेकैकस्य गम्यत्वोक्तेः कतरस्य प्राथम्यमिति विचार्यते । वरुणस्येति प्राप्तम् । 'विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति' इति श्रुतेः । वृष्टेश्च जलात्मकत्वेन वरुणसम्बन्धित्वात् तटितस्तल्लोकस्थत्वोपपत्तेः पृथग्गम्यत्वाभावादित्यत आह– तत्र तटितो वरुणं गच्छतीत्यादि । अयमर्थः । संवत्सरलोकात्तटिल्लोकं गच्छति तस्माद्वरुणलोकं, तटिल्लोकेन वरुणलोकस्य तदुपरिस्थत्वेन सम्बद्धत्वश्रुतेः ।

### तत्त्वप्रकाशिका

अत्र सूत्रमेवादौ पठति ॥ **तटित इति** ॥ अत्र ब्रह्मप्राप्तिमार्गे तटितः संवत्सरानन्तर्यसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथानुस्मरणायोगस्यैव प्राप्तेः समर्थनीयमेतत् । प्रकृतो मार्ग एवात्र विषयः । स चार्चिरादिः संवत्सरपर्यन्तं निर्णीतः । तत्र किं संवत्सरलोकानन्तरं वरुणलोकस्य प्राप्यत्वमुत तटित इति सन्देहः । सन्देहबीजं श्रुतिविगानं दर्शयति ॥ **मासेभ्य इति** ॥ वरुणतटितोरुभयोरपि संवत्सरानन्तर्यमिति पूर्वः पक्षः । श्रुतिद्वयस्यापि प्रामाण्यात् । न च विरोधः । संवत्सरलोकात् प्रजापतिलोकं गन्तुमधिकारिभेदेन मार्गभेदोपपत्तेः । न चात्र पूर्ववत्किंचिदन्यथयितुं प्रमाणमस्ति । अतो मार्गानिर्णयात्तदनुस्मरणानुपपत्तिरिति । सिद्धान्तयत्सूत्रं व्याचष्टे ॥ **तत्रेति** ॥

(तत्त्वप्रकाशिका)

**न प्रजापतिं गन्तुं मार्गभेदेन वरुणतटितोरुभयोरपि संवत्सरानन्तरत्वं ग्राह्यं किं त्वेक एव मार्गः । तत्र संवत्सरानन्तरं तटितमेव गच्छति । न च श्रुत्यन्तरविरोधः । तटितोऽनन्तरं वरुणस्य प्राप्यत्वेन तदर्थत्वोपपत्तेरिति भावः । कुत एतदित्यत आह ।। तटितेति ।। मुक्तामयो वीतरोगः । विविश्चति विवेचयति । अतो मार्गैक्येनानुस्मरणमुपपद्यत इति सिद्धम् ।।**

## गुर्वर्थदीपिका

वीतरोग इत्यस्य वीता रोगा यस्मिन्निति समासः । मुक्तामयो मौक्तिकमय इति वा ।

## भावबोधः

नन्वत्र 'अर्चिषो वायुं वायोरहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षट् उदङेति मासान् मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकम्' इति श्रौतक्रमानुसारेण एतदधिकरणत्रयस्य क्रमेणानन्तर्यं वाच्यम् । तत्र शुक्लपक्षोत्तरायणसंवत्सरपरित्यागेन तदुपरितनतटिद्वरुणविचारपरस्यास्य कथं तदानन्तर्यमित्यत आह– **स चेति** ।। विपरीतश्रुत्यभावेन तत्र विवादाभावादस्यैव विरुद्ध-श्रुतिविवादविषयत्वेन तदनन्तरं विचार्यत्वमिति तद्विचारपरस्यास्य अनन्तरसङ्गतिरिति भावः ।। **तत्र किमिति** ।। अर्चिरादिमार्गः किं साक्षात्तटिद्वरुणोभयानन्तर्योपेतसंवत्सरप्राप्यक उत क्रमिकतटि-द्वरुणानन्तर्योपेतसंवत्सरप्राप्यक इति चिन्ता । तदर्थमर्चिरादिमार्गेऽधिकारिभेदेन तटिद्वरुणयोरुभयो-रपि संवत्सरानन्तर्यमुपपद्यत उत नोपपद्यत इति । तदर्थं 'संवत्सराद्वरुणलोकम्' 'संवत्सरात्तटितम्' इति श्रुतिद्वयस्यापि निरवकाशत्वमुत 'संवत्सराद्वरुणलोकम्' इति श्रुतेः सावकाशत्वमिति । तदर्थं क्रमिकतटिद्वरुणानन्तर्योपेतसंवत्सरप्राप्यमार्गैक्ये विशेषप्रमाणं नास्त्युतास्तीति । 'तेऽर्चिषमभि-सम्भवन्ति' 'अर्चिषोऽहरिति' 'स वायुमागच्छति' इति श्रुतिद्वयविवक्षयैव 'संवत्सराद्वरुणलोकम्' 'संवत्सरात्तटितम्' इति श्रुतिद्वयविवक्षयापि तत्र तत्रेत्यादिन्यायविवरणं प्रवृत्तमित्याशयेन पूर्वपक्षमाह– **उभयोरपीति** ।। 'वरुणलोकात् प्रजापतिलोकम्' 'तटितः प्रजापतिलोकम्' इति श्रुतिशेषद्वयोदाहरणस्य तन्निवर्तनीयाशङ्कानिरासपूर्वकं प्रयोजनमाह– **न च विरोध इत्यादिना ।** अभ्यधिकाशङ्कामाह– **न चात्रेति ।। किं त्वेक एवेति** ।। अनेन ज्ञानिनामेकमार्गस्यैव प्राप्तेरिति न्यायविवरणांशस्य तात्पर्यमुक्तं भवति । न्यायविवरणे विशेषश्रुतित इत्युक्ता विशेषश्रुतिः तटिता

(भावबोधः)

ह्यूह्यत इति भाष्योदाहृतैव । अत एवोपरि सम्बन्धादित्यनुक्त्वा उपरि सम्बन्धत्वश्रुतेरिति भाष्यऽभिहितमिति ज्ञेयम् ॥ **वीतराग इति** ॥ अन्यथा सत्यानृतविवेचकत्वं न स्यादिति भावः ॥

## भावदीपः

पूर्ववत् भ्रान्तिनिरासायाह ॥ **अत्रेति** ॥ अधिकरण इत्यर्थः । एतदर्थस्यैतदध्यायादितो वाच्यत्वेऽपि सर्वत्रापि संयोजनाय क्वचिद्वक्तव्यत्वादत्र पूर्वत्र चोक्तमित्याहुः ॥ **आदाविति** ॥ सङ्गत्यादिजिज्ञासाजननायेति भावः । एतेनास्य गुणरूपत्वं प्रत्युक्तम् ॥ **तटित इति** ॥ तटित एवेत्यर्थः । तृतीयाद्दिप्राप्यमविचार्यैतद्विचारे को हेतुरित्यत आह ॥ **स चेति** ॥ **निर्णीत इति** ॥ अर्चिषोऽहः अह्नः आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान् मासेभ्यः संवत्सरमिति छन्दोगश्रुतावुक्तक्रमेऽपवादाभावात् निर्णीत इत्यर्थः । वरुणलोकस्य वरुणलोकस्यापि । तटितः तटित एवेत्यर्थः । यद्यपि छान्दोग्ये संवत्सरादादित्यमिति संवत्सरानन्तर्यमादित्यस्य श्रुतम् । भाष्योक्तश्रुत्योश्च वरुणतटितोरित्यस्यादित्यस्यापि संवत्सरानन्तर्यावकाशः । तथाप्यनुक्तिवदुक्तेर्बलवत्त्वाद्भाष्योक्तोभयश्रुत्यनुग्रहाच्च संवत्सरादित्ययोरन्तराले प्रजापतेः प्राप्यत्वमविचारेण सिद्धमिति प्रजापतेः पूर्वं संवत्सरात्पश्चात्तट्द्विरुणयोः समकक्ष्यत्वमुत पौर्वापर्यमित्येवमेव सन्देहः प्रदर्शितः । अत एव भाष्ये श्रुतिद्वयेऽपि प्रजापतिलोकमित्यंशस्याप्युक्तिः । अत एव चाग्रे टीकायां संवत्सरात्प्रजापतिलोकं गन्तुमिति वक्ष्यति । अन्यथा अधिकारिभेदेनेत्याद्ये वावेक्ष्यदत्रेति । पृथक्न्यायविवरणाभावात्पूर्वत्रेवात्रापि पूर्वोत्तरपक्षौ विवृण्वन् पूर्वपक्षं तावदाह ॥ **वरुणेति** ॥ गतार्थतामाशङ्क्याह ॥ **न चात्रेति** ॥ अन्यथयितुं तट्द्विरुणयोः पौर्वापर्यमिति वक्तुम् ॥ **अत इति** ॥ द्वयोरपि संवत्सरानन्तरत्वादित्यर्थः ॥ पूर्वत्रेव सिद्धान्तमाह ॥ **नेत्यादिना** ॥ तटितोऽधीत्यादिविन्यासलब्धमाह ॥ **तत्र संवत्सरेति** ॥ एकमार्गत्वे सतीत्यर्थः । मासेभ्य इति श्रुतिविरोधनिरासकतया सूत्रभाष्ये व्याचष्टे ॥ **न चेत्यादिना** ॥ आमयपदस्य रोगार्थत्वादाह ॥ **वीतरोग इति** ॥ तट्द्विरुणयोः पौर्वापर्येणैकमार्गत्वादित्यर्थः ॥

## अभिनवचन्द्रिका

**पूर्वपक्षस्तु** वरुणतटितोरुभयोरपि संवत्सरानन्तर्यम् । 'मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकम् ।

(अभिनवचन्द्रिका)

तथा 'संवत्सरात्तटितमागच्छति' इत्युभयथाश्रुतेः । मार्गभेदेन उभयोरपि संवत्सरानंतर्योपपत्तौ अन्यतरस्वीकारे कारणाभावात् । अतो मार्गनिर्णयाभावात् तदनुस्मरणानुपपत्तिरिति ।

**सिद्धान्तस्तु** न वरुणतटितोरुभयोरपि संवत्सरानन्तर्यं ग्राह्यम्, किन्तु एक एव मार्गः । तत्र संवत्सरानन्तरं तटितमेव गच्छति । न च श्रुत्यन्तरविरोधः । तटितोऽनन्तरं वरुणस्य प्राप्यत्वेन तदर्थत्वोपपत्तेः । अतो मार्गैक्येनाऽनुस्मरणमुपपद्यत इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**अत्र सूत्रमेवेति ॥** यद्यपि पूर्वाधिकरणेऽप्यादौ सूत्रं पठितं तथापि तत्र वक्तव्यसंशयबीजस्य श्रुतिविप्रतिपत्तेस्तत्पूर्वाधिकरण एव दर्शितत्वाद्वक्तव्यशेषाभावात्सूत्रमुपन्यस्य व्याख्यानं कृतम् । अत्र तु संशयबीजस्योत्तरत्र प्रदर्शयिष्यमाणत्वाद्व्याख्यानार्थं सूत्रस्यापठितत्वात्सङ्गत्यादिजिज्ञासा-जननायैवादौ सूत्रं पठतीति भावः । अत्र ब्रह्मप्राप्तिमार्ग इति । अर्चिषो वायुं वायोरहः अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् मासान् षट् उदगायनमासान् । मासेभ्यः संवत्सरं संवत्सरा-द्वरुणलोकमिति श्रुतौ तटितो वरुणात्पूर्वं संवत्सरानन्तर्यसमर्थनादित्यर्थः ॥ नन्वह्नो वाय्वानन्तर्यं समर्थनीयं क्रमप्राप्तत्वादित्यत आह ॥ **स चेति** ॥ उक्ते मार्गे यत्र यत्र विवादस्तत्र तत्र क्रमेण निरस्यते । संवत्सरपर्यन्तं विवादो यत्र यत्रास्ति तत्र तत्र तदुच्छंकनेन निरस्त इति मार्गो निर्णीतः । अधुना संवत्सरानन्तरकक्ष्यायां विप्रतिपत्तिसद्भावात्तन्निरासेन तटितस्तदानन्तर्यं निर्णीयत इत्यनन्तरसङ्गतिरिति भावः ॥ **तत्र किमिति** ॥ तत्र किं संवत्सरलोकानन्तरं तटित इव वरुणलोकस्यापि प्राप्यत्वमुत तटित एवेति सन्देह इत्यर्थः । ततश्चात्र संवत्सरलोकानन्तरं वरुणलोकस्य तटितश्चाधिकारिभेदेन प्रजापतिं प्राप्तुं मार्गतया प्राप्यत्वमुत सर्वैरपि तटित एवेति चिन्ता । तदर्थं संवत्सरानन्तरं तटित एव प्राप्यत्वे साधकं वरुणस्य संवत्सरानन्तरप्राप्यत्व-श्रुतेस्सावकाशत्वापादकं विशेषप्रमाणं नास्त्युतास्तीति ॥ **श्रुतिद्वयस्येति** ॥ संवत्सराद्वरुणलोकं संवत्सरात्तटितमिति श्रुतिद्वयस्य निरवकाशत्वादित्यर्थः । भाष्ये वरुणलोकात्प्रजापतिलोकं तटितः प्रजापतिलोकमिति श्रुतिशेषद्वयोदाहरणात्सूचितं सुक्रम इत्युक्तपूर्वपक्षन्यायं तद्व्यवच्छेद्यचोद्यपद-प्रतिक्षेपपूर्वं दर्शयति ॥ **न चेत्यादिना** ॥ अभ्यधिकाशङ्कामाह ॥ **न चेति** ॥ सूत्रे संवत्सरादिति शेषः । एवेति लभ्यते । तथा च संवत्सरादधि उपरि अनन्तरं तटित एव प्राप्यत्वमिति

(वाक्यार्थमुक्तावली)

वक्ष्यन्नेवकारेणोभयोरपि प्राप्यत्वं पूर्वपक्ष्यभिमतं व्यावर्त्यत इति तावदाह ॥ **प्रजापतिमिति** ॥ किंत्वेक एवेति । एतेन विशेषसंप्राप्तिरिति न्यायेन प्राप्तिरित्यंशोऽपि दर्शितः । तदुक्तं न्यायविवरणे । ज्ञानिनामेकमार्गस्यैव प्राप्यत्वादिति । तत्रेत्यादिभाष्ये तत्रेत्यनन्तरमध्याहार्यं दर्शयन्सूत्रं व्याचष्टे ॥ **तत्रेति** ॥ मार्ग इत्यर्थः । ननु संवत्सरानन्तरं तटित एकस्यैव प्राप्यत्वे संवत्सराद्वरुणलोकमिति श्रुतिविरोध इत्याशङ्क्य तत्सावकाशत्वाय तटितोऽधि वरुण इत्येतद्व्याख्यापरं तटितो वरुणं गच्छतीति भाष्यं व्याचष्टे ॥ **न चेत्यादिना** ॥ **कुत इत्यत आहेति** ॥ कुतः प्रमाणादित्याशङ्कायां वरुणस्य तटितोऽधि उपरि सम्बन्धात् सम्बन्धत्वप्रतिपादकश्रुतेरिति श्रुत्युदाहरणपूर्वं सूत्रखण्डार्थमाहेत्यर्थः । तेन न्यायेन विशेषेत्यंशोऽपि विशेषश्रुत्येति विवृतो भवति ।

## तत्त्वसुबोधिनी

नन्वत्र अर्चिषो वायुं, वायोरहः अह्नः आपूर्यमाणपक्षमापूर्यमाणापक्षाद्यान् षडुदङ्ङेति मासान्मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकमिति श्रौतक्रमानुसारेण एतदधिकरणत्रयस्य क्रमेणानन्तर्यं वाच्यम् । तत्र शुक्लपक्षोत्तरायणसंवत्सरपरित्यागेन तदुपरितनतटिद्वरुणविचारपरस्यास्य कथं तदानन्तर्यमित्यत आह ॥ **स चेति** ॥ विपरीतश्रुत्यभावेन तत्र विवादाभावात् । अस्यैव विरुद्धश्रुतिविवादविषयत्वेन तदनन्तरविचार्यत्वमिति तद्विचारपरस्यानन्तरसङ्गतिरिति भावः । वरुणलोकात् प्रजापतिलोकं तटितः प्रजापतिलोकमिति श्रुतिशेषद्वयोदाहरणस्य तन्निवर्तनीयाशङ्कानिरासपूर्वकं प्रयोजनमाह ॥ **न च विरोध इति** ॥ अभ्यधिकाशङ्कामाह ॥ **न चात्रेति** ॥ **वीतरोग इति** ॥ अन्यथा सत्यानृतविधेयकत्वं न स्यादिति भावः ॥

## वाक्यार्थविवरणम्

**श्रुत्यन्तरेति** ॥ संवत्सराद्वरुणलोकमिति श्रुत्यन्तरेत्यर्थः ॥ **तटितोऽनन्तरमिति** ॥ तथा च तटितः तटिल्लोकात् अधि उपरि अनन्तरमिति यावत् । वरुणस्तल्लोकः प्राप्य इति सूत्रखण्डार्थो द्रष्टव्यः । भाष्ये ॥ **तडिता ह्यूह्यतेति** ॥ तटिता तटिल्लोकेन वरुणः वरुणलोक ऊह्यते । तथा च वाह्यवाहकयोर्वाह्यस्योपरितनत्वं वाहकस्याधस्तनत्वं प्रसिद्धमिति वाहकस्य तटिल्लोकस्याधस्तनत्वं तद्वाह्यस्य वरुणलोकस्योपरितनत्वमिति भावः ।

## वाक्यार्थमञ्जरी

तटितः तटिल्लोकादधि उपरि वरुणः प्राप्यः कुतः सम्बन्धात् तटितश्रुतौ वरुणलोकस्य तदुपरिसम्बन्धोक्तेरित्यर्थः ।। **निर्णीत इति** ।। विवादविषयस्य निर्णीतत्वादित्यत्र विवादाभावादिति भावः ।। **अन्यथेति** ।। तटिदनन्तरं वरुणप्राप्तिं ज्ञापयितुमित्यर्थः ।। **वीतरोग इति** ।। अन्यथा सत्यानृतविवेचकत्वं न स्यादिति भावः ।।

।। इति तटिदधिकरणम् ।। ३ ।।

## ४. आतिवाहिकाधिकरणम्

**ॐ आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥**

पूर्वोक्तस्त्वातिवाहिको वायुः । पूर्वगमनलिङ्गात् ॥

कुतः?–

### तत्त्वप्रदीपिका

ननु 'द्यौर्वाव वियुत्तत्पतिं वायुमुपगम्य तेनैव परमभिगच्छति' इति श्रुतेरुपरि च वायोर्गम्यत्वादेक एव द्विरूपो गम्यतेऽर्चिर्देववदित्येष्टव्यं स्यान्मतं, नासौ न्यायोऽत्रावतरति । तत्र तु द्वैरूप्यम् । 'अग्निर्ज्योतिरिति द्वैधैवार्चिषः सम्प्रतिष्ठितिः' इत्यादिविशेषवचनात् । नात्र द्वैरूप्ये प्रमाणं, बहुत्वाच्च वायूनां, द्वावेतौ वायू इति । तर्हि पूर्वः प्रधानोऽस्तु तत्प्रेषणे तूत्तरेषु गन्तॄणामवकाशदानाद्युपपत्त्या पूर्वं तस्य प्राप्तेर्युक्तत्वात्, गतौ तारतम्यक्रमस्यानपेक्षितत्वात्, न हि सोमाग्नीन्द्रध्रुवगतिः क्रमानुरोधिनीत्यत आह– आतिवाहिकस्तल्लिङ्गात् ॥ पूर्वत्रोक्तो वायुरातिवाहिकः, न प्रधानः, पूर्वप्राप्यत्वादेव लिङ्गात् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तिमार्गेऽर्चिरनन्तरप्राप्यस्य वायोरातिवाहिकत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा वायोरुत्तमत्वासिद्धेः समर्थनीयमेतत् । प्रकृतो वायुरत्र विषयः । किं मुख्यवायुरुतामुख्य इति सन्देहः । वायुशब्दः सन्देहबीजम् । मुख्यवायुरिति पूर्वः पक्षः । वायुशब्दस्य तत्रैव मुख्यत्वात् । तस्यापि प्राप्यत्वात् । न चात्र बाधकं किञ्चिदस्ति येन वायुशब्दस्यामुख्यार्थत्वं स्यात् । अतो वायोरर्चिषोऽनन्तरमेव प्राप्यत्वान्न तस्याधिक्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आतिवाहिक इति ॥** योऽयं पूर्वं प्राप्यतयोक्तो वायुरसावातिवाहिक एव न तु मुख्यः । पूर्वप्राप्यत्वलिङ्गात् । तद्ध्यमुख्यस्यैव भवेन्न मुख्यस्येति भावः ॥

### भाववोधः

अनन्तरसङ्गतिं सूचयन्नाह– वायोरातिवाहिकत्वसमर्थनादिति ॥ ननु तर्ह्यस्य 'वायुशब्दात्' इत्येतदानन्तर्यमेव स्यादिति चेत्, सत्यम् । एकवाक्यपठिततटिद्वरुणविचारस्यान्तरङ्गत्वेन

(भावबोधः)

तदानन्तर्यमेवास्य प्राप्तत्वादिति भावः ॥ **किमिति** ॥ अत्र 'स इतो गतो द्वितीयं स वायुम्' इति श्रुत्युक्तो वायुः किं मुख्य उतातिवाहिक इति चिन्ता । तदर्थं श्रौतोऽयं वायुशब्दो मुख्यया वृत्या प्राप्यत्वेनाभिमतमुख्यवायुपर उतामुख्यया वृत्त्या तथाभूतातिवाहिकपर इति । तदर्थं तत्पतिं वायुमुपगम्येत्यन्ते प्राप्यत्वेन श्रुतो वायुः किमातिवाहिक **उत मुख्य इति** ॥ तदर्थमन्ते प्राप्यस्य मुख्यवायुत्वे पूर्वप्राप्यस्यातिवाहिकत्वे च विशेषप्रमाणं नास्त्युतास्तीति । वायुशब्दस्य तत्रैव मुख्यत्वादिति । अनेन शाब्दे ज्ञाने शब्दमुख्यार्थस्यैव प्रथमं विषयत्वेन प्राप्तिः । तत्र बाधकोपस्थित्यनन्तरं अमुख्यार्थस्येति मुख्यवायुग्रहणे प्रतीतिसुक्रमोपपत्तिरिति न्यायविवरणांशो व्याख्यातो भवति ।

## भावदीपः

**वायोरातिवाहिकत्वेति** ॥ विद्युदनन्तरप्राप्यवायोर्मुख्यवायुत्वेत्यपि ध्येयम् । एतेन भिन्न-श्रुतिस्थभिन्नपदार्थयोरर्चिर्वाय्वोस्तटिद्वरुणयोश्च पौर्वापर्योक्तावत्रैव वायुशब्दार्थयोरातिवाहिक-मुख्ययोर्व्यवधानेन पौर्वापर्योक्तिरिति पूर्वसङ्गतिरपि सूचिता ॥ **अन्यथेति** ॥ आतिवाहिकत्वानुक्तौ मुख्यवायुत्वप्राप्तेश्चरमस्यातिवाहिकत्वप्राप्तेश्चेति भावः । न चैक एव मुख्यवायुरर्चिर्देववद् द्विरूप उभयत्र प्राप्योऽस्तु । तथा च नोत्तमत्वभङ्ग इति वाच्यम् । अग्निर्ज्योतिरिति द्वेधैवार्चिष इतिवदिह मुख्यवायुद्वैरूप्ये मानाभावादिति भावः । एतेन सोमाग्नीन्द्रध्रुवानां क्रमेण प्राप्त्युक्त्या गतौ क्रमस्याविवक्षितत्वात् । मुख्यवायोर्द्वितीयप्राप्यत्वेऽपि नोत्तमत्वभङ्ग इत्यपि निरस्तम् । मुख्य-वायोर्द्वैरूप्याभावेनोभयत्र प्राप्यत्वभावादादावेव प्राप्यत्वे विद्युत्पतित्वेनोक्तवायोरातिवाहिकत्वप्राप्त्या मुख्यवायोरियदामननादित्यत्रोक्ताधिकार्युत्तमत्वं न स्यादिति तात्पर्यात् । पूर्वोक्तस्त्वातिवाहिक इति भाष्यव्यावर्त्यमाह ॥ **मुख्येति** ॥ भाष्ये वायुपदप्रयोगसूचितयुक्तिमाह ॥ **वाय्विति** ॥ **निमित्ताधिक्यादिति** ॥ आकाशाद्वायुरित्यादाविवास्त्वत्राप्यमुख्योऽर्थ इत्यत आह ॥ **न चेति** ॥ प्रथमाप्राप्यत्वं तु न बाधकम् । तस्यापि सम्भवादिति भावः ॥ **अत इति** ॥ अबाधेन वायुशब्देन मुख्यस्यैव प्राप्तत्वादित्यर्थः । द्वैरूप्याभावेनोभयत्र प्राप्यत्वाभावमभिप्रेत्याह ॥ **अर्चिषोऽनन्तर-मेवेति** ॥ उद्देश्यविधेयव्यञ्जनेन भाष्यं व्याचष्टे ॥ **योऽयमिति** ॥

## अभिनवचन्द्रिका

'स वायुमागच्छति' इति प्रथमप्राप्यतयोच्यमानो वायुरातिवाहिकः । तस्मादेव पूर्वगमनरूपाल्लिङ्गात् ज्ञापकादिति सूत्रार्थः । इदमुक्तं भवति 'स वायुमागच्छति' इति वायुः प्रथमप्राप्यतया श्रूयते । प्रथमत्वं च उत्तरमार्गावधिकत्वं, तत्र यद्यपि उत्तरावधिकत्वरूपं प्रथमत्वं अर्चिरादिविद्युत्पर्यंतं सत्वात् नाऽऽतिवाहिकत्वसाधनायाऽलम्, तथापि वायुत्वनिश्चयसहकृतं पूर्वप्राप्यत्वम् आतिवाहिकत्वं साधयेदेव । तदिदमुक्तं लिङ्गादिति । एतेन – 'आतिवाहिकस्तस्मात्' इत्येतावता पूर्णत्वेन सूत्रे लिङ्गग्रहणं व्यर्थमिति परास्तम् । तस्य केवलस्य पूर्वप्राप्यत्वस्य अर्चिरादौ व्यभिचारेणाऽसाधकत्वेऽपि वायुत्वनिश्चयसहकृतस्य साधकत्वमिति ज्ञापनार्थत्वात् ।

## वाक्यार्थमुक्तावली

**अन्यथेति ॥** यद्ययमातिवाहिको न भवेत् किन्तु विद्युदनन्तरप्राप्यो भारतीपतिरेव भवेत् तदा सर्वोत्तमो न स्यात् । न हि सर्वोत्त(मत्वं)मं प्राप्तस्य ब्रह्मप्राप्तिं विना तदादिप्राप्तिः सम्भवति । तथा च विद्युत्पतेस्सर्वोत्तमत्वसिध्यर्थं अर्चिरनन्तरस्यातिवाहिकत्वं समर्थ्यते । तथा चेदमधिकरणं विद्युत्पर्यन्तं मार्गनिर्णये जाते तदनन्तरस्य वायोः प्राधान्यसिद्धये द्वितीयप्राप्यवायोरातिवाहिकत्वसमर्थनपरमित्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अर्चिषो वायुं गच्छतीत्युक्तो वायुः किं मुख्य उतामुख्य इति चिन्ता । तदर्थं वायुशब्दस्य मुख्यार्थग्रहणे बाधकं नास्त्युतास्तीति । अन्यस्य मुख्यार्थबोधकत्वं तद्बोधेऽमुख्यार्थबाधकत्वमिति क्रमः । वायुशब्देन मुख्यग्रहणे बाधकाभावात् मुख्य एव प्रथमप्राप्तो ग्राह्य इति भावेन सुक्रम इत्युक्तन्यायं विशदयति ॥ **वायुशब्दस्येत्यादिना** ॥ सम्बन्धदीपिकायां शङ्कराचार्यैः वायुशब्दादित्याद्यधिकरणत्रयेऽपि सुक्रमस्य विशेषसंप्राप्तेश्च पूर्वपक्षसिद्धान्तन्यायतया योजितत्वादिति ज्ञेयम् । भाष्ये तुशब्दोऽवधारणे । अर्चिषोऽनन्तरं प्राप्यतयोक्तो वायुरातिवाहिकः प्रवह एव न तु मुख्यः । कुतः तस्य तत्र मुख्यादन्यत्वे पूर्वप्राप्यत्वलक्षणलिङ्गसद्भावात् । तद्धि पूर्वप्राप्यत्वममुख्यस्यैव भवेत् ब्रह्म विनाऽन्यंप्रापकत्वादिति भावेन व्याचष्टे ॥ **योऽयमित्यादिना** ॥ नन्वातिवाहिकः प्रवह इत्यत्र किं प्रमाणमिति चेन्न । यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छतीत्यत्र बृहद्भाष्ये

(वाक्यार्थमुक्तावली)

प्रवहं वायुपुत्रं च सूर्यसौमौ च विद्युतम् ।
प्राप्य प्रधानवायुं च याति तत्परमं पदम् ॥

इत्यर्चिरनन्तरवायोः प्रवहत्वस्य मुख्यवायुपुत्रत्वस्य चोक्तत्वात् ।

## तत्त्वसुबोधिनी

अभ्यनन्तरसङ्गतिं सूचयन्नाह ॥ **वायोः आतिवाहिकत्वसमर्थनादिति** ॥ न चास्य वायुशब्दादित्येतत्तदानन्तर्यमेव स्यादिति वाच्यम् । एकवाक्यपतिततटिद्वरुणविचारस्यानन्तरत्वेन तदनन्तरमेवास्य प्राप्तत्वादिति भावः । ननु वायुशब्दस्य मुख्ये मुख्यत्वेऽपि नात्र तस्य मुख्यपरत्व-मित्यत आह ॥ **न चेति** ॥

## वाक्यार्थविवरणम्

**अन्यथेति** ॥ अर्चिरनन्तरं प्राप्यस्य वायोर्मुख्यवायुत्वमित्यर्थः ॥ **उत्तमत्वासिद्धेरिति** ॥ अस्माद्वायोरुपरि अहरादेः प्राप्यत्वश्रवणेन तस्यैवोत्तमत्वप्रसङ्गादिति भावः । ननु वायुशब्दस्य तस्मिन् मुख्यत्वेऽपि अर्चिरादिमार्गे तस्य प्राप्यत्वाभावात् न तत्प्रसक्तिरित्यत आह ॥ **तस्या-पीति** ॥ 'द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य' इति तस्यापि प्राप्यत्वश्रवणादित्यर्थः । अत्र मुख्यवायुग्रहणे ॥ **न मुख्यस्येति** ॥ मुख्यस्यान्ते प्राप्यत्वादिति भावः ।

## वाक्यार्थमञ्जरी

अन्यथा **वायोरिति** ॥ प्रधानवायोरित्यर्थः । नीचानामेव प्रथमप्राप्यत्वादिति भावः ॥ ॐ आतिवहिकस्तल्लिङ्गात् ॐ ॥ अर्चिषोऽनन्तरं प्राप्यो वायुरिति आतिवाहिकः तन्नामको मुख्यवायुपुत्र एव कुतः तल्लिङ्गात् पूर्वप्राप्यत्वस्यामुख्यवायुलिङ्गादिति भावः । उक्तलिङ्गेन संशयनिवृत्तिः स्यादित्यत आह ॥ **मुख्यस्यापीति** ॥

## सूत्रभाष्यम्

**॥ ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥ ५ ॥**

(सूत्रभाष्यम्)

'स वायुमागच्छति' इति प्रथममुच्यते । 'उत्क्रान्तो विद्वान्परमभिगच्छन्विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इत्यन्तेऽपि वायुगमनश्रुतेः । पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे दिवस्पतिरिति विशेषणात्पूर्वत्राऽऽतिवाहिकस्यैव सिद्धेः । ब्रह्मतर्के च–

'उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम्' इति ॥

॥ इति आतिवाहिकाधिकरणम् ॥ ४ ॥

## तत्त्वप्रदीपिका

न तदेवाप्रधानत्वे लिङ्गमित्युक्तमित्यत आह– उभयव्यामोहात्तत्सिद्धेः ॥ पूर्वोक्त आतिवाहिकः परो वेति व्यामोह इति भाष्यस्यायमर्थः । पूर्वोक्त आतिवाहिको वा प्रधानो वेति व्यामोहे व्याकुलबुद्धितायां पूर्वोक्तो वाऽऽतिवाहिकः परो वेति व्यामोहे, उत्तरे वायौ दिवस्पतिरिति विशेषणात्पूर्वोक्तस्य वायोरातिवाहिकत्वसिद्धिः । प्रधानो हि दिवस्पतिः 'दिवस्पतयो दिधिषाणा अवेषन्नित्यात्' इति श्रुतेः । 'या मारुताद्गर्भमधत्त पूर्वम्' इत्यादेश्च । अथ कथमयमातिवाहिक एवेति सिध्यतीत्यत आह– **ब्रह्मतर्के चेत्यादि** । न चोपरि प्रेषणार्थं प्रधानस्य प्राथम्यमिति युक्तम् । आतिवाहिकस्यातिवहनसौकर्यात् ॥

## तत्त्वप्रकाशिका

ननु तथापि कथं पूर्वप्राप्यस्य वायोरातिवाहिकत्वसिद्धिः । मुख्यस्य प्राप्यभावापातात् । अथोत्तरत्रापि कश्चिद्वायुः प्राप्योऽस्तीत्युच्यते तथाप्यनिवृत्तः संशयः । किं पूर्वोक्त आतिवाहिको मुख्यो वेत्यादि । मुख्यस्यापि प्रथमप्राप्तिसम्भवात् । न च विशेषहेतुरस्ति येन पूर्वोक्त-

(तत्त्वप्रकाशिका)

स्यातिवाहिकत्वसिद्धिरिति भावेनाक्षिपति ॥ **कुत इति** ॥ तत्परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ **उभयेति** ॥ युक्तं पूर्वोक्तस्यातिवाहिकत्वम् । यथा पूर्वं वायोः प्राप्तिः श्रूयते तथोत्तरत्रापि वायोः प्राप्तिश्रवणान्मुख्यप्राप्तेरप्युपपत्तेः । ननूक्तमत्र । सत्यम् । किमयं पूर्वोक्त आतिवाहिको मुख्यो वा परत्रोक्तश्चातिवाहिको मुख्यो वेति सन्देहेऽपि पूर्वोक्तस्यातिवाहिकत्वं परत्रोक्तस्य मुख्यत्वं सिध्यति । उत्तरस्य दिवस्पतित्वश्रवणात्तस्य च मुख्यवायुलिङ्गत्वात् इति भावः । कथं वरुणावराया विद्युतोऽन्ततो गम्यत्वमित्यत उक्तं **द्यौरिति** ॥ नन्वस्तूत्तरस्य मुख्यत्वं तथापि पूर्वोक्तस्यातिवाहिकत्वानिश्चयो मुख्यस्योभयत्रावस्थानसम्भवादित्याशङ्कां परिहर्तुं सर्वमपि मार्गं स्मृत्या दर्शयति ॥ **ब्रह्मतर्के चेति** ॥ अतः प्रथमप्राप्यस्यातिवाहिकत्वाद्युक्तं मुख्यस्य मुख्यत्वमिति सिद्धम् ॥

## गुर्वर्थदीपिका

'उभयव्यामोहात्तत्सिद्धेः' इति सूत्रे ल्यब्लोपनिमित्तपञ्चमीमादाय विद्युत्पतित्वलिङ्गेनोत्तरस्य मुख्यवायुत्वसिद्धावुभयव्यामोहं निराकृत्य तत्सिद्धेः पूर्वस्यातिवाहिकत्वसिद्धेरित्यर्थो द्रष्टव्यः । अत एवोभयव्यामोह इति भाष्ये नेति नञध्याहारेण योजना ।

## भावबोधः

यद्वा– विक्रम इत्युक्तन्याय एतदधिकरणसम्बन्धित्वेनापि 'न च सोमादग्निम्' इत्यादिन्यायविवरणेन विवृत इत्यभिप्रेत्याह– **मुख्यस्यापि प्रथमप्राप्तिसम्भवादिति** ॥ अत्र 'अपि' पदेनोत्तमत्वक्रमानुसारेण न प्राप्तिक्रमः । 'सोमं वैश्वानरं चेन्द्रम्' इत्यादौ सोमादनन्तरमग्नेरग्नेरनन्तरमिन्द्रस्य प्राप्त्युक्त्या व्यभिचारादिति सूचयति– सन्देहेऽपीति । अनेन सूत्रगत'व्यामोह' शब्दस्य सन्देहार्थत्वं पञ्चम्या अनुपयोगात् सप्तम्यर्थत्वं चाभिप्रेत्य भाष्ये व्यामोह इत्युक्तमित्युक्तं भवति ॥ **उत्तरस्य दिवस्पतित्वश्रवणादिति** ॥ अनेनोत्तरस्य दिवस्पतित्वप्रतिपादकविशेषश्रुतितोऽन्ते प्राप्यत्वेनैकमार्गस्यैव मुख्यवायुरूपमार्गस्य प्राप्तिरिति न्यायविवरणांशो व्याख्यातो भवति । यद्वा, उरुमित्युक्तन्याये एतदधिकरणसम्बन्धित्वेनाप्युत्तमत्वात् 'तस्यैव' इति न्यायविवरणेन च विवृत इत्यभिप्रेत्याह– **तस्य चेति** । दिवस्पतित्वरूपोरुत्वस्येत्यर्थः ॥ **वरुणावराया इति** ॥ तटिद्विद्युच्छब्दयोरेकार्थत्वादिति भावः । अत्र प्रथमे– पूर्वप्राप्यस्य वायोरातिवाहिकत्वे पूर्वप्राप्यत्वलिङ्गोक्तिः । अन्तिमे अन्ते प्राप्यस्य वायोर्दिवस्पतित्वरूपहेतूक्तिरिति सूत्रक्रमः ।

## भावदीपः

**उत्तरत्रेति** ॥ विद्युदनन्तरमित्यर्थः । अस्तीत्युच्यते उत्क्रान्त इत्यादिभाष्योक्तश्रुतावित्यर्थः । इत्यादीत्यादिपदेन चरमश्रुतौ वायुरातिवाहिको मुख्यो वेत्यस्य ग्रहः । प्रथमप्राप्यत्वमेव संशयनिवर्तकमस्त्वित्यत आह ॥ **मुख्यस्यापीति** ॥ सोमादग्निमग्नेरिन्द्रमिति सोमादग्नेरवमस्यापि प्राप्तेः प्रधानवायोरपि अवमोऽन्यः प्राप्योऽस्त्विति न्यायविवरणोक्त्या गतौ तारतम्यक्रमस्याविवक्षितत्वादिति भावः । श्रुतेरित्यन्तभाष्यं तात्पर्यतो विवृण्वन्नाद्यशङ्कां निराह ॥ **युक्तमिति** ॥ अन्तेऽपीत्यपेरर्थस्तथेति । अत एव यथेति लभ्यत इति भावः ॥ **ननूक्तमत्रेति** ॥ तथापीत्यादिना दूषणमुक्तमित्यर्थः । पूर्वेत्यादिभाष्यं व्याचष्टे ॥ **सत्यमित्यादिना** ॥ वरुणावराया इति पूर्वोक्ततटित्पर्यायत्वाद्विद्युत इति भावः ॥ **स्मृत्येति** ॥ तथा च मुख्यस्यैवोभयत्रावस्थानमेतत्स्मृतिविरुद्धमिति भावः ॥ **अत इति** ॥ प्रथमप्राप्तिलिङ्गाच्चरमप्राप्यस्य मुख्यस्यैवोभयत्रावस्थितेः स्मृतिविरुद्धत्वाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

अनेन सूत्रेण संशयपूर्वपक्षयोरनिवृत्तिरित्याक्षेपपरत्वं 'कुत' इति भाष्यस्याह – **नन्विति** ॥ तथापि=पूर्वगमनोक्तावपि कथमस्याऽऽतिवाहिकत्वसिद्धिः न कथमपीत्यर्थः । मुख्यवायोरप्राप्तिप्रसङ्गरूपबाधकसद्भावात् पूर्वपक्षोऽनुवर्तत इति भावः । पूर्वपक्षनिवृत्तौ कारणं शङ्कते – **अथेति** ॥ अस्तु तर्हि पूर्वपक्षनिवृत्तिः संशयानुवृत्तिस्तु न परिहार्येत्याह – **तथापीति** ॥ **मुख्यस्यापीति** ॥ अग्र्युत्तमस्यापि सोमस्याऽग्रेः पूर्वं, ध्रुवादुत्तमस्यापि इंद्रस्य ततः पूर्वं, प्राप्तिदर्शनादिति भावः ।

**पूर्वपक्षस्तु** 'स वायुमागच्छति' इति प्रथमप्राप्ततयोक्तो वायुर्मुख्यः । वायुशब्दस्य तत्रैव मुख्यत्वात् । बाधकं विना मुख्यार्थत्यागायोगात् मुख्यस्यापि प्राप्यत्वात् । अतो वायोरर्चिषोऽनन्तरं प्राप्यत्वात् न तस्याऽधिक्यमिति ।

**सिद्धान्तस्तु** आतिवाहिक एवायं वायुः । पूर्वगमनलिङ्गात् । पूर्वगमनमात्रस्याऽर्चिरादिगतत्वेन आतिवाहिकत्वाऽसाधकत्वेऽपि वायुत्वनिश्चयसहकृतस्य तत्साधकत्वमुपपन्नमेव । तद्यथा

(अभिनवचन्द्रिका)

त्रिवर्णेतरत्वमात्रस्याऽन्त्यजादिगतत्वेन शूद्रत्वाऽसाधकत्वेऽपि वर्णनिर्णयसहकृतस्य शूद्रत्वसाधकत्वमुपपद्यते । नन्वेवमपि नायं पूर्वपक्षो निवर्तते । मुख्यस्य प्रथमप्राप्यत्वानङ्गीकारे तदप्राप्तिप्रसङ्गरूपबाधकसद्भावात् । अथ मतं 'द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य' इति पुनरपि वायुप्राप्तिः श्रूयते । स मुख्यो भविष्यतीति न मुख्याऽप्राप्तिदोष इति न पूर्वपक्षाऽनुवृत्तिरिति । हन्त तर्हि संशयाऽनुवृत्तिदोषः किं पूर्वोक्त आतिवाहिकः उत परः । तथा परोक्त आतिवाहिकः, किं वा पर इति संशयनिरासककारणाभावात् । एवं चाऽयमातिवाहिक इति निश्चयो न घटत इति चेन्न उत्तरे दिवस्पतित्वविशेषणेन मुख्यवायुत्वनिश्चये परत्र परिशेषेणैव आतिवाहिकत्वनिश्चयोपपत्तेः । 'उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिक' इति स्मृतेश्च । अतः प्रथमप्राप्यस्य आतिवाहिकत्वात् युक्तं मुख्यस्य मुख्यत्वमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**आतिवाहिकत्वसिद्धिरिति** ॥ मुख्यान्यत्वसिद्धिरित्यर्थः । वस्तुतस्त्वविवक्षयाऽऽतिवाहिकत्वसिद्धिरित्युक्तम् ॥ **मुख्यप्राप्त्यभावापातादिति** ॥ तथात्वे च ब्रह्मप्राप्तिमार्गे मुख्यस्याभावेन तस्य महत्वं न सिध्येदिति भावः ॥ **मुख्यो वेत्यादीति** ॥ अत्रादिपदेनोत्तरप्राप्य आतिवाहिको वा मुख्य इति संशय इत्यर्थः । ननु कथं पूर्वोक्तस्य मुख्यत्वकोटिकसंशयः पूर्वगम्यत्वलिङ्गविरोधात् । नाप्युत्तरप्राप्यस्यातिवाहिकत्वकोटिकः संशयः अमुख्यब्रह्मगमयितृत्वायोगादित्यत आह ॥ **मुख्यस्यापीति** ॥ अपिपदेनामुख्यस्याप्युत्तरप्राप्यत्वसम्भवादित्यर्थः । ननु प्रधानवायोः पूर्वं प्राप्यत्वे ब्रह्मान्यगमयितृत्वेन प्राधान्यमागच्छेत् । उत्तरप्राप्यस्यातिवाहिकत्वे तस्यैतद्ब्रह्मगमयितृत्वेन प्राधान्यमापद्येतेति चेन्न । पूर्वपक्षफलाविरोधित्वेनेष्टत्वात् । न केवलं बाधकाभावः साधकं च पूर्वप्राप्यस्य मुख्यान्यत्वे उत्तरप्राप्यस्य मुख्यत्वे नास्तीत्याह ॥ **न च विशेषहेतुरिति** ॥ **आतिवाहिकत्वसिद्धिरिति** ॥ उपलक्षणमेतत् । उत्तरस्य प्रधानवायुत्वसिद्धिश्चेति ज्ञेयम् ।

सूत्रमुत्थापयितुं 'ननु कथं पूर्वप्राप्यस्य वायोरातिवाहिकत्वसिद्धिर्मुख्यप्राप्त्यभावापातादिति शङ्कितपूर्वपक्षप्रतिक्षेपकतया पूर्वोक्तस्त्वातिवाहिक इत्यन्तभाष्यं तावद्व्याचष्टे ॥ **युक्तमिति** ॥ एतेन पूर्वोक्तस्त्वातिवाहिक एवेति व्याख्यातं भवति । तर्हि मुख्यप्राप्त्यभावापात इत्यतः स वायुमागच्छतीति प्रथममुच्यत इत्यस्यादौ यथेत्यध्याहारं अन्ते तथेत्यध्याहारं मन्वानस्स वायुमागच्छ-

(वाक्यार्थमुक्तावली)

तीत्यारभ्य श्रुतेरित्यन्तं व्याचष्टे ॥ **यथेति** ॥ शङ्कते ननूक्तमत्रेति । तथाप्यनिवृत्तः संशय इत्यादिनेति शेषः । अर्धाङ्गीकारेण परिहर्तुं सूत्रमुभयव्यामोहादिति । अत्र पञ्चमी सप्तम्यर्थे । यदा वै पुरुषोऽस्मात्प्रैति स वायुमागच्छति । उत्क्रान्तो विद्वान् परमभिगच्छन्नित्युभयविधवाक्यादुभयत्रादावन्ते च प्राप्ये वायौ पृथगुभयत्र व्यामोहेऽप्यर्चिरनन्तरप्राप्ये प्रधाने वा आतिवाहिको वा विद्युदनन्तरप्राप्येऽपि वायौ प्रधान आतिवाहिको वेति सन्देहे प्रसक्तेऽपि तस्य पूर्वोक्तस्य तत्प्रसिद्धेरातिवाहिकत्वसिद्धेः तस्योत्तरोक्तस्य तेन प्रसिद्धेन बुद्धिस्थेन दिवस्पतित्वविशेषणेन तत्सिद्धेर्मुख्यत्वसिद्धेः पूर्वोक्त आतिवाहिक उत्तरोक्तस्तु मुख्य एवेति व्याकुर्वत्स वायुमागच्छतीत्यारभ्यातिवाहिकस्यैव सिद्धेरित्यन्तं समग्रभाष्यं व्याचष्टे ॥ **सत्यमित्यादिना भाव इत्यन्तेन** ॥ भाष्ये उत्तर इत्यस्य पूर्वेणापि सम्बन्धः । उत्तरे उत्तरत्रोक्तश्चातिवाहिकः परो वेति व्यामोहे सतीति तदर्थ इति भावेनोक्तं परत्रेति । पूर्वत्रातिवाहिकस्यैव सिद्धेरित्यन्यत्रोक्तस्येति शेषः । आतिवाहिकस्येति भावेनोक्तं **पूर्वोक्तस्यातिवाहिकत्वमिति** ॥ उत्तर इत्येतदत्राप्यनुवर्तते । उक्तस्य मुख्यत्वस्येति शेष इत्यभिप्रायेण व्याचष्टे ॥ **परत्रोक्तस्येति** ॥ उत्तरे दिवस्पतित्वविशेषणादिति यथाश्रुतं च ग्राह्यमिति भावेन व्याचष्टे ॥ **उत्तरस्येति** ॥ **उभयत्रावस्थानेति** ॥ केवलं पूर्वत्रावस्थाने हि ब्रह्मगमयितृत्वाभावेनोत्तमत्वायोगः । उभयत्रावस्थाने तु साक्षात्परंपरया च ब्रह्मगमयितृत्वेनातिशयलाभादिति भावः । नन्वेवं स्मृतिबलादेव पूर्वप्राप्यवायोर्मुख्यत्वव्यवच्छेदे पूर्वगमनलिङ्गमनर्थकम् । मुख्यस्यैवोभयत्रावस्थानसम्भवेनाप्रयोजकत्वादिति चेन्न । ब्रह्मैकगमयितृत्वं हि न मुख्यस्य धर्मस्तत्प्राप्त्यनन्तरमपि ब्रह्माप्राप्तौ मुख्यत्वव्याहतेः । हि, राजातिप्रेमास्पदं राजपुत्रं प्राप्यापि राजप्राप्तौ द्वारान्तरान्वेषणे राजपुत्रस्य राजान्तरङ्गत्वं सिध्यति । तथा च नाप्रयोजकं पूर्वगमनलिङ्गम् । स्मृतिस्त्वभ्युच्चया । अत एव सर्वमपि मार्गमित्युक्तम् । अत्रान्ते प्राप्यवायोः प्रधानत्वसिद्धये आद्ये प्रधानत्वव्यावृत्तये पूर्वप्राप्यत्वलिङ्गोक्तिः । द्वितीये उत्तरस्य दिवस्पतित्वरूपलिङ्गोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**मुख्यस्येति** ॥ पूर्वोक्तस्य आतिवाहिकत्वे मुख्यप्राप्तिरेव न स्यादिति भावः ॥ **मुख्यस्यापि प्रथमेति** ॥ अत्रापिपदेनोत्तमत्वव्युत्क्रमानुसारेण प्राप्तिक्रमः । सोमं वैश्वानरं चन्द्रमित्यादौ सोमादनन्तरमग्निः । अग्नेरनन्तरमिन्द्रस्य प्राप्त्युक्त्या व्यभिचारादिति सूचयति । उत्तरत्रापि वायुप्राप्तौ

(तत्त्वसुबोधिनी)
उद्भावितं सन्देहप्रसङ्गं शङ्कते **ननूक्तमत्रेति** ॥ सन्देहरूपमर्धांशं अङ्गीकृत्य परिहरति ॥ **सत्यमिति** ॥ **सन्देहेऽपीति** ॥ अनेन सूत्रगतव्यामोहशब्दस्य सन्देहार्थत्वं पञ्चम्या अनुपयोगात् सप्तम्यर्थत्व-मभिप्रेत्य भाष्ये व्यामोह इत्युक्तमित्युक्तं भवति । **तस्य चेति** । दिवस्पतित्वरूपत्वस्येत्यर्थः ॥ **वरुणावराया इति** ॥ तटिद्विद्युच्छब्दयोः एकत्वादिति भावः । भाष्योदाहृतस्मृतौ देवीं दिव-मित्यस्य द्युशब्दवाच्यां वायुपत्नीमित्यर्थः । अत्र प्रथमे पूर्वस्य वायोः आतिवाहिकत्वे पूर्वप्राप्यत्व-लिङ्गोक्तिः । अन्तिमे अन्ते प्राप्यस्य वायोः दिवस्पातित्वरूपहेतूक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**उत्तरत्रापीति** ॥ आतिवाहिकप्राप्त्यनन्तरमपीत्यर्थः । तथा च स एव मुख्य इति भावः । ननु प्रथमप्राप्यत्वलिङ्गेन पूर्वोक्त आतिवाहिक एव, न मुख्य इति निश्चयो भविष्यतीति चेत्तत्राह ॥ **मुख्यस्यापीति** ॥ **उपपत्तेरिति** ॥ तथा चोत्तरत्रोक्तो मुख्यवायुरिति भावः ॥ **उक्तमत्रेति** ॥ मुख्यस्यापि प्रथमप्राप्तिसम्भवादित्युक्तमित्यर्थः । परत्र उत्तरत्र ॥ **दिवस्पतित्वेति** ॥ भारतीपति-त्वेत्यर्थः । भाष्ये उत्तरे उत्तरस्मिन् आतिवाहिकादुपरि प्राप्ये वायौ दिवस्पतिरिति भारतीपतित्वरूपविशेषणादित्यर्थो द्रष्टव्यः । विद्युच्छब्दस्तटिद्वाचीत्यभिप्रेत्य शङ्कते ॥ **वरुणा-वराया इति** ॥ **अन्ततो गम्यत्वमिति** ॥ वरुणप्रजापतिसूर्यसोमवैश्वानरेन्द्रध्रुवेभ्योऽनन्तरं गम्यत्वमित्यर्थः ॥ **द्यौरितीति** ॥ द्यौः भारती सैव विद्युत् विद्युच्छब्दवाच्या न तटिदित्यर्थः ॥ **मुख्यस्येति** ॥ अन्ते प्राप्यस्य मुख्यप्राणस्येत्यर्थः । अत्र कश्चित् सम्प्रदायो निरूप्यते । 'ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः' इति वायुपुत्रत्वेनोच्यमान आतिवाहिको वायुः भूतवाय्वभिमानी प्रवहः । प्रवहं वायुपुत्रं चेति बृहद्भाष्योक्तेः । अयमेव च आतिवाहिकनामा भूतवायुः प्रवहो गीतायां 'मरीचिर्मरुतामस्मि' इत्यत्र मरीचिशब्देनोच्यते । यथोक्तं गीतातात्पर्ये । 'प्रधानवायुजो भूतवायुर्नाम्ना मरीचक' इति ।

## वाक्यार्थमञ्जरी

सप्तम्यर्थे पञ्चमी । उभयस्मिन् व्यामोहात्संशये सत्यपि तत्सिद्धेः तस्यापूर्वोक्तः आतिवाहिकः पश्चादुक्तो मुख्य इत्युक्तस्यार्थस्य सिद्धेरित्यर्थः ॥ **दिवस्पतित्वेति** ॥ भारतीपतित्वेत्यर्थः ॥ **वरुणावराया इति** ॥ तटिद्विद्युच्छब्दयोरेकार्थत्वादिति भावः ॥

॥ इति आतिवाहिकाधिकरणम् ॥ ४ ॥

## ५. वैद्युताधिकरणम्

### ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥ ६ ॥

प्रकारान्तरेण तत्र तत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति नाशङ्कनीयम्। विद्युत्पतिना वायुनैव 'स एनान्ब्रह्म गमयति' इति ब्रह्मगमनश्रुतेः ।

'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्' इति बृहत्तन्त्रे ॥

॥ इति वैद्युताधिकरणम् ॥ ५ ॥

### तत्त्वप्रदीपिका

तारतम्यक्रममनादृत्य बहुप्रकारेणोच्यमानत्वात्प्रधानवायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्यः स्यादिति नाशङ्कनीयम् । विद्युत्पतिना वायुनैव ब्रह्मगमनश्रुतेः । आह हि विद्युतं गन्तव्यां प्रस्तुत्य ''तत्पुरुषो मानवः स एनान्ब्रह्म गमयति' इति । अस्मिन्नेवार्थे प्रमाणभूतं प्रकटार्थमुक्तश्रुतेरुपबृंहकं साक्षाद्भगवत्प्रणीतं तन्त्रवाक्यमिहाप्युदाहरति–

'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्' इति ॥

'दिवस्पतिः' इति विशेषणं च तस्यैव स्यात् । 'द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इति श्रुतेः । विद्युत्पतिना वायुनैवेति न श्रीरपि पृथग्गन्तव्येत्यर्थः ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तिमार्गे मुख्यवायोरन्तिमत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा तस्यातिप्राधान्यासिद्धेः समर्थनीयमेतत् । प्रकृतो मार्ग एव विषयः । किं तत्र मुख्यवायोरनन्तरं ब्रह्मणोऽर्वाग्गन्तव्योऽस्ति न वेति सन्देहः । उभयथा सम्भवः सन्देहबीजम् । ब्रह्मणोऽर्वाग्वायोः परतोऽन्यः प्राप्योऽस्तीति पूर्वः पक्षः । तथाभ्युपगमेऽपि बाधकाभावात् । न च वाच्यं वायोः सर्वाधिकार्युत्तमत्वात्स एवान्तिमप्राप्य इति । उत्तमत्वक्रमानुसारेण प्राप्तिक्रमाभावात् । 'सोमं वैश्वानरं चेन्द्रं ध्रुवम्'

(तत्त्वप्रकाशिका)

**इत्यादौ सोमावरस्याग्नेरिन्द्रावरस्य च ध्रुवस्य पश्चात्प्राप्त्युक्तेः । अतो वायोरपि परतो गन्तव्यसद्भावान्न तस्यातिशयेन प्राधान्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ वैद्युतेनेति ॥ तत्र तत्र श्रुत्यादौ मार्गे प्रकारान्तरेण तारतम्यक्रमं विहाय प्राप्तेरुच्यमानत्वाद्वायोः परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति न शङ्कनीयं किं तु वायुरेवान्तिमप्राप्यः । कुतः । यो ह्यन्तिमो भवति तस्य ब्रह्मप्रापयितृत्वेन भाव्यम् । राजादौ तथा दर्शनात् । ब्रह्मप्राप्तिश्च वायुनैव भवति । अतः स एवान्तिमः । ब्रह्मप्रापकत्वं च वायोः कुतः । 'तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' इति श्रुतेरिति भावः । वायोरिवान्यस्यापि ब्रह्मप्रापकत्वेऽन्तिमत्वं सम्भवतीत्यत आह ॥ विद्युदिति ॥ अतो वायोरेवान्तिमत्वाद्युक्तं तस्यातिप्राधान्यमिति सिद्धम् ॥**

## भावबोधः

**मुख्यवायोरन्तिमत्वसमर्थनादिति** ॥ पूर्वाधिकरणे दिवस्पतित्वेनोक्तस्य मुख्यवायोरत्रान्तिमप्राप्यत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र प्राप्तिमार्गः किं मुख्यप्राणपरब्रह्ममध्यगतकिञ्चित्प्राप्यको भवत्युत न भवतीति चिन्ता । तदर्थं 'सोमं वैश्वानरं चेन्द्रं ध्रुवम्' इत्यादिनोक्तोत्तमक्रमानुसारेण प्राप्तिक्रमाभावः, मध्ये कस्यचित् प्राप्यत्वसाधको भवत्युत न भवतीति । तदर्थं वायोरन्यस्य ब्रह्मप्रापकत्वशक्तिरस्त्युत नास्तीति । तदर्थं ब्रह्मपापकत्वशक्तेर्मुख्यप्राणमात्रनिष्ठत्वे विशेषप्रमाणं नास्त्युतास्तीति । 'सोमादग्निमग्नेरिन्द्रम्' इति सोमादवरत्वस्यापि प्राप्तेः प्राधानवायोरप्यवरोऽन्यः प्राप्योऽस्तीति न्यायविवरणं मनसि निधाय पूर्वपक्षं रचयति । 'ब्रह्मणोर्वाग्वायोः परतोऽन्यः प्राप्य' इत्यादिना उदाहृतन्यायविवरणानुसारेण तत्र तत्रेत्यादिभाष्यं व्याचष्टे– **तत्र तत्रेत्यादिना ॥ राजादौ तथा दर्शनादिति** ॥ अनेन न हि राजानं यः कश्चित् प्रापयति । क्लृप्तमतिप्रियं चापहायेति न्यायविवरणांशो व्याख्यातो भवति । ब्रह्मप्राप्तिश्च वायुनैव भवतीति । अनेनोत्तमत्वात्तस्यैव ब्रह्मप्रापयितृत्वशक्तेरिति न्यायविवरणमुक्ततात्पर्यं भवति ॥ **तत्पुरुषो मानव इति** ॥ उपलक्षणमेतत् । 'वायुरेव ब्रह्म, गमयति तस्य ह्येषा शक्तिः' इत्यादिन्यायविवरणोदाहृतश्रुतेश्चेत्यपि द्रष्टव्यम् ।

## भावदीपः

**मुख्यवायोरन्तिमत्वेति** ॥ एतेन पूर्वत्र दिवस्पतित्वबाधकेन चरमवायोरातिवाहिकत्वायोगेऽपीह बाधकाभावान्मुख्यवाय्वनन्तरमपि तदवमः कश्चित्प्राप्योऽस्त्विति पूर्ववैषम्येण शङ्कनात्पूर्वसङ्गतिरपि सूचिता । प्रधानवायोरप्यवरोऽन्यः प्राप्योऽस्त्वित्यन्यत्रोक्तप्रतिज्ञानुरोधेन वायोरपीत्यादिभाष्यार्थमाह ॥ **ब्रह्मण इति** ॥ स्वयं हेतुमाह ॥ **बाधकाभावादिति** ॥ इयदामननादित्युक्तं हृदि कृत्वा शङ्कते ॥ **न चेति** ॥ तन्निरासकतया न्यायविवरणोक्तहेतुमुक्त्वा तत्रोक्तरीत्यैव हेतुमुपपादयति ॥ **उत्तमत्वेति** ॥ एतेनेयन्नयेन गतार्थता निरस्ता ॥ **अत इति** ॥ उत्तमत्वक्रमानुसारेण प्राप्तिक्रमाभावेन बाधकाभावादिति भावः ॥ भाष्यं व्याचष्टे ॥ **तत्र तत्रेति** ॥ भाष्यस्य फलितार्थमाह ॥ **किं तु वायुरिति** ॥ भाष्यशेषमवतारयति ॥ **कुत इति** ॥ अस्य अत इति परिहारः । तस्य विवरणम् ॥ **यो हीत्यादि** ॥ हि यस्मादंतिम एव ब्रह्मप्रापिता । राजादौ दर्शनात् । यतो ब्रह्मप्राप्तिश्च वायुनैवातः स एवान्तिम इत्यर्थः । भाष्ये वायुनैव ब्रह्मगमनश्रुतेरित्युक्तहेतोरप्रयोजकत्वनिरासाय । न हि राजानं यः कश्चित्प्रापयतीति न्यायविवरणसूचितायाः यो हीति सामान्यव्याप्तेरुक्तिः । भाष्योक्तश्रुतौ स इति तच्छब्दपरामर्शद्योतनाय पूर्ववाक्यमाह ॥ **तत्पुरुष इति** ॥ तस्याः पूर्वप्रकृतविद्युतः पुरुषो भर्ता मानवः । सर्वमनुस्वामी वायुरित्यर्थः ॥ **अत इति** ॥ वायोरेव ब्रह्मप्रापकत्वश्रवणादन्तिमस्यैव प्रभुप्रापकत्वस्य राजादौ दर्शनाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

**अन्यथेति** । ननु वायोरन्तिमत्वसाधनं विनापि श्रुतिप्रामाण्यादेव अतिप्राधान्यसिद्धिर्भविष्यति । न हि भवति सोमेन्द्रयोः अग्निध्रुवाभ्यां परतः प्राप्यत्वं न समर्थितमित्येतावता विद्यमानमपि तदुत्तमत्वावेदकं प्रमाणमनादृत्य तयोरुत्तमत्वासिद्धिः । ततश्चेदमधिकरणमनारम्भणीयमिति चेत् सत्यं सिध्यत्येव प्रमाणबलात् अधिकार्युत्तमत्वं प्राणस्य, तथापि साक्षाद्भगवत्प्रापकत्वलक्षणं माहात्म्यं न सिध्यति । तद्यथा अमात्योत्तमस्यापि भाविपदनियुक्तस्य राजपुत्रस्य, राजेच्छाविरहात् न राजप्रापकत्वरूपं माहात्म्यम्, अपि तु अवरस्याप्यमात्यस्य तन्माहात्म्यं, तद्वदिहापि मुख्यप्राणस्य तन्माहात्म्यं नेति भ्रमनिरासाय समर्थनीयमेव चरमप्राप्यत्वमिति ॥ **बाधकाभावादिति** ॥ ननु मुख्यवाय्वनन्तरं प्राप्यान्तरसद्भावे प्रमाणमस्ति न वा । आद्ये तदेव वक्तव्यं,

(अभिनवचन्द्रिका)

मानाधीनत्वान्मेयसिद्धेः । किं बाधकाभावोपन्यासेन । द्वितीये वाय्वनन्तरं अन्यः प्राप्योऽस्तीति रिक्तं वचः । न हि भवति नास्ति प्रमाणं अस्तितत्प्रमेयमिति इति चेत्, सत्यम् – प्रमाणमेव प्रमेयसिध्यर्थं वक्तव्यम् । उक्तं च – पूर्वपक्षिणा यदयमङ्गीकारे बाधकाभावमाह तदेव तत्र प्रमाणं बाधकाभावस्य वस्तुतथात्वेन विनाऽनुपपद्यमानत्वात् । तद्यथा रात्रिभोजनं विनाऽनुपपद्यमानं पीनत्वं तत्र प्रमाणमिति ॥ **अतिशयेन प्राधान्यमिति** ॥ सर्वेषां साक्षाद्भगवत्प्रापकत्व-रूपातिशयसहितप्राधान्यमित्यर्थः । एतेन इन्द्रादीनामिव प्रथमप्राप्यत्वेऽपि स्वाभाविकस्वमाहात्म्या-नपायात् अतिशयेन प्राधान्यं न स्यादित्ययुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** वायोः परतः ब्रह्मणोऽर्वाक्गन्तव्योऽस्ति । तथाऽङ्गीकारे बाधकाभावात् । एवं च न वायोः ब्रह्मप्रापकत्वरूपं विशिष्टं माहात्म्यमिति ।

**सिद्धान्तस्तु** नास्त्येव वायोरनन्तरं प्राप्यम् यतः । विद्युत्पतिना वायुनैव ब्रह्मप्राप्तिः न तु तदन्येन । तस्य ब्रह्म प्रापणसामर्थ्याभावात् । न च वायोरपि प्रमाणाभावेन तत्सामर्थ्याभाव इति वाच्यम् । 'स एनान् ब्रह्म गमयति' इति श्रुतेः । 'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चाऽपरः । कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्' इति स्मृतेश्च । अतो वायोरेवान्तिमप्राप्यत्वात् युक्तं तस्याऽतिशयेन प्राधान्यमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**मुख्यवायोरन्तिमत्वसमर्थनादिति** ॥ पूर्वाधिकरणे दिवःप्राप्त्यनन्तरं गम्यवायोर्मुख्यत्व-मुक्त्वाऽधुना तस्यैवान्तिमत्वप्राप्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ तदनन्तरमपि द्वारतया प्राप्तव्यान्तरसद्भावे दिव इव तस्याप्यतिप्राधान्यासिद्धेरित्यर्थः ॥ **किमिति** ॥ ब्रह्ममार्गे वायोरनन्तरं द्वारतया प्राप्योऽस्ति न वेति चिन्ता । तदर्थं तथाभ्युपगमे बाधकं नास्त्युतास्तीति । वायोरपि परतः ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीत्युत्तरभाष्यानुसारेण पूर्वपक्षयति ॥ **ब्रह्मण इति** ॥ **तथाभ्युपगमेऽपीति** ॥ दिवः ब्रह्मणो द्वारतया प्राप्यान्तरसाहित्यदर्शनात् प्रकृतेऽपि मार्गत्वेन हेतुतयाऽभ्युपगमे बाधकाभावादित्यर्थः । एतेन बाधकाभावमात्रस्य प्रमेयासाधकत्वात् कथं तन्मात्रोपन्यास इति निरस्तम् । सत्प्रतिपक्षमाशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतः प्रकारान्तरेण तत्र तत्रोच्यमानत्वादिति भाष्यसूचितं विक्रम इत्युक्तन्यायं विशदयति ॥ **उत्तमत्वेति** ॥

(वाक्यार्थमुक्तावली)

ननु दिवस्पतित्वेनावधृतमुख्यभावस्य वायोः पूर्वप्राप्यत्वे ब्रह्मैकगमयितृत्वाभावेन मुख्यत्वव्याहतिरिति चेन्न । मुख्यप्राणस्य ब्रह्मैकगमयितृत्वे प्रमाणाभावात् । तथा चातिवाहिकस्य मुख्यान्यत्वे पूर्वगमनलिङ्गमप्यप्रयोजकमेवेति भावः । सूत्रे वैद्युतेनेति, भाष्ये च विद्युत्पतिना वायुनेति तृतीया प्रथमार्थे च । अन्तिमप्राप्य इति शेषः । तथा च विद्युतोऽयं वैद्युतः विद्युत्पतिर्वायुरेवान्तिमः प्राप्य इति प्रतिज्ञा न, किंतु वायुरेवान्तिमः प्राप्य इति वक्ष्यन् एवकारव्यावर्त्यप्रदर्शनपरं प्रकारान्तरेणेत्यारभ्य न शङ्कनीयमित्यन्तभाष्यं व्याचष्टे ॥ **तत्र तत्रेत्यादिना नाशङ्कनीय इत्यन्तेन** ॥ प्रतिज्ञातार्थे हेतुं पृच्छति ॥ **कुत इति** ॥ तदुत्तरत्वेनापि वैद्युतेन तत इत्यंशं विद्युत्पतिना वायुनेति भाष्यं यतो ब्रह्मप्राप्तिश्चेत्यादावुपस्कारपूर्वं व्याचष्टे ॥ **ब्रह्मप्राप्तिश्च वायुनैव भवत्यतः स एवान्तिम इति** ॥ ब्रह्मप्रापयितृत्वहेतोरन्तिमत्वसाध्येन व्याप्तिमुपपादयितुमन्तिमत्वस्य व्यापकत्वमाह ॥ **यो हीति** ॥ यो येन ह्यग्निमान् तस्य धूमवत्वेन भाव्यमितिवदियमुक्तिरिति । दृष्टान्तमाह ॥ **राजादाविति** ॥ राजादावन्तिमेनैव गम्यत्वदर्शनादित्यर्थः । तदुक्तं न्यायविवरणे । न हि राजानं यः कश्चित्प्रापयति क्रमसमतिप्रियं चापहायेति हेतुस्वरूपे प्रमाणं पृच्छति ॥ **ब्रह्मपापकत्वं चेति** ॥ तदुत्तरत्वेन वैद्युतेनैव विद्युत्पतिना वायुनैव तच्छ्रुतेर्ब्रह्मगमनमित्येतत्प्रतिपादकश्रुतेरिति भावेन प्रवृत्तं विद्युत्पतिनेत्यादिभाष्यं व्याचष्टे ॥ **तत्पुरुष इति** ॥ विद्युतं प्रस्तुत्य तस्याः पुरुषः पतिर्यो मानवः ज्ञानरूपत्वान्मनुनाम्नो हरेः सम्बन्धी वायुः स एनान्ब्रह्म गमयतीति श्रुतेरित्यर्थः । वायुनेत्यनुक्त्वा वैद्युतेनेति वचनं तत्पुरुषो मानव इति श्रुतिविशेषद्योतनायेति भावः । वैद्युतग्रहणेनैव विद्युत्पतिर्वायुरेवेति स्मृतिश्च सूचितेति भावेनावतार्य व्याचष्टे ॥ **वायोरिवेति** ॥ स्मृतौ प्राणानां मन आदीन्द्रियदेवानां शेषादीनां नायकमृते कस्यापि ब्रह्मगमयितृत्वशक्तिर्नास्तीत्युक्तयोरुत्वमित्युक्तन्यायोऽपि हेतुस्वरूपसाधकमित्युक्तं भवति । तदुक्तं न्यायविवरणे । उत्तमत्वात्तस्यैव ब्रह्मगमयितृत्वशक्तेरिति ।

## तत्त्वसुबोधिनी

**मुख्यवायोरन्तिमत्वेति** ॥ पूर्वाधिकरणे दिवस्पतित्वेन उक्तस्य मुख्यवायोरत्रान्तिमप्राप्यत्वं समर्थ्य तदनन्तरसङ्गतिरिति भावः ॥ **उभयथासम्भव इति** ॥ वायोः उत्तमत्वात् अन्यो मार्गत्वेन नास्ति अर्चिरादिवन्मध्येऽन्योऽपि भविष्यतीत्युभयथासम्भव इति । वायोः उत्तमत्वात् अन्यः

(अभिनवचन्द्रिका)

मानाधीनत्वान्मेयसिद्धेः । किं बाधकाभावोपन्यासेन । द्वितीये वाय्वनन्तरं अन्यः प्राप्योऽस्तीति रिक्तं वचः । न हि भवति नास्ति प्रमाणं अस्तितत्प्रमेयमिति इति चेत्, सत्यम् – प्रमाणमेव प्रमेयसिध्यर्थं वक्तव्यम् । उक्तं च – पूर्वपक्षिणा यदयमङ्गीकारे बाधकाभावमाह तदेव तत्र प्रमाणं बाधकाभावस्य वस्तुतथात्वेन विनाऽनुपपद्यमानत्वात् । तद्यथा रात्रिभोजनं विनाऽनुपपद्यमानं पीनत्वं तत्र प्रमाणमिति ॥ **अतिशयेन प्राधान्यमिति** ॥ सर्वेषां साक्षाद्भगवत्प्रापकत्व-रूपातिशयसहितप्राधान्यमित्यर्थः । एतेन इन्द्रादीनामिव प्रथमप्राप्यत्वेऽपि स्वाभाविकस्वमाहात्म्या-नपायात् अतिशयेन प्राधान्यं न स्यादित्ययुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** वायोः परतः ब्रह्मणोऽर्वाकृगन्तव्योऽस्ति । तथाऽङ्गीकारे बाधकाभावात् । एवं च न वायोः ब्रह्मप्रापकत्वरूपं विशिष्टं माहात्म्यमिति ।

**सिद्धान्तस्तु** नास्त्येव वायोरनन्तरं प्राप्यम् यतः । विद्युत्पतिना वायुनैव ब्रह्मप्राप्तिः न तु तदन्येन । तस्य ब्रह्म प्रापणसामर्थ्याभावात् । न च वायोरपि प्रमाणाभावेन तत्सामर्थ्याभाव इति वाच्यम् । 'स एनान् ब्रह्म गमयति' इति श्रुतेः । 'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चाऽपरः । कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्' इति स्मृतेश्च । अतो वायोरेवान्तिमप्राप्यत्वात् युक्तं तस्याऽतिशयेन प्राधान्यमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**मुख्यवायोरन्तिमत्वसमर्थनादिति** ॥ पूर्वाधिकरणे दिवःप्राप्त्यनन्तरं गम्यवायोर्मुख्यत्व-मुक्त्वाऽधुना तस्यैवान्तिमत्वप्राप्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ तदनन्तरमपि द्वारतया प्राप्तव्यान्तरसद्भावे दिव इव तस्याप्यतिप्राधान्यासिद्धेरित्यर्थः ॥ **किमिति** ॥ ब्रह्ममार्गे वायोरनन्तरं द्वारतया प्राप्योऽस्ति न वेति चिन्ता । तदर्थं तथाभ्युपगमे बाधकं नास्त्युतास्तीति । वायोरपि परतः ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीत्युत्तरभाष्यानुसारेण पूर्वपक्षयति ॥ **ब्रह्मण इति** ॥ **तथाभ्युपगमेऽपीति** ॥ दिवः ब्रह्मणो द्वारतया प्राप्यान्तरसाहित्यदर्शनात् प्रकृतेऽपि मार्गत्वेन हेतुतयाऽभ्युपगमे बाधकाभावादित्यर्थः । एतेन बाधकाभावमात्रस्य प्रमेयासाधकत्वात् कथं तन्मात्रोपन्यास इति निरस्तम् । सत्प्रतिपक्षमाशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतः प्रकारान्तरेण तत्र तत्रोच्यमानत्वादिति भाष्यसूचितं विक्रम इत्युक्तन्यायं विशदयति ॥ **उत्तमत्वेति** ॥

(वाक्यार्थमुक्तावली)

ननु दिवस्पतित्वेनावधृतमुख्यभावस्य वायोः पूर्वप्राप्यत्वे ब्रह्मैकगमयितृत्वाभावेन मुख्यत्व-व्याहतिरिति चेन्न । मुख्यप्राणस्य ब्रह्मैकगमयितृत्वे प्रमाणाभावात् । तथा चातिवाहिकस्य मुख्यान्यत्वे पूर्वगमनलिङ्गमप्यप्रयोजकमेवेति भावः । सूत्रे वैद्युतेनेति, भाष्ये च विद्युत्पतिना वायुनेति तृतीया प्रथमार्थे च । अन्तिमप्राप्य इति शेषः । तथा च विद्युतोऽयं वैद्युतः विद्युत्पति-र्वायुरेवान्तिमः प्राप्य इति प्रतिज्ञा न, किंतु वायुरेवान्तिमः प्राप्य इति वक्ष्यन् एवकार-व्यावर्त्यप्रदर्शनपरं प्रकारान्तरेणेत्यारभ्य न शङ्कनीयमित्यन्तभाष्यं व्याचष्टे ॥ **तत्र तत्रेत्यादिना नाशङ्कनीय इत्यन्तेन** ॥ प्रतिज्ञातार्थे हेतुं पृच्छति ॥ **कुत इति** ॥ तदुत्तरत्वेनापि वैद्युतेन तत इत्यंशं विद्युत्पतिना वायुनेति भाष्यं यतो ब्रह्मप्राप्तिश्चेत्यादावुपस्कारपूर्वं व्याचष्टे ॥ **ब्रह्मप्राप्तिश्च वायुनैव भवत्यतः स एवान्तिम इति** ॥ ब्रह्मप्रापयितृत्वहेतोरन्तिमत्वसाध्येन व्याप्तिमुपपादयितु-मन्तिमत्वस्य व्यापकत्वमाह ॥ **यो हीति** ॥ यो येन ह्यग्निमान् तस्य धूमवत्वेन भाव्यमिति-वदियमुक्तिरिति । दृष्टान्तमाह ॥ **राजादाविति** ॥ राजादावन्तिमेनैव गम्यत्वदर्शनादित्यर्थः । तदुक्तं न्यायविवरणे । न हि राजानं यः कश्चित्प्रापयति क्लृप्तमतिप्रियं चापहायेति हेतुस्वरूपे प्रमाणं पृच्छति ॥ **ब्रह्मपापकत्वं चेति** ॥ तदुत्तरत्वेन वैद्युतेनैव विद्युत्पतिना वायुनैव तच्छ्रुतेर्ब्रह्मगमन-मित्येतत्प्रतिपादकश्रुतेरिति भावेन प्रवृत्तं विद्युत्पतिनेत्यादिभाष्यं व्याचष्टे ॥ **तत्पुरुष इति** ॥ विद्युतं प्रस्तुत्य तस्याः पुरुषः पतिर्यो मानवः ज्ञानरूपत्वान्मनुनाम्नो हरेः सम्बन्धी वायुः स एनान्ब्रह्म गमयतीति श्रुतेरित्यर्थः । वायुनेत्यनुक्त्वा वैद्युतेनेति वचनं तत्पुरुषो मानव इति श्रुतिविशेष-द्योतनायेति भावः । वैद्युतग्रहणेनैव विद्युत्पतिर्वायुरेवेति स्मृतिश्च सूचितेति भावेनावतार्य व्याचष्टे ॥ **वायोरिवेति** ॥ स्मृतौ प्राणानां मन आदीन्द्रियदेवानां शेषादीनां नायकमृते कस्यापि ब्रह्मगमयितृत्वशक्तिर्नास्तीत्युक्तयोरुत्वमित्युक्तन्यायोऽपि हेतुस्वरूपसाधकमित्युक्तं भवति । तदुक्तं न्यायविवरणे । उत्तमत्वात्तस्यैव ब्रह्मगमयितृत्वशक्तेरिति ।

## तत्त्वसुबोधिनी

**मुख्यवायोरन्तिमत्वेति** ॥ पूर्वाधिकरणे दिवस्पतित्वेन उक्तस्य मुख्यवायोरत्रान्तिमप्राप्यत्वं समर्थ्य तदनन्तरसङ्गतिरिति भावः ॥ **उभयथासम्भव इति** ॥ वायोः उत्तमत्वात् अन्यो मार्गत्वेन नास्ति अर्चिरादिवन्मध्येऽन्योऽपि भविष्यतीत्युभयथासम्भव इति । वायोः उत्तमत्वात् अन्यः

(तत्त्वसुबोधिनी)
मार्गत्वेन नास्ति ॥ **तथा दर्शनादिति** ॥ राज्ञः समीपस्थस्य अन्तिमस्य खण्डाधिपत्यादि-प्रापयितृत्वस्य दृष्टत्वादित्यर्थः । तत्पुरुषो मानव इति । उपलक्षणमेतत् । वायुरेव गमयति । तस्य ह्येषा शक्तिरिति श्रुतेश्चेत्यपि द्रष्टव्यम् ।

## वाक्यार्थविवरणम्

**ब्रह्मण इति** ॥ कार्याकार्यब्रह्मणः सकाशादर्वागित्यर्थः ॥ **परत इति** ॥ अनन्तरमित्यर्थः ॥ **स एवेति** ॥ वायोरनन्तरमन्यस्य प्राप्यत्वे तस्यैवान्तिमप्राप्यत्वप्राप्त्याऽधिकार्युत्तमत्वापत्तिरिति भावः । प्रकारान्तरेणेत्यस्यार्थमाह ॥ **सोमं वैश्वानरमित्यादिना** ॥ **तथा दर्शनादिति** ॥ अन्तिमस्य मन्त्रिण एव राजप्रापकत्वदर्शनादित्यर्थः ।

## वाक्यार्थमञ्जरी

वैद्युतेनैव विद्युत्पतिना वायुनैव ब्रह्मप्राप्तेर्यतस्ततः स एवान्तिमप्राप्यः तदेवं कुतः तच्छ्रुतेस्तेनैव ब्रह्मप्राप्तः स एवेति श्रुतिसिद्धत्वादिति भावः ॥ **राजादाविति** ॥ क्लृप्तस्यातिप्रियस्यान्तिमप्राप्यस्य मन्त्रिण एव राजादिप्रापयितृत्वदर्शनादिति भावः ॥ **तत्पुरुष इति** ॥ तस्याः विद्युतः पुरुषो भर्ता मननान्मनुः भगवान् तत्पुत्रत्वान्मानवो वायुरेनानधिकारिणो ब्रह्म गमयतीत्यर्थः ॥

॥ इति वैद्युताधिकरणम् ॥ ५ ॥

## ६. कार्याधिकरणम्

**ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ ७ ॥**

'स एनान्ब्रह्म गमयति' इति कार्यं ब्रह्म गमयतीति बादरिर्मन्यते ।

'ऋते देवान्परं ब्रह्म कः पुमान्प्राप्नुयात्कचित् ।
यद्यपि ब्रह्मदृष्टिः स्याद्ब्रह्मलोकमवाप्नुयात्' इत्यध्यात्मवचनात्तस्यैव गत्युपपत्तेः ॥

### तत्त्वप्रदीपिका

एवं तावद्यथोक्तमार्गेण गतानां ब्रह्मविदां ब्रह्मगमनमस्तीत्युक्तम् । किं तद्गम्यमित्यधुना निरूप्यते । किं कार्यमवरं ब्रह्माथ कारणं परमिति ? तत्रैवं बादरिर्मन्यते । न तेषां सर्वेषां तदा परमेव प्राप्यं किन्तु कैश्चित्कार्यमेव गम्यमिति ॥

### तत्त्वप्रकाशिका

एवं मार्गं विचार्यात्र तेन मार्गेण गतानां गम्यनिरूपणादस्ति शास्त्रादिसङ्गतिः । अन्यथानुस्मृत्यनुपपत्तेर्निरूपणीयमेतत् । 'वायुरेव ब्रह्म नयति' इत्युक्तं तद्ब्रह्मात्र विषयः । किं चतुर्मुखाख्यं किं वा परमुतोभयमिति सन्देहः । ब्रह्मशब्द एव सन्देहबीजम् । तृतीयपक्षेऽप्येकस्योभय प्राप्त्यसम्भवात्कांश्चित्कार्यं कांश्चित्परमित्यर्थः स्यात् । तत्र किं केनचित्क्रमेणोभयप्राप्तिरुत क्रमं विनैव । क्रमोऽपि कश्चन योग्यतारूपस्तदन्यो वासाविति सन्देहः । उभयथा सम्भवः सन्देहबीजम् । किं तावत्प्राप्तमिति । तत्र सूत्रं पठित्वा व्याचष्टे ॥ **कार्यमिति** ॥ 'स एनान् ब्रह्म गमयति' इत्यत्र कार्यमुत्पत्तिमद्ब्रह्म वायुर्गमयतीति बादरिराचार्यो मन्यत इत्यर्थः । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात्कथमयमर्थ इत्यत आह ॥ **ऋत इति** ॥ ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि नात्र तत्स्वीकारो युक्तः । 'तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते' इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वात्ततोऽर्वाक्चतुर्मुखस्यैव गत्युपपत्तेस्तथा स्मृत्युक्तत्वाच्चेति भावः ॥

### भावबोधः

अत्र तेन मार्गेण गतानामिति । एतच्च गम्यनिरूपणस्य प्राथमिकत्वशङ्कापरिहारार्थ मेवोक्तम् । मार्गनिरूपणे गम्यनिरूपणस्यानाकाङ्क्षितत्वात् । न तु गन्तृनिर्देशार्थम् । देहलयवतामपि

(भावबोधः)

गन्तृत्वादिति ज्ञातव्यम् । अत एव मार्गं विचार्येत्येतदपि सार्थकम् ॥ **गम्यनिरूपणादिति** ॥ पूर्वाधिकरणे मुख्यप्राणो यद्ब्रह्म गमयतीत्युक्तम्, अत्र तद्गम्यनिरूपणादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र गम्यं किं कार्यपरयोरन्यतरदेवतोभयमपीति चिन्ता । तदर्थं बादरिजैमिनि-मताश्रयेण तत्तत्पक्षसाधकत्वेनोक्तानां गत्युपपत्त्यादीनां ब्रह्मशब्दमुख्यार्थत्वादीनां मुनिमतयोश्च किमेकाधिकारिविषयतया अन्योन्यनिषेधकत्वेन विरोध उत भिन्नाधिकारिविषयतया अन्योन्य-पक्षानिषेधकत्वेनाविरोधो वेति । तदर्थं भिन्नाधिकारिकत्वपक्षेऽपि तत्तत्प्राप्तौ तेषां तेषामधिकारिणां योग्यतारूपो नियामकः क्रमो नास्त्युतास्तीति । तदर्थं कार्यपरयोरुभयोरपि प्राप्यत्वेऽप्रतीकालम्बन-प्रतीकालम्बनत्वाख्ययोग्यतारूपक्रमसत्त्वे च विशेषप्रमाणं नास्त्युतास्तीति । चतुर्मुखमुक्तिपर्यन्तं संततत्वनियमाद्बन्धस्य तावद्भगवत्प्राप्तिर्नास्तीति नियम इति न्यायविवरणोक्तयुक्तिं प्रमाणोदाहरण-पूर्वकमाह— **तथापि प्रकृतेर्बन्ध इत्यादिना** ॥ **चतुर्मुखस्यैव गत्युपपत्तेरिति** ॥ अस्यैव गत्युपपत्ते-रिति भाष्यव्याख्यनपरेणानेन तावद्भगवत्प्राप्तिर्नास्तीति नियम इति न्यायविवरणस्यापि फलितं दर्शितमिति ज्ञातव्यम् ।

## भावदीपः

मार्गपेटिकयास्यावसरसङ्गतिमाह ॥ **एवमिति** ॥ **गम्येति** ॥ चरमप्राप्येत्यर्थः ॥ **अनु-स्मृतीति** ॥ गत्यनुस्मृतीत्यर्थः । स्वहृदयमारभ्य ब्रह्मपर्यन्तत्वाद् गतेरिति भावः । अव्यवहितपूर्व-सङ्गतिं सूचयन् विषयमाह ॥ **वायुरेवेति** ॥ तच्छ्रुतेरिति श्रुत्युक्तब्रह्मस्वरूपनिरूपणात्पूर्वसङ्गतिरिति भावः । न्यायविवरणे चतुर्धाऽस्य पूर्वपक्षप्रतीतावपि त्रित्वे पर्यवसानात्तदनुगुणतया त्रेधा संशयस्थितिमाह ॥ **किमित्यादिना** ॥ तदन्यो वासावित्यन्तेन ॥ कार्यमिति योगानुरोधादाह ॥ **चतुर्मुखेति** ॥ चतुर्मुखाख्यमेवेत्यर्थः । परमिति योगानुरोधादाह ॥ **किं वा परमिति** ॥ परं ब्रह्मैवेत्यर्थः । अप्रतीकेति योगानुरोधा उभयमिति कोटिः । तत्राप्यप्रतीकालम्बनपदप्रयोग-व्यावर्त्यचोद्यानुगुणसन्देहं तृतीयकोटिपरिष्कारेणाह ॥ **तृतीयेत्यादिना** ॥ **योग्यतेति** ॥ प्रतीका-लम्बनाऽप्रतीकालम्बनादित्यर्थः ॥ **तदन्य इति** ॥ तत्तत्सौकर्यरूप इत्यर्थः ॥ **उभयथेति** ॥ लोके योग्यतारूपः कार्यरूपोऽप्यभिमतकार्यप्राप्तौ क्रमादृश्यत इति भावः । भाष्यं व्याचष्टे ॥ **स इति** ॥ अत्रेति वायुरिति च शेषोक्तिः । उपपत्तेरित्युक्तेः सार्थक्यायाह ॥ **ब्रह्मशब्दस्येति** ॥ भाष्योक्तस्मृतौ

(भावदीपः)

कः पुमान्प्राप्नुयादित्येवोक्तेरप्राप्त्यनुपपत्तेरनुक्तेः चतुर्मुखपर्यन्तं सन्तततत्वनियमाद्बन्धकस्येत्यन्यत्रोक्त-युक्तिं पूर्वपादन्यायविवरणोक्तश्रुत्या असिद्धिं निरस्यन्नेवाह ॥ **तथापीति** ॥ स्वोदयाज्ज्ञानस्य फलदत्वेऽपीत्यर्थः । भाष्ये वचनोक्तिरुपपत्तेर्दार्ढ्यायेति भावेनाह ॥ **तथेति** ॥

## अभिनवचन्द्रिका

**तेन मार्गेण गतानामिति** । ननु अर्चिरादिमार्गेण गतानां गम्यनिरूपणादित्ययुक्तम् । अप्रतीकालम्बनानामुत्तमेषु लयाधिकारिणां मार्गशून्यत्वात् । न च अप्रतीकालम्बनानामपि मार्गोऽस्तीति वक्तुं युक्तम् । 'उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेवतु' इति उत्क्रान्तानामेव अर्चिरादिमार्गाभिधानादिति चेत्, उच्यते – द्विविधा हि अप्रतीकालम्बनाः । स्वोत्तमेषु देहलययोग्याः, उत्क्रान्तियोग्याश्चेति । तत्र देहलययोग्यानां मार्गाभावे उत्क्रान्तियोग्यानामृषीणां राज्ञां च अस्त्येव मार्ग इति । 'अप्रतीकालम्बनान्नयति' इति सूत्रे ऋष्यादीनामेव गम्यमुच्यत इति । उक्तं च ऋष्यादीनामप्यप्रतीकालम्बनत्वम् । 'अप्रतीकादेवतास्तु ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा' इति । एकस्योभयप्राप्त्यसम्भवादिति । एकस्यैवा-वस्थानायोभयप्राप्त्यसम्भवादित्यर्थः । एतेन एकस्यैव अर्चिरादिसर्वलोकप्राप्तिवत् उभयप्राप्तिसम्भवात् उभयप्राप्त्यसम्भावादित्ययुक्तमिति परास्तम् । एकस्य मार्गतया अपरस्य गम्यतया प्राप्तिसम्भवेऽपि उभयोरपि गम्यतया प्राप्त्यसम्भवस्याऽपरिहार्यत्वात् । अर्थः स्यादिति । 'स एनान् ब्रह्म गमयति' इति श्रुत्यर्थः स्यादित्यर्थः ॥ **केनचित् क्रमेणेति** ॥ किञ्चिन्नियामकमपेक्ष्योभयप्राप्तिर्भवति । उताऽनपेक्ष्येत्यर्थः ॥ **क्रमोऽपीति** ॥ नियामकभूतधर्मोपीत्यर्थः । इति जैमिनिराचार्यो मन्यत इति भाव इति । इति पूर्वपक्षी मन्यत इति भावः । एतेन 'मुनिमतयोश्चान्यानिषेधकत्वेनाऽविरोधात्' इत्युत्तरग्रन्थविरोध इति परास्तम् ॥ **प्रतिपत्त्यभावादिति** ॥ उपासनाभावादित्यर्थः । एवं बादिरिजैमिनिमतानुसारिपूर्वपक्षमुक्त्वा, उभयप्राप्तेः श्रुत्यर्थत्वमङ्गीकृत्य, सिद्धान्त्यभिमतं विशेषं दूषयतः पूर्वपक्षमाह – **तृतीयपक्षेऽपीति** ॥ **पक्षद्वयेऽपीति** ॥ अर्चिरादिमार्गेण गतस्य परप्राप्तिः, कार्यप्राप्तिरिति पक्षद्वयेऽपीत्यर्थः । **क्रमस्येति** ॥ केषाञ्चित्कार्यप्राप्तिरेव, न केषाञ्चित् कार्यप्राप्तिरिति नियमप्रयोजकस्याऽधिकारिगतस्य क्रमस्य तारतम्यस्याऽदर्शनादित्यर्थः । क्रममङ्गीकृत्यापि सिद्धान्त्यभिमतविशेषं दूषयति – **क्रमपक्षेत्यादिना** ॥ **सौकर्यमिति** । सौलभ्यं शक्तिरिति यावत् ।

(अभिनवचन्द्रिका)

नास्त्येव तारतम्यं, राजमन्दिरे भोजनोपविष्टानां राजपुत्राणामिच्छया व्यञ्जनादिप्राप्तिवत् अधिकारिणामिच्छयैव कार्यपरयोः प्राप्तिरिति प्रागुक्तम् । इदानीं तु अस्त्येव तारतम्यं, किंतु न योग्यतारूपम् । अप्रामाणिकत्वात् । किं तर्हि अतिफलितमाम्रवृक्षं गतवतो यस्याऽऽरोहणशक्तिः तस्य महाफलप्राप्तिः । यस्य नारोहणशक्तिः तस्य गलितफलप्राप्तिरिति दर्शनात् । यस्य परब्रह्मप्राप्तौ शक्तिः तस्य तत्प्राप्तिः । यस्य तु सत्यलोकपर्यन्तं गतस्य शक्तिक्षयः तस्य कार्यप्राप्तिरुच्यत इति भेदः **॥ महाफल इति ॥** महाफले क्रमस्य तारतम्यभावस्यायोगात् । स्वरूपतारतम्यस्याऽदर्शनात् शक्तितारतम्यमेव विवक्षितमिति भावः । बादरिजैमिनिमतावलम्बिभ्यामुक्तः श्रुत्यर्थः कुतो न ग्राह्य इति पृच्छति **कुत इति ॥ उभयपक्षेति ॥** परस्परं निरूपितदोषादेव श्रुतेरर्थद्वयं न भवतीत्यर्थः । तदेव विशदयति **परप्राप्तीत्यादिना ॥** अस्माद्वाक्यात्परं लेखकदोषात् उत्तरत्र पतितं 'नापि परमेवेत्यवधारणे हेतुरस्ति' इति वाक्यं ग्राह्यम् **॥ कार्यप्राप्तिपक्ष इति ॥** इतःपरं लेखकदोषादुत्तरत्र पतितं 'कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावात्' इति वाक्यं ग्राह्यम् । ततश्चैवं टीकावाक्यपाठः 'परप्राप्तिपक्षे गत्यनुपपत्त्या दोषस्योक्तत्वान्नापि परमेवेत्यवधारणे हेतुरस्ति । कार्यप्राप्तिपक्षे च ब्रह्मशब्दाऽमुख्यत्वादिदोषाणामुक्तत्वात्कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावात् । न चोभयप्राप्तिग्रहणे दोषद्वयापातः । येषां परप्राप्तिस्तेषां बद्धत्वेऽपि प्रमाणबलेन गत्युपपत्तेः श्रुत्यादीनां चाऽन्यनिषेधकत्वाभावात् । केषांचित्कार्यप्राप्तेरेव प्रमाणबलेनोपपत्तेः' इति । अवश्यं चैतदेवं विज्ञेयम् । 'न च उभयप्राप्तिग्रहणे दोषद्वयापात' इति प्रतिज्ञाय 'कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावात्' इत्यभिधानस्याऽसङ्गतत्वात् । ननु कार्यब्रह्मदर्शनाभावात्कार्यप्राप्तिरयुक्तेत्यत आह – **कार्यप्राप्तिमतां चेति ॥** एवं तर्हि मुनिमतयोर्विरोध इत्यत आह **मुनिमतयोश्चेति ॥ क्रमानुसारीति ॥** योग्यतातारतम्यानुसारीत्यर्थः ।

**पूर्वपक्षस्तु** अर्चिरादिमार्गेण गतानां सर्वेषां कार्यब्रह्मप्राप्तिरेव न परप्राप्तिः । तत्प्राप्तेरेवोपपन्नत्वात् । देवव्यतिरिक्तानां परप्राप्त्ययोग्यत्वस्य 'ऋते देवान् परम्ब्रह्म कःपुमान् प्राप्नुयात्कचित्' इति स्मृतिसिद्धत्वात् । 'यदि ह वा परमभि पश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मखम्' इति श्रुतेश्च । न च – ब्रह्मविदाप्नोति परमिति साक्षाद्ब्रह्मप्राप्त्युक्तिविरोधः । उदाहृतश्रुतेः कार्यब्रह्मप्राप्त्यनन्तरं समीप एव परप्राप्तिरित्यर्थकत्वात् । कदा परब्रह्मप्राप्तिरिति चेत् उच्यते

(अभिनवचन्द्रिका)
समस्तकार्यविलयानन्तरं कार्याऽधिपतिना चतुर्मुखेन सह तत्प्रसादान्मुमुक्षुः परं प्राप्नोति । 'न हि ब्रह्माणमभिसंपद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छति' इत्यभिधानात् । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चर' इति स्मृतेश्चेत्येकः ।

**अपरस्तु पूर्वपक्षः** अर्चिरादिमार्गेण परमेव ब्रह्म प्राप्नोतीति । 'स एनान् ब्रह्म गमयति' इति श्रुतेरर्थः । ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् । न च संसारिणां ब्रह्मप्राप्त्यसम्भवान्मुख्यार्थपरित्याग इति वाच्यम् । श्रवणादिसाधनैः परब्रह्मण एवाऽपरोक्षीकृतत्वेन तत्प्राप्तेरेव युक्तत्वात् । प्रत्युत कार्यप्राप्तिरेवाऽनुपपन्ना तद्दर्शनाऽभावात् । किं च न कार्यविषये उपासना । नापि कार्यं ब्रह्म प्राप्नुवानीत्यभिसन्धिर्विद्यते । न हि दर्शनोपासनाऽभिसन्ध्यभावे तत्प्राप्तिर्युक्ता । परब्रह्मविषये तु सन्त्येव दर्शनोपासनाऽभिसन्धयः । ततश्च परप्राप्तिरेव श्रुत्यर्थः । कार्यप्राप्तिर्वा उभयप्राप्तिर्वा न श्रुत्यर्थ इति ।

**अन्यस्तु पूर्वपक्षः** कार्यप्राप्तिमात्रं न श्रुत्यर्थः । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वस्य सर्वात्मना त्यागायोगात् । नापि परब्रह्मप्राप्तिमात्रं श्रुत्यर्थः । 'प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति श्रुतिविरोधात् । किन्तु उभयप्राप्तिः श्रुत्यर्थः । परं तु कार्यपरब्रह्मगन्तॄणां तत्प्राप्तौ न स्वरूपतारतम्यं निमित्तं, किं तु – राजपुत्राणां भोजनसमये विलक्षणव्यञ्जनप्राप्ताविवेच्छैव शरणमित्येकः पूर्वःपक्षः । अपरस्तु पूर्वपक्षः अस्त्येव कार्यपरब्रह्मप्राप्तौ साधनतारतम्यं निमित्तं, महाफलस्य साधनतारतम्य-मन्तराऽयोगात्, किंनाम न तद्योग्यता तारतम्यम् । अपि तु यस्य कार्यप्राप्तौ सौकर्यं तस्य तत्प्राप्तिः । यस्य परप्राप्तौ सौकर्यं तस्य तत्प्राप्तिरिति ।

**सिद्धान्तस्तु** 'वायुः प्रतीकालम्बनान्मनुष्यांश्च कार्यं नयती'त्यर्थत्वे 'सर्वान् परमेव नयति' इत्यर्थत्वे च दोषसद्भावात् । न च – इच्छावशेनैव कार्यपरप्राप्त्योः सम्भवात् अप्रतीकालम्बनत्वादि विशेषाऽङ्गीकारो व्यर्थ इति वाच्यम् । 'स यथाकामो भवति' इति श्रुतौ तत्प्राप्तीच्छूनामिच्छानुसारेण तत्प्राप्तिप्रतिषेधात् । न च प्रतीकालम्बनत्वादिविभागे प्रमाणाऽभावः । 'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्' इति स्मृतेः । 'अन्तः प्रकाशा बहिःप्रकाशा' इति श्रुतेश्च तत्र प्रमाणत्वात् । अतो ज्ञानिनां प्रलये पूर्वं परब्रह्मप्राप्तिसद्भावात् तथाऽनुस्मृतिरुपपन्नेति सिद्धम् ।

**॥ इति श्रीमत्सत्यनिधितीर्थ श्रीचरण चरणाराधक श्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्वप्राकाशिकाव्याख्याऽभिनवचन्द्रिकायां चतुर्थाऽध्यायस्य तृतीयः पादः समाप्तः ॥**

## वाक्यार्थमुक्तावली

**तेन मार्गेण गतानामिति ॥** नन्वत्र पादे तेन मार्गेण गतानामपि देवानां गम्यविचारात्कथमेतदिति चेन्न । तेषामपि देवत्वप्राप्त्यव्यवहितपूर्वजन्मन्युत्क्रान्तानां तेन मार्गेण गमनाङ्गीकारेणाविरोधात् । विस्तृतं चैतत्प्रमेयमुक्तावल्याम् । भावबोधे तु एतच्च गम्यनिरूपणस्य प्राथमिकत्वशङ्कानिरासार्थमेवोक्तम् । मार्गनिरूपणे गम्यनिरूपणस्यानाकाङ्क्षितत्वात् । न तु गन्तृनिर्देशार्थे देहलयवतामपि गन्तृत्वादित्युक्तम् । केचित्तु अप्रतीकालम्बनेषु ऋषिप्रभृतीनां देवातिरिक्तानामपि प्रविष्टत्वात्तेषां चोत्क्रान्तिमार्गभात्कात्तद्विवक्षया तेन मार्गेणेत्युक्तमित्याहुः । वायुरेव **ब्रह्म नयतीत्युक्तमिति ॥** वायुर्यद्ब्रह्म नयतीत्युक्तं तद्ब्रह्मणोऽत्र विचारादनन्तरसङ्गतिरिति भावः ॥ **किमिति ॥** किं चतुर्मुखाख्यमेवोत चतुर्मुखाख्यं परं चेत्युभयमित्येकः संशयः । किं परमेवोतोभयमित्यपर इत्यर्थः बादरिमतावलम्बनेन जैमिनिमतावलम्बनेन च प्रधानपूर्वपक्षद्वयाङ्गीकारात् ॥ **तृतीयपक्षेऽपीति ॥ उभयप्राप्तिरिति ।** सिद्धान्त्यभिमतपक्षेऽप्येकस्य युगपदुभयप्राप्त्यसम्भवात्कांश्चित्कार्यं नयति कांश्चित्परं नयतीति स एनान्ब्रह्म गमयतीति श्रुत्यर्थः स्यादित्यर्थः । ततश्च किं, तत्राह ॥ **तत्रेति ॥** उभयप्राप्तिपक्षेऽप्यवान्तरपूर्वपक्षसद्भावादिति द्विविधः सन्देह इत्यन्वयः ।

**केनचिदिति ॥** योग्यतादिक्रमेण केषाञ्चित्कार्यप्राप्तिः केषाञ्चित्परप्राप्तिर्वा उत क्रमं विना ऐच्छिकतया केषाञ्चित्परप्राप्तिः केषाञ्चित्कार्यप्राप्तिर्वेत्यर्थः ॥ **क्रमोऽपीति ॥** क्रमोऽपि कश्चिद्योग्यतारूपस्सौकर्यक्रमो वेत्यर्थः । ततश्चायं समुदायार्थः । स एनान्ब्रह्मगमयतीत्यत्र गम्यतयोक्तब्रह्मपरापरयोरन्यतरदेवेति नियम उतोभयमपीति । तदर्थमपरमेवेति नियमः परमेवेति नियम इति नियमसाधकयोः प्रमाणयोः प्रतीकाप्रतीकालम्बनत्वरूपपुरुषयोग्यताभेदेनाविरोधोन्नयनेनोभयोरपि गम्यत्वव्युत्पादनं न शक्यमुत शक्यमिति । स एनान् ब्रह्म गमयतीति बादरिर्मन्यत इति भाष्यस्य पूर्णत्वात्स एनान्ब्रह्म गमयतीति द्विरावर्तते । आवर्तनस्याद्यस्य इतीत्यनन्तरमत्रेति शेषः । द्वितीये तत्स्थपदानां सूत्रेणान्वयः । इतीत्यतः परमुच्यत इति शेष इत्यभिप्रेत्य व्याचष्टे ॥ **स एनानिति ॥** सौत्रस्य कार्यमित्यस्य श्रौतेन ब्रह्मेत्यनेनान्वय इत्युक्तम् । कार्यमुत्पत्तिमद्ब्रह्मेति । स इत्यस्यार्थो वायुरिति । अस्य गत्युपपत्तेरित्यत्र पूर्वसूत्रादेवेत्यनुवृत्याऽन्वेतीति भावेन भाष्ये तस्यैव

(वाक्यार्थमुक्तावली)

गत्युपपत्तेरित्युक्तम् । तस्य चतुर्मुखस्यैव गत्युपपत्तेश्चतुर्मुखगमनस्यैवोत्पत्तिसिद्धत्वादिति तदर्थमभिप्रेत्य कोऽसावुपपत्तिरित्यतः सान्तानिकेति न्यायमालोक्तेरित्यभिप्रायेण न्यायं विशदयति ॥ **तथापि प्रकृतेरिति** ॥ सन्ततत्वादविनाशित्वात् । एवमुपपत्तिसिद्धेऽर्थे स्मृतिरभ्युच्चयत्वेनोदाहृतेत्याह ॥ **तथेति** ॥ यद्यपि ब्रह्मदृष्टिर्वर्तते ब्रह्मलोकं परब्रह्मलोकं चावाप्नुयात्सर्वत्र तदवस्थानात् । तथापि कः पुमान् बद्धो देवान् ब्रह्मादीन् विना कचित् कियत्कालं चतुर्मुखमुक्तिपर्यन्तं परब्रह्म प्राप्नुयात् । किं तु ब्रह्मलोकं चतुर्मुखलोकमेवाप्नुयादिति स्मृत्यर्थः ।

## तत्त्वसुबोधिनी

तेन मार्गेण **गतानामिति** ॥ एतच्च गम्यनिरूपणस्य प्राथमिकत्वशङ्कापरिहारार्थमेवोक्तम् । मार्गनिरूपणे गम्यनिरूपणस्य अनाकाङ्क्षितत्वात् गन्तृनिर्देशार्थं देहलयवतामपि गन्तृत्वादि ज्ञातव्यम् । अत एवैवं मार्गं विचार्येत्येतदपि सार्थकम् ॥ **गम्यनिरूपणादिति** ॥ पूर्वाधिकरणे मुख्यप्राणो यद्ब्रह्म गमयतीत्युक्तं अत्र तद्गम्यनिरूपणादनन्तरसङ्गतिरिति भावः । **अन्यथानुस्मृत्यनुपपत्तेरिति** ॥ गम्यनिरूपणाभावे वैय्यर्थेन मार्गानुस्मृतेरेव अनुपपत्तेरित्यर्थः । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि नात्र मुख्यत्वाङ्गीकारः इत्यतः उपपत्तेरिति सूत्रांशोक्तयुक्तिमाह ॥ **ब्रह्मशब्दस्येति** ॥ **ततो अर्वागिति** ॥ मुक्तेः पूर्वमित्यर्थः, बन्धकाल इति यावत् । तदतिस्मृतौ देवानृते परं ब्रह्म कः प्राप्नुयादित्युक्ते तर्हि ब्रह्मदर्शनं व्यर्थमित्यत उक्तं **यद्यपीति** ॥ तथा च ब्रह्मदृष्ट्या ब्रह्मलोकप्राप्तौ नृणां देवप्राप्त्यनन्तरं परब्रह्मप्राप्तिः भवतीति भावः ।

## वाक्यार्थविवरणम्

**तदन्य इति** ॥ यस्य यत्प्राप्तौ सौकर्यं तस्य तत्प्राप्तिरिति सौकर्यरूपः क्रम इत्यर्थः । भाष्ये यद्यपि ब्रह्मदृष्टिः परब्रह्मापरोक्षज्ञानं स्यात् भवति, तथापि ब्रह्मलोकं चतुर्मुखलोकम् अवाप्नुयादित्यर्थः ।

## वाक्यार्थमञ्जरी

**अनुस्मृत्यनुपपत्तेरिति** ॥ मार्गवद्गम्यस्याप्यनुस्मर्तव्यत्वादिति भावः ॥ विनैवेत्यस्येति संदेह इति वक्ष्यमाणेनान्वयः संदेहबीजं सन्देहद्वयबीजम् ॥ ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ स

(वाक्यार्थमञ्जरी)

एनानित्यत्रोक्तं ब्रह्मकार्यमुत्पत्तिमच्चतुर्मुखमेव कुतो ज्ञानिनां बद्धत्वेनास्य गत्युपपत्तेः । चतुर्मुखप्राप्तेरेवोपपत्तेरिति बादरिराचार्यो मन्यत इत्यर्थः ॥ सन्ततत्वात् अनुस्यूतत्वात् ॥ **चतुर्मुखस्यैवेति** ॥ अबद्धत्वेनैव भगवतः प्राप्यत्वादिति भावः ॥

## सूत्रभाष्यम्

### ॐ विशेषितत्वाच्च ॐ ॥ ८ ॥

**'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति कौषारवश्रुतौ ॥**

## तत्त्वप्रदीपिका

**तर्हि वायुमेव प्राप्य तिष्ठन्तु ते नो चेत्परं ब्रह्मेति च नाशङ्कनीयमित्याह– विशेषितत्वाच्च ॥ 'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखम्' इत्यादि विशेषितत्वाच्च । अतः परब्रह्मदर्शिनः कथमवरब्रह्मणि स्थितिरिति च संशयोऽनुपपन्नः, प्रमाणप्रसिद्धेः ॥**

## तत्त्वप्रकाशिका

**न केवलं युक्तिमात्रेण श्रुतेरन्यार्थकल्पनमपि तु विशेषश्रुतेश्चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति ॥ विशेषितत्वाच्चेति ॥ भाष्यस्य सूत्रेणान्वयः ॥**

## भावदीपः

सूत्रे चशब्दादाह ॥ **न केवलमिति** ॥ **युक्तिमात्रेणेति** ॥ एतच्चोपपत्तेरिति यथाश्रुत-सूत्राभिप्रायं, भाष्यदिशा तु युक्तिस्मृतिमात्रेणेति बोध्यम् । श्रुतेः ब्रह्म गमयतीति श्रुतेरित्यर्थः । अनन्वयनिरासायाह ॥ **भाष्यस्येति** ॥

## वाक्यार्थमुक्तावली

ब्रह्मणश्चतुर्मुखत्वेन श्रुतौ विशेषितत्वाच्चेति सूत्रार्थः ।

## वाक्यार्थविवरणम्

**युक्तिमात्रेणेति** ॥ सन्ततबन्धवत्त्वरूपयुक्त्येत्यर्थः ॥ **श्रुतेरिति** ॥ ब्रह्म गमयतीति श्रुतेरित्यर्थः ॥

## वाक्यार्थमञ्जरी

प्राप्नोति ब्रह्माणं चतुर्मुखं इति श्रुतेश्चतुर्मुखत्वेन ब्रह्मणा विशेषितत्वान्नैव कार्यं ब्रह्मशब्दार्थः ॥

## सूत्रभाष्यम्

**॥ ॐ सामीप्यात्तु तद्व्यपदेशः ॐ ॥ ९ ॥**

**'ब्रह्मविदाप्नोति परम्' इति तद्व्यपदेशस्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थमेव ॥**

## तत्त्वप्रदीपिका

तर्हि ब्रह्मविदां सामान्यतः परप्राप्तिकथनं कथमित्यत आह– सामीप्यात्तु तद्व्यपदेशः ॥ समीपत इति कालतः ॥

## तत्त्वप्रकाशिका

ननु कथं ज्ञानिनः कार्यप्राप्तिरुच्यते 'ब्रह्मविदाप्नोति परम्' इति परब्रह्मप्राप्तेरेव श्रुतत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **सामीप्यादिति** ॥ सत्यं, ज्ञानिनः परप्राप्तिरेव श्रुत्योच्यत इति तथापि नोक्तविरोधः । यतो 'ब्रह्मविदाप्नोति परम्' इति श्रुतिरपि ज्ञानी चतुर्मुखं प्राप्याचिरेण परमपि प्राप्नोत्तीत्यर्थमेव वक्ति न तु चतुर्मुखप्राप्तिं प्रतिषेधति नापि प्रथमत एव परप्राप्तिं ब्रूते । कुत एतत् । सामान्यश्रुतेरुदाहृतविशेषश्रुत्या बाधोपपत्तेरिति भावः ॥

## भावदीपः

ब्रह्मप्राप्तिश्रुतेर्गत्युक्तिपरतयोत्तरयोगमवतारयति ॥ **नन्विति** ॥ चोद्यनिवर्तकतया भाष्यं व्याचष्टे ॥ **सत्यमित्यादिना** ॥ भाष्यस्थैवकारभावमाह ॥ **सामान्येति** ॥

## वाक्यार्थमुक्तावली

तुशब्दोऽप्यर्थे । तद्व्यपदेशोऽपीत्यन्वेति । अवधारणे च । सामीप्यादित्यनेनान्वेति । यत इति हेत्वर्थे च । कार्ये ब्रह्म नयतीत्यनुवर्तते । तथा च यतः ब्रह्मविदाप्नोति परमिति ज्ञानिनः परप्राप्तिव्यपदेशोऽपि सामीप्यात् सामीप्यमपेक्ष्यैव परप्राप्तेः कालतः सामीप्यमपेक्ष्यैव प्रवृत्तो न तु चतुर्मुखप्राप्तेर्निषेधको नापि परप्राप्तेः प्राथम्यपरोऽतः कार्यं ब्रह्म नयतीत्युक्तमविरुद्धमिति सूत्रार्थं हृदि कृत्वा, भाष्ये च एतदर्थमेवेत्यनन्तरं वक्तीति शेषं विवक्षित्वा व्याचष्टे ॥ **तथापि नोक्तविरोध इत्यादिना** ॥ यद्वा ब्रह्मविदाप्नोति परमिति व्यपदेशस्त्विवति तुशब्दो ब्रह्मविदाप्नोतीति श्रुतेस्सामान्यविषयत्वरूपविशेषद्योतक इति भावेन तद्व्यावर्त्यकथनपूर्वं व्याचष्टे ॥ **कुत एतदिति** ॥

## वाक्यार्थविवरणम्

**उक्तेति** ॥ कार्यब्रह्मप्राप्तीत्यर्थः ॥

## वाक्यार्थमञ्जरी

ज्ञानिनस्तद्व्यपदेशः परब्रह्मप्राप्यत्वव्यपदेशः सामीप्यात्तु तत्प्राप्तेः कालतः सामीप्यादेवेत्यर्थः ॥

## सूत्रभाष्यम्

**कदा?–**

**॥ ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ॥ १० ॥**

**'ते ह ब्रह्माणमभिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ति' इति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ॥**

## तत्त्वप्रदीपिका

**कार्यात्यय इत्यादिसूत्रम् ॥ कार्यस्य महाप्रलये परब्रह्मणि योगात् कार्याधिकृतेन यथायोग्यं प्रलयेऽप्यधिकृतेन ब्रह्मणा सह परमभिगच्छन्ति ॥**

## तत्त्वप्रकाशिका

**ननु समीपत एव परब्रह्म प्राप्नोतीति कोऽर्थः । प्रलयादर्वाक्प्रलय एव वा । नाद्यः । बद्धत्वसाम्यात्प्रथममेव प्राप्त्युपपत्तेः । न द्वितीयः । विशेषप्रमाणाभावादिति भावेन पृच्छति ॥ कदेति ॥ तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ कार्येति ॥ नोक्तविकल्पावकाशः । समस्तकार्याणां विनाशरूपे प्रलये तेषां कार्याणां स्वामिना चतुर्मुखेन सह । अतश्चतुर्मुखात्परं ब्रह्म ज्ञानी गच्छतीत्यभ्युपगमात् । न च तत्र प्रमाणाभावः । श्रुतेरेव सद्भावादिति भावः ॥**

## भावबोधः

**बद्धत्वसाम्यादिति** ॥ प्रथमं विष्णुप्राप्तौ बाधकत्वेनोक्तस्य बद्धत्वस्य प्रलयादर्वाक् द्वितीयतया प्राप्यत्वेऽपि बाधकत्वात् । एवमपि द्वितीयतया प्राप्यत्वे प्रथममेव प्राप्तिसम्भवादित्यर्थः ॥

## भावदीपः

प्रश्नबीजं व्यनक्ति ॥ **नन्वित्यादिना** ॥ **बद्धत्वेति** ॥ प्रथमत एव परप्राप्तौ यद्बाधकमुक्तं तच्चतुर्मुखप्राप्त्यनन्तरं प्राप्नोतीत्यत्रापि सममित्यर्थः । उक्तशङ्कानिरासकतया सूत्रभाष्ययोरक्षरार्थमाह ॥ **नोक्तेति** ॥

## वाक्यार्थमुक्तावली

**बद्धत्वसाम्यादिति** ॥ प्रथमं विष्णुप्राप्तौ बाधकत्वेनोक्तस्य बद्धत्वस्य प्रलयादर्वाक् द्वितीयतया प्राप्यत्वे प्रथममेव सम्भवादित्यर्थः । सूत्रे तदध्यक्षेणेत्युक्तिस्तस्य कार्यप्रपञ्चाधिकृतत्वाद्ब्रह्म जिगमिषूणां तेनैव सह गमनं युक्तं न तमतिहायेति युक्तिसूचनार्था । तदुक्तं तत्वप्रदीपे 'कार्यस्य महाप्रलये परब्रह्मनियोगात् कार्याधिकृतेन यथायोग्यं प्रलयेऽप्यधिकृतेन ब्रह्मणा सह परमधिगच्छति' इति ।

## तत्त्वसुबोधिनी

बद्धत्वसम्यादिति । प्रथमं विष्णुप्राप्तौ बाधकत्वेन उक्तस्य बद्धत्वस्य प्रलयादर्वाक् द्वितीयतया प्राप्यत्वेऽपि बाधकत्वात् । एवमपि द्वितीयतया प्राप्यत्वे प्रथममेव प्राप्यसम्भवादित्यर्थः ।

## वाक्यार्थविवरणम्

**बद्धत्वसाम्यादिति ॥** बद्धस्य सन्ततत्वेन प्रथमं परमं ब्रह्मप्राप्त्यसम्भवाच्चतुर्मुखस्यैव प्राप्यत्वमुक्तम् । प्रलयादर्वाक् चतुर्मुखप्राप्त्यनन्तरमपि परब्रह्मप्राप्तिर्न सम्भवति । तदानीमपि बद्धत्वसाम्यात् । बद्धत्वानपायात् । तथा च परब्रह्म प्रथममेव परब्रह्मप्राप्तिरस्त्वित्यर्थः ।

## वाक्यार्थमञ्जरी

**बद्धत्वसाम्यादिति ॥** प्रथमप्राप्यत्वे बाधकत्वेनोक्तस्य बद्धत्वस्य प्रलयादर्वाग्द्वितीयप्राप्यत्वेऽपि बाधकत्वादेवमपि द्वितीयप्राप्यत्वे प्रथममेव प्राप्तिसम्भवादिति भावः ॥

ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ॥ कार्यात्यये महदादिकार्याणा मत्यये नाशलक्षणे प्रलये तदध्यक्षेण चतुर्मुखेन सहातश्चतुर्मुखात्परं ज्ञानी गच्छति कुतस्ते हीति श्रुतौ तथा विधानादित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ स्मृतेश्च ॐ ॥ ११ ॥**

**'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।**
**परस्यान्ते परात्मानः प्रविशन्ति परं पदम्' ॥ इति ।**

## तत्त्वप्रकाशिका

**स्मृत्याप्येतमर्थं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ स्मृतेश्चेति ॥ प्रतिसञ्चरः प्रलयः । परं ब्रह्माऽऽयुः । परात्मानः परमात्मनि मनो येषां ते ॥**

## गुर्वर्थदीपिका

परं ब्रह्मायुरित्यस्य परस्यान्त इत्यत्रोक्तं यत्परं तच्चतुर्मुखब्रह्मायुरित्यर्थः ।

## भावबोधः

'परस्यान्तः' इत्यत्र 'पर' शब्दार्थमाह– **परं ब्रह्म आयुरिति** ॥ ''ओं स्मृतेश्च ओं'' परस्यान्त इत्यत्र परशब्दार्थमाह ॥ **परं ब्रह्म आयुरिति** ॥

## वाक्यार्थमुक्तावली

परस्यान्त इत्यत्र परशब्दार्थमाह ॥ **परं ब्रह्म आयुरिति** ॥

## तत्त्वसुबोधिनी

परस्यान्ते इत्यत्र परशब्दार्थमाह ॥ **परं ब्रह्म इति** ॥ परात्मान इत्यस्य परचेतना आत्मानश्च इति आत्मप्रतीतिं निवारयितुं आह ॥ **परमात्मनि इति** ॥

## वाक्यार्थविवरणम्

परस्यान्त इत्यत्र परशब्दार्थमाह ॥ **परं ब्रह्मायुरिति** ॥ ब्रह्मणः चतुर्मुखस्य यत् आयुः शतवर्षरूपं तत् परम इत्युच्यते । तथा च परस्य चतुर्मुखायुष्यस्यान्त इत्यर्थः । यया अनुपपत्त्या अमुख्यार्थश्चतुर्मुखप्राप्तिरूपः ।

## वाक्यार्थमञ्जरी

ब्रह्मणा सहेति स्मृतेः कार्यात्यये इत्युक्तार्थो ज्ञाप्यत इत्यर्थः । परस्यान्त इत्यत्र परशब्दार्थमाह ॥ **परं ब्रह्म अयुरिति** ॥

## सूत्रभाष्यम्

**॥ ॐ परं जैमिनिर्मुख्यत्वात् ॐ ॥ १२ ॥**

**ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥**

## तत्त्वप्रदीपिका

**परं जैमिनिर्मुक्तत्वात् । न च सर्वेषां कार्यमेव गम्यमिति नियमः । किन्तु कैश्चित्परमेव गम्यमिति जैमिनिः ॥**

## तत्त्वप्रकाशिका

**पक्षान्तरं च दर्शयत्सूत्रमुपन्यस्य व्याचष्टे ॥ परमिति ॥ 'स एनान्ब्रह्म गमयति' इत्यत्र परं ब्रह्म वायुर्गमयतीत्यर्थो न कार्यमिति । कुतः । ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् । मुख्यार्थे च सम्भवत्यमुख्यार्थकल्पनाऽयोगादिति जैमिनिराचार्यो मन्यत इति भावः ॥**

## भावबोधः

मुख्यार्थे च सम्भवतीत्यादिना । परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वेनापोहाऽयुक्तेस्तस्यैव प्राप्तिनियम इति न्यायविवरणमुक्ततात्पर्यमिति ज्ञातव्यम् ।

## भावदीपः

भाष्यं व्याचष्टे ॥ **स एनानिति** ॥ एतच्च कार्यं बादरिरिति सूत्रभाष्यादनुवर्तत इति भावः । हेतोरप्रयोजकत्वमाशङ्क्य प्रथमप्राप्तत्वादपोहायुक्तेरित्यन्यत्रोक्ततात्पर्यमाह ॥ **मुख्यार्थ इति** ॥

## वाक्यार्थमुक्तावली

**पक्षान्तरं** पूर्वपक्षान्तरम् । ब्रह्म गमयतीति जैमिनिरिति भाष्ये इतीत्यनन्तरमत्रेति शेष इति भावेनाह ॥ **स एनान्ब्रह्म गमयतीत्यत्रेति** ॥ इतीत्यनन्तरमर्थ इति शेषं मत्त्वा परमेव ब्रह्मेत्यादि योजयति ॥ **परं ब्रह्मेति** ॥ **मुख्यार्थे च सम्भवतीति** ॥ मुख्यार्थस्य प्रथमप्राप्तत्वात्तदसम्भव एवामुख्यार्थस्य प्राप्तत्वादिति भावः । एतेन प्राप्तिरित्युक्तपूर्वपक्षन्यायः सूत्रारूढो दर्शितः बोध्यः ।

## वाक्यार्थमञ्जरी

स एनानित्यत्र ब्रह्म परं परमाख्यमेव कुतः तत्र ब्रह्मशब्दस्य मुख्यत्वादिति जैमिनिराचार्यो मन्यत इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ दर्शनाच्च ॐ ॥ १३ ॥**

**दृष्टत्वाच्च परब्रह्मणः ॥**

## तत्त्वप्रदीपिका

**तृप्ततया दृष्टत्वाच्च परब्रह्मणः ॥**

## तत्त्वप्रकाशिका

**ननु ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि तद्ग्रहणानुपपत्तेरमुख्यार्थकल्पनेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ दर्शनाच्चेति ॥ न ज्ञानिनः परप्राप्तिरनुपपन्ना ययाऽमुख्यार्थाङ्गीकारः किंतूपपन्नैव । श्रवणादिसाधनैरपरोक्षतया परब्रह्मण एव दृष्टत्वात् । अन्यस्य तदभावादिति भावः ॥**

## गुर्वर्थदीपिका

तद्ग्रहणानुपपत्तेरित्यत्र तद्ग्रहणे परब्रह्मग्रहणे अनुपपत्तेः प्रकृतिबद्धत्वाख्यानुपपत्तेरित्यर्थः । तदन्यस्य तदभावादित्यत्र तदन्यस्य ज्ञानिव्यतिरिक्तबद्धस्येत्यर्थः ।

## भावदीपः

**तद्ग्रहणानुपपत्तेरिति** ॥ प्रागुक्तोपपत्तिश्रुतिस्मृतिविरोधादित्यर्थः ॥ **परिहरदिति** ॥ अत्राप्युपपत्तेरप्युक्त्या परिहरदित्यर्थः ॥ **ययेति** ॥ अनुपपत्त्येत्यर्थः । अवतारादिदृष्टेर्व्यभिचारादाह ॥ **श्रवणादीति** ॥ अप्रयोजकत्वं निराह ॥ **अन्यस्येति** ॥ प्राधान्येनेति भावः ॥

## वाक्यार्थमुक्तावली

परस्येत्यनुवर्तते । चोऽवधारणे । परस्यैव श्रवणादिसाधनैर्दर्शनात्कार्यस्यादर्शनात्परमेव गमयतीत्यर्थमभिप्रेत्याह ॥ **किंत्विति** ॥

## वाक्यार्थविवरणम्

**अन्यस्य** चतुर्मुखस्य । **तदभावादिति** ॥ अपरोक्षीकृतत्वाभावादित्यर्थः । तथा चानपरोक्षीकृतस्य च प्राप्त्यनुपपत्तेरित्यर्थः ।

## वाक्यार्थमञ्जरी

परस्य ब्रह्मण एवापरोक्षतया दर्शनात्तदेवात्रोक्तं ब्रह्मेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ ॥ १४ ॥**

न हि कार्ये प्रतिपत्तिः प्राप्नुवानीत्यभिसन्धिश्च ।

'यदुपास्ते पुमाञ्जीवन्यत्प्राप्तुमभिवाञ्छति ।
यच्च पश्यति तृप्तः संस्तत्प्राप्नोति मृतेरनु' इति पाद्मे ॥

## तत्त्वप्रकाशिका

हेत्वन्तरेणैतमर्थं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **न चेति** ॥ ज्ञानिनः कार्यप्राप्तिरेवानुपपन्ना न परप्राप्तिः । तस्य कार्यविषये प्रतिपत्त्यभावात्परविषये च प्रतिपत्तिसद्भावात् । प्राप्नुवानीत्यभिसन्धिश्च न कार्यविषये किं तु परविषय एवातश्च परप्राप्तिरेव युक्ता न कार्यप्राप्तिरिति भावः । परविषय एव दर्शनप्रतिपत्त्यभिसन्धिसद्भावेऽपि कुतस्तत्प्राप्तिरेव न कार्यप्राप्तिरित्यत आह ॥ **यदिति** ॥

## गुर्वर्थदीपिका

प्रतिपत्त्यभिसन्धिसद्भावेऽपीत्यत्र प्रतिपत्तिरुपास्तिः ।

## भावदीपः

**हेत्वन्तरेणेति** ॥ कार्यप्राप्त्यसम्भवरूपेणेत्यर्थः ॥ **एतमिति** ॥ परप्राप्तिरुपपन्नेत्येतमर्थम् । साध्योक्तिपूर्वं सूत्रभाष्ये हेतुत्वेन व्यनक्ति ॥ **ज्ञानिन इति** ॥ प्रतिपत्तिरुपास्तिः । अभिसन्धिरिच्छा । चशब्दान्वयमाह ॥ **अतश्चेति** ॥

## वाक्यार्थमुक्तावली

चो यस्मादित्यर्थेऽवधारणे च । प्रतिपत्तिरुपास्तिः तत्सहितोऽभिसन्धिरिच्छा प्रतिपत्यभिसन्धिस्तस्मात् परमेव गमयतीत्यनुवर्तते । तथा च यस्मात् कार्य एव प्रतिपत्तिरभिसन्धिश्च नास्ति न तु परविषये तदुभयाभावस्तस्मात् परमेव नयति न कार्यमिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **तस्येत्यादिना** ॥ यत्तर्हि पश्यति तृप्तस्सन्नित्यस्य दर्शनसमय एव परमानन्दतृप्तस्सन् पश्यतीत्यर्थः ।

## तत्त्वसुबोधिनी

न च कार्ये इति सूत्रे प्रतिप्रत्यभिसन्धिरित्यत्र प्रतिपत्तिसहितोऽभिसन्धिः प्रतीत्यभिसन्धिरिति विग्रहः । प्रतिपत्तिशब्दः उपासनापर इति ज्ञातव्यम् ॥

## वाक्यार्थविवरणम्

**प्रतिपत्तिः** उपासना ।

## वाक्यार्थमञ्जरी

कार्ये ब्रह्मणि प्रतिपत्तिरुपास्तिः प्राप्नु वानीत्यभिसन्धिरिच्छा तदुभयं नास्तीत्यतोऽपि न कार्यं प्राप्यमित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ १५ ॥**

'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् ।
न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥
अप्रतीका देवतास्तु ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ॥
एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् ।
अयोग्यदर्शने यत्नाद् भ्रंशः पूर्वस्य चापि तु ॥

(सूत्रभाष्यम्)

अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्मसलोकताम् ।
ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम्' इति गारुडवचनात् ।

उभयत्रोक्तदोषाच्चाप्रतीकालम्बनान्परं नयति । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते' इति श्रुतेश्च । अत्र कर्मोपासनमेव । अन्यान्कार्यं नयतीति भगवन्मतम् ॥

## तत्त्वप्रदीपिका

बादरिजैमिनिमतभेदकथनेन विरुद्धवत्प्रतीयमानानां कार्यपरगतिविषयश्रुतिस्मृतीनां विरोधं परिहरन्विषयविभागसत्तां सूचयित्वोभयत्र च गन्तृणां सहेतुकं विभागसुज्ञापनाय स्वमतमाह– अप्रतीकालम्बनानित्यादिसूत्रम् ॥ उभयत्रोक्तदोषात्कतिपयैः कार्यं गम्यमित्यनङ्गीकारे यत्तत्र साधनमुक्तं 'ऋते देवान्परं ब्रह्म कः पुमान्प्राप्नुयात्कचित्' इत्यादेः तस्यैव गम्यत्वोपपत्तिः, 'प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति विशेषणं च, तदेव दूषणं स्यात् । तद्विरोधात्कैश्चित्परस्य गम्यत्वानङ्गीकारे ब्रह्मशब्दस्य तत्रैव मुख्यतो वृत्तिः, दृष्टिश्च, परब्रह्मणोऽन्यत्र विशेषोपास्त्यभावः, प्राप्त्यभिसन्ध्यभावश्च, यत्साधनमुक्तं तदेव दूषणं भवति । सर्वेषां कार्यप्राप्तौ जैमिन्युक्तदोषात्परप्राप्तौ बादर्युक्तदोषाच्च विभागे सिद्धेऽयं सुविवेकः । अप्रतीकालम्बनान्परं नयति भगवान्विद्युत्पतिः प्रतीकालम्बनान्कार्यं नयतीत्युभयतोऽपि स एव नेतेत्यर्थः । अतः प्रतीकालम्बनानां कार्यब्रह्मणि प्रतिपत्त्यभिसन्धिविशेषौ कार्याविति लभ्यते । तत्र कश्चित्कालं स्थितिर्यथा स्याद्यद्राहि त्यात्तत्प्राप्त्यभाव उपन्यस्तः । उक्तं हि प्राप्यमात्राणामप्यनुस्मर्तव्यत्वम् । 'ऋते देवान्परं ब्रह्म कः पुमान्प्राप्नुयात्कचित्' इत्युदाहरन्बादरिश्च न सर्वेषां कार्यब्रह्मप्राप्तिं मन्यत इति गम्यते । 'क्रतुः' निश्चयज्ञानम् ॥

॥ इति तत्वदीपिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥

## तत्त्वप्रकाशिका

तृतीयपक्षेऽपि न कश्चित्क्रमोऽस्ति किं तु यस्य कार्यप्राप्तीच्छा तस्य तत्प्राप्तिर्यस्य परप्राप्तीच्छा तस्य तत्प्राप्तिरिति प्राप्तम् । कुतः । पक्षद्वयेऽपि साधकसद्भावात् क्रमस्य चादर्शनात् ।

(तत्त्वप्रकाशिका)

'यत्प्राप्तुमभिवाञ्छति' इत्यादेश्चेति । क्रमपक्षेऽपि न योग्यतारूपक्रमः किं तु यस्य यत्प्राप्तौ सौकर्यं तस्य तत्प्राप्तिरिति प्राप्तम् । कस्मात् । पक्षद्वयस्याप्यपरिहार्यत्वात् महाफलेऽक्रमस्य चायोगात् क्रमान्तरस्य चादर्शनादिति । अथ सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अप्रतीकेति** ॥ न सर्वान्कार्यं नयतीति श्रुत्यर्थो नापि परमेवेति किं तु कांश्चित्कार्यं कांश्चित्परमिति । कुतः । उभयपक्षोक्त-दोषात् । परप्राप्तिपक्षे गत्यनुपपत्त्यादिदोषस्योक्तत्वात् कार्यप्राप्तिपक्षे च ब्रह्मशब्दामुख्यत्वादि-दोषाणामुक्तत्वात् । न चोभयप्राप्तिग्रहणे दोषद्वयापातः । कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तौ विशेषहेत्वभावात् । येषां परप्राप्तिस्तेषां बद्धत्वेऽपि प्रमाणबलेन गत्युपपत्तेः । श्रुत्यादीनां चान्यनिषेधकत्वाभावात् । नापि परमेवेत्यवधारणे हेतुरस्ति । केषाञ्चित्कार्यप्राप्तेरेव प्रामाण-बलेनोपपत्तेः । ब्रह्मशब्दस्यामुख्यवृत्त्यभ्युपगमस्य न्याय्यत्वात् । कार्यप्राप्तिमतां च तद्दर्शनादि-सद्भावात् । मुनिमतयोश्चान्यानिषेधकत्वेनाविरोधात् । 'यान्ति देवं परं केचित्पूर्वं केचिल्लये विभुम्' । इत्यादेश्च । न च क्रमं विहायैतद्यथेष्टम् । 'क्रमानुरागी भगवान् क्रमात्पुंभिरवाप्यते' । इति श्रुतेः । न च 'यत्प्राप्तुमभिवाञ्छति तत्प्राप्नोति' इति वचनादिच्छानुसारेण प्राप्तिर्न क्रमेणेति वाच्यम् । 'स यथाकामो भवति' इति श्रुतौ तत्प्राप्तीच्छूनामिच्छामात्रेण तत्प्राप्तिनिषेधात् । यत्प्राप्तीच्छा तज्ज्ञानोपासनापरोक्षैरेव तत्प्राप्तेरुक्तत्वात् । न चात्रोपासनानुक्तिः । कर्मपदस्यैव तद्वाचकत्वात् । क्रमेऽपि न सौकर्यक्रमेणोभयप्राप्तिः । 'सप्रतीकाश्चतुर्मुखमप्रतीकाः परमु हैते गच्छन्ति' । 'प्रतीकं देह उद्दिष्टः' इत्यादिश्रुतिस्मृतिप्राप्तस्यैव ग्राह्यत्वेनाप्रतीकालम्बनान्परं नयत्यन्यान्कार्यं नयतीति क्रमस्यैव युक्तत्वादिति भगवान्बादरायणो मन्यत इति भावः ॥

## गुर्वर्थदीपिका

तेषां बद्धत्वेऽपि प्रमाणबलेन गत्युपपत्तेरित्यत्र वैकुण्ठामुक्तगम्यस्थलस्थितभगवद्रूप गत्युपपत्ते-रित्यर्थः ।

## भावबोधः

परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियम इति न्यायविवरणं मनसि निधाय तृतीयपूर्वपक्षे युक्तिमाह– **यस्य कार्यप्राप्तीच्छा तस्य कार्यप्राप्तिरित्यादिना** । अनेन परप्राप्तिरिति न्यायविवरण-मुपलक्षकमित्युक्तं भवति । यथा सौकर्यं चतुर्मुखस्य परस्य वा संप्राप्तिरिति न्यायविवरणार्थमाह–

(भावबोधः)

**क्रमपक्षेऽपीत्यादिना ॥** ननु पक्षद्वयस्यापरिहार्यत्वे क्रमं विनैवोभयप्राप्तिरस्त्वित्यत आह– **महाफल इति ॥** अक्रमस्य क्रमाभावस्येत्यर्थः । क्रमान्तरेणान्यथासिद्धिं परिहरति **॥ क्रमान्तरस्य चेति ॥ कार्यमेव नयतीत्यन्यव्यावृत्त्येति ॥** परप्राप्तिग्रहणे कार्यप्राप्तावुक्तहेत्वनुपपत्तिलक्षणो दोषः तदा स्यात् । यदि कार्यप्राप्तावुक्तहेतोः परप्राप्तिबाधकरूपत्वेन कार्यमात्रप्राप्तौ विशेषहेतुत्वं स्यात् । न चैवमित्यर्थः ॥ ननु बद्धत्वेन परगत्यनुपपत्तेरुक्तत्वात् कथं विशेषहेतुत्वाभाव इत्यत आह– **येषां परप्राप्तिरिति ॥ प्रमाणबलेनेति ॥** ब्रह्मशब्दमुख्यार्थत्वदृष्टत्वादिरूपयुक्तिरूपप्रमाणबलेनेत्यर्थः **॥ अन्यनिषेधकत्वाभावादिति ॥** 'प्राप्नोति ब्रह्माणं चतुर्मुखम्' इत्यादाववधारणाद्यभावादिति भावः । नापि परमेवेति तात्पर्यं पूर्ववत् ।

ननु 'ब्रह्म गमयति' इत्यत्र ब्रह्मशब्दस्य विष्णौ मुख्यत्वेन विशेषहेतुत्वात् कथं तदभाव इत्यत आह– **केषाञ्चित् कार्यप्राप्तेरेव प्रमाणबलेनेति ॥** 'प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति प्रमाणबलेनेत्यर्थः । दर्शनप्रतिपत्त्यभिसन्धीनामपि विशेषहेतुत्वं निरस्यति– **कार्यप्राप्तिमतां चेति ॥** ननु पक्षद्वयोक्तदोषाभावेऽपि पक्षद्वयाङ्गीकारे मुनिमतद्वयविरोधो दोषः स्यादित्यत आह– **मुनिमतयोश्चेति ॥ यान्ति देवमिति ॥** अनेन–

'यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम् ।
योग्यतातारतम्येन विशेषोऽयमपीष्यते ॥'

इति श्रुतेस्तथा **प्राप्तत्वादिति ॥** 'यान्ति देवं परं केचित्' इति प्रमाणप्राप्तत्वादेवेति च न्यायविवरणमुक्ततात्पर्यं भवति । न्यायविवरणोदाहृतश्रुतिमुदाहरति– **क्रमानुरागीति ॥** ननु यथा उभयप्राप्तौ क्रमसापेक्षत्वप्रतिपादकन्यायविवरणोदाहृतश्रुतिरस्ति तथा क्रमं विनेच्छानुसारेणाप्युभय-प्राप्तौ भाष्योदाहृता स्मृतिरस्तीत्याशङ्क्य परिहरति– **न च यत्प्राप्नुमित्यादिना ॥** अत्र कर्मो-पासनमेवेति भाष्यं तन्निवर्तनीयाशङ्कानिषेधपूर्वकं व्याचष्टे– **न चात्रेति ॥ श्रुतिस्मृतिप्राप्तस्यैव ग्राह्यत्वेनेति ॥** श्रुतिश्च 'सप्रतीकाश्चतुर्मुखम्' इत्यादिका न्यायविवरणोदाहृतेति ज्ञातव्यम् । अनेन श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वादिति न्यायविवरणं यदि 'क्रमानुरागी भवान्' इति श्रुत्यनुरोधेनोभयप्राप्तौ क्रमानुवृत्तिः कर्तव्या तर्हि 'सप्रतीकाश्चतुर्मुखम्' इति श्रुत्याद्युक्तक्रमानुवृत्तेरेव न्याय्यत्वाद्योग्यता-रूपक्रमस्यैवानुवर्तनं कर्तव्यम् न सौकर्यरूपस्येति व्याख्यातं भवति । ननु 'कार्यं बादरिः' इत्यादि, 'विशेषं च दर्शयति' इत्यन्तदशसूत्र्या एकाधिकरणत्वे,

(भावबोधः)

'सान्तानिकप्राप्तिरभीष्टता च सौकर्यमित्यन्यमतस्य तर्काः ।
विशेषसंप्राप्तिरुरुत्वमाप्तिः क्रमानुरागः कथितानुवृत्तिः' ॥

इत्यनुव्याख्याने एतद्दशसूत्रीसम्बन्धित्वेन पूर्वोत्तरपक्षयुक्तिबाहुल्यकथनमयुक्तं स्यादिति चेन्न न्यायविवरण एवान्तर्भेदोऽधिकरणत्वात् समुदाययोरित्यनेनास्याः परिहृतत्वादिति । अत्र कार्याकार्यपरयोरधमोत्तमभावक्रमविवक्षया आदौ प्रथमसूत्रे– चतुर्मुखस्य प्राप्यत्वे गत्युपपत्तिरूपहेतूक्तिः । द्वितीये– तत्रैव तदुपोद्बलकत्वेन 'प्राप्नोति चतुर्मुखम्' इति श्रुत्युक्तिः । तृतीये– 'ब्रह्मविदाप्नोति परम्' इति श्रुतिविरोधपरिहाराय तस्याः समीपत एव ब्रह्मप्राप्त्यर्थकत्वोक्तिः । बद्धत्वेन समीपतोऽपि परप्राप्तिर्न भवतीति श्रुतेस्तदर्थत्वासम्भवाशङ्कानिरासाय, चतुर्थे– सामीप्यशब्दस्य विवक्षितार्थकत्वे श्रुतिरूपप्रमाणोक्तिः । पञ्चमे– तत्रैव विशेषश्रुतिरूपप्रमाणोक्तिः । षष्ठे– परब्रह्मणः प्राप्यत्वे ब्रह्मशब्दमुख्यार्थत्वरूपहेतूक्तिः । उक्तबाधकवशाद्ब्रह्मशब्दस्यामुख्यार्थत्वमेवाङ्गीकार्यमित्याशङ्कानिरासाय दृष्टत्वरूपहेत्वन्तरोक्तिः । अष्टमे– अमुख्यार्थस्वीकारे बाधकोक्तिः । नवमे– उभयोरपि प्राप्यत्वमिति सिद्धान्तोक्तिः । तत्र परमिति शेषः । अन्यान् कार्यमित्यस्योपलक्षणम् । तथा च 'अप्रतीकालम्बनान्नयति' इति प्रतिज्ञा । 'उभयथा च दोषात्' इत्यनेनोभयत्र हेतूक्तिः । 'तत्क्रतुश्च' इति क्रमोक्तिः । 'अप्रतीकालम्बनात्' इत्यादिना क्रमस्य योग्यतारूपत्वोक्तिः । दशमे तत्र श्रुतिरूपप्रमाणोक्तिरिति सूत्रक्रम; ॥

अत्र मार्गप्रतिपादकत्वेन आद्यमधिकरणपञ्चकमेका पेटिका । तत्रैकवाक्यविचारपरतयाऽऽद्यमधिकरणत्रयमवान्तरमेका पेटिका । तत्राद्ये– ब्रह्मप्राप्तिमार्गस्यार्चिषः प्राथम्योक्तिः । द्वितीये– वायोर्द्वितीयत्वोक्तिः । तृतीये– तटितः संवत्सरानन्तर्यस्य वरुणस्य तटिदानन्तर्यस्योक्तिः । उत्तरमधिकरणद्वयं वायुविचारपरतया एका पेटिका । तत्राद्ये– द्वितीयप्राप्यस्य वायोरातिवाहिकत्वोक्तिः । द्वितीये– अन्तिमप्राप्यस्य वायोर्मुख्यत्वोक्तिः । षष्ठे– गम्यप्रतिपादनमिति ज्ञातव्यम् ॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

## भावदीपः

**तृतीयेति** ॥ कार्यं परं चेत्युभयमिति पक्षेऽपीत्यर्थः । परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियम इत्यन्यत्रोक्तमुपलक्षणत्वेन व्यनक्ति ॥ **यस्येति** ॥ कार्यप्राप्तिपक्षे परप्राप्तिपक्षे वेत्यर्थः । बहुधा श्रुतेरित्युत्तरन्यायविवरणे श्रुतहेतुं पूर्वत्राप्याकृष्यार्थमाह ॥ **साधकेति** ॥ बद्धत्वविशेषितत्व, ऋते देवानित्यादिस्मृतिरूपसाधकानां, ब्रह्मशब्दमुख्यार्थत्वापरोक्षदृष्टत्वप्रतिपत्त्यभिसन्धिमत्वरूप-साधकानां सद्भावादित्यर्थः । भाष्योक्तस्मृतिं चाह ॥ **यदिति** ॥ इतिशब्द उक्तरूपशङ्कासमाप्तौ । बहुधा श्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरित्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **क्रमपक्षेऽ-पीत्यादिना** ॥ बहुधा श्रुतेरित्यस्यार्थः पक्षद्वयस्याप्यपरिहार्यत्वादिति । उक्तसाधकोपेतत्वादित्यर्थः ॥ **क्रमस्येति** ॥ केषांचिदेवं केषाञ्चिदेवमिति क्रमस्येत्यर्थः ॥ **क्रमान्तरस्य चेति** ॥ विवक्षित-क्रमविशेषस्यापीत्यर्थः ॥ अथेत्यर्थान्तरे । पूर्वपक्षं निरस्यति ॥ **नेति** ॥ ब्रह्मप्राप्तिस्तर्हि निरधिकारिका स्यादिति पृच्छति ॥ **किं त्विति** ॥ अप्रतीकालम्बनान् परं नयत्यन्यान्कार्यमिति भाष्यं व्याचष्टे ॥ **कांश्चिदिति** ॥ उभयत्रोक्तदोषाच्चेति हेत्वंशं व्याचष्टे ॥ **उभयेति** ॥ गत्यनु-पपत्त्यादीत्यादिपदेन ब्रह्माणं चतुर्मुखमिति विशेषितत्वायोगः ऋते देवानिति स्मृत्ययोगश्च ग्राह्यः । उत्तरादिपदेन दृष्टत्वप्रतिपत्त्यभिसन्ध्यभावरूपदोषो ग्राह्यः ।

बद्धत्वादित्येतत्पक्षसाधकमेव परप्राप्तिव्यावर्तकहेतुरित्यतो यान्ति देवं परं केचिदित्यादि-श्रुतेस्तथा प्राप्तत्वादित्यन्यत्रोक्तयुक्तिमाह ॥ **येषामिति** ॥ विशेषितत्वाच्चेत्यतस्तदप्यनुकूलयति ॥ **श्रुत्यादीनामिति** ॥ आदिपदात् ऋते देवानिति स्मृतिग्रहः । यान्ति देवं परं केचिदिति प्रमाण-प्राप्तत्वादेवेत्यन्यत्रोक्तहेतुमाह ॥ **केषाञ्चिदिति** ॥ तत्पक्षप्रापकप्रमाणबलेनेति वा केचिल्लये प्रभुमिति न्यायविवरणोक्तप्रमाणबलेन वेत्यर्थः । मुख्यार्थत्यागदृष्टत्वाभावप्रतिपत्त्यभावादिदोषान्निराह ॥ **ब्रह्मशब्दस्येत्यादिना** ॥ **न्याय्यत्वादिति** ॥ गत्यनुपपत्त्यादिन्यायप्राप्तत्वादित्यर्थः ॥ **तद्दर्शनादीति** ॥ चतुर्मुखदर्शनप्रतिपत्त्यभिसन्धीनां सत्त्वादित्यर्थः । तेषामप्यङ्गावबद्धास्त्वित्यत्रो-पास्तेरुक्तेरिति भावः । उक्तव्यवस्थायां न्यायविवरणोक्तश्रुतिमाह ॥ **यान्तीति** ॥ न कश्चि-त्क्रमोऽस्तीति पूर्वपक्षं निराह ॥ **न चेति** ॥ न्यायविवरणोक्तमेव हेतुमाह ॥ **क्रमेति** ॥ पूर्वोक्त-मेवानूद्य इति श्रुतेश्चेति भाष्योक्तहेतुना निराह ॥ **न चेत्यादिना** ॥ तत्प्राप्तिनिषेधादित्यसिद्ध-

(भावदीपः)

मित्यतोऽर्थसिद्धमेतदिति भावेन श्रुत्यर्थमाह ॥ **यत्प्राप्तीच्छेति** ॥ क्रतुशब्दार्थो ज्ञानेति । कर्मशब्दार्थः उपासनापरोक्षैरिति । अत्रेत्यादिभाष्यं व्यनक्ति ॥ **न चेत्यादिना** ॥ क्रमपक्षेऽपीत्यादिनोक्तमनूद्य न्यायविवरणोक्तश्रुत्या भाष्योक्तस्मृत्या च निराह ॥ **क्रमेऽपीति** ॥ श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वादिति न्यायविवरणे श्रुत्युक्तेत्युपलक्षणं मत्वाऽऽह ॥ **श्रुतिस्मृतिप्राप्तस्यैवेति** ॥

## वाक्यार्थमुक्तावली

**तृतीयेति** ॥ उभयप्राप्तिरिति पक्षेऽपीत्यर्थः ॥ **कुत इति** ॥ उभयप्राप्तिरिति पक्षपरिग्रहस्तत्रापि क्रमाभाव उभयप्राप्तेरैच्छिकत्वं च कुत इत्यर्थः । आद्यप्रश्नस्योत्तरमाह ॥ **पक्षद्वयेऽपीति** ॥ कार्यमेव परमेवेति नियमः पक्षद्वयेऽपि बादरिजैमिन्युक्तसाधकसद्भावादित्यर्थः । द्वितीयप्रश्नस्योत्तरं क्रमस्य चेति । अभीष्टतेत्युक्तन्यायं विवृण्वन् तृतीयस्योत्तरमाह ॥ **यत्प्राप्तुमिच्छतीति** ॥ **यद्वा पक्षद्वयेऽपीति** ॥ क्रमाभावे ऐच्छिकत्वे चेत्यर्थः । तत्राद्यस्योपपादनं क्रमस्येति । द्वितीयस्योपपादनं यत्प्राप्तुमिति । क्रमपक्षेऽपीति प्राप्तुमित्यन्वयः ॥ **कस्मादिति** ॥ क्रमपक्षाङ्गीकारस्तत्रापि योग्यताक्रमं विहाय प्रापयितृसौकर्यक्रमपक्षस्वीकारश्च कस्मादित्यर्थः ॥ **पक्षद्वयस्येति** ॥ क्रमपक्षस्वीकारस्य योग्यताक्रमं विहाय सौकर्यक्रमस्वीकारपक्षस्य चेत्यर्थः । तत्राद्यमुपपादयति ॥ **महाफल इति** ॥ अक्रमस्येति पदच्छेदः । सौकर्यमित्युक्तन्यायमुपपादयन् द्वितीयमुपपादयति ॥ **क्रमान्तरस्य चेति** ॥ सौकर्यक्रमं परित्यज्य योग्यताक्रमस्याप्रामाणिकत्वादित्यर्थः । यद्वा उभयप्राप्तिस्तत्रापि क्रमश्च सौकर्यलक्षण एवेति तृतीयं कस्मादिति प्रश्ने पक्षद्वयस्यापीत्यादिना क्रमेण परिहार इति ज्ञेयम् ॥ **अथ सिद्धान्तयन्निति** ॥ कार्यप्राप्तिरेवेत्येकः पूर्वः पक्षः । परप्राप्तिरेवेत्यपरः । उभयप्राप्तावपि क्रमो नास्तीत्यपरः । क्रमसद्भावेऽपि सौकर्यक्रम एवेति ॥ **अन्य इति** ॥ सान्तानिकप्राप्तिरभीष्टता च सौकर्यमित्यन्यमतस्य तर्क इति न्यायमाह । उक्तरीत्या न्यायचतुष्टयावष्टम्भेन पूर्वपक्षचतुष्टयप्राप्तौ आप्तिः क्रमानुरागः कथितानुवृत्तिरिति न्यायमालोक्तरीत्या न्यायत्रयेण सिद्धान्तयन् सूत्रमुपन्यस्येत्यर्थः । न्यायभेदे अधिकरणभेदेन भवितव्यमिति शङ्का त्वन्तर्भेदाधिकरणत्वात्समुदायोक्तिरिति न्यायविवरणे भगवत्पादैरेवापास्ता वेदितव्या । उभयप्राप्तिरिति सिद्धान्तस्तत्राप्येकस्योभयप्राप्त्यसम्भवात् कांश्चित्कार्यं कांश्चित्परमिति भावेन सूत्रे अप्रतीकालंबनानित्युक्तं परमित्यनुवर्तते । अन्यानिति शेषः । कार्यमित्यनुवर्तत इति भावेन प्रवृत्तं अप्रतीकालंबनान्परब्रह्म नयति.

(वाक्यार्थमुक्तावली)

अन्यान्कार्यं नयतीति भगवन्मतमिति भाष्यं नयतीति श्रुत्यर्थ इति भगवन्मतमित्यध्याहारेण व्याचष्टे ॥ **सर्वानित्यादिना** ॥ **कुत इति** ॥ पुरुषभेदेनोभयप्राप्तिः कुतः, सर्वेषामपि कार्यप्राप्तिरेवेति वा परप्राप्तिरेवेति वाऽन्यतरनियमः किं न स्यादिति भावः । तदुत्तरत्वेनोभयत्रोक्तदोषा इत्येतद्व्याचष्टे ॥ **उभयत्रेति** ॥ तदेव दर्शयति **परप्राप्तीति** ॥ सर्वेषां परप्राप्तिरेवेति पक्ष इत्यर्थः ॥ **गत्यनुपपत्तिरिति** ॥ बद्धस्य ब्रह्मगत्यनुपपत्तिः । ब्रह्माणं चतुर्मुखमिति विशेषणविरोधश्चेति दोषस्योक्तत्वादित्यर्थः ॥ **कार्यप्राप्तीति** ॥ सर्वेषां कार्यप्राप्तिरेवेति पक्ष इत्यर्थः । ब्रह्मशब्दामुख्यत्वादीत्यादिपदेन ब्रह्मदर्शनप्रतिपत्यभिसन्धीनां ग्रहणम् । केवलं परपक्षे उभयथा दोषः । अस्मत्पक्षे तदभावाच्चेति भावेनोभयथा चेति सूत्रे दोषाभावाच्चेति भाष्ये चशब्द इति भावेन व्याचष्टे ॥ **न चोभयेति** ॥ ननु कुतो न दोषद्वयापात इत्यतः केषाञ्चित्परप्राप्तिरिति, स्वपक्षे तावन्न दोषोऽस्तीत्याह ॥ **कार्यमेवेति** ॥ सर्वान्कार्यमेव नयतीत्यन्यव्यावृत्या कार्यप्राप्तौ विशेषहेतुसद्भावे हि केषाञ्चित्परप्राप्तिरिति पक्षस्य तद्विरोधलक्षणदोषः स्यान्न चैवमिति भावः ।

ननु कथं विशेषहेत्वभावश्चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वात्ततोऽर्वाक् चतुर्मुखगत्युपपत्त-रिति हेतोस्सत्वात्परब्रह्मगत्युपपत्तेरित्यर्थः । आप्तिरित्युक्तसिद्धान्तन्यायं विशदयन्नाह ॥ **येपा-मिति** ॥ अप्रतीकाश्रया ये हि ते यान्ति परमेव त्विति गारुडवचनादिप्रमाणबलेन येषां परप्राप्तिस्तेषां बद्धत्वेऽपि परब्रह्मगत्युपपत्तेरित्यर्थः ॥ **श्रुत्यादीनामिति** ॥ प्राप्नोति ब्रह्माणं चतुर्मुखमिति श्रुतावनधारणाभावादेवानिति स्मृतेः देवा एव ब्रह्म प्राप्नुवन्ति देवानृते कः पुमान् बद्धः देवानृते ब्रह्मादिदेवप्राप्तिमृते परब्रह्म प्राप्नोतीत्यर्थस्य विवक्षितत्वात् । ब्रह्मणा सह ते सर्व इति स्मृतेः कार्यमकार्यं वा ब्रह्मप्राप्तास्ते सर्वे प्रलये ब्रह्मणा सह परब्रह्म प्रविशन्तीत्यर्थसम्भवाच्छ्रुति-स्मृतीनामन्यनिषेधकत्वाभावादित्यर्थः । केषाञ्चित्कार्यप्राप्तिरित्यत्रापि न दोष इत्येतदुपपादयति ॥ **नापीति** ॥ सर्वान्परमेव नयति अन्यव्यावृत्या परप्राप्तौ विशेषसद्भावेऽहि केषाञ्चित्कार्यप्राप्तिरिति पक्षस्य तद्विरोधलक्षणदोषः स्यान्न चैवमिति भावः । ननु ब्रह्मशब्दस्य परब्रह्मणि मुख्यतया प्राप्तत्वात्तदतिक्रमेणामुख्यार्थाङ्गीकारोऽनुपपन्न इत्युक्तमेवेत्यतोऽत्रापि आप्तिरित्युक्तन्यायं व्यंजयन्नाह ॥ **केषाञ्चिदिति** ॥ स्वदेहे ब्रह्मदृष्ट्यैवेति गारुडवचनात् केषाञ्चित् कार्यप्राप्तेरेवोपपत्तेः । प्रमाणबाधे सति ब्रह्मशब्दामुख्यवृत्त्यभ्युपगमस्य न्यायप्राप्तत्वादित्यर्थः । गारुडवचनादित्येतदस्मत्पक्षे

(वाक्यार्थमुक्तावली)

दोषाभावोपपादकतया व्याख्यातं भवति ॥ **मुनिमतयोरिति** ॥ पूर्वपक्षिणाऽन्यनिषेधेऽपि मुनिमतयो: स्वस्वज्ञातेऽर्थे हेतूपन्यासमात्रेण चरितार्थयोरन्यानिषेधकत्वादिति भाव: । न केवलं गारुड-वचनादेतत्स्पष्टं, न्यायविवरणोदाहृतादपीत्याह ॥ **यान्तीति** ॥ एवं पुरुषभेदेनोभयप्राप्तिरिति प्रसाध्योभयप्राप्तिपक्षेऽपि न कश्चित्क्रमोऽस्ति किं त्वैच्छिक एवेति पूर्वपक्षं प्रतिक्षेप्तुं स यथाकामो भवति तत्क्रतुर्भवतीत्यादि भाष्यमिति भावेन व्याचष्टे ॥ **न च क्रमं विहायेति** ॥ कुतो नेत्यत: क्रमानुराग इति न्यायं व्यञ्जयन् तत्क्रतुश्चेति सूत्रे भाष्ये च श्रुतेश्चेति चशब्दसूचितां स्वपक्षसाधिकां श्रुतिमुदाहरति ॥ **क्रमानुरागीति** ॥ ऐच्छिकैव प्राप्तिर्न क्रमादित्यत्र साधकं वचनमाशङ्क्य तन्निषेधकत्वेन स यथाकाम इत्यादि व्याचष्टे ॥ **न चेत्यादिना** ॥ सोऽधिकारी यत्प्राप्ति-मनतिक्रम्यकामवान् भवति तत्क्रतुर्भवति तद्विषयनिश्चयज्ञानवान् भवति । ततश्च तद्विषयं कर्ममान-समुपासनं कुरुते । क्रियामानसवदिति सूत्रात् । ततश्च तदभिसंपद्यते अपरोक्षीकरोति प्राप्नोति चेति श्रुत्यर्थमभिप्रेत्याह ॥ **यत्प्राप्तीति** ॥ सूत्रे कांश्चित्परं कांश्चित्कार्यमिति सामान्येन वक्तव्ये भाष्ये च यान्ति देवान्परं केचिदित्यादिसामान्यविषयप्रमाणे चोदाहर्तव्ये प्रतीकालम्बनानित्यादिवचनम् ।

प्रतीकं देह उद्दिष्ट इत्यादि विशेषाधिकारिविषयप्रमाणोदाहरणं च क्रमेऽपि योग्यतातारतम्य-लक्षण एव न तु प्राप्तृप्रापयितृसौकर्यक्रम इति चतुर्थं पूर्वपक्षं प्रतिक्षेप्तुमिति भावेन कथितानुवृत्ति-रित्युक्तन्यायं विशदयन्नाह ॥ **क्रमेऽपीत्यादिना** ॥ ततश्चायं सूत्रार्थ: 'प्रतीकं देह उद्दिष्ट' इति वचनात् अङ्गं प्रतीकोऽवयवमित्यमरकारेणाप्युक्तत्वादुपलक्षणमेतत् । प्रतीकं देहादिकमित्यनु-व्याख्यावचनादादिपदेन मन:प्रभृतीनां भगवत्प्रतिमानां ग्रहणमिति सुधायां व्याख्यातत्वाच्च । तथा च तत्रैव देहादावेव ब्रह्म पश्यन्त: प्रतीकालम्बनास्तदन्ये व्याप्तदर्शिनोऽप्रतीकालम्बनास्तानप्रतीका-लम्बनत्वरूपयोग्यताविशेषयुक्तान् कांश्चिदेव परं नयति अन्यान्प्रतीकालंबनत्वरूपतदवरयोग्यता-युक्तान् कार्यं न तु सर्वान्, कार्यं वा परं वा उभयथा च दोषस्योक्तत्वादस्मत्पक्षे तदभावात् । नापि योग्यताक्रमेच्छया वा सौकर्यक्रमेण वा नयति । कुतस्तत्क्रतुश्च । श्रुतिसूचकमेतदूष्मेतिवत् । चशब्दश्च प्रतीकं देह उद्दिष्ट:, क्रमानुरागी, अप्रतीकाश्चतुर्मुखमित्यादिश्रुतिस्मृतिसमुच्चायक: । हेत्वर्थे च । यस्मात्स यथाकामो भवतीत्यादि श्रुतिरस्ति तस्मात् प्रमाणबलेनैच्छिकप्राप्तेर्निषिद्धत्वात् योग्यताक्रमेणोभयप्राप्तेश्चोक्तत्वाच्चेति बादरायणो मन्यत इति ।

## तत्त्वसुबोधिनी

तृतीयपक्षोक्तक्रमेण प्राप्तिरस्ति न वेति संदेहेन प्राप्तिरित्याशयेन पूर्वत्र पूर्वपक्षं उपपादयति ॥ **तृतीयपक्षेऽपीति** ॥ **पक्षद्वयेऽपीति** कार्यपरप्राप्तिरूपपक्षद्वयेऽपीत्यर्थः । न च उक्तक्रमेण । उभयप्राप्तिरित्याह **क्रमस्य चेति** ॥ (किञ्च यत्प्राप्तुमिति स्मृतौ दृष्टान्तेनैव प्राप्तेरुक्तत्वात् न क्रम इत्याह) ॥ **यत्प्राप्तुमिति** ॥ अस्तु वा क्रमः । तथापि सौकर्यक्रमात् ग्राह्यो न योग्यतारूप इत्याह ॥ **क्रमपक्षेऽपीति** ॥ ननु पक्षद्वयस्य अपरिहार्यत्वे क्रमं विना उभयप्राप्तिरस्तु इत्यत आह ॥ **महाफल इति** ॥ अक्रमस्य इति क्रमाभावस्य इत्यर्थः । क्रमान्तरेण अन्यथासिद्धिं परिहरति ॥ **क्रमान्तरस्येति** ॥ तथा च सौकर्यरूप एव वक्तव्य इति भावः । उभयपक्षोक्तदोषमाह । **परप्राप्ति-पक्षेति** ॥ **कार्यमेव नयतीत्यन्यव्यावृत्तेति** ॥ परप्राप्तिग्रहणे कार्यप्राप्तौ उक्तहेत्वनुपपत्तिलक्षणदोषः तदा स्यात् इति कार्यप्राप्तौ उक्तहेतोः परं प्रति बाधकरूपत्वेन कार्यमात्रप्राप्तौ विशेषहेतुत्वं स्यात् । न चैवमित्यर्थः ।

ननु बद्धत्वेन परगत्यनुपपत्तेः उक्तत्वात् कथं विशेषहेत्वभावः इत्यत आह ॥ **येषां परप्राप्ति-रिति** ॥ **प्रमाणबलेनेति** ॥ ब्रह्मशब्दमुख्यार्थदृष्टत्वरूपयुक्तिरूपप्रमाणबलेनेत्यर्थः । तर्हि प्राप्नोति ब्रह्माणं इत्यस्य का गतिरित्यत आह ॥ **श्रुत्यादीनामिति** ॥ **अन्यनिषेधकत्वाभावादिति** ॥ प्राप्नोति ब्रह्माणं चतुर्मुखमित्यवधारणाभावः ॥ **नापि परमेवेति** ॥ कार्यप्रतिग्रहणे परमाप्राप्तौ उक्तहेत्वनुपपत्तिलक्षणो दोषस्तदा स्यात् । यदि परप्राप्तावुक्तहेतोः कार्यप्राप्तिबाधकरूपत्वेन परमात्रप्राप्तौ विशेषहेतुत्वं स्यात् । न चैवमित्यर्थः । ननु ब्रह्म गमयतीत्यत्र ब्रह्मशब्दस्य विष्णौ मुख्यत्वेन विशेषहेतुत्वात् कथं तदभाव इत्यत आह ॥ **केषाञ्चित् कार्यप्राप्तेरेवेति** ॥ प्राप्नोति ब्रह्माणं चतुर्मुखमिति प्रमाणबलेनेत्यर्थः । दर्शनप्रतिपत्यभिसन्धीनामपि विशेषहेतुत्वं निरस्यति ॥ **कार्यप्राप्ति मतां चेति** ॥ ननु पक्षद्वयोक्तदोषाभावेऽपि पक्षद्वयाङ्गीकारेऽपि मुनिमतद्वयविरोधात् दोषः स्यादित्यत आह ॥ **मुनिमतयोश्चेति** ॥ **यान्ति देवमिति** ॥ केचित्परं देवं पूर्वं यान्ति केचिल्लये विभुं यान्तीत्यर्थः । एतत्प्राप्यम् । ननु यथोभयप्राप्तौ भाष्योदाहृता स्मृतिरस्तीत्याशङ्क्य परिहरति ॥ **न च यत्प्राप्तुमिति** ॥ अत्र कर्मोपासनमेवेति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे ॥ **न चात्रेति** ॥ कार्यब्रह्मपरोपासनस्येत्यर्थः ।

## वाक्यार्थविवरणम्

**पक्षद्वयेऽपीति** ॥ चतुर्मुखप्राप्तिपक्षे बादर्याचार्योक्तसाधकस्य, परब्रह्मप्राप्तिपक्षे जैमिन्याचार्योक्तस्य साधकस्य सद्भावादित्यर्थः ॥ **कस्मादिति** ॥ सौकर्यरूपः क्रमः कस्मादङ्गीकार्यः । सर्वथा क्रमाभाव एव किं न स्यात् । क्रमान्तरं वा किं न स्यादिति भावः । परिशेषादित्याह ॥ **पक्षद्वयस्यापीति** ॥ कार्याकार्यब्रह्मप्राप्तिरूपपक्षद्वयस्यापि बादरिजैमिन्युक्त-युक्तिसिद्धत्वेनापरिहार्यत्वादित्यर्थः ॥ **अक्रमस्येति** ॥ क्रमाभावस्येत्यर्थः । **क्रमान्तरस्य चेति** ॥ योग्यतारूपस्येत्यर्थः ॥ **अदर्शनादिति** ॥ तत्र प्रमाणाभावादित्यर्थः । अतः सौकर्यमेव क्रम इति भावः । श्रुत्यर्थः स एनानिति श्रुत्यर्थः । तदेवोपपादयति ॥ **परप्राप्तीति** ॥ **गत्यनुपपत्तीति** ॥ बद्धत्वेन परब्रह्मप्राप्त्यनुपपत्तिरित्यर्थः । दोषद्वयाभावमुपपादयितुं परब्रह्मप्राप्तिपक्षे दोषाभावं तावदुपपादयति ॥ **कार्यमेवेति** ॥ कार्यमेव ब्रह्म नयतीत्येवं परब्रह्मप्राप्तिनिषेधपूर्वकं कार्यप्राप्तौ यदि विशेषप्रमाणरूपो हेतुः स्यात् तदा परब्रह्मप्राप्तिरनुपपन्ना स्यात् ॥ **न चैवमस्ति** ॥ अतः परप्राप्तिर्युक्तेत्यर्थः ।

ननु बद्धत्वेन परब्रह्मगत्यनुपपत्तेरुक्तत्वात् कथं विशेषहेत्वभाव इत्यत आह ॥ **येषामिति** ॥ **प्रमाणबलेनेति** ॥ ब्रह्मशब्दमुख्यार्थत्वापरोक्षीकृततत्वरूपयुक्तिरूपप्रमाणबलेनेत्यर्थः । तथा च बद्धत्वमप्रयोजकमिति भावः ॥ **गत्युपपत्तेरिति** ॥ परब्रह्मगत्युपपत्तेरित्यर्थः । ननु कार्यमेव नयतीत्यन्यव्यावृत्त्या कार्यप्राप्तिः कुतो नोच्यत इत्यत आह ॥ **श्रुत्यादीनां चेति** ॥ प्राप्नोति ब्रह्माणं चतुर्मुखमित्यत्रावधारणाभावादिति भावः । एवं परप्राप्तिपक्षे दोषाभावमुपपादयति ॥ **नापीति** ॥ **प्रमाणबलेनेति** ॥ प्राप्नोति ब्रह्माणं चतुर्मुखमिति प्रमाणबलेनेत्यर्थः । ननु परमेव ब्रह्म प्राप्नोतीत्यवधारणे ब्रह्मशब्दमुख्यार्थत्वमेव हेतुरिति चेत्तत्राह ॥ **ब्रह्मशब्दस्येति** ॥ **न्यायत्वादिति** । प्राप्नोति ब्रह्माणं चतुर्मुखमिति श्रुतिबलादिति भावः । नन्वथापि कार्यब्रह्मप्राप्तिरनुपपन्ना । तद्विषये दर्शनप्रतिपत्त्यभिसन्धीनामभावादिति चेत्तत्राह ॥ **कार्यप्राप्तिमतां चेति** ॥ **तद्दर्शनादीति** ॥ पुष्करमारभ्य चतुर्मुखान्तसर्वतत्वाभिमानिदेवतासाक्षात्कारानन्तरमेव परब्रह्मसाक्षात्कारस्य 'यस्मा-दन्ते हरेर्दृशिः' इति प्रमाणप्रमितत्वेन कार्यब्रह्मदर्शनस्य विद्यमानत्वात् । अङ्गदेवतासाहित्येन भगवदुपासनस्य कृतत्वेन तत्प्रतिपत्तेरपि सद्भावात् । अभिसन्ध्यभावे उपासनाया एवायोगेन तस्या अपि सद्भावाच्चेत्यर्थः ।

(वाक्यार्थविवरणम्)

पक्षद्वयाङ्गीकारे मुनिमतद्वयविरोधः स्यादित्यत आह ॥ **मुनिमतयोश्चेति** ॥ केचित् अप्रतीकालम्बनाः, केचित् प्रतीकालम्बनाः ॥ **एतदिति** ॥ कार्याकार्यब्रह्मणी प्रतिगमनमित्यर्थः । यथेष्टम् । यथेच्छम् अव्यवस्थितमित्यर्थः ॥ **तत्प्राप्तीति** ॥ कार्यब्रह्मादीत्यर्थः ॥ **तज्ज्ञानेति** ॥ तच्छ्रवणेत्यर्थः ॥ **अपरोक्षैरेवेति** ॥ तथा चेच्छाया अप्रयोजकत्वमिति भावः । 'प्रतीकं देह उद्दिष्टः' इति प्रमाणे 'अप्रतीका देवतास्तु' इत्यत्र देवता इत्यस्य देवकुलजाता अनाख्याता देवा आजानजा देवता इत्यर्थः । प्रतीकालम्बना इति शेषः । स्वदेहे ब्रह्मदृष्ट्या परब्रह्मसाक्षात्कारेण ब्रह्मसलोकतां चतुर्मुखसमानलोकतां सत्याख्यं चतुर्मुखलोकं गच्छेदित्यर्थः । 'स यथाकामो भवति' इत्यादिश्रुतेरयमर्थः । अत्र क्रतुः ज्ञानम्, कर्म उपासनम् । तथा च सोऽधिकारी यथाकामो यद्विषयकश्रवणज्ञानप्राप्तिकामो भवति तत्क्रतुर्भवति । तद्विषयकज्ञानवान् भवति । तत्कर्म कुरुते । तद्विषयकोपासनं करोति । यत्कर्म कुरुते यद्विषयकमुपासनं करोति तदभिसम्पद्यते । यद्विषयकापरोक्षज्ञानं प्राप्नोति तदभिसम्पद्यते प्राप्नोतीत्यावृत्या योज्यमिति । सूत्रार्थमाह ॥ **अप्रतीकालम्बनानामिति** ॥ **क्रमस्यैवेति** ॥ योग्यतारूपक्रमस्यैवेत्यर्थः ।

## वाक्यार्थमञ्जरी

**साधकेति** ॥ इच्छारूपेत्यर्थः । ननु पक्षद्वयस्याप्यपरिहार्यत्वात्क्रमं विनैवोभयप्राप्तिरस्त्वित्यत आह ॥ **महाफल इति** ॥ अक्रमस्य क्रमाभावस्य क्रमान्तरेणान्यथासिद्धिं परिहरति ॥ **क्रमान्तरेति** ॥

ॐ अप्रतीकालंबनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ प्रतीके देहे ब्रह्म पश्यन्तः प्रतीकालंबनाः व्याप्तब्रह्म पश्यन्तोऽप्रतीकालंबनास्तत्र वायुः अप्रतीकालम्बनान्परं ब्रह्म नयतीति प्रतीकालंबनान् चतुर्मुखं कुतः उभयथा च दोषात् सर्वान् कार्यमेव नयति परमेव नयतीत्यङ्गीकारे चोक्तदोषप्राप्तेः किमिच्छानुसारेणोभयप्राप्तिरित्यत उक्तं **तत्क्रतुश्चेति** ॥ श्रुतिग्रहणमेतत्स यथाकाम इति श्रुतेर्यतोऽतोऽनेच्छानुसारेण प्राप्तिरित्यर्थः ॥ **कार्यमेव नयतीति** ॥ अन्यव्यावृत्त्येति परप्राप्तग्रहणे कार्यप्राप्तौ उक्तहेत्वनुपपत्तिलक्षणदोषस्तदा स्यात् यदि कार्यप्राप्तावुक्तहेतोः परप्राप्तिबाधकरूपत्वेन कार्यमात्रप्राप्तौ विशेषहेतुत्वं स्यान्नैवमित्यर्थः । ननु बाधकत्वेन गत्यनुपपत्तेरुक्तत्वात्कथं विशेषे हेत्वभाव इत्यत आह ॥ **येषां परप्राप्तिरिति** ॥ **प्रमाणबलेनेति** ॥ ब्रह्मशब्दमुख्यार्थदर्शनोपास्त्यभिसंधिरूपयुक्तिरूपप्रमाणबलेनेत्यर्थः ॥ **अन्यनिषेधकत्वाभावादिति** ॥

(वाक्यार्थमञ्जरी)

प्राप्नोति ब्रह्माणं चतुर्मुखमित्यादाववधारणाद्यभावादिति भावः ।। ननु गमयतीत्यत्र ब्रह्मशब्दस्य विष्णौ मुख्यत्वे विशेषहेत्वभावात्कथं तदभाव उत्पत आह ।। **केषाञ्चिदिति** ।। प्राप्नोति ब्रह्माणं चतुर्मुखमिति प्रमाणबलेनेत्यर्थः । दर्शनोपास्त्यभिसन्धीनामपि विशेषहेतुत्वं पराचष्टे ।। **कार्यप्राप्तिमतां चेति** ।। ननु पक्षद्वयोक्तदोषाभावेऽपि पक्षद्वयाङ्गीकारे जैमिनिमतविरोधः स्यादित्यत आह ।। **मुनिमतयोश्चेति** ।।

## सूत्रभाष्यम्

**।। ॐ विशेषं च दर्शयति ॐ ।। १६ ।।**

**'अन्तःप्रकाशा वहिःप्रकाशाः सर्वप्रकाशाः । देवा वाव सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशाः मानुषा एव वहिःप्रकाशा इति चतुर्वेदशिखायाम् ।।**

।। इति कार्याधिकरणम् ।। ६ ।।

।। इति श्री आनन्दतीर्थभगवत्पादाचार्य विरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ।।

## तत्त्वप्रकाशिका

**यदुक्तं नेच्छानुसारेण प्राप्तिरपि त्वप्रतीकालम्बनत्वादिक्रमेणैवेति । तन्न । प्रतीकालम्बनाः केचिदप्रतीकालम्बनाः केचिदिति नियमाभावेन यथेष्टतदापादनस्यापि सम्भवादित्याशङ्कां श्रुत्या परिहरत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ।। विशेषं चेति ।। अतो ज्ञानिनां प्रलये पूर्वं च परब्रह्मप्राप्तिसद्भावात्तथानुस्मृतिरुपपन्नेति सिद्धम् ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां चतुर्थाध्यायस्य तृतीयः पादः ।।

## गुर्वर्थदीपिका

मानुषा एव बहिःप्रकाशा इत्यत्र बहिः प्रतिमादौ प्रकाशोऽपरोक्षज्ञानं येषां ते बहिःप्रकाशाः । अन्तरेव ध्याने सर्वत्र ध्याने च शक्त्यभावात्स्वदृग्गोचरप्रतिमायां ध्यात्वा तत्रैव स्वबिम्बभूत-परमात्मानं पश्यन्तीति भावः ।।

।। श्री वादिराजतीर्थविरचितायां गुर्वर्थदीपिकायां तृतीयः पादः ।।

## भावदीपः

पूर्वयोगोक्तप्रमेयदार्ढ्यायोत्तरयोग इति व्यनक्ति ॥ **यदुक्तमित्यादिना** ॥ **अत इति** ॥ पक्षद्वयेऽपि साधकभावाद्बाधकाभावाच्चेत्यर्थः । उत्तरपादप्रमेयसुज्ञानायाऽऽह ॥ **प्रलय इति** ॥ चतुर्मुखेन सहेत्यर्थः । प्रलयात्पूर्वं चतुर्मुखमप्राप्य साक्षादेवेत्यर्थः । 'भेजे खगेन्द्रध्वजपादमूलम्' इत्यादेः । तथाऽनुस्मृतिरिति फलोक्तिः ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते चतुर्थाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थमुक्तावली

चो हेतौ समुच्चये च । यस्माद्योग्यताया अप्रतीकालंबनत्वरूपं विशेषं च चतुर्वेदशिखायां वेदपुरुषो दर्शयति तस्मादप्रतीकालंबनान्नयतीत्यादि युक्तमित्यर्थः । कार्यप्राप्तेरल्पाधिकारिकत्वादादौ सूत्रपञ्चकेन तत्प्रदर्शनपूर्वं पूर्वपक्षकरणं परप्राप्तेरुत्तमाधिकारिकत्वादनन्तरसूत्रत्रयेण पूर्वपक्षकरणम् । अथ सूत्रद्वयेन सिद्धान्तप्रदर्शनम् । तत्राद्यपञ्चके आद्ये कार्यप्राप्तौ ब्रह्मशब्दविरोधपरिहाराय बद्धत्वयुक्त्या ब्रह्मशब्दस्य मुख्यार्थत्याजनम् । द्वितीये विशेषश्रुत्या तृतीये युक्तिश्रुत्योर्ब्रह्मविदाप्नोति परमिति श्रुतिविरोधपरिहाराय विलंबेन ब्रह्मप्राप्तिप्रतिपादनपरतया सावकाशत्ववर्णनम् । चतुर्थपञ्चमयोस्तु तत्र स्मृत्युपन्यासः । द्वितीयतृतीयके । आद्ये ब्रह्मशब्देन । द्वितीये ब्रह्मविदाप्नोति परमिति श्रुत्यनुगृहीतया ब्रह्मदर्शनयुक्त्या । तृतीये उपास्त इति स्मृत्युनुगृहीत ब्रह्मप्रत्यभिसन्धियुक्त्या पूर्वपक्षकरणम् । तृतीयद्वितीयके योग्यतारूपक्रमेणोभयप्राप्तिर्नान्यतरप्राप्तिर्नापि सौकर्यक्रमेण न वा क्रमं विहायेच्छयेत्यत्र श्रुतिस्मृत्युपन्यासः । द्वितीये क्रमस्य योग्यतारूपत्वे प्रमाणोदाहरणेन सिद्धान्तप्रदर्शनमिति सूत्रक्रमः ।

॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन विरचितायां श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां चतुर्थाध्यायस्य तृतीयः पादः ॥

## तत्त्वसुबोधिनी

अत्र आद्यसूत्रे चतुर्मुखस्य प्राप्यत्वे गत्युपपत्तिहेतुरूपहेतूक्तिः । द्वितीये तत्रैव श्रुत्युक्तिः । तृतीये ब्रह्मविदिति श्रुतेः समीपत एव ब्रह्मप्राप्तिरूपप्रमाणोक्तिः । चतुर्थे श्रुतिरूपप्रमाणोक्तिः ।

(तत्वसुबोधिनी)

पञ्चमे तत्रैव किं विशेषस्मृतिः तत्रैव प्रमाणोक्तिः । षष्ठे ब्रह्मशब्दमुख्यार्थत्वरूपहेतूक्तिः । सप्तमे दृष्टत्वरूपहेतूक्तिः । अष्टमे मुख्यार्थस्वीकारबाधकोक्तिः । नवमे उभयोरपि प्राप्यत्वमिति सिद्धान्तोक्तिः । परमिति शेषः ॥ अन्यान् कार्यमित्यस्योपलक्षणम् । तथा चाप्रतीकालान् नयतीति प्रतिज्ञा । उभयथा च दोषादिति हेतूक्तिः । तत्क्रतुश्चेति क्रमोक्तिः । अप्रतीकालम्बनानित्यादिना क्रमस्य योग्यतारूपत्वोक्तिः । दशमे तत्र श्रुतिरूपप्रमाणोक्तिः इति सूत्रक्रमः ।

॥ इति श्रीतत्त्वप्रकाशिकाविवृतौ तत्वसुबोधिन्यां पाण्डुरङ्गि आनन्दाचार्यसूनु श्रीनिवासाचार्यकृतायां चतुर्थाध्यायस्य तृतीयःपादः ॥

## वाक्यार्थविवरणम्

**यथेष्टतदापादनस्यापीति** ॥ यथेष्टं स्वेच्छानुसारेण योग्यतामतिक्रम्य प्रतीकालम्बनैरप्यकार्यब्रह्मप्राप्तिसम्पादनस्यापि सम्भवादित्यर्थः ॥ **विशेषं चेतीति** ॥ उक्तरीत्या योग्यतातिरेकेण यथेष्टं तदापादनमसम्भावितमेव । 'अयोग्यदर्शने यत्नाद् भ्रंशः पूर्वस्य चापि तु' इत्यादिश्रुतेरिति भावः । श्रुतौ अन्तः स्वरूपान्तः परब्रह्मप्रकाशो येषां ते तथेत्यर्थो द्रष्टव्यः । अधिकरणार्थमुपसंहरति ॥ **अत इति** ॥ **ज्ञानिनामिति** ॥ प्रतीकालम्बनानामप्रतीकालम्बनानां च सर्वेषां ज्ञानिनां च प्रलये चतुर्मुखेन सह परब्रह्मप्राप्तिसद्भावात् । तथा ज्ञानिनामप्रतीकालम्बनानां पूर्वं च वैकुण्ठस्थपरब्रह्मप्राप्तिसद्भावादित्यर्थः ॥

॥ इति तत्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासतीर्थकृते चतुर्थाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थमञ्जरी

देवा इति श्रुतिरप्रतीकालंबनादिविशेषं च दर्शयतीत्यर्थः ॥ ६ ॥

॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्करा श्रीनिवासविरचितायां चतुर्थाध्यायस्य तृतीयः पादः ॥

॥ इति कार्याधिकरणम् ॥ ६ ॥

### ॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥

# अथ चतुर्थाध्यायस्य चतुर्थः पादः

## १. सम्पद्याधिकरणम्

### भोगमाहास्मिन् पदे

**॥ ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ॥ १ ॥**

'स य एवंविदेवं मन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान्कामाननुभवति' इति सौपर्णश्रुतेः ।

'परञ्ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति च ।

'एतं सेतुं तीर्त्वान्धस्सन्ननन्धो भवति' इति च । तत्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव ।

'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दी भवति' इति मौद्गल्यश्रुतेः ॥

॥ इति सम्पद्याधिकरणम् ॥ १ ॥

### तत्त्वप्रदीपिका

उक्तप्रकारद्वयेन परं ब्रह्म प्राप्तानां प्रलये प्रागुक्तप्रकारेण प्रविष्टानां स्वरूपानन्दानुभविनां सर्गे निर्गतानां मुक्तानां बहुविधमानन्दभोगमाहास्मिन्पादे । न च शून्यता मुक्तिः । तथात्वे तत्रार्थित्वासम्भवात् । न हि कश्चित्स्वरूपनाशमिच्छति । इच्छति दुःखातिरेकीति चेन्न । देहविरहमात्रस्य तस्येष्टत्वात् । देहदेहिविभागाज्ञः स इति चेत्तर्हि न शास्त्रात्तज्ज्ञ इच्छेत् । दुःखोच्छेदार्थं चेत्तदुपायमिच्छतु नात्मोच्छेदम् । न च नास्त्यात्मा । अहमस्मि न नास्मीत्यबाधितानुभवात् । न च भ्रान्तिसिद्धमिथ्याविशेषोच्छेदो मोक्षः । अविद्यमानोच्छेदस्यानेष्टव्यत्वात् । भ्रान्तिनिवृत्तिरिष्यत इति चेन्न । भ्रान्तेस्सत्त्वानङ्गीकारात् । अनिर्वचनीयाज्ञानाज्जायतेऽनिर्वचनीयो विशेषः तत्प्रतीतिश्च, तन्निवृत्तिस्स इति चेत्, कस्याज्ञानं अनिर्वचनीयस्य सत्यस्य वा? नाद्यः । सम्यग्बोधे तन्निवृत्तिप्रसङ्गात् । नान्त्यः । स्वत एव सत्यत्वविशेषप्रसङ्गात् । न च शून्यमस्मि, निर्विशेषोऽस्मीति वाऽनुभवे मोक्षे विशेषनिराकरणं

(तत्त्वप्रदीपिका)

शक्यम् । न च नानुभवः । स्वयम्भातत्वप्रतिज्ञाहानेः । अतः सविशेषो मोक्ष इत्यभ्युपेयताम् । न च क्षणिकस्य मोक्षस्तत्र प्रवृत्तिर्वा युज्यते, स्वरसभङ्गुरत्वादेवं । न च सन्तानस्य मोक्षायान्यः प्रवर्तते । अयुक्तेः । सन्तानस्य चावस्तुत्वान्न प्रवृत्तिः । दुःखनिवृत्तिमात्रं मोक्ष इति तु पुरस्तान्निरस्तम् । अतो विशिष्टस्वरूपानन्दानुभवो मोक्ष इति विचक्षणाः प्रचक्षते । अतः साधूदितं भोगमाहेति ॥ सम्पद्याविहाय स्वेन शब्दात् ॥ सम्पद्येत्यनेन 'पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान्कामाननुभवति' इति मोक्षे यथेष्टकामभोगवादिनी सौपर्णश्रुतिमुपलक्षयति । स्वेनेति च 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति मोक्षं प्रस्तुत्य 'स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा' इतिवादिनीम् । 'सेतुं तीर्त्वा' इत्यादिश्रुतेः तमतिक्रम्य भुङ्क्ते इति नाशङ्कनीयमित्यविहायेति मौद्गल्यश्रुतिं सूचयति– 'एतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दीभवति' इति, तेनैव भोगवादिनीम् । एवं मुक्तस्य भोगोऽवगम्यते शब्दादिति भाष्याभिप्रायः ॥

'सुखं स्वरूपभूतं यदानन्द इति कीर्तितम् ।
मुन्नाम विषयोत्थं यत्प्रकृष्टविषयात्प्रमुत्' इति महामीमांसायाम् ॥

## तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति ॥ **भोगमिति** ॥ चतुर्विधफले त्रयमुक्त्वा चतुर्मुखेन सह परं ब्रह्म प्राप्तानां यस्तत्र भोगः क्रमप्राप्तस्तमत्राह सूत्रकार इत्यर्थः । अत्रादौ मुक्तस्य ब्रह्मानतिक्रमेणैव भोगानुभवसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ब्रह्मणो गम्यत्वाभावप्रसङ्गात्समर्थनीयमेतत् । मुक्तौ ब्रह्म प्राप्नोतीत्युक्तम् । तस्य च भोग आवश्यकः । स मुक्तोऽत्र विषयः । किं ब्रह्मातिक्रम्य भोगान् भुङ्क्ते उत तत्समीप एवेति सन्देहः । अर्चिराद्यतिक्रमोक्तिर्गम्यत्वोक्तिश्च सन्देहबीजम् । अतिक्रामतीति पूर्वः पक्षः । तथा हि । परमात्मानमविहायैवावस्थाने तस्य स्वरूपाविर्भावोऽस्ति न वा । नाद्यः । 'एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' इति परमात्मातिक्रमानन्तरमेव स्वरूपाविर्भावस्योक्तत्वात् । द्वितीये न विरोधः । अनाविर्भूतस्वरूपस्यामुक्तत्वेन मुक्तातिक्रमाव्याघातात् । अतो मुक्तस्य ब्रह्मातिक्रमनियमान्न तद्गम्यमिति । सिद्धान्तयत्सूत्रं पठति ॥ **सम्पद्येति** । ज्ञानी ब्रह्म प्राप्य तदविहायैव भोगान् भुङ्क्ते । न चैवममुक्तत्वम् । अन्यथारूपं परित्यज्य स्वरूपेणावस्थानादिति सूत्रार्थः । तत्र ब्रह्म प्राप्याविहायैव भोगान् भुङ्क्त इत्येतत्कुत इत्यतः सूत्रसूचितां श्रुतिमुदाहरति ॥ **स इति** ॥ ब्रह्मानतीत्याप्याविर्भूतस्वरूपत्वेन भोगो मुक्तानामित्येतत्कुत इति तत्रापि सूत्रसूचितां

(तत्त्वप्रकाशिका)

श्रुतिमुदाहरति ॥ **परमिति** ॥ नन्वेवं यदि ब्रह्मानतिक्रमेऽपि स्वरूपेणाविर्भावश्चेच्छ्रुतिविरोध इत्यत आह ॥ **एतमिति** ॥ सत्यमेवं श्रुतिरस्तीति तथापि नोक्तस्य तद्विरोधः । यतस्तत्रैतं सेतुं गन्तुमन्यत्तीर्त्वेति तत्प्राप्तयेऽन्यतरणमेवोच्यते न तु ब्रह्म तीर्त्वा स्वरूपाविर्भाव इति भावः । कुत एतदित्यत आह ॥ **इमामिति** ॥ एतं सेतुं तीर्त्वेदं गच्छतीति वचनाभावेनैतच्छ्रुतेः सामान्यरूपत्वाद्विशेषश्रुत्यनुसारेणार्थकल्पनोपपत्तेरिति भावः । अतो मुक्तस्य ब्रह्मातिक्रमाभावात्तदेव गम्यमिति सिद्धम् ॥

## गुर्वर्थदीपिका

अर्चिराद्यतिक्रमोक्तिर्गम्यत्वोक्तिश्चेत्यत्रार्चिरादीनां क्रमेण गम्यत्वमुक्त्वा तेषामेव गम्यानामतिक्रमोक्तिस्तद्बलादतिक्रामतीति शङ्का । गम्यत्वोक्तिः गम्यान्तरमनुक्त्वा केवलं ब्रह्मण एव गम्यत्वोक्तिस्तद्बलान्नातिक्रामतीति शङ्केत्यर्थः । इमां घोरामशिवां नदीमित्यत्र नदीं संसारनदीमित्यर्थः । 'नदीमुभयतो वाहाम्' इति भागवतोक्तेः ।

## भावबोधः

**क्रमप्राप्त इति** ॥ अनेनास्य पादस्यानन्तरसङ्गतिरुक्ता भवति ॥ **गम्यत्वाभावप्रसङ्गादिति** ॥ अनेन पूर्वपादान्त्याधिकरणोक्तस्य ब्रह्मणो गम्यत्वस्यात्र समर्थनादनन्तरसङ्गतिरुक्ता भवति । उक्तभोगस्यैवाप्रसक्तौ ब्रह्मातिक्रम्यानतिक्रम्य वा भोगान् भुङ्क्ते इति सन्देहप्रकारकथनमशक्यमित्यत आह– **तस्य च भोग आवश्यक इति** ॥ अन्यथा मुक्तेः पुरुषार्थत्वं न स्यादिति भावः । **ब्रह्मातिक्रम्येति** । अत्र मुक्तः किं ब्रह्मातिक्रम्य भोगान् भुङ्क्ते उत तत्समीप एवेति चिन्ता । तदर्थम् 'अन्धः सन्ननन्धो भवति' इत्युक्तस्वरूपाविर्भावः पूर्वकालीन 'तीर्त्वा' इत्युक्ततरणकर्मत्वसमभिव्याहृतसेतुपदोक्तब्रह्मण उतान्यस्येति । तदर्थम् 'एतं सेतुं गन्तुमन्यत्तीर्त्वा' इति वाक्यभेदाय पदद्वयाध्याहारो न कर्तव्य उत कर्तव्य इति । तदर्थमध्याहारज्ञापकं मुक्तस्य ब्रह्मातिक्रमाभावे नदीविशेषस्य मुक्तकर्तृकतरणकर्मत्वे च विशेषप्रमाणं नास्त्युतास्तीति ॥ **अर्चिराद्यतिक्रमोक्तिरिति** ॥ अर्चिरादावतिक्रमसहदृष्टत्वस्य प्राप्यत्वस्य ग्रामादावनतिक्रमसहदृष्टगम्यत्वस्य च ब्रह्मणि दर्शनादिति भावः । सूत्रस्थ'स्वेन' इति पदसूचितन्यायविवरणभाष्योक्तपूर्वपक्षयुक्तिं सङ्गमयितुं विकल्पेन पृच्छति– परमात्मानमविहायैवेति । 'एतं सेतुं तीर्त्वा' इत्यतिक्रमोक्ते ब्रह्मातीत्य

(भावबोधः)

गच्छतीति न्यायविवरणोक्तयुक्त्याऽऽद्यं पक्षं निराचष्टे– **नाद्य इत्यादिना** । अत्र सूत्रे 'परं जैमिनिः' इत्यतः ब्रह्मार्थक 'पर'मित्यस्यानुवृत्तिः । 'अविहाय' इत्यतः परं भोगान् भुङ्क्ते इति शेषः । 'स्वेन' इत्यतः परं रूपेणावस्थानादिति च शेष इत्यभिप्रेत्य सूत्रार्थमाह– **ज्ञानी-त्यादिना** ॥ अविहायानतिक्रम्येत्यर्थः । स्वेन रूपेणावस्थानं संसारावस्थायामप्यस्तीत्यतः अन्यथारूपं परित्यज्येत्युक्तम् । आविर्भूतस्वरूपत्वेन भोगो मुक्तानामित्येतत् कुत इति । यद्यप्युदाहरिष्यमाणश्रुत्यंशे भोगो न प्रतीयते, तथापि तच्छेषे 'स तत्र पर्येति' इत्यत्र स्पष्टं भोगः प्रतीयत इति भावः ॥ **यतस्तत्रेति** ॥ तत्र तरणमित्यादिभाष्यव्याख्यानपरेणानेनैव 'सेतुं गच्छत्यन्यत्तीर्त्वा इत्यर्थोपपत्तेरिति न्यायविवरणांशोऽपि व्याख्यातो भवति । एतं सेतुं तीर्त्वेदं गच्छतीति । अनेन 'ब्रह्म तीर्त्वेदं गच्छति' इति विशेषानुक्तेः 'तरति' इति सामान्यप्रतीतेः 'इमां घोरामशिवां नदीं तीर्त्वा ब्रह्म सम्पत्स्यते' इति विशेषोक्तेश्चेत्यन्वयप्रदर्शनपूर्वकं न्यायविवरण-स्याप्यर्थ उक्तो भवति ।

## भावदीपः

एतत्पादार्थमिति पूर्ववत् । पादार्थोक्तिश्च वृत्तवर्तिष्यमाणसङ्गतिसूचनायेति भावेन व्याचष्टे ॥ **चतुर्विधेति** ॥ कर्मक्षयोत्क्रान्तिमार्गभोगरूपेत्यर्थः । लयात्पूर्वं साक्षात्परं प्राप्तानां भोगस्यात्रानुक्ते-र्बाधनिरासाय वा देहलयेनोत्तरोत्तरं प्रविष्टानामपि ग्रहणाय वाऽऽह ॥ **चतुर्मुखेनेति** ॥ अत्रेत्यधिकरणे ब्रह्मेति शास्त्रे मुक्तस्येत्यध्याये भोगेति पादे सङ्गतिरुपपादिता । एवमग्रेऽपि । पूर्वसङ्गतिफले आह ॥ **अन्यथेति** ॥ ब्रह्मातिक्रम इत्यर्थः । परं जैमिनिरित्युक्तप्रमेयसमर्थनमत्रेत्युक्तं भवति ॥ **उक्तमिति** ॥ परमित्यादौ । ननु भोगोऽस्ति न वेत्यविचार्य तद्विशेषचिन्तनमनवसर-दुष्टमित्यत आह ॥ **तस्य चेति** ॥ मुक्तेशाभेदस्य भोक्त्रापत्तेरित्यत्रैव निरासेन नैर्गुण्यमुक्तिनिरासा-त्पुंस्त्वादिवदित्यत्र ज्ञानसुखादिरूपत्वस्य जीवे प्रतिपादनेनेश्वरज्ञानेनावरणादिनिवृत्तौ स्वरूपा-नन्दानुभवरूपमोक्षस्यावश्यकत्वात् । अन्यथा मुक्तेरपुमर्थत्वापत्तेः । अत एव पूर्वमादावित्युक्तम् । भोगो नाम दर्शनस्पर्शनादिरूपविषयानुभवजन्यसुखानुभव इति भावः । एवं सेतुं तीर्त्वेत्यत्राति-क्रमोक्तेर्मुक्तो ब्रह्म तीर्त्वा गच्छतीत्यन्यत्रोक्तप्रतिज्ञामाह ॥ **अतिक्रामतीति** ॥ अतिक्रमोक्ते-रित्यन्यत्रोक्तहेतोरतिक्रम्य नैष्फल्येन प्राप्तप्रयोजकत्वशङ्काव्युदासाय साक्षात्तमेव हेतुमनुक्त्वा

(भावदीपः)

विकल्पपूर्वं तद्धेतूक्तिभावमाह ॥ **परमात्मानमित्यादिना** ॥ शब्दादिति सूत्रांशव्यावर्त्यमाह ॥ **एतमिति** ॥ **अनन्तरमेवेति** ॥ अत एव भाष्ये श्रुतिशेषोक्तिः । अन्यथा तीर्त्वेत्यन्तमेव ब्रूयादिति भावः । न विरोध इति पदच्छेदः ॥ **अत इति** ॥ ब्रह्मानतिक्रमे स्वरूपानाविर्भावादित्यर्थः । भाष्ये श्रुतिद्वयोक्त्या सूचितं सूत्रखण्डस्यार्थमाह ॥ **ज्ञानीति** ॥ **सूत्रेति** ॥ सम्पद्येति पदसूचितामित्यर्थः ॥ **तत्रापि सूत्रेति** ॥ स्वेनेति पदसूचितामित्यर्थः । स तत्र पर्येति जक्षन् क्रीडन्निति वाक्यशेषे भोगोक्तेरिति भावः । द्वयोरपि श्रुतित्वाविशेषाद्वैपरीत्यं कुतो नेत्यतो न्यायविवरणोक्तदिशा तात्पर्यमाह ॥ **एतं सेतुं तीर्त्वेदमिति** ॥ **अत इति** ॥ ब्रह्मतरणश्रुतेरन्यार्थतया तद्विरोधाभावादित्यर्थः ।

## अभिनवचन्द्रिका

**एतत्पादार्थमिति** ॥ 'अस्याऽध्यायस्यैकार्थत्वात्पादभेदः किं निबन्धन इत्यतः फलेऽप्यवान्तरभेदेन पादभेद उपपन्न इति भावेन' इति वर्तते तस्याऽनेन सम्बन्धः ॥ **यस्तत्र भोग इति** ॥ अनुभवार्थको भुजिधातुः, कर्मणि व्युत्पन्नो विषयवाची, भावे व्युत्पन्नस्तु अनुभववाची । ततश्चेह प्रकरणे भोगशब्देन यथायोगं क्वचिद्विषयग्रहणं, क्वचिदनुभवग्रहणमिति बोध्यम् । **अर्चिराद्यतिक्रमोक्तिरिति** ॥ श्रीमद्भागवते – 'वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा । विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैंशुमारम्' इति अर्चिरादिवत् शिंशुमारस्यापि हरेः प्राप्तिमुक्त्वा 'तद्विश्वनाभं प्रतिपद्य विष्णोरणीयसा विरजेनाऽऽत्मनैकम् । नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्त' इत्यतिक्रमोक्तिः, 'स एनान् ब्रह्म गमयति' इति गम्यत्वोक्तिश्च, सन्देहबीजमित्यर्थः । एतेनाऽर्चिरादीनामतिक्रमोक्तेः, ब्रह्मणो गम्यत्वोक्तेश्च, भिन्नभिन्नविषयत्वेन विरुध्दोक्तित्वाभावात् असंदेहबीजत्वमिति परास्तम् । परमात्मनोऽपि अर्चिराद्यन्तर्गतत्वेनाऽतिक्रमप्राप्त्युक्त्योः एकविषयत्वात् भिन्नमूर्तिद्वयाऽविषयत्वेन विरुद्धताविज्ञानात्, प्राक्सन्देहहेतुत्वस्याऽवर्जनीयत्वात् । अथवा अर्चिरादिवत् ब्रह्मण आपातत 'एतं सेतुं तीर्त्वा' इत्यतिक्रमोक्तिः, गम्यत्वोक्तिश्च, सन्देहबीजमित्यर्थः ॥ **श्रुतिविरोध इति** ॥ 'एतं सेतुं तीर्त्वा' इति श्रुतिविरोध इत्यर्थः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** मुक्तो ब्रह्माऽतिक्रम्य भोगान् भुङ्क्ते । 'एवं तीर्त्वा' इति ब्रह्मातिक्रमानन्तरं स्वरूपाविर्भावस्य उक्तत्वेनाऽनतिक्रम्य स्थितस्य स्वरूपानुभवाऽयोगात् । अतो मुक्तस्य ब्रह्मातिक्रमनियमान्न तद्गम्यमिति ।

**सिद्धान्तस्तु** ब्रह्म सम्पद्याऽविहायैव भोगान् भुङ्क्ते । 'स एवं विदेवं मन्वान' इति श्रुतेः । 'परञ्ज्योतिरुपसम्पद्यस्वेन' इति श्रुतेश्च । न च 'एतं सेतुं तीर्त्वा' इति श्रुतिविरोधः । ब्रह्मप्राप्तयेऽन्यतरणस्यैव तदर्थत्वात् । अतो मुक्तस्य ब्रह्मातिक्रमाभावात् तदेव गम्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

॥ **एतत्पादार्थमिति** ॥ अन्यथा पूर्वपादेभ्यो भेदस्य सङ्गतेश्चाप्रतीतेरिति भावः । यथा पादार्थकथनं भेदसङ्गत्योः प्रत्यायकं तथा व्याचष्टे ॥ **चतुर्विधेति** ॥ **भोगानुभवेति** ॥ भोग्यानुभव इत्यर्थः । आदावत्र ब्रह्मापरित्यागासमर्थनेऽव्यवहितपूर्वाधिकरणोक्तं ब्रह्मणो गम्यत्वं न स्यादिति तत्फलाक्षेपेण पूर्वपक्षकरणादनन्तरसङ्गतिरिति भावः । ननु प्रमिते मुक्तभोगे तत्र प्रकारचिन्तावसरस्स एव कुत इत्यत आह ॥ **तस्य चेति** ॥ अन्यथा मुक्तेरपुरुषार्थत्वप्रसङ्गः । तथा च पुरुषार्थत्वान्यथानुपपत्तिरेव तत्र भोगे प्रमाणमिति भावः ॥ **किमिति** ॥ किं मुक्तो ब्रह्मातिक्रमेण भोगान्भुङ्क्ते उत तत्समीप एवेति चिन्ता । तदर्थमनतिक्रमेण भोगाङ्गीकारे तस्य स्वरूपाविर्भावलक्षणमुक्तत्वाभावप्रसङ्गो भवत्युत न भवतीति । तदर्थमेतं सेतुं तीर्त्वेत्यत्र स्वरूपाविर्भावायोच्यमानोत्तरणं प्रति कर्मत्वं किमेतं सेतुमिति श्रुतस्यैव ब्रह्मण उताध्याहृतस्यान्यस्येति ॥ **अर्चिराद्यतिक्रमेति** ॥ गम्यस्यार्चिरादेरतिक्रमोक्तिर्ब्रह्मणो गम्यत्वोक्तिश्चेत्यर्थः । ब्रह्म तावद्गम्यं स एनानिति श्रुतेः, यद्गम्यं तन्नातिक्रम्यं यथा ग्राम इति व्याप्तेर्ब्रह्मणोऽप्यनतिक्रमत्वं वा । कचिद्गम्यस्याप्यर्चिरादेरतिक्रमश्रवणादतिक्रम्यत्वं वेति सन्देह इत्यर्थः । सूत्रे स्वेनेत्यंशव्यावर्त्यं पूर्वपक्षमाह ॥ **नाद्य इति** ॥ कुतो नेत्यत एतं सेतुं तीर्त्वेत्यादिभाष्येण शब्दादिति सूत्रखण्डेन च व्यवच्छेद्यमतिक्रमोक्तिरिति न्यायं व्यनक्ति ॥ **एतं सेतुमिति** ॥ संपद्याविहायेत्यन्तसिद्धान्ते सम्पद्याविहाय स्वेनेत्याद्यपक्षाङ्गीकारात्तद्व्यवच्छेद्यं पूर्वपक्षमाह ॥ **द्वितीय इति** ॥ परमात्मानमविहायावस्थितस्य स्वरूपाविर्भावो नास्तीति द्वितीयपक्षे मुक्तस्य ब्रह्मातिक्रम इति स्वपक्षविरोध इत्यर्थः ॥ **तदुपपादयति** ॥ **अनाविर्भूतेति** ॥ सूत्रे परं जैमिनिरित्यतः परमिति वर्तते ।

(वाक्यार्थमुक्तावली)

अविहायेत्यतः परं भोगान् भुङ्क्ते इति शेषः । अविहायेत्यपि पदच्छेदः । तत्रान्यथारूपमिति शेषः । स्वेनेत्यतः परं रूपेणावस्थानादिति शेषः इत्यभिप्रेत्य सूत्रखण्डार्थमाह ।। **ज्ञानीति** ।। **सूत्रसूचितामिति** ।। संपद्येत्यनेन सूचितामात्मानमभिसंपद्येति पदघटितां श्रुतिमित्यर्थः ।। **तत्रापि सूत्रसूचितामिति** ।। स्वेनेत्यंशेन सूचितां स्वेन रूपेणाभिनिष्पद्यत इति पदघटितश्रुतिमित्यर्थः । यद्वा शब्दादित्यनेनैव सामान्येनोक्तां पदद्वयेन विशेषसूचितामित्यर्थः । अन्धः अनन्धो भवतीति भाष्ये चशब्दोऽप्यर्थे । यद्यपि श्रुतिरस्ति तथापीत्यर्थः नोक्तस्य तद्विरोधः तत्रेत्यतः पूर्वं यत इति शेषश्च । अन्यतरणमेवेत्यतः परमुच्यत इति शेष इति भावेन व्याचष्टे ।। **सत्यमेवमिति** ।। **कुत एतदिति** ।। कुत एतदित्यतस्सामान्यरूपमिति न्यायं दर्शयितुं शब्दादित्यंशं व्याचष्टे इत्यर्थः ।

## तत्त्वसुबोधिनी

**क्रमप्राप्त इति** । अनेनास्य पादस्य सङ्गतिरुक्ता भवति ।। **गम्यत्वाभावप्रसङ्गादिति** ।। अनेन पूर्वपादान्त्याधिकरणोक्तस्य ब्रह्मणः गम्यत्वस्यात्र समर्थनादनन्तरसङ्गतिरुक्ता भवति ।। **अन्यथेति** ।। ब्रह्मातिक्रमेण भोग इत्यर्थः । ननु मुक्तभोगस्यैवाभावात् मुक्तो ब्रह्मातिक्रम्यानतिक्रम्य वा भोगान्भुङ्क्ते इति सन्देहप्रकारकथनमशक्यमित्यत आह ।। **तस्य च भोग इति** ।। अन्यथा मुक्तेः पुरुषार्थत्वं न स्यात् इति भावः । **अर्चिराद्यतिक्रमोक्तिरिति** । अर्चिरादाविति क्रमसहदृष्टप्राप्यत्वस्य ग्रामादावनतिक्रमसहदृष्टगम्यत्वस्य च ब्रह्मणि दर्शनादिति भावः । विरोधाभावमेव प्रकटयति ।। **अनाविर्भूतेति** ।। **मुक्तातिक्रमाव्याघातादिति** ।। मुक्तस्य ब्रह्मातिक्रमप्रतिपादकवचनेन विरोधाभावादित्यर्थः । अत्र सूत्रे परं जैमिनिरित्यतः ब्रह्मार्थकपरमित्यस्यानुवृत्तिः । अविहायेत्यतः परं भोगान्न भुङ्क्ते इति शेषः । स्वेन इत्यतः परं रूपेणावस्थानादिति च शेषः इत्यभिप्रेत्य सूत्रार्थमाह ।। **ज्ञानीति** ।। अविहाय अनतिक्रम्येत्यर्थः । स्वेन रूपेणावस्थानं संसारावस्थायामपि अस्तीत्यतः अन्यथारूपं परित्यज्येत्युक्तम् । आविर्भूतस्वरूपत्वेन भोगो मुक्तानामित्येतत् कुत इति यद्यपि उदाहरिष्यमाणश्रुत्यंशे भोगो न प्रतीयते तथापि तच्छेषे स तत्र पर्येतीत्यत्र स्पष्टं भोगः प्रतीयते इति भावः ।

## वाक्यार्थविवरणम्

**मुक्तातिक्रमेति ॥** मुक्तो ब्रह्म अतिक्रम्य तदूर्ध्वं गच्छतीत्यस्याव्याघात इत्यर्थः । भाष्ये नदीं संसारनदीम् ।

## वाक्यार्थमञ्जरी

**गम्यत्वाभावेति ॥** तस्यार्चिरादिवन्मार्गत्वप्राप्तेरिति भावः । मुक्तभोगस्यैवाप्रसक्तौ मुक्तौ ब्रह्मातिक्रम्यानतिक्रम्य वा भोगान् भुङ्क्ते इति संदेहप्रकारकथनमशक्यमित्यत आह ॥ **तस्येति ॥** अन्यथा मुक्तेः पुरुषार्थत्वं न स्यादिति भावः ॥ **अर्चिराद्यतिक्रमोक्तिरिति ॥** अर्चिरादावतिक्रमसहदृष्टप्राप्यस्य ग्रामादावतिक्रमसहदृष्टगम्यत्वस्य च ब्रह्मणि दर्शनादिति भावः । सेतुरिव सेतुराश्रयो भगवान् अन्धः स्वरूपाविर्भावरहितः ॥ ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ॥ ज्ञानी परं ब्रह्म संपद्य प्राप्य अविहाय तदनतिक्रम्य स्वेन रूपेणावस्थितो भोगान् भुङ्क्ते कुतः शब्दादिमां घोरामिति श्रुतेरिति भावः । स्वरूपेणावस्थानस्य संसारेऽपि सत्त्वादन्यथारूपं परित्यज्येत्युक्तम् ॥

॥ इति सम्पद्याधिकरणम् ॥ १ ॥

## २. मुक्ताधिकरणम्

### ॥ ॐ मुक्तः प्रतिज्ञानात् ॐ ॥ २ ॥

मुक्त एव चात्रोच्यते ।

'अहरहरेनमनुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' इति बृहच्छ्रुतौ प्रतिज्ञानात् ॥

### तत्त्वप्रदीपिका

ननु नैतासु श्रुतिषु मुक्त उच्यते, वैषयिकसुखभोगित्वोक्तेः । न हि तन्मुक्तस्य समस्ति विषयाभावात् । विषयसम्बन्धात्सुखेष्टौ च तदपाये तदभावप्रसङ्गो दुःखानुषङ्गप्रसङ्गश्च, लोकवत् । चक्षुराद्यभावाच्च । नहि भोगसाधनानां, चक्षुरादीनां भोगायतनस्य शरीरस्य चाभावान्मुक्तस्य भोगसम्भवः । अतः सांसारिकेष्वेवोत्कृष्टं सुखं सगुणोपास्तिफलभूतं सगुणब्रह्म प्राप्यानुभवन्क्रमेण विमोक्ष्यमाण इहोच्यते 'कामाननुभवति' इत्यादिषु । अत्र प्रत्याचष्टे– मुक्तः प्रतिज्ञानात् ॥ मुक्त एव चात्र विषयभोगवानुच्यते । न संसारी । बृहच्छ्रुतौ मुक्तस्य कामानुभवप्रतिज्ञानात् । 'कामांश्चैवानुभवति' इति वचनात् । कामितानेवानुभवति नेतरान् । कामिताननुभवत्येव च । अतो नानिष्टभोगेष्टाभोगयोः प्रसङ्गः । 'ब्रह्मविदाप्नोति परम्' इति प्रस्तुतस्य मुक्तस्य हि श्रुतिर्ब्रह्मणा सह कामार्ष्टिमाचष्टे । यदा च विषयभोगाभावः तदा च स्वरूपसुखस्यानपायादनिच्छायामुपरमस्य च सुखरूपत्वाद्विशेषाङ्गीकाराच्च नोक्तप्रसङ्गः । न च सुखे दुःखानुषङ्गनियम इति युक्तम् । अतो नान्यात्मको मोक्षो वितर्कणीयः । मुक्तस्य चिदात्मकानां स्वरूपभूतानां देहेन्द्रियाणां श्रुतिबलाद्वक्ष्यमाणत्वान्न भोगासम्भवाऽशङ्कावकाशः ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्म प्राप्य तदविहायैव भोगभोक्तुर्मुक्तत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा भोगासिद्धेः साधनीयमेतत् । 'स तत्र पर्येति' इति श्रुत्युक्तो विषयः । किं मुक्तोऽमुक्तो वेति सन्देहः । उभयथा सम्भवः सन्देहबीजम् । नायं मुक्त इति पूर्वः पक्षः । 'स तत्र पर्येति'

(तत्त्वप्रकाशिका)

इत्यादिनास्य क्रियाप्रतीतेः । न हि क्रियावत्त्वं कृतकृत्यस्य मुक्तस्योपपद्यते । न च वाच्य-ममुक्तस्याप्येवंविधभोगासम्भव इति । अन्यदा मम्भवेऽपि परमात्मप्राप्तावमुक्तस्यापि तदुपपत्तेः । न चामुक्तत्वे श्रुत्युक्तस्य स्वेन रूपेणेति वाक्यविरोधः । तत्र निर्गुणोपासकस्य स्वरूपाविर्भाव-विधानात् । 'स तत्र' इति दहरविद्योपासकस्यामुक्तस्यैव भोगाभिधानात् । अतः श्रुत्युक्त-स्यामुक्तत्वान्न मुक्तस्य भोग इति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **मुक्त इति** ॥ 'स तत्र पर्येति' इत्यत्र मुक्त एवोच्यते । मुक्तत्वं विनैतद्भोगानुपपत्तेः । न च ब्रह्मप्राप्त्या तदुपपत्तिः । 'अहरहरेनम्' इति श्रुतौ ब्रह्म प्राप्तानामपि सुप्तानाममुक्ततया दिव्यभोगाभावमुक्त्वा मुक्तस्यैव तत्प्राप्त्या तद्भावप्रतिज्ञानात् । अत एव तस्याक्रियावत्त्वं च परास्तं श्रुतिविरोधादिति भावः । स्वरूपाविर्भावोक्त्या च मुक्तत्वं ज्ञायते । न च प्रकरणभेदः कल्प्यः । एकप्रकरणत्वेन प्रतीतस्य कारणं विना भिन्नप्रकरणत्वकल्पनेऽतिप्रसङ्गात् । अतो युक्त एव मुक्तस्य भोग इति सिद्धम् ॥

## भाववोधः

भोगभोक्तुरिति, 'स तत्र पर्येति' इत्युक्तस्येत्यर्थः ॥ **अन्यथा भोगासिद्धेरिति** ॥ पूर्वाधिकरणे 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति' इत्यादिवाक्यबलान्मुक्तस्य 'स एवंवित्'' इति श्रुत्युक्तो यो भोग उक्तस्तस्यान्यथाश्रुत्या भोगभोक्तुर्मुक्तत्वाभावेऽसिद्धेरित्यर्थः । अनेनानन्तर्यसङ्गतिरुक्ता भवति । एतेन ब्रह्मानतिक्रमेणैव भोगानुभवसाधनेनैव ब्रह्म प्राप्य तद-विहायैव भोगभोक्तुर्मुक्तत्वस्यापि सिद्धत्वाद्गतार्थमिदमधिकरणमित्यपि परास्तम् । भोगप्रतिपादक-श्रुत्युक्तस्य मुक्तत्वाक्षेपात् । किमिति । अत्र 'स तत्र पर्येति' इति श्रुत्युक्तः किममुक्त उत मुक्त इति चिन्ता । तदर्थं 'पर्येति' इत्युक्तक्रियाया एतद्वाक्योक्तस्यामुक्तत्वसाधकत्वं सम्भवत्युत न सम्भवतीति । तदर्थं क्रियायाः साधकत्वाङ्गीकारे एतद्वाक्योक्तरमणादिदिव्यभोग 'स्वेन रूपेण' इति पूर्ववाक्योक्तस्वरूपाविर्भावयोर्मुक्तत्वसाधकयोरसम्भवविरोधौ न प्राप्नुत उत प्राप्नुत इति । तदर्थं दिव्यभोगस्य ब्रह्मप्राप्तिमात्रनिबन्धनत्वं स्वेन रूपेणेति' 'स तत्र पर्येति' इति वाक्ययोर्निर्गुणो-पासकसगुणोपासकरूपभिन्नभिन्नविषयत्वेन प्रकरणभेदश्च कल्पयितुं शक्येते उत न शक्येते इति । तदर्थं दिव्यभोगस्याविर्भूतस्वरूपमुक्तमात्रनिष्ठत्वे विशेषप्रमाणं प्रकरणभेदकल्पने बाधकं च न स्त उत स्त इति । 'स तत्र पर्येति' इत्यादौ कृतिमत्वादमुक्त एवोच्यत इति न्यायविवरणं मनसि

(भाववोधः)

निधाय पूर्वपक्षमाह– **नायं मुक्त इत्यादिना ।** कृतकृत्यस्येत्यनेन न्यायविवरणोक्तकृतिमत्व-हेतोरप्रयोजकत्वशङ्का परिहृता भवति । मुक्तत्वे कर्तव्यस्य कृतत्वेन निरर्थकक्रियावत्वं न स्यादिति हेतूच्छित्तेः ॥ **अन्यदेति** ॥ अनेन भाष्ये'ऽहरहरेनम्' इत्यादि, 'तद्भवति' इत्यन्तश्रुत्युदाहरणस्य निवर्तनीयप्रदर्शनेन प्रयोजनमुक्तं भवति । 'स तत्र पर्येति' इति श्रुत्यैक्यप्रतीतेश्चेत्यादिन्यायविवरण-निरसनीयमाह– **न च मुक्तत्वे श्रुत्युक्तस्येत्यादिना** ॥ 'दिव्ये'त्यनेन 'अहरहः' इति श्रुतेरेतावन्तं कालं सुखमहमस्वाप्समित्यनुस्मृतिविरोधः परिहृतो भवति ॥ **श्रुतिविरोधादिति** ॥ अथ 'यदैनं मुक्तोऽनुप्रविशति' इति श्रुतेर्मुक्तस्य प्रवेशलक्षणक्रियाप्रतीतेरिति भावः । क्रियायाः फलरूपत्वेन कृतकृत्यत्वमप्युपपद्यत इति भावः । 'स तत्र पर्येति' इत्यादौ 'स्वेन रूपेणाभिनिष्पद्यत' इति मुक्तस्य स्पष्टं प्रतिभातत्वात् श्रुताविति न्यायविवरणार्थमाह– **स्वरूपाविर्भावोक्त्या चेति** ॥ 'स तत्र पर्येति' इति श्रुत्यैक्यप्रतीतेश्चेत्यादिप्रसङ्गादित्यन्तन्यायविवरणफलितार्थमाह– **एकप्रकरणत्वेन प्रतीतस्येत्यादिना** ॥

## भावदीपः

**मुक्तत्वेति** ॥ एतेन यः पूर्वत्र स्वेनेति श्रुत्या मुक्तस्येश्वरानतिक्रमेण भोग उक्तः स न युक्तः । तस्यामुक्तत्वादित्याक्षेपेण पूर्वपक्षप्रवृत्तेराक्षेपिकी पूर्वसङ्गतिः सूचिता ॥ **भोगासिद्धेरिति** ॥ मुक्तस्येति शेषः । स तत्र पर्येतीति श्रुतिशेषस्यामुक्तपरत्वे भोगे मानाभावात् । स एवं विदिति श्रुतेरप्यमुक्तपरत्वादिति भावः ॥ **उभयथेति** ॥ विशेषादर्शनवेलायामसाधारणलिङ्गाभावाभि-मानादिति भावः । क्रियावत्त्वादमुक्त एवेत्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **नायमिति** । हेतोरप्रयोजकतां निराह ॥ **न हीति** ॥ ननु द्वितीये विहारोपदेशादित्यत्र मुक्तस्य विहारोक्तेर्न कर्तृत्वं काल्पनिकम् । अमुक्तस्य विहारायोगादिति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ अहरहरिति भाष्यांशव्यावर्त्यहेतुमाह ॥ **अन्यदेति** ॥ विहारसूत्रोक्तस्याप्यत्राक्षेप इति भावः । ननु पूर्वं परञ्ज्योतिस्सम्पन्नस्याविर्भूतस्वरूपस्य मुक्तस्यैव स तत्रेत्युत्तरवाक्ये परामर्शस्य सिद्धत्वमुपेत्य मुक्तस्येशानतिक्रमेण भोगे स तत्रेति वाक्यस्य मानत्वमभिप्रेत्य सूत्रे स्वेनेत्युक्तेरत्र श्रुतावमुक्तत्व-शङ्कानुत्थितिरिति भावेन शङ्कते ॥ **न चामुक्तत्वे श्रुत्युक्तस्येति** ॥ पूर्वोक्तमेवेहाक्षिप्यत इति भावेन समाधिमाह ॥ **तत्रेति** ॥ परञ्ज्योतिरिति पूर्ववाक्ये ॥ **स तत्रेतीति** ॥ वाक्य इति शेषः । स इति

(भावदीपः)

तच्छब्देन नाविर्भूतस्वरूपस्याव्यवहितस्य परामर्शोऽपि तु प्राकरणिकस्येत्याह ॥ **दहरेति** ॥ छान्दोग्येऽष्टमे दहरविद्या ॥ **अत इति** ॥ क्रियावत्त्वादमुक्तस्यापीशं प्राप्तस्य भोगसम्भवात्पूर्ववाक्यविरोधाभावाच्चेत्यर्थः ॥ मुक्त एवात्रेत्यादिभाष्यं व्याचष्टे ॥ **स तत्रेति** ॥ **परंपरया हेत्वंशं योजयति** ॥ **मुक्तत्वं विनेत्यादिना** ॥ मोदप्रमोदपदयोः प्रागेव व्याख्यानात्फलितमाह ॥ **दिव्यभोगेति** ॥ पूर्वपक्ष्युक्तहेतुं पराचष्टे ॥ **अत एवेति** ॥ **श्रुतीति** ॥ भाष्योक्तश्रुतीत्यर्थः । यद्वा श्रुत्यन्तरबलान्मुक्तस्य भोगवत्त्वे स तत्रेत्यत्रापि तथैवेत्येतच्छ्रुतिविरोधादित्यर्थः । स्वेन रूपेणाभिनिष्पद्यत इति मुक्तस्य स्पष्टं प्रतिभातत्वाच्छ्रुतावित्यन्यत्रोक्तदिशा प्रतिज्ञानादित्यस्य स्पष्टं मुक्तपरत्वस्य प्रतिभानादित्यप्यर्थमुपेत्य तत्र निर्गुणेत्यादिचोद्यं निराह ॥ **स्वरूपेति** ॥ **प्रकरणेति** ॥ निर्गुणोपास्तिसगुणोपास्तिफलपरतयेति भावः । श्रुत्यैक्यप्रतीतेश्चेत्याद्यन्यत्रोक्तमेव समाधिमाह ॥ **एकेति** ॥ **अतिप्रसङ्गादिति** ॥ स तत्रेत्यादिश्रुतिरपि विभागेन योज्यताम् । ऐक्यप्रतीतेरप्रयोजकत्वादिति भावः ॥ **अत इति** ॥ प्रतिज्ञानलिङ्गेन स तत्रेति वाक्योक्तस्य मुक्तत्वादित्यर्थः ।

## अभिनवचन्द्रिका

ननु भाष्ये साधकोक्तावपि कृतिराहित्यरूपबाधकानुद्धारात् न्यूनतेत्यत आह– **अत एवेति** ॥ 'अथ यदेनं मुक्तोऽनुप्रविशति' इति मुक्तस्यापि स्पष्टं क्रियाप्रतीतेः तद्विरोधात् मुक्तस्याऽकृतिमत्त्वं परास्तमिति भाव इति सम्बन्धः ।

**पूर्वपक्षस्तु** 'स तत्र पर्येति' इति श्रुत्युक्तो न मुक्तः पर्येतीति । क्रियाप्रतीतेः । मुक्तस्य हि न क्रिया सम्भवति । कृतकृत्यत्वात् । न च अमुक्तस्य एवंविधभोगासम्भवः प्रागभावसम्भवोऽपि परमात्मप्राप्त्यनन्तरं सम्भवात् । न च श्रुत्युक्तस्याऽमुक्तत्वे 'स्वेन रूपेण' इति वाक्यविरोधः । तत्र निर्गुणोपासकस्य स्वरूपाविर्भावाभिधानात् । 'स तत्र' इति दहरविद्योपासकस्याऽमुक्तस्यैव भोगाभिधानात् । अतः श्रुत्युक्तस्यामुक्तत्वात् न मुक्तस्य भोग इति ।

**सिद्धान्तस्तु** 'स तत्र पर्येति' इत्यत्र मुक्त एवोच्यते । मुक्तत्वं विना एतद्भोगासम्भवात् स्वरूपाविर्भावोक्तेश्च । न च एकप्रकरणत्वसम्भवे भिन्नप्रकरणत्वकल्पना युक्ता । अतिप्रसङ्गात् । अतो युक्त एव मुक्तस्य भोग इति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**भोगभोक्तुरिति** ॥ स तत्र पर्येतीति श्रुत्युक्तभोगभोक्तुरित्यर्थः ॥ **अन्यथेति** ॥ श्रुत्युक्तभोग-भोक्तुर्मुक्तत्वाभावे तद्बलात्पूर्वनये मुक्तस्य ब्रह्मातिक्रमेण यो भोग उक्तस्तस्यासिद्धेरित्यर्थः ॥ **किमिति** ॥ अत्र स तत्र पर्येतीति श्रुत्युक्तः किममुक्त उत मुक्त इति चिन्ता । तदर्थं स तत्र पर्येतीत्युक्तक्रिया मुक्तस्य न सम्भवत्युत जक्षन्क्रीडन्नित्युक्तदिव्यक्रीडाद्वारा मुक्तस्यापि सम्भवति । स्वेन रूपेणेति पूर्ववाक्यं च प्रकरणभेदेनाविरोधि उत मुक्तस्यापि क्रिया सम्भवति अमुक्तस्य दिव्य-भोगो न सम्भवति । पूर्ववाक्यं चैकप्रकरणत्वेन भोक्तुरमुक्तत्वे विरोधीति । प्रतिज्ञानादिति सूत्रखण्डव्यावर्त्यं कृतिरित्युक्तन्यायं व्यनक्ति ॥ **स तत्र पर्येतीत्यादिनेति** ॥ एवं मुक्तत्वे बाधक-मुक्त्वा अमुक्तत्वे बाधकं दिव्यभोगानुपपत्तिमाशङ्क्य परिहरति ॥ **न चेति** ॥ एतदपि प्रतिज्ञाना-दिति सूत्रखण्डोपात्तबृहच्छ्रुतावमुक्तस्य ब्रह्मप्राप्तावपि दिव्यभोगाभावोक्त्या व्यवच्छेद्यमिति ज्ञेयम् । पूर्ववाक्यविरोधं च स्वपक्षे आशङ्क्य प्रकरणभेदकल्पनयाऽपाकरोति ॥ **न चेति** ॥ एतच्च सिद्धान्ते भोगभोक्तुर्मुक्तत्वे बाधकाभावोक्त्या निरस्यम् । एकवाक्यत्वे बाधके सत्येव वाक्यभेदस्याश्रयणीय-त्वादिति ज्ञेयम् । मुक्त एवात्रोच्यते नामुक्तः । अमुक्तस्य भोगावश्यप्रतिज्ञानात् मुक्तस्य तत्प्रतिज्ञानादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **स तत्रेत्यादिना** ॥ अत एवोक्तं विशदयति **श्रुतीति** ॥ बृहच्छ्रुतौ यदेवं मुक्तो ह्यनुप्रविशतीति प्रवेशलक्षणक्रियाप्रतिज्ञानादिति भावः । स तत्र पर्येतीत्यादौ स्वरूपेणाभिनिष्पद्यत इति मुक्तस्य स्पष्टं प्रतिभातत्वादिति न्यायविवरणानुसारेण स तत्र पर्येतीत्यमुक्त एवोच्यते । पूर्ववाक्ये स्वरूपाविर्भावोक्त्या मुक्तत्वस्य प्रतिज्ञानात् प्रतिभात-त्वादिति वृत्यन्तरमभिप्रेत्य प्रतिभानमित्युक्तन्यायं विशदयति ॥ **स्वरूपाविर्भावेति** ॥

स तत्र पर्येतीति श्रुत्यैक्यप्रतीतेश्चेति न्यायविवरणानुसारेण स तत्र पर्येतीत्युत्तरवाक्ये पूर्व-वाक्योक्तो मुक्त एवोच्यते न तु दहरविद्योपासकोऽमुक्तः स तत्रेति परामर्शबलेन तथैकप्रकरणतया प्रतिभानादिति वृत्यन्तरं दर्शयन् न्यायं प्रकारान्तरेण विवृणोति ॥ **न चेति** ॥ **अतिप्रसङ्गादिति** ॥ स एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुष इति पूर्ववाक्येऽपि स एष संप्रसादो जीव अस्माच्छरीरात् समुत्थाय परं ज्योतिर्निर्गुणं ब्रह्मैव भवति। यस्तूपसंपद्यते सगुणोपसत्तिं यथा यथोपासत इति श्रुत्युक्तन्यायेनेश्वराख्येन स्वेन

(वाक्यार्थमुक्तावली)

रूपेणाभिनिष्पद्यते स तूत्तमः पुरुषः ईश्वर इत्युच्यते इति पूर्ववाक्येऽपि सगुणनिर्गुणपरत्वेन भित्वा योजनाप्रसङ्गेन कुत्राप्येकं वाक्यं न स्यादतिप्रसङ्ग इति भावः । उक्तं चैतदेवाभिप्रेत्य न्यायविवरणे सा श्रुतिरप्येवं विभज्य किं न योजयितुं शक्येति श्रुतेरेवाभावप्रसङ्ग इति । एतेन प्रतिभान-मित्युक्तन्यायः पूर्ववाक्येऽपि वाक्यभेदप्रतिपत्तिभानादिति रीत्यन्तरेण विवृतो भवति ।

## तत्त्वसुबोधिनी

**भोगभोक्तुरिति** ॥ स तत्र पर्येतीत्युक्तस्येत्यर्थः । अन्यथा भोगासिद्धेरिति । पूर्वाधिकरणे स्वेन रूपेणाभिनिष्पद्यते उत्तमपुरुषः स तत्र पर्येतीत्यादिवाक्यबलान्मुक्तो भवति । न च मुक्तस्य ब्रह्मानतिक्रमेणैव भोगानुभवसाधनेनैव ब्रह्म प्राप्य तदविहायैव भोगभोक्तुः मुक्तस्यापि सिद्धत्वात् गतार्थमधिकरणमिति वाच्यम् । भोगप्रतिपादकश्रुत्युक्तस्य मुक्तत्वाक्षेपादिति भावः । अस्तु क्रमाप्रतीतिः तथापि श्रुत्युक्तो मुक्तः किं न स्यादित्यत आह ॥ **न हीति** ॥ कृतकृत्यस्येति हेतुगर्भविशेषणम् । तेन साध्यस्य सर्वस्य सम्पादितत्वादिति भावः । मुक्तत्वे कर्तव्यस्य सर्वस्य कृतत्वेन निरर्थकक्रियावत्वं न स्यादिति हेतूच्छित्तेरिति भावः ॥ **अन्यदेति** ॥ जाग्रदवस्थाया-मित्यर्थः । परमात्मप्राप्तौ इत्यतः शेषः ॥ **न चामुक्तत्वे इति** ॥ **स तत्रेति** ॥ श्रुत्युक्तस्य अमुक्तत्वस्य स्वेन रूपेण इत्यत्र स्वरूपाविर्भावाभिधानात् तद्विरोध इति नेत्यर्थः । तत्कुत इत्यतः प्रकरणभेदादित्याह ॥ **तत्रेति** ॥ **अत एवेति** ॥ परामृष्टहेतुमाह श्रुतिविरोधादिति । अथ यदैनं मुक्तो अनुप्रविशतीति श्रुतेः मुक्तस्य प्रवेशलक्षणक्रियाप्रतीतिरिति भावः । क्रियायाः फलरूपत्वेन कृतकृत्यत्वमपि उपपद्यत इति भावः । ननु तस्य मुक्तत्वमेव कुत इत्यत आह ॥ **स्वरूपावि-र्भावोक्त्या चेति** ॥ **प्रकरणभेद इति** ॥ स्वेन रूपेण अभिनिष्पद्यत इत्यत्र निर्गुणोपासकस्य स्वरूपाविर्भावोऽभिधीयते । स तत्रेत्यत्र दहरविद्योपासकस्यैव भोग इति प्रकरणभेदो न चेत्यर्थः ।

## वाक्यार्थविवरणम्

**कृतकृत्यस्येति** ॥ तस्य प्राप्तप्राप्तव्यत्वेन क्रियया प्रयोजनाभावादिति भावः ॥ **अन्यदेति** ॥ परमात्माप्राप्तिदशायामसम्भवेऽपीत्यर्थः । श्रुत्युक्तस्यामुक्तत्व इत्यर्थान्वयः ॥ **दहरविद्येति** ॥ सगुणविद्येत्यर्थः ॥ **तदुपपत्तिरिति** ॥ अमुक्तस्यापीत्यर्थः ॥ **उक्तेति** ॥ तथा च भगवत्प्राप्तिमात्र-

(वाक्यार्थविवरणम्)

प्रयोजकमिति स्वरूपाविर्भावोऽपेक्षित इति भावः ।। **अक्रियावत्त्वम्** अकृतिमत्त्वम् ।। ''अत एव'' इत्युक्तं विशदयति ।। **श्रुतीति** ।। अथ यदैनं मुक्तोऽनुप्रविशतीति मुक्तस्य प्रवेशनलक्षण-क्रियाप्रतीतेरिति भावः । तस्याश्च क्रियायाः फलरूपत्वात् कृतकृत्यत्वमप्युपपन्नमिति द्रष्टव्यम् ।। **प्रकरणभेद इति** ।। सगुणनिर्गुणप्रकरणभेदेनोपासकभेदः कल्प्य इत्यर्थः । **एकवाक्यत्वम्** एकार्थत्वम् । अर्थैकत्वादेकं वाक्यमिति वचनात् ।

## वाक्यार्थमञ्जरी

**भोगासिद्धेरिति** ।। मुक्तस्येति शेषः ।। **कृतकृत्यस्येति** ।। क्रियायाः फलितार्थत्वादिति भावः ।। ॐ मुक्तः प्रतिज्ञानात् ॐ ।। स तत्र पर्येतीत्यत्र भोगभोक्तृत्वेनोक्तो मुक्त एव कुतः प्रतिज्ञानात् अथेति श्रुत्यन्तरे मुक्तस्यैतादृशभोगप्रतिज्ञानादित्यर्थः । अहरहः प्रतिदिनं भोगाभाव एतावन्तं कालं सुखमहमस्वाप्समिति परामर्शविरोध इत्यत उक्तम् ।। **दिव्येति** ।। **तत्प्राप्त्या** ब्रह्मप्राप्त्या ।। तद्भावे दिव्यभोगसद्भावेत्यर्थः । अकृतिमत्वं क्रियाराहित्यम् । अत एवेत्युक्तं विवृणोति ।। **श्रुति-विरोधादिति** ।। अथ यदैनं मुक्तोऽनुप्रविशतीति श्रुतौ मुक्तस्य प्रवेशलक्षणक्रियाप्रतीतेरिति भावः । क्रियायाः फलरूपत्वेन कृतकृत्यत्वमुपपद्यत इति हृदयम् ।। **प्रकरणभेद इति** ।। निर्गुण-सगुणपरत्वेनेत्यर्थः ।।

।। इति मुक्ताधिकरणम् ।। २ ।।

## ३. आत्माधिकरणम्

**॥ ॐ आत्मा प्रकरणात् ॐ ॥ ३ ॥**

परञ्ज्योतिःशब्देन परमात्मैवोच्यते । तत्प्रकरणत्वात् ।

'परञ्ज्योतिः परं ब्रह्म परमात्मादिका गिरः ।
सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन' इति ब्रह्माण्डे ॥ ३ ॥

॥ इति आत्माधिकरणम् ॥ ३ ॥

### तत्त्वप्रदीपिका

परञ्ज्योतिः परमात्मनोऽन्यद्यत्किञ्चित् यत्प्राप्तिमतो लक्षणादिफलं श्रूयत इति च न वाच्यम् । यतः परञ्ज्योतिः शब्देन परमात्मैवोच्यते । 'आत्माऽपहतपाप्मा' इत्यादि तत्प्रकरणपठितत्वात् ॥ इत्यात्मसम्पत्त्यधिकरणम् ॥

### तत्त्वप्रकाशिका

अत्र मुक्तप्राप्यस्य ज्योतिषो ब्रह्मत्वप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ब्रह्मप्राप्त्यनुपपत्तेः समर्थनीयमेतत् । 'परं ज्योतिः' इति श्रुत्युक्तं ज्योतिर्विषयः । विष्णुरन्यद्वेति सन्देहः । उभयत्र शब्दप्रवृत्तिः सन्देहबीजम् । न विष्णुरिति पूर्वः पक्षः । ज्योतिःशब्दस्यादित्येऽपि प्रयोगदर्शनात् 'सूर्यमगन्म ज्योतिः' इत्यादौ । न च विष्णावपि तच्छब्दसद्भावादत्रादित्यग्रहणायोगः । अत्रादित्याङ्गीकारे 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव सा पाप्मना विनिर्मुक्त इति श्रुत्यैकवाक्यत्वलाभात् । तथा चात्र समाख्यानादादित्यमुपसम्पद्य प्रारब्धकर्मणा मुच्यत इत्यर्थः स्यात् । एवं च न मुक्तस्य ब्रह्मसमीपे भोग इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **॥ आत्मेति ॥** अत्र परञ्ज्योतिःशब्देन परमात्मैवोच्यते । 'य आत्माऽपहतपाप्मा' इति परमात्मन एवात्रारभ्याधीतत्वेनास्य तत्प्रकरणत्वात् । न हि प्रकरणात्समाख्या बलवती । तस्याः सावकाशत्वाच्चेति भावः । नन्वस्य परमात्मप्रकरणत्वेऽपि प्रसङ्गादन्योक्तिः किं न स्यादित्यत आह **॥ परमिति ॥** भवेदेतत् यदि परञ्ज्योतिःशब्दोऽन्यत्र वर्तेत । नैतदस्ति । स्मृतिविरोधादिति भावः । अतः परञ्ज्योतिर्ब्रह्मैवेति तत्प्राप्याविहायैव मुक्तो भोगान् भुङ्क्त इति सिद्धम् ॥

## गुर्वर्थदीपिका

तस्यास्सावकाशत्वादित्यस्य ब्रह्मप्राप्तिमार्गत्वेनापि सूर्यगतिकथनसम्भवादित्यर्थः ।

## भावबोधः

**ज्योतिषो ब्रह्मत्वेति ॥** पूर्वाधिकरणे यज्ज्योतिः प्राप्य भोगभोक्तुर्मुक्तत्वमुक्तं, तस्य ज्योतिष इत्यर्थः । अनेनानन्तरसङ्गतिरुक्ता भवति ॥ **ब्रह्मप्राप्त्यनुपपत्तेरिति ॥** 'परं ज्योतिरुपसंपद्य' इत्युक्तब्रह्मप्राप्त्यनुपपत्तेरित्यर्थः ॥ **विष्णुरिति ॥** अत्र परं ज्योतिरित्युक्तं ज्योतिः किमादित्य उत विष्णुरिति चिन्ता । तदर्थम् 'स तेजसि सूर्यः' इति समाख्यायाः 'परं ज्योतिः' इति वाक्यस्यादित्यपरत्वसाधकत्वं न सम्भवत्युत सम्भवतीति । तदर्थम् 'आत्मा' इत्यादिपरमात्मप्रकरणं समाख्याबाधकं न भवति उत भवतीति । तदर्थम् 'य आत्मऽऽपहतपाप्मा' इति परमात्मप्रकरणेऽपि आदित्यस्य परञ्ज्योतिःशब्देनोक्तिः प्रासङ्गिकी सम्भवतीति प्रकरणं सावकाशमुत समाख्या सावकाशेति । तदर्थं परञ्ज्योतिःशब्दः किमादित्यादेर्वाचक उत परमात्ममात्रवाचक इति । तदर्थं तन्मात्रवाचकत्वे प्रमाणं नास्त्युतास्तीति । परमात्मैवोच्यत इति भाष्यसूचितपूर्वपक्षमाह– **न विष्णुरित्यादिना ॥** न्यायविवरणं संयोजयितुमाह– **न चेति ।** परञ्ज्योतिःशब्देनेत्यादिं प्रयोजनमित्यन्तं न्यायविवरणं व्याचष्टे । **अत्रादित्याङ्गीकार इत्यादिना ॥ एकवाक्यत्वलाभादिति ॥** एकार्थत्वलाभादित्यर्थः । अनेनैकार्थतेति प्रयोजनमिति न्यायविवरणांशो व्याख्यातः । एवं तर्हि 'स पाप्मना' इत्यनेन 'स्वेन रूपेण' इत्यस्य एकार्थत्वरूपसमाख्यायाः का गतिरित्यतः 'सावकाशत्वलिङ्गात्' इति न्यायविवरणांशं व्याख्याति– **तस्याः सावकाशत्वाच्चेति ॥** तत्रैकार्थतेति प्रयोजनमित्युक्तसमाख्याया एव लिङ्गपदेन विवक्षितत्वात् ॥ **नैतदस्तीति ॥** अनेन परञ्ज्योतिःशब्दस्य निरवकाशत्वप्रतिज्ञापरत्वेनापि परञ्ज्योतिःशब्देन परमात्मैवोच्यत इति भाष्यं व्याख्यातं भवति ॥ **स्मृतिविरोधादिति ॥** उपलक्षणं चैतत् । अथ किमुच्यते परञ्ज्योतिः आत्मैव परञ्ज्योतिरित्यादिन्यायविवरणोदाहृतश्रुतिविरोधाच्चेत्यपि द्रष्टव्यम् । अनेन परञ्ज्योतिःशब्दस्य श्रुतित्वेन 'परञ्ज्योतिरुपसम्पद्य' इति श्रुत्युक्तज्योतिषो विष्णुत्वसाधकत्वमुक्तं भवति । तथा च निरवकाशश्रुतेरेव बलवत्त्वादिति न्यायविवरणमुक्ततात्पर्यं द्रष्टव्यम् ।

## भावदीपः

**ज्योतिष इति** ॥ एतेन पूर्वं ब्रह्मानतिक्रमेण मुक्तो भोगान्भुङ्क्ते इत्युक्तेऽर्थे मुक्त इत्याद्यंशं समर्थ्यात्र ब्रह्मानतिक्रमेणेत्यंशसमर्थनात्सङ्गतिरपि सूचिता ॥ **अन्यथेति** ॥ ज्योतिषो ब्रह्मान्यत्वे तत्प्राप्त्यैव स्वरूपाविर्भावादिभोगसम्भवेन परं जैमिनिरित्यादिनोक्तब्रह्मप्राप्तेः फलाभावेनानुपपत्ते-रित्यर्थः । स्वयं प्रतिज्ञाहेतू आह ॥ **इत्यादाविति** ॥ यद्यपि देवं देवत्रा सूर्यमगन्म ज्योति-रित्यादिमन्त्रः छान्दोग्यभाष्ये तृतीयान्ते विष्णुपरत्वेनैव व्याख्यातस्तथाप्यमुख्यवृत्त्याऽन्यपरत्व-मप्यस्तीति वा पूर्वपक्षिणो विष्णुपरत्वासम्मतेर्वा एतदुक्तिः ॥ **विष्णावपीति** ॥ तद्देवाः ज्योतिषां ज्योतिरित्यादाविति भावः । परञ्ज्योतिःशब्देनादित्यज्योतिरङ्गीकार इत्याद्यन्यत्रोक्तमत्र व्यनक्ति ॥ **अत्रादित्येति** ॥ **इति श्रुत्येति** ॥ षट्प्रश्नश्रुत्येत्यर्थः ॥ **एकवाक्यत्वेति** ॥ एकार्थत्वे सतीत्यर्थः । अत्र परञ्ज्योतिरिति श्रुतौ ॥ **एवं चेति** ॥ परञ्ज्योतिरिति श्रुतिरादित्यप्राप्त्या प्रारब्धकर्ममुक्त्यर्थत्वे सतीत्यर्थः ॥

परमित्यादिभाष्यं व्याचष्टे ॥ **अत्रेति** ॥ श्रुतावित्यर्थः । श्रुतिलिङ्गादेरुपक्रमादौ श्रुतत्वे तन्निर्णायकद्वारा सर्वस्य तत्प्रकरणत्वनिर्णायकत्वमिति शब्दादेव प्रमित इत्यत्रोक्तत्वादिह चोपक्रमे विष्णुलिङ्गश्रवणात्सूत्रादौ प्रकरणादित्युक्तमिति भावेन तत्प्रकरणत्वादिति भाष्यं व्याचष्टे ॥ **य इति** ॥ **आरभ्येति** ॥ उपक्रम्येत्यर्थः । अस्य परञ्ज्योतिर्वाक्यस्य तत्प्रकरणस्थत्वादित्यर्थः । एवं हि स तेजसीति वाक्यविरोध इत्यत आह ॥ **न हीति** ॥ भिन्नस्थानगतत्वेन दौर्बल्यस्य शब्दादेवेत्यत्र व्युत्पादनादिति भावः । अत्र समाख्यापदेन सूर्यमगन्मेत्यपि वाक्यं गृह्यत इत्याहुः । नन्वानर्थक्य-प्रतिहतानां विपरीतं बलाबलमिति न्यायेन तल्लिङ्गादित्यादौ लिङ्गेन श्रुतेरिव समाख्यया प्रकरण-बाधोऽस्त्वित्यतः सावकाशलिङ्गान्निरवकाशश्रुतेरेवातिबलवत्वादित्यन्यत्रोक्तहेतुमप्याह ॥ **तस्या इति** ॥ स्वोदयात्फलदं ज्ञानमादेहं कर्म वा रवेरित्युक्त्या प्रारब्धकर्ममोक्षपरत्वेनोपपत्त्या लिङ्गभेदादिरूपमुक्तिपरत्वाभावात् । ब्रह्मप्राप्तिमार्गत्वेनापि सूर्यगत्युक्त्युपपत्तेरिति भावः ॥ **अत इति** ॥ एवं प्रबलज्योतिःश्रुतिब्रह्मप्रकरणयोर्भावादित्यर्थः । उत्तराधिकरणोपक्षेपार्थमिति हेतोस्त-त्राप्येत्यादि ॥

## अभिनवचन्द्रिका

**न विष्णुरिति ॥** न विष्णुः, अपि तु सूर्य इत्यर्थः । हेतुं वक्तुं सम्भावकं तावदाह– **ज्योतिःशब्दस्येति ॥** ज्योतिःशब्दस्याऽऽदित्ये प्रयोगो हेतुत्वेनोक्त इति मन्यमानस्य शङ्कामनूद्य निषेधति – **न चेति ॥** प्रतिज्ञामनुवदन् तत्र हेतुमाह – **अत्रादित्याङ्गीकार इति ॥ अत्र परञ्ज्योतिः शब्देनेति ॥** अत्र यद्यपि विषयसंशयतद्बीजपूर्वपक्षप्रदर्शनानुरोधात् ज्योतिःशब्देन परमात्मैवोच्यत इति वक्तव्यम्, तथापि ज्योतिःशब्दमात्रस्याऽन्यगामित्वेऽपि परशब्दविशिष्टस्य ज्योतिःशब्दस्य विष्ण्वेकनिष्ठत्वात् । अत्र विष्णुरेव विवक्षित इति द्योतनाय 'परञ्ज्योतिः शब्देन' इत्युक्तम् ।

**पूर्वपक्षस्तु** 'परञ्ज्योतिः' इति ज्योतिः शब्दोक्तो न विष्णुः किं तु आदित्यः । 'स तेजसि सूर्ये सम्पन्नो यथापादोदरस्त्वचा विनिर्मुच्यत' इति समाख्यानात् । एवं च न मुक्तस्य ब्रह्मसमीपे भोग इति ॥

**सिद्धान्तस्तु** परञ्ज्योतिःशब्देन परमात्मैवोच्यते । 'य आत्माऽपहतपाप्मेति परमात्मन एव आरभ्याऽधीतत्वेनाऽस्य तत्प्रकरणत्वात् । प्रकरणस्य समाख्यातो बलवत्त्वात् । सूर्यमण्डल-प्राप्त्यनन्तरं पापकर्मविनाशाङ्गीकारेण 'स तेजसि सूर्ये सम्पन्न' इति वाक्यस्य किंस्तुघ्नप्राप्ति-पूर्वकालिकसूर्यप्राप्तिपरत्वेन सावकाशत्वाच्च परञ्ज्योतिःशब्दस्य अन्यत्राऽभावाच्च । अतः परञ्ज्योतिः ब्रह्मैवेति तत्प्राप्य अविहायैव मुक्तो भोगान् भुङ्क्त इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**ज्योतिष इति** पूर्वनये यज्ज्योतिः प्राप्य भोगभोक्तुर्मुक्तत्वमुक्तं तस्य ज्योतिष इत्यर्थः । अनेनानन्तरसङ्गतिरुक्ता भवति ॥ **अन्यथेति ॥** तद्वाक्योक्तस्य ज्योतिषोऽब्रह्मत्वे संपद्याविहायेत्यत्र परञ्ज्योतिरिति वाक्यबलेनोक्ता मुक्तस्य ब्रह्मप्राप्तिरनुपपन्ना स्यादित्यर्थः ॥ **विष्णुरिति ॥** अत्रोक्तं ज्योतिः किं सूर्य उत **विष्णुरिति** चिन्ता । तदर्थं स तेजसि सूर्ये संपन्न इति समाख्या मुख्यार्थ-स्यापि विष्णोस्त्याजनेन समर्था भवत्युत नेति । अत्र यद्यपि परञ्ज्योतिरित्येकं पदम् । परञ्ज्योतिः परंब्रह्म परानन्दादिका गिर इति वक्ष्यमाणत्वात् । तथा च ज्योतिर्विषय इत्यादिटीकायां

(वाक्यार्थमुक्तावली)
ज्योतिश्शब्दस्यैव विषयसंशय तद्बीजपूर्वपक्षानुरोधोक्तिरयुक्ता । तथापि परमित्यस्य भिन्नपदत्व-मुक्तममिति विशेषणसमर्पकत्वं चेति पूर्वपक्षार्थमङ्गीकृत्येदं विषयादिप्रदर्शनम् । वस्तुतस्तु परञ्ज्योतिरिरिति विशिष्टं विष्ण्वैकनामेत्युत्तरत्रोच्यत इत्यदोषः ॥ **ज्योतिःशब्दस्येति** ॥ न च परत्वं तस्यायुक्तमिति वाच्यम् । सूर्यमगन्म ज्योतिरुत्तममित्यत्रेतरज्योतिरपेक्षयोत्तमत्त्वस्याप्युक्तेरिति भावः ।

ननु ज्योतिश्चरणाभिधानादित्यादौ ज्योतिश्शब्दस्य ब्रह्मण्येव परममुख्यत्वस्योक्तत्वान्मुख्ये बाधकाभावादमुख्यार्थादित्यग्रहणमयुक्तमित्याशङ्क्य निषेधति ॥ **न विष्णावपीत्यदिना** ॥ कुतो नेत्यग्रहणयोग इत्यतः प्रकरणादित्यंशव्यावर्त्यमर्थलाभ इत्युक्तन्यायं व्यनक्ति ॥ **अत्रेति** ॥ सत्यमेवं ज्योतिश्शब्दमुख्यार्थत्वं ब्रह्मण इति । तथाप्यत्र प्रकरणेऽमुख्यार्थ आदित्य एव ग्राह्यः समाख्यानु-कूल्यादिति भावः । परञ्ज्योतिश्शब्देन परमात्मैवेति । न तु सूर्यः, मनुष्यदृष्ट्येषु तेजस्सूत्तम-ज्योतिष्ट्वादुच्यते इत्यर्थः ॥ **सावकाशत्वाच्चेति** ॥ स्वेन रूपेणाभिनिष्पद्यत इत्येतदपेक्षया समानोक्त्यभावेन समानार्थकत्वाभावेन शब्दतोऽर्थतश्च सावकाशत्वादित्यर्थः ॥ **प्रसङ्गादिति** ॥ ह्वयाम्यग्निमित्यादिवदन्यप्रकरणेऽप्यन्योक्तिः प्रसङ्गात् किं न स्यादित्यत उक्तिरित्युक्तसिद्धान्तन्यायं प्रदर्शयन्नाहेत्यर्थः । स्यादेतत् कथञ्चिद्यदि परञ्ज्योतिश्शब्दोऽमुख्यतोऽप्यन्यवाचकः स्यात् । न चैवम् । तस्य नारायणादिशब्दवद्विष्ण्वैकनामत्वात् । अन्यवाचकेनान्यग्रहणेऽतिप्रसङ्गादिति भावः ।

## तत्त्वसुबोधिनी

**ज्योतिषो ब्रह्मत्वेति** ॥ पूर्वाधिकरणे यज्ज्योतिः प्राप्य भोगभोक्तुः मुक्तत्वं उक्तं तस्य ज्योतिष इत्यर्थः । अनेन आनन्तर्यसङ्गतिरुक्ता भवति ॥ **ब्रह्मप्राप्त्यनुपपत्तेरिति** ॥ परमात्मैवोच्यत इति भाष्यसूचितपूर्वपक्षमाह ॥ **न विष्णुरिति** ॥ **पादोदर इति** ॥ पादौ उदरे यस्य सः पादोदरः सर्पः इत्यर्थः ॥ **एकवाक्यत्वलाभादिति** ॥ एकार्थत्वलाभादित्यर्थः । तथापि समाख्यानादादित्यपरत्वं किं न स्यादित्यत आह ॥ **न हीति** ॥ प्रकरणस्य चतुर्थप्रमाणत्वात् तस्याश्च षष्ठप्रमाणत्वात् श्रुतिलिङ्गवाक्यप्रकरणस्थानाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादिति जैमिनिवचनादिति भावः । तर्हि स पाप्मनेत्यत्वनेन रूपेण एतस्य एकार्थ रूपसमाख्यायाः का गतिरित्यत आह ॥ **तस्या इति** ॥ ननु च स्वभावदुर्बलत्वेऽपि निरवकाशत्वादस्तु समाख्यायाः प्रकरणबाध इत्यतो वाऽऽह ॥

(तत्त्वसुबोधिनी)

**तस्याः सावकाशत्वाच्चेति ॥ प्रसङ्गादिति ॥** समत्वप्रकारेऽपि देवानां अधिकारप्रतिपादनादिति । **नैतदस्तीति ।** अनेन परञ्ज्योतिः शब्दस्य निरवकाशत्वप्रतिज्ञापरत्वेनापि परञ्ज्योतिः शब्देन परमात्मैव उच्यत इति भाष्यं व्याख्यातं भवति ॥ **स्मृतिविरोधादिति ॥** उपलक्षणं चैतत् । अतः किमुच्यते परञ्ज्योतिः आत्मैव परञ्ज्योतिरिरिति श्रुतिविरोधाच्चेत्यपि द्रष्टव्यम् । अनेन परञ्ज्योतिः शब्दस्य श्रुतित्वेन परञ्ज्योतिरुपसम्पद्येति श्रुत्युक्तज्योतिषः विष्णुत्वसाधकत्वमुक्तं भवति ।

## वाक्यार्थविवरणम्

परं ज्योतिरुपसम्पद्येति श्रुत्यर्थमाह ॥ **आदित्यमुपसम्पद्येति** ॥ स्वेन रूपेणेत्यस्य तात्पर्यम् ॥ **प्रारब्धेति ॥** पाप्मनेत्यस्यार्थः **प्रारब्धकर्मणेति ॥ आरभ्य** उपक्रम्य । त्वदुक्तसमाख्या च प्रकरणाद्दुर्बलेत्याह **॥ न हीति ॥** श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य-मर्थाविप्रकर्षात्' इतिं जैमिनिसूत्रे प्रकरणस्य समाख्यासकाशाद्बलवत्वोक्तेरिति भावः । यदुक्तं पाप्मनेत्यनेन स्वेन रूपेणैकार्थत्वरूपा समाख्या सा न युक्तेत्याह **॥ तस्या इति ॥** पाप्मना विनिर्मुक्त इति स्पष्टम् । पापान्मुक्तिकथनेन समाख्यायाः सावकाशत्वात् स्वस्वरूपाभिव्यक्ति-प्रतिपादकस्य स्वेन रूपेणेति वाक्यस्य नैकार्थत्वमिति भावः **॥ अन्योक्तिरिति ॥** परं ज्योतिरुपसम्पद्येत्यत्रादित्योक्तिरित्यर्थः ।

## वाक्यार्थमञ्जरी

**ज्योतिष इति ॥** पूर्वाधिकरणे ज्योतिःप्राप्य भोगभोक्तुर्मुक्तत्वमुक्तं तस्य ज्योतिष इत्यर्थः ॥ **ब्रह्मप्राप्त्यनुपपत्तेरिति** ॥ परं ज्योतिरुपसंपद्येत्युक्तब्रह्मप्राप्त्यनुपपत्तेरित्यर्थः ॥ **सूर्यमिति ॥** ज्योतिः प्रकाशरूपं सूर्यमगन्म प्राप्नुम इत्यर्थः । सद्भावात् ज्योतिश्चरणेत्युक्तरीत्या **॥ स तेजसीति ॥** यथा पादोदरः सर्पस्त्वचा जीर्णदेहेन विमुच्यते । एवं तेजसि सूर्ये सूर्यं संपन्नः प्राप्तः सोऽधिकारी पाप्मना कर्मणा विनिर्मुक्तो भवतीत्यर्थः **॥ एकवाक्यत्वेऽपि ॥** एकार्थत्वेऽपीत्यर्थः । तदेव दर्शयति **॥ तथा चेति ॥** अत्र परञ्ज्योतिरित्यत्र च ॥ ॐ आत्मा प्रकरणात् ॐ ॥ परञ्ज्योति-रित्युक्तं ज्योतिरात्मा परमात्मैव कुतः य आत्मेति तत्प्रकरणादित्यर्थः **॥ सावकाशत्वादिति ॥** सूरिभिर्याप्यत्वात्सूर्य इति सूर्यशब्दस्य भगवत्परत्वादिति भावः ॥

॥ इति आत्माधिकरणम् ॥ ३ ॥

## ४. अविभागाधिकरणम्

**।। ॐ अविभागेन दृष्टत्वात् ॐ ।। ४ ।।**

ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते ।

'यानेवाहं शृणोमि यान् पश्यामि याञ्जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति' इति दृष्टत्वाच्चतुर्वेदशिखायाम् ।

भविष्यत्पुराणे च–

'मुक्ताः प्राप्य परं विष्णुं तद्भोगाँल्लेशतः क्वचित् ।
बहिष्ठान्भुञ्जते नित्यं नानन्दादीन्कथञ्चन' इति ।।

।। इति अविभागाधिकरणम् ।। ४ ।।

### तत्त्वप्रदीपिका

स्वरूपानन्दव्यतिरेकेण बहिर्भोगाश्च सन्ति मुक्तानामित्युक्तम् । के पुनस्त इत्याकाङ्क्षायां प्राप्तं ये परमेश्वरस्य भोगा न ते मुक्तानां भोग्याः, तदन्य एव, तस्य परमैश्वर्यवतो भोगानामत्युच्चत्वात्, ततो निकृष्टानां तत्तन्त्राणां तदनधिकारात्, 'न चाऽधिकारिकमपि' इत्युक्तन्यायाच्चेत्यत आह– अविभागेन दृष्टत्वात् ।। ये परमात्मभोग्या न तेभ्योऽन्ये मुक्तभोग्याः । सर्वभोगवत्वात्तस्य । किन्तु अविभागेन तेषामेव केचिदत्यल्पा मुक्तैर्भुज्यन्ते । तथा दृष्टत्वात्स्मृतत्वाच्च । यथा राजादिषु मन्त्र्यादयः सामान्यभोगान्गीतलास्यादीननुभवन्ति । न त्वसाधारणानन्तः पुरादिगोचरान् । विभक्तभोग्याङ्गीकारे परमात्मनस्तद्भोगाभावात्सुखापरिपूर्तिप्रसङ्गः ।।

### तत्त्वप्रकाशिका

अत्र सायुज्यभाजां भगवद्भुक्तभोगभोक्तृत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथेश्वरस्य सर्वभोक्तृत्वासिद्धेः समर्थनीयमेतत् । परमात्मानं प्राप्य मुक्तो भोगान् भुङ्क्त इत्युक्तम् । प्राप्तिश्च सायुज्यादिरूपा । तत्र ते भोगा एव विषयः । किं परमात्मभुक्ता एव सायुज्यभाग्भिर्भुज्यन्ते उतान्य इति सन्देहः । उभयथापि सम्भवः सन्देहबीजम् । परमात्माभुक्ता इति पूर्वः पक्षः । मोक्षस्य

(तत्त्वप्रकाशिका)

**परमपुरुपार्थत्वेन परमात्माभुक्तभोगानामपि सौलभ्यात् । परमात्मभुक्ता एवेति नियमे कदाचित् सञ्जातभोगेच्छानामपि मुक्तानां भोगाभावप्रसङ्गात् । ईश्वरस्य नित्यपूर्णानन्दत्वेन कदाचिदभोगस्यापि सम्भवात् । ततश्च मोक्षस्यापुरुपार्थत्वापत्तिः स्यात् । अतो भगवदभुक्तभोगभोक्तृत्वान्मुक्तानां न तस्य सर्वभोक्तृत्वमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ अविभागेनेति ॥ ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते न तु तदभुक्ताः । तथा श्रुतेरित्यर्थः । न च परमगतित्वादे-तत्कल्प्यम् । मुक्तानां परमात्मभुक्तभोगाङ्गीकारेऽपि तदुपपत्तेः । न च कदाचिदुक्तरीत्या भोगाभावः । 'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता' इतीश्वरस्य पूर्णानन्दत्वेऽपि पूर्णभोगश्रवणात् । ननु भगवद्भुक्ताशेप-भोगा मुक्तैर्भुज्यन्ते केचिद्वा । आद्ये तत्साम्यापातः । न द्वितीयः । 'यानेव' इति सामान्यतः सर्वभोगश्रवणादित्यत आह ॥ भविष्यदिति ॥ विशेपस्मृत्या सामान्यश्रुतेः सङ्कोच इति भावः । अतो मुक्तानां भगवद्भुक्तभोगभोक्तृत्वाद्युक्तं तस्य सर्वभोक्तृत्वमिति सिद्धम् ॥**

## भावबोधः

अनन्तरसङ्गतिमाह– **परमात्मानं प्राप्येति** ॥ पूर्वाधिकरणे 'स तत्र पर्येति' इति वाक्योक्त-दिव्यभोगभोक्तृमुक्तप्राप्यस्य परञ्ज्योतिःशब्दवाच्यस्य विष्णुत्वसमर्थनेनास्य निष्टङ्कितत्वादिति भावः ॥ **किमिति** ॥ अत्र 'रममाणः' इत्यादिवाक्योक्ता रमणादिदिव्यभोगा मुक्तैः परमात्मभुक्ता एव भुज्यन्ते उत परमात्माभुक्ता एवेति चिन्ता । तदर्थं नियमपक्षे मुक्तैः परमपुरुषार्थत्वं न सम्भवत्युत सम्भवतीति । तदर्थं मुक्तानां कदाचित् कामिताप्राप्तिरुत सर्वदा कामिताप्राप्तिरेवेति । तदर्थं पूर्णानन्दस्यापि परमात्मनो भोगः किं कादाचित्कः उत सार्वकालिक इति । तदर्थं तद्भोगस्य सार्वकालिकत्वे प्रमाणं नास्त्युतास्तीति । परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्तीति न्यायविवरणानुसारेण पूर्वपक्षमाह– **परमात्माभुक्ता इति** ॥ अनेनेश्वरेत्यादिप्रतिज्ञांशो व्याख्यातः । परमगतित्वस्य हेतुत्वं घटयति– **मोक्षस्येति** ॥ ईश्वरस्य स्वत एव पूर्णानन्दत्वादभोगस्यापि सम्भवादिति न्यायविवरणं विपक्षबाधकप्रदर्शनपरत्वेन व्याचष्टे – **परमात्मभुक्ता एवेति नियम इति** ॥ परमगतित्वहेतोरप्रयोजकत्वमाह– **मुक्तानामिति** । उक्ततर्कदूषणपरत्वेन

'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः ।
आश्चर्यत्वाद्भगवान् वासुदेवो विरुद्धशक्तिर्न च दोषस्पृगीशः ॥'

(भावबोधः)

इति आश्चर्यतयैव ब्रह्मण उभयोक्तेरिति न्यायविवरणं व्याचष्टे– **पूर्णानन्द इति** । न्यायविवरणगतस्योभयोक्तेरित्यस्य व्याख्यानं पूर्णानन्दत्वेऽपि पूर्णभोगश्रवणादिति ॥

ननूपपत्तित्वाविशेषात् परमगतित्वस्य कथमाश्चर्यत्वेन बाध इत्यत उक्तं न्यायविवरणे सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव प्रबलत्वादिति । अत्र श्रुतिशब्देन 'पूर्णानन्दः पूर्णभुक्' इत्युदाहृतश्रुतिरेव ग्राह्या न तु श्रुतिलिङ्गमित्युक्तश्रुतिरिति ज्ञातव्यम् ॥

## भावदीपः

**भगवद्भुक्तभोगभोक्तृत्वेति** ॥ एतेन ब्रह्म प्राप्य भोगान् भुङ्क्ते मुक्त इति पूर्वनयैः सिद्धे सत्यत्र ते भोगाः कीदृशा इति जिज्ञासायां भगवद्भुक्तशेषा इति साधनात्पूर्वसङ्गतिः सूचिता । ब्रह्मप्राप्तेः सायुज्यादिरूपत्वात्सायुज्यभाजां प्राथमिकत्वात्तद्भोगविशेष आदौ चिंत्यत इति भावेन सायुज्यभाजामित्युक्तम् ॥ **अन्यथेति** ॥ भुक्तभोगाभोक्तृत्वे गुहां प्रविष्टावित्यत्र उक्तसर्वशुभ-भोक्तृत्वासिद्धेरित्यर्थः । एतद्विचारस्याप्रकृतत्वं निराह ॥ **परमात्मानमिति** ॥ **सायुज्यादीति** ॥ सालोक्यं च समीपत्वं सारूप्यं योग एव चेति वक्ष्यमाणदिशा सालोक्यादिरादिपदार्थः । अतः सायुज्यभाजां भोगचिन्ताप्रकृतैवेति भावः ॥ **उभयथापीति** ॥ तस्य सर्वभोक्तृत्वान्मुक्तेः परम-पुमर्थत्वेन तद्भुक्तभोगसौलभ्याच्चोभयथा सम्भव इति भावः । परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्तीत्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **परमेति** ॥ परमगतित्वं विषयसौलभ्ये हेतुर्न साक्षादिति भावः । हेतोरप्रयोजकत्वमाशङ्क्याह ॥ **परमात्मेति** ॥ **सञ्जातेति** ॥ ननु मुक्तः किमर्थं विषयभोगानिच्छेत् । न तावत्सुखार्थम् । ज्ञानेनावरणभूताविद्यानिवृत्तावात्मस्वरूपसुखस्य व्यक्तत्वात् । नापि दुःखनिवृत्त्यर्थम् । अविद्यानिवृत्त्यैव तत्सिद्धेरिति चेन्मैवम् । नाविद्यैवात्म-स्वरूपस्यावरणम् । किं तु ईश्वरेच्छापि । तथा च ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्ति-र्भवति । स्वरूपसुखं च बहुतरं व्यज्यते । न तु सर्वम् । ज्ञानोत्तरानुष्ठितनिवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोतीति प्रमेयदीपिकायामेवोक्तत्वात्सञ्जातभोगेच्छानामित्युक्तिर्युक्तैवेति ज्ञेयम् ।

नन्वविभागो वचनादित्यत्र भगवत्कामानुसारिकामवतां कुतो भोगाभावप्रसङ्गः । तथात्वे वा किमनिष्टमित्यत ईश्वरस्य स्वत एव पूर्णानन्दत्वात् । अभोगस्यापि सम्भवादित्यन्यत्रोक्तं व्यनक्ति

(भावदीपः)

।। **ईश्वरस्येति** ।। **अत इति** ।। परमपुमर्थत्वान्मुक्तेर्विवक्षितहानिप्रसङ्गाच्चेत्यर्थः ।। य इत्यादिभाष्यं व्याचष्टे ।। **य इति** ।। भगवन्मात्रयोग्यभोगभोक्तृत्वभ्रान्तिं निरस्यन्नेवकारव्यावर्त्यमाह ।। **नत्विति** ।। एतेन श्रुतिगतैवकारोऽपि व्याख्यातः । भोगो नाम विषयदर्शनादिनिमित्त स्वरूपानन्द-विशेषाभिव्यक्त्यर्थविषयदर्शनादिरेव मुक्तानामिति ज्ञेयम् । प्रागुक्तयुक्तिं निराह ।। **न चेति** ।। उक्तबाधकनिरासकहेतुत्वेन पूर्णानन्द इत्याद्यन्यत्रोक्तमेवाह ।। **पूर्णेति** ।। स्मृत्युक्तेरुपयोगमाह ।। **नन्विति** ।। **तत्साम्येति** ।। तथा च प्रतिषेधादिति चेन्न शारीरादित्युक्तव्याहतिरिति भावः । ननु तावता सावधारणश्रुतेः का गतिरित्यतः सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्त्वादित्यन्यत्रोक्तिं सावकाशश्रुतितो निरवकाशस्मृतेरित्यस्योपलक्षणं मत्वा तात्पर्यमाह ।। **विशेषेति** ।। **अत इति** ।। श्रुतिस्मृतिबलादित्यर्थः ।।

## अभिनवचन्द्रिका

**अत्र सायुज्यभाजामिति** ।। अत्र यद्यपि सूत्रभाष्याभ्यां मुक्तमात्रस्य विषयत्वं प्रतीयते, तथापि यस्मिन्नधिकरणे विषयत्वेन यदुदाह्रियते तदेव विषय इति न मन्तव्यम् । किन्नाम, यावान् तन्न्यायगोचरः स सर्वोऽपि विषयः । विषयाद्युक्तिस्तु उदाहरणमात्रमिति ज्ञापनाय सायुज्यभाजामित्युक्तम् । अत एव ये भोगाः परमात्मना भुज्यंते त एव मुक्तैर्भुज्यन्त इति सिद्धन्ते सामान्येन मुक्तग्रहणम् ।

**पूर्वपक्षस्तु** मुक्ताः परमात्माऽभुक्तभोगान्भुञ्जते । अवाप्तमहापुरुषार्थत्वात् । अन्यथा कदाचित् मुक्तानां भोगेच्छायामपि अवाप्तकामत्वेन परमात्मनस्तदनिच्छायां मुक्तानां भोगो न स्यात् । परमात्मभोगं विना तेषां भोगायोगात् । ततश्च भगवद्भुक्तभोगभोक्तृत्वात् युक्तं तस्य सर्वभोक्तृत्वमिति सिद्धम् ।।

(सिद्धान्तभागः नास्ति)

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ।। **परमात्मानमिति** ।। पूर्वाधिकरणे ज्योतिश्शब्दवाच्यं परमात्मानं प्राप्य मुक्तो भोगान् भुङ्क्त इत्युक्तम् । प्राप्तिश्च सायुज्यादिरूपा न तु तद्गतिरूपा । तस्याः पूर्वपादे

(वाक्यार्थमुक्तावली)

विचारितत्वात्। तथा च सायुज्यादिकं प्राप्य भोगरूपमोक्षे भोगोऽत्र विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ सायुज्यभाग्भिः किं परान्माभुक्ता अपि भोगा भुज्यन्त उत भुक्ता एवेति चिन्ता। तदर्थमभुक्तभोगभोक्तृत्वे साधकं परमगतित्वम् भुक्ता एवेति नियमे बाधकं, कदाचित्सञ्जातभोगेच्छूनामपि तदभावप्रसञ्जनं च निरवकाशमुत सावकाशमिति। अविभागेनेति सौत्र-प्रतिज्ञाभागेन त एव मुक्तैर्भुज्यन्त इति भाष्येण च व्यवच्छेद्यं प्रतिज्ञांशमाह ॥ **परमात्मेति** ॥ दृष्टत्वादिति सूत्रखण्डोपात्तश्रुतौ तानेवैत इदं शरीरं विमुच्यानुभवन्तीति मुक्तत्वेऽपि परमात्मभुक्त-भोगैकनियमोक्त्याऽप्रयोजकत्वेन व्यवच्छेद्यं परा गतिरित्युक्तन्यायं व्यनक्ति ॥ **मोक्षस्येति** ॥ त एव मुक्तैर्भुज्यन्त इति भाष्ये भोगा मुक्तैर्भुज्यन्त एवेत्यप्यन्वयमभिप्रेत्य तद्व्यवच्छेद्यं बाधकमप्याह ॥ **परमात्मभुक्ता एवेति** ॥ यदि मुक्तानां परमात्मभुक्तभोगः स्यात्तर्हि कदाचिद्भोगः स्यादिति तर्कस्याप्रयोजकत्वं परिहरति। तर्कस्यानिष्टत्वमुपपादयति ॥ **ततश्चेति** ॥ केचित्तु परमात्मना भुक्तास्तद्भुक्ता मुक्तैरिति विभागमन्तरेणैव मुक्ता भोगान् भुंजते तथा दृष्टत्वाच्छ्रुतेरिति सूत्रार्थ-मभिप्रेत्य व्याचष्टे ॥ **ये भोगा इति** ॥ इदं शरीरं विमुच्यानुभवन्तीति श्रुतिमनुसृत्य परमात्म-गतित्वहेतोरप्रयोजकत्वमाह ॥ **परमात्मेति** ॥ तदुपपत्तेः परमात्मगतित्वोपपत्तेरित्यर्थः। त एव मुक्तैरिति भाष्यस्य भोगा मुक्तैर्भुज्यन्त एव न तु कदाचिद्भुंजते। कुतः यानेवाहमिति सामान्यतः परमात्मनः सर्वभोगश्रवणात्। इदं शरीरं विमुच्यताननुभवन्त्येवेति मुक्तानामभोगव्यावृत्तेश्चेति न्यायविवरणे स्पष्टं परमात्मनः पूर्णानन्दतोऽपि पूर्णभोगोऽस्तीत्यत्र श्रुत्युदाहरणाच्च परमात्मभुक्त-भोक्तृत्वेऽपि जीवानां स्वापेक्षितभोगसम्भवात्तर्कस्याप्रयोजकत्वमिति भावेनाह ॥ **न चेत्यादिना** ॥

ननु पूर्णस्य भोगो विरुद्धः लोके बुभुत्सावत एव भोगशक्तिदर्शनादित्युक्तं **पूर्णानन्दत्वेऽपीति** ॥ एवं च तयोः श्रुत्या सह दृष्टत्वान्न विरोधः। विरोधाविरोधयोर्दर्शनमूलकत्वात्। नन्वस्तु प्रामाणिकत्वादङ्गीकार्यत्वं, घटकं तु किमित्यत उक्तम् ॥ **ईश्वरस्येति** ॥ अचिन्त्यशक्त्यैवैतदुपपद्यत इति भावः। एतेनाश्चर्यतेत्युक्तन्यायोऽपि स्पष्टितो भवति।

## तत्त्वसुबोधिनी

पूर्वाधिकरणे स तत्र पर्येतीतिवाक्योक्तमित्यागमोक्तप्राप्यस्य परञ्ज्योतिःशब्दावाच्यस्य विष्णुत्वसमर्थनेन अस्य निष्टंकितत्वादिति भावः।

(भावदीपः)

॥ **ईश्वरस्येति** ॥ **अत इति** ॥ परमपुमर्थत्वान्मुक्तेर्विवक्षितहानिप्रसङ्गाच्चेत्यर्थः ॥ य इत्यादिभाष्यं व्याचष्टे ॥ **य इति** ॥ भगवन्मात्रयोग्यभोगभोक्तृत्वभ्रान्तिं निरस्यन्नेवकारव्यावर्त्यमाह ॥ **न त्विति** ॥ एतेन श्रुतिगतैवकारोऽपि व्याख्यातः । भोगो नाम विषयदर्शनादिनिमित्त स्वरूपानन्द-विशेषाभिव्यक्त्यर्थविषयदर्शनादिरेव मुक्तानामिति ज्ञेयम् । प्रागुक्तयुक्तिं निराह ॥ **न चेति** ॥ उक्तबाधकनिरासकहेतुत्वेन पूर्णानन्द इत्याद्यन्यत्रोक्तमेवाह ॥ **पूर्णेति** ॥ स्मृत्युक्तेरुपयोगमाह ॥ **नन्विति** ॥ **तत्साम्येति** ॥ तथा च प्रतिषेधादिति चेन्न शारीरादित्युक्तव्याहतिरिति भावः । ननु तावता सावधारणश्रुतेः का गतिरित्यतः सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्त्वादित्यन्यत्रोक्तिं सावकाशश्रुतितो निरवकाशस्मृतेरित्यस्योपलक्षणं मत्वा तात्पर्यमाह ॥ **विशेषेति** ॥ **अत इति** ॥ श्रुतिस्मृतिबलादित्यर्थः ॥

## अभिनवचन्द्रिका

**अत्र सायुज्यभाजामिति** ॥ अत्र यद्यपि सूत्रभाष्याभ्यां मुक्तमात्रस्य विषयत्वं प्रतीयते, तथापि यस्मिन्नधिकरणे विषयत्वेन यदुदाह्रियते तदेव विषय इति न मन्तव्यम् । किन्नाम, यावान् तन्न्यायगोचरः स सर्वोऽपि विषयः । विषयाद्युक्तिस्तु उदाहरणमात्रमिति ज्ञापनाय सायुज्यभाजामित्युक्तम् । अत एव ये भोगाः परमात्मना भुज्यंते त एव मुक्तैर्भुज्यन्त इति सिद्धन्ते सामान्येन मुक्तग्रहणम् ।

**पूर्वपक्षस्तु** मुक्ताः परमात्माऽभुक्तभोगान्भुञ्जते । अवाप्तमहापुरुषार्थत्वात् । अन्यथा कदाचित् मुक्तानां भोगेच्छायामपि अवाप्तकामत्वेन परमात्मनस्तदनिच्छायां मुक्तानां भोगो न स्यात् । परमात्मभोगं विना तेषां भोगायोगात् । ततश्च भगवद्भुक्तभोगभोक्तृत्वात् युक्तं तस्य सर्वभोक्तृत्वमिति सिद्धम् ॥

(सिद्धान्तभागः नास्ति)

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ॥ **परमात्मानमिति** ॥ पूर्वाधिकरणे ज्योतिश्शब्दवाच्यं परमात्मानं प्राप्य मुक्तो भोगान् भुङ्क्त इत्युक्तम् । प्राप्तिश्च सायुज्यादिरूपा न तु तद्गतिरूपा । तस्याः पूर्वपादे

(वाक्यार्थमुक्तावली)

विचारितत्वात् । तथा च सायुज्यादिकं प्राप्य भोगरूपमोक्षे भोगोऽत्र विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ सायुज्यभाग्भिः किं परमात्माभुक्ता अपि भोगा भुज्यन्त उत भुक्ता एवेति चिन्ता । तदर्थमभुक्तभोगभोक्तृत्वे साधकं परमगतित्वम् भुक्ता एवेति नियमे बाधकं, कदाचित्सञ्जातभोगेच्छूनामपि तदभावप्रसञ्जनं च निरवकाशमुत सावकाशमिति । अविभागेनेति सौत्रप्रतिज्ञाभागेन त एव मुक्तैर्भुज्यन्त इति भाष्येण च व्यवच्छेद्यं प्रतिज्ञांशमाह ॥ **परमात्मेति** ॥ दृष्टत्वादिति सूत्रखण्डोपात्तश्रुतौ तानेवैत इदं शरीरं विमुच्यानुभवन्तीति मुक्तत्वेऽपि परमात्मभुक्तभोगैकनियमोक्त्याऽप्रयोजकत्वेन व्यवच्छेद्यं परा गतिरित्युक्तन्यायं व्यनक्ति ॥ **मोक्षस्येति** ॥ त एव मुक्तैर्भुज्यन्त इति भाष्ये भोगा मुक्तैर्भुज्यन्त एवेत्यप्यन्वयमभिप्रेत्य तद्व्यवच्छेद्यं बाधकमप्याह ॥ **परमात्मभुक्ता एवेति** ॥ यदि मुक्तानां परमात्मभुक्तभोगः स्यात्तर्हि कदाचिद्भोगः स्यादिति तर्कस्याप्रयोजकत्वं परिहरति । तर्कस्यानिष्टत्वमुपपादयति ॥ **ततश्चेति** ॥ केचित्तु परमात्मना भुक्तास्तदभुक्ता मुक्तैरिति विभागमन्तरेणैव मुक्ता भोगान् भुंजते तथा दृष्टत्वाच्छ्रुतेरिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **ये भोगा इति** ॥ इदं शरीरं विमुच्यानुभवन्तीति श्रुतिमनुसृत्य परमात्मगतित्वहेतोरप्रयोजकत्वमाह ॥ **परमात्मेति** ॥ तदुपपत्तेः परमात्मगतित्वोपपत्तेरित्यर्थः । त एव मुक्तैरिति भाष्यस्य भोगा मुक्तैर्भुज्यन्त एव न तु कदाचिद्भुंजते । कुतः यानेवाहमिति सामान्यतः परमात्मनः सर्वभोगश्रवणात् । इदं शरीरं विमुच्यताननुभवन्त्येवेति मुक्तानामभोगव्यावृत्तेश्चेति न्यायविवरणे स्पष्टं परमात्मनः पूर्णानन्दतोऽपि पूर्णभोगोऽस्तीत्यत्र श्रुत्युदाहरणाच्च परमात्मभुक्तभोक्तृत्वेऽपि जीवानां स्वापेक्षितभोगसम्भवात्तर्कस्याप्रयोजकत्वमिति भावेनाह ॥ **न चेत्यादिना** ॥

ननु पूर्णस्य भोगो विरुद्धः लोके बुभुत्सावत एव भोगशक्तिदर्शनादित्युक्तं **पूर्णानन्दत्वेऽपीति** ॥ एवं च तयोः श्रुत्या सह दृष्टत्वान्न विरोधः । विरोधाविरोधयोर्दर्शनमूलकत्वात् । नन्वस्तु प्रामाणिकत्वादङ्गीकार्यत्वं, घटकं तु किमित्यत उक्तम् ॥ **ईश्वरस्येति** ॥ अचिन्त्यशक्त्यैवेतदुपपद्यत इति भावः । एतेनाश्चर्यतेत्युक्तन्यायोऽपि स्पष्टितो भवति ।

## तत्त्वसुबोधिनी

पूर्वाधिकरणे स तत्र पर्येतीतिवाक्योक्तमित्यागमोक्तप्राप्यस्य परञ्ज्योतिःशब्दावाच्यस्य विष्णुत्वसमर्थनेन अस्य निष्टंकितत्वादिति भावः ।

## वाक्यार्थविवरणम्

**अन्यथेति** ।। सायुज्यभाजां भगवद्भुक्तभोगभोक्तृत्वाभावे भगवतो मुक्तभोग्यभोक्तृत्वाभावप्राप्त्या सर्वभोक्तृत्वासिद्धेरिति भावः । अत्र सर्वत्रापि भुज्यत इति भोग इति व्युत्पत्त्या भोगशब्देन विषयो ग्राह्यः । कुतो भोगाभावसङ्ग इत्यत आह ।। **ईश्वरस्येति** ।। अत इत्यनन्तरं मुक्तानामिति योज्यम् । **तस्य** ईश्वरस्य ।। **परमगतित्वादिति** ।। परमपुरुषार्थत्वादित्यर्थः ।। एतत् परमात्मभुक्तभोगभोक्तृत्वम् ।। **उक्तरीत्येति** ।। ईश्वरस्य नित्यपूर्णानन्दत्वेनेत्युक्तरीत्येत्यर्थः ।। **पूर्णभोगेति** ।। तथा च कदाचिदपि तस्य भोगो नास्त्येवेति भावः ।

## वाक्यार्थमञ्जरी

**असिद्धेरिति** ।। सायुज्यभाग्भोग्यभोक्तृत्वादिति भावः । सायुज्यस्यैवाप्रसक्तत्वात् सायुज्यभाग्भिर्भुज्यन्तेति संशयानुपपत्तिरित्यत आह ।। **प्राप्तिश्चेति** ।। ॐ अविभागेन दृष्टत्वात् ॐ ।। मुक्ता अविभागेन परमात्मभोगापरित्यागेन तद्भक्तानेवेति यावत् । भोगान् भुञ्जते कुतः यानेवेति श्रुतौ तथा दृष्टत्वादित्यर्थः ।

।। इति अविभागाधिकरणम् ।। ४ ।।

## ५. चितिमात्राधिकरणम्

**॥ ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ ५ ॥**

सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान्भुञ्जत इति जैमिनिर्मन्यते ।

'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति' इति माध्यन्दिनायनश्रुतावुपन्यासात् ।

'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्' इति स्मृतेः ॥

'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।
इत्यादि पूर्वस्मरणान्मुक्तस्यैतद्भविष्यति' इति बृहत्तन्त्रोक्तयुक्तेश्च ॥

### तत्त्वप्रदीपिका

सर्वदेहपरित्यागेनेति स्थूलसूक्ष्मशरीरविवक्षयोच्यते, न तु चिन्मात्रदेहविवक्षयाऽपि, श्रुतौ मर्त्यमिति विशेषणात् । 'अतिसृज्य ब्रह्माभिसम्पद्य' इति चोक्तेः । 'इदं शरीरं मर्त्यमतिसृज्य' इति श्रुत्युक्ते स्थूलशरीरमेवातिसृज्येति मतिर्मा भूदिति सर्वदेहपरित्यागेनेत्युक्तम् । सूक्ष्मशरीरस्यापि प्रत्यक्षैकदेशत्वादिदन्त्वम् । प्रलयेऽपचयान्मुक्तौ विनाशाच्च मर्त्यत्वम् । ब्राह्मेणैव देहेनेत्ययोगव्यवच्छेदः । न ब्राह्मेण देहेन विना भोगोऽस्तीति हेत्वर्थे वा । चिता वाऽचिता वेति विकल्पाम्नानाच्चिदात्मकात्स्वदेहादन्यदेहस्यापि भावं वक्ष्यमाणो जैमिनिर्मुक्तानां चिदानन्दात्मकं देहं प्रतिषेधतीति न मन्तव्यम् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तस्य मुक्तस्य भोगसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मुक्तेरपुरुषार्थत्वप्रसङ्गात्समर्थनीयं तत् । भोगो विषयः । मुक्तानां युक्तो न वेति सन्देहः । विप्रतिपत्तिः सन्देहबीजम् । न युक्त इति पूर्वः पक्षः । तथा हि । किं मुक्तानां देहोऽस्ति न वा । नाद्यः । तेषां संसारपारङ्गतत्वेन शरीरानुपपत्तेः । अन्यथा मुक्तत्वस्यैवायोगात् । न द्वितीयः । शरीराभावे

(तत्त्वप्रकाशिका)

भोगासम्भवात्। अतो मुक्तौ भोगासम्भवादपुरुषार्थत्वमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **ब्राह्मेणेति** ॥ युज्यते मुक्तस्य भोगः । न चोक्तविकल्पः । देहाभावाभ्युपगमात् । सर्वदेहपरित्यागेनैव मुक्तत्वात् । न चोक्तदोषः । मुक्तस्य स्वदेहाभावेऽपि परमात्मानं प्रविष्टस्य तद्देहेनैव ग्रहवत् भोगसम्भवादिति जैमिनिराचार्यो मन्यत इति भावः । कुत एतत् । श्रुतेरेवेत्याह ॥ **स इति** ॥ नन्वत्र मुक्तस्य भोगो ब्रह्मणा श्रूयते न पुनस्तद्देहेनेत्यत आह ॥ **आदत्त इति** ॥ ननु स्वयं देहविधुरस्य कथमन्यदेहेन भोगो युज्यते । प्रलयादावभावादित्यत आह ॥ **गच्छामीति** ॥

## भावबोधः

**भोगस्य समर्थनादिति** ॥ पूर्वाधिकरणे सायुज्यभाजां भगवद्भुक्तभोग उक्तः । तस्यात्र भगवद्देहादिकारणविशेषोक्त्या समर्थनादनन्तरसङ्गतिरिति भावः ॥ **मुक्तानामिति** ॥ सायुज्यभाजां भोगो न युक्त उत युक्त इति चिन्ता । तदर्थं तत्कारणरूपो देहो मुक्तानां न सम्भवत्युत सम्भवतीति । तदर्थं संसारपारगतिरूपा मुक्तिर्देहमात्रविरोधिनी उत मर्त्यदेहैकविरोधिनीति । तदर्थं मर्त्यदेहैकविरोधित्वपक्षेऽपि ब्राह्मचितिमात्रदेहाभ्यां भोगो न युज्यत उत युज्यत इति । तदर्थं 'ब्राह्मेण' इति जैमिनिमतस्य सायुज्यभाजां स्वदेहाभावाभ्युपगमरूपत्वेन 'चितिमात्रेण' इत्यौडुलोमिमतस्य तेषां स्वदेहाभ्युपगमरूपत्वेन परस्परं विरोधः उताविरोध इति । तदर्थं ब्राह्म-चितिमात्रदेहयोः सायुज्यभाजामन्तर्बहिर्भोगकारणत्वे विशेषप्रमाणं नास्त्युस्तीति । पारगतत्वा-न्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति न्यायविवरणं सोपस्करं व्याचष्टे– **तेषां संसारपारङ्गतत्वेनेति** ॥ मुक्तस्येति न्यायविवरणसूचिततर्कमाह– **अन्यथेति** ॥ सूत्रनिरसनीययुक्तिमाह– **शरीराभाव इति** ॥ देहाभावाभ्युपगमे हेतुमाह– **सर्वदेहेति** ॥ अनेन भाष्ये ब्रह्मणैवेत्येवकारोक्तदेहाभावे सर्वदेहपरित्यागेन मुक्ताः सन्त इत्यनेन हेतुरुच्यत इति, तृतीयाया इत्थंभावार्थत्वमिति चोक्तं भवति ।

## भावदीपः

**मुक्तस्य भोगेति** ॥ अमुक्तस्यापि ब्रह्मप्राप्तिरुक्तेति मुक्तस्येत्युक्तम् । देहाद्यभावप्रयुक्त-तदभावशङ्कानिरासेनेति योज्यम् । तेन तस्य च भोग आवश्यक इत्याद्यनय एवोक्त्याऽस्य वैयर्थ्य-शङ्काऽपास्ता । प्रागुक्तो भगवदनतिक्रमेण भोगो वा भगवद्भुक्तभोगो वा न युक्तः । भोगसामान्य-स्यैवायोगादितीह शङ्कोत्थानात्पूर्वसङ्गतिरपि सूचिता । विप्रतिपत्तिर्वादिविवादः । न युक्त इत्यत्र

(भावदीपः)

हेत्वाकाङ्क्षायां पारङ्गतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीत्यन्यत्रोक्तापिपदसूचितदेहाभावहेतुमसिद्धिनिरासाय विकल्पमुखेनाह ॥ **किमिति** ॥ पारङ्गतत्वहेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ **भोगासम्भवादिति** ॥ विषयदर्शनादिरूपत्वाद्भोगस्येति भावः ॥ **अत इति** ॥ भोगाविनाभूतदेहाभावादित्यर्थः ॥ प्रागुक्तशङ्कानिरासकतया भाष्यं व्याचष्टे ॥ **युज्यत इत्यादिना** ॥ **सर्वदेहेति** ॥ स्थूलसूक्ष्मसर्वदेहेत्यर्थः । श्रुतौ मर्त्यमिति विशेषणात् ॥

## अभिनवचन्द्रिका

**न द्वितीय इति** ॥ द्वितीयः पक्षो नाङ्गीकर्तुमुचित इत्यर्थः । एतेन 'नाद्य' इत्याद्यपक्षं निषेधता द्वितीयपक्षस्याऽङ्गीकृतत्वेन पुनस्तन्निषेधे व्याघात इति परास्तम् ॥ **न चोक्तविकल्प इति** ॥ प्रसज्यत इति शेषः ।

**पूर्वपक्षस्तु** न मुक्तानां भोगो युक्तः शरीराभावात् । न च तेषामपि देहो विद्यते इति वाच्यम् । मुक्तत्वव्याघातात् । अतो मुक्तौ भोगासम्भवात् मुक्तेरपुरुषार्थत्वमिति ।

**सिद्धान्तस्तु** नास्त्येव मुक्तानां देहः तथापि ब्राह्मेण देहेन भोगो युज्यते । 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माऽभिसंपद्य ब्रह्मणा पश्यति' इत्युपन्यासात् । 'आदत्ते हरिहस्तेन' इति स्मृतेश्चेति जैमिनिराचार्यो मन्यते । मुक्तानामपि चिन्मात्रदेहो विद्यते । 'सर्वं वा एतदचित्परित्यज्य चिन्मात्र एव एष भवतीत्युद्दालकश्रुतेः चिन्मात्रेण देहेन मुक्ता भोगान् भुञ्जत इत्यौडुलोमिराचार्यो मन्यते । न च एतन्मतयोर्विरोध इति वाच्यम् । 'स वा एतस्मात् मर्त्याद्विमुक्तः चिन्मात्रो भवति । अथ तेन रूपेणाऽभिपश्यति' इति सौपर्णश्रुतौ उपन्यासात् जैमिन्युक्तस्यापि प्रामाणिकत्वात् अविरोध इति बादरायणोक्तेः भोगसम्भवात् युक्तं मुक्तेः पुरुषार्थत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**भोगसमर्थनादिति** ॥ पूर्वाधिकरणे सायुज्यभाजां भगवद्भुक्तभोग उक्तः । तस्य भगवद्देहादिकारणविशेषोक्त्या समर्थनादनन्तरसङ्गतिरिति भावः । मुक्तानां भोगः किमयुक्त उत युक्त इति

(वाक्यार्थमुक्तावली)

चिन्ता । तदर्थं मुक्तानां भोगव्यापकस्य देहस्य सद्भावे चानुपपत्तिरस्ति न वेति । चितिमात्रेणेति सूत्रनिरस्यं परागतिरित्युक्तन्यायं व्यञ्जयन्नाद्यं प्रतिक्षिपति ॥ **नाद्य इत्यादिना** ॥ अप्रयोजकत्वं परिहरति ॥ **अन्यथेति** ॥ शरीराभ्युपगम इत्यर्थः । ब्राह्मेणेति सूत्रनिरस्यं पूर्वपक्षमाह ॥ **न द्वितीय इत्यादिना** ॥ सूत्रे आगामिसूत्राद्बुध्या विवेकेन मात्रेणेत्याकृष्यत इति भावेन भाष्ये ब्राह्मेणैव देहेनेत्येवकारः । तेन तदतिरिक्तलिङ्गशरीरस्थूलशरीराभावो लब्धः । तत्र सर्वदेहपरित्यागेन मुक्ताः सन्त इति हेतुरुच्यते । इत्थंभूतलक्षणे तृतीया । सर्वदेहपरित्यागरूपमुक्तिं प्राप्ता इत्यर्थः । यद्वा मुक्तपदेन व्यक्तानन्दत्वमुच्यते । तत्र स्थूलसूक्ष्मदेहपरित्यागो हेतुरिति करणे तृतीयेति भावेन सर्वदेहपरित्यागेनेत्यादिभाष्यं व्याचष्टे ॥ **युज्यत इत्यादिना** ॥ तत्र भोगान् भुंजत इत्यस्यार्थो युज्यत इति । अवधारणलब्धार्थमाह ॥ **देहेति** ॥

तत्र हेतुतया सर्वदेहेत्येतद्योजयति ॥ **सर्वेति** ॥ ब्राह्मेणेत्येतद्व्यावर्त्यकथनपूर्वं व्याचष्टे ॥ **न चेत्यादिना** ॥ **न पुनस्तद्देहेनेति** ॥ ब्राह्मेणेत्यस्य तत्प्रसादेनेत्यर्थसम्भवादिति भावः । प्रलये तदभावादिति सर्वेषां ब्रह्मदेहेन भोगाभावादित्यर्थः । इदमुक्तं भवति । यदि स्वस्य भोगायतनदेहान्तराभावेऽपि वैष्णवदेहेन भोगोऽङ्गीक्रियते सर्वेषां प्रलये तत्प्रसङ्गः । न चासावस्त्यतो न मुक्तावपि ब्राह्मदेहेन भोग इति चेन्न । पूर्वस्मिन्काले संसारे विष्णुपादाभ्यां गच्छामीत्युपास्तिसद्भावेन मुक्तानां तद्योग्यानां तदुपपत्तावप्यन्येषां तदभावेन तर्कस्याप्रयोजकत्वादिति । स्मृतौ गच्छामीत्यस्योत्तरत्र गच्छामीत्यर्थः । दर्शनमित्यतः परं भविष्यतीति शेषः । यद्वा संसार एव हरिपादाभ्यामहं गच्छामि हरिदृष्ट्यैव मे दर्शनं जातम् । ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां चास्वतन्त्रत्वं स्वातन्त्र्येण ज्ञानादिजनकानि हरीन्द्रियाण्येवेति पूर्वस्मरणान्मुक्तस्यैतद्भविष्यतीत्यर्थः ।

## तत्त्वसुबोधिनी

**अन्यथेति** ॥ सशरीरत्व इत्यर्थः । सूत्रनिरसनीयां युक्तिमाह ॥ **शरीराभाव इति** ॥ शरीरवत एव भोगस्य लोके दृष्टत्वादिति भावः । देहाभावाभ्युपगमे हेतुमाह ॥ **सर्वदेहेति** ॥ अनेन भाष्ये ब्राह्मेणैव इत्येवकारोक्तदेहाभावे सर्वदेहपरित्यागेन मुक्ताः सन्तः इत्यनेन हेतुरुच्यत इति तृतीयपादान्तर्भाव अर्थत्वमिति चोक्तं भवति ॥ **न चोक्तेति** ॥ भोगासम्भवरूप इत्यर्थः । इत्यादिपूर्वस्मरणादित्यत्र पूर्वं स्मरणं पूर्वस्मरणमिति विग्रहः । पूर्वं एवंविधस्मरणादित्यर्थः ।

## वाक्यार्थविवरणम्

**अयोगादिति** ॥ शरीरत्वेन संसारित्वापत्तेरित्यर्थः ॥ **भोगासम्भवादिति** ॥ शरीरस्य भोगायतनत्वादिति भावः ॥ **ब्रह्मणेति** ॥ परब्रह्मानुग्रहेणेत्यर्थः । प्रलये भगवदुदरस्थितानामपि तद्देहेन भोगाभावादिति भावः ।

## वाक्यार्थमञ्जरी

पारं अन्तम् ॥ **अयोगादिति** ॥ सर्वदेहपरित्यागस्यैव मुक्तिशब्दार्थत्वादिति भावः । ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ । मुक्तो ब्राह्मेण परब्रह्मसम्बन्धिना देहेन भोगान् भुंक्ते इति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ कुतः ब्रह्मणेति श्रुतौ तथोपन्यासात् उक्तत्वात् । आदिशब्दोक्त-श्रुतियुक्तिभ्यां चेति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ **ग्रहवत्** पिशाचवत् ॥ **प्रलयादाव-भावादिति** ॥ तदानीं सर्वेषां ब्रह्मप्रवेशादित्यर्थः ।

## सूत्रभाष्यम्

**चितिमात्रो देहो मुक्तानां पृथग्विद्यते तेन भुञ्जते । सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षत' इत्युद्दालकश्रुतेश्चिदात्म-कत्वादित्यौडुलोमिर्मन्यते ॥**

## तत्त्वप्रदीपिका

न चिन्मात्रात्मकेन देहेन विना भोगः । किन्तु तद्वत एव । तस्य स्वरूपभूतत्वादित्यौडुलोमिः ॥

## तत्त्वप्रकाशिका

एवं देहाभावमभ्युपगम्य भोगं समर्थ्य तद्भावमभ्युपगम्यापि तं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **चितीति** ॥ न मुक्तानां भोगासम्भवः । तेषां ब्रह्मदेहातिरिक्तस्वदेहसद्भावात् । न च देहसद्भावे मुक्तत्वाभाव इति वाच्यम् । तद्देहस्य चितिमात्रत्वात् । देहस्य चितिमात्रत्वेऽपि कुतः संसारित्वा-भावः । चितिमात्रस्य मुक्तस्वरूपत्वात् । कृत्रिमशरीरस्यैव संसारापादकत्वात् । स्वरूपस्या-कृत्रिमत्वात् । जीवस्य चिन्मात्रत्वमेव कुतः । श्रुतेरेवेत्यौडुलोमिराचार्यो मन्यत इति भावः ॥

## भावबोधः

सूत्रे 'चितिमात्रेण' इत्यतः परं भुज्यत इति शेष इत्यभिप्रेत्य प्रवृत्तं तेन भुज्यत इति भाष्यं तात्पर्यतो व्याचष्टे ॥ **न मुक्तानां भोगासम्भव इति** ॥ देहो मुक्तानां पृथग्विद्यत इति भाष्यं व्याचष्टे ॥ **तेषामिति** ॥ पृथगित्यस्यार्थो **ब्रह्मदेहातिरिक्तेति** ॥ भाष्ये चितिमात्र इति हेत्वर्थगर्भ-विशेषणमित्यभिप्रेत्याह– **देहस्य चितिमात्रत्वादिति** ॥ चितिमात्रेणेत्यनेनोक्तस्य मुक्तदेहस्य चिन्मात्रत्वहेतोः संसारिभावे साध्येऽप्रयोजकत्वपरिहाराय सूत्रे 'तदात्मकत्वात्' इत्युक्तम् । तद्व्याख्यानपरं च तदात्मकत्वादिति भाष्यं तन्निवर्तनीयाशङ्कां देहस्येत्यादिना प्रदर्श्य व्याचष्टे– **चिन्मात्रस्य मुक्तस्वरूपत्वादिति** ॥ अनेन सूत्रभाष्ययोर्मुक्तस्येति शेष इत्युक्तं भवति । अस्यापि च कथं हेतुत्वमित्यत अकृत्रिमत्वादित्यादिन्यायविवरणानुसारेण हेतुहेतुमद्भावं घटयति– **कृत्रिम-शरीरस्येत्यादिना** ॥ जीवस्येति मुक्तस्येत्यर्थः ।

## भावदीपः

**तं समर्थयदिति** ॥ सूत्रेषु मुनिग्रहणं तेषां ख्यात्यर्थमेवेति भावः । चितीत्यादि भुञ्जत इत्यन्तभाष्यं व्युत्क्रमेण पूर्वपक्षनिरासकतया व्याचष्टे ॥ **न मुक्तानामिति** ॥ देहो मुक्तानां पृथग्विद्यत इत्यस्यार्थः तेषामित्यादि । चितिमात्र इत्यंशं प्रागुक्तशङ्कानिवर्तकतया व्याचष्टे ॥ **न चेति** ॥ चिदात्मकत्वादिति भाष्यं शङ्कापूर्वं व्यनक्ति ॥ **देहस्येति** ॥ **मुक्तेति** ॥ मुक्तानामित्यस्य भाष्येऽनुषङ्ग इति भावः । तावता कुतः संसारित्वाभाव इत्यतः अकृत्रिमत्वाद्देहस्येत्यन्यत्रोक्तं व्यनक्ति ॥ **कृत्रिमशरीरस्येति** ॥ सर्वं वा इति भाष्यांशं व्यनक्ति ॥ **जीवस्येति** ॥ मुक्तानामिति प्रस्तावेऽपि जीवस्येत्युक्तिः संसारवेलायां चिदात्मत्वं नेति शङ्काव्युदासाय । एवेत्यस्य येन चिन्मात्रस्य स्वरूपदेहेन भोगः स्यादित्यर्थः ॥

## वाक्यार्थमुक्तावली

अत्र चितिमात्रेणेत्यतः परं भुंजत इति शेष इत्यभिप्रेत्य प्रवृत्तं तेन भुंजत इति भाष्यं तात्पर्यतो व्याचष्टे ॥ **न मुक्तानामिति** ॥ देहो मुक्तानां पृथग्विद्यत इति भाष्यं व्याचष्टे ॥ **तेषामिति** ॥ पृथगित्यस्यार्थः ब्रह्मदेहातिरिक्तेति । भाष्ये चितिमात्रेणेति हेत्वर्थगर्भविशेषणमित्यभिप्रेत्याह ॥

(वाक्यार्थमुक्तावली)

**तद्देहस्येति** ॥ चितिमात्रेणेत्यनेनोक्तस्य मुक्तदेहस्य चिन्मात्रत्वहेतोः संसारित्वाभावे साध्येऽ-प्रयोजकत्वपरिहाराय सूत्रे तदात्मकत्वादित्युक्तम् । तद्व्याख्यानपरं तदात्मकत्वादिति । भाष्यं तन्निवर्तनीयाशङ्कां देहस्येत्यादिना प्रदर्श्य व्याचष्टे ॥ **चिन्मात्रस्य मुक्तस्वरूपत्वादिति** ॥ अनेन सूत्रभाष्ययोर्मुक्तस्येति शेष इत्युक्तं भवति । चिन्मात्रदेहस्य मुक्तस्वरूपत्वेऽपि शरीरत्वेन संसारः किं न स्यादित्यतस्तदात्मकत्वादित्यनेन सूचितमकृत्रिमतेत्युक्तन्यायं विशदयति ॥ **कृत्रिमेति** ॥ जीवस्येति श्रुतौ मुक्तौ व्यक्तं चिन्मात्रत्वं पुनर्नापगच्छतीत्युच्यते चिन्मात्र एवावतिष्ठते ।

## तत्त्वसुबोधिनी

सूत्रे चितिमात्रेण इत्यतः परं भुञ्जते इति शेष इत्यभिप्रेत्य प्रवृत्तं तेन भुज्यत इति भाष्यं तात्पर्यतो व्याचष्टे ॥ **न मुक्तानां भोगासम्भव इति** ॥ देहो मुक्तानां पृथग्विद्यत इति भाष्यं व्याचष्टे **तेषामिति** ॥ पृथगित्यस्य अर्थो **ब्रह्मदेहातिरिक्तेति** ॥ भाष्ये चितिमात्र इति हेतुगर्भविशेषण-मित्यभिप्रेत्याह ॥ **तद्देहस्य चितिमात्रत्वादिति** ॥ चितिमात्रेणेत्यनेन उक्तस्य मुक्तदेहस्य चिन्मात्रत्वे हेतोः संसारित्वाभावे साध्ये अप्रयोजकत्वपरिहाराय सूत्रे तदात्मकत्वादित्युक्तम् । तद्व्याख्यनपरं चिदात्मकत्वादिति भाष्यं तन्निवर्तनीयाशङ्कां देहस्येत्यादिना प्रदर्श्य व्याचष्टे ॥ **चितिमात्रस्य मुक्तस्वरूपत्वादिति** ॥ अनेन सूत्रभाष्ययोः मुक्तस्येति शेष इत्युक्तं भवति । अस्यापि कुतो हेतुत्वमित्यतो हेतुः श्रुतौ मुक्तस्य चिच्छरीरमात्रोक्तावपि तस्य भोगकारण-त्वानुक्तेरित्यर्थः ।

## वाक्यार्थविवरणम्

ननु यथाकथञ्चित् देहसद्भावात् संसारित्वापत्तिरित्यत आह ॥ **देहस्येति** ॥ **कृत्रिम-शरीरस्यैवेति** ॥ प्राकृतजन्यशरीरस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

मुक्तः चितिमात्रेण ज्ञानमात्रात्मकेन देहेन भोगान् भुङ्क्ते । न चैवं संसारिसमानत्वं कुतः तदात्मकत्वात् तस्य देहस्य मुक्तस्वरूपत्वात् इत्यौडुलोमिराचार्यो मन्यत इत्यर्थः । **जीवस्य मुक्तस्य** ॥

## सूत्रभाष्यम्

**॥ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ॥ ७ ॥**

'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः' इति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य च भावादुभयत्राप्यविरोधं बादरायणो मन्यते । नारायणाध्यात्मे च–

'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः ।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥
तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् ।
कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिता' इति ॥ ७ ॥

॥ इति चितिमात्राधिकरणम् ॥ ५ ॥

## तत्त्वप्रदीपिका

उभयत्रापि प्रमाणसद्भावाच्चिन्मात्रकेन स्वदेहेन ब्रह्मदेहेन च साहित्येन भोगाविरोधं भगवान् बादरायणो मन्यते । साहित्यमनुग्राह्यानुग्राहकभावेन । उक्तं प्रागेव जीवानां सामान्यतः पारतन्त्र्यम् । तत् आमुक्तेरेवेति शङ्का मा भूदित्ययं निर्णयः । प्रत्यक्षत एव सिद्धो मुक्तानां भगवन्नियतो भोग इति च प्रदर्शनाय ॥

## तत्त्वप्रकाशिका

नैतौ परिहारावुपपन्नौ देहभावाभावयोर्विरुद्धत्वाद्वस्तुविकल्पासम्भवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **एवमपीति** ॥ नैतयोः पक्षयोर्विरोधोऽस्ति । औडुलोमिनोक्तस्य चिन्मात्रेण भोगस्य जैमिन्युक्तस्य च ब्राह्मेण देहेन भोगस्य प्रामाणिकत्वात् । प्रामाणिके च विरोधाभावात् । न चौडुलोमिमते प्रमाणाभावोऽनुक्तत्वादिति वाच्यम् । 'स वा एषः' इति श्रुतौ तदुपन्यासादिति भगवान् बादरायणो मन्यत इति भावः । अविरोधप्रकारं स्मृत्या दर्शयति ॥ **नारायणेति** ॥ अतो मुक्तौ भोगसम्भवाद्युक्तं पुरुषार्थत्वमिति सिद्धम् ॥

## गुर्वर्थदीपिका

जैमिन्युक्तस्य च भावादित्यत्र जैमिन्युक्तस्य बाह्यदेहपरित्यागस्य भगवदङ्गाश्रितनिजदेहेन भगवता सहभोगस्य च सद्भावादित्यर्थः। एवं तर्ह्युभयमतेऽपि चिन्मात्रदेहसद्भावे जैमिन्यौडुलोमिमतयोः को विशेष इति चेन्न। स्मृत्युक्तप्रकारेण हरिदेहे स्थित्वा स्वचिन्मात्रदेहेन भोगोऽस्तीति जैमिनिमतम्। बहिरपि चिन्मात्रदेहेन भोगोऽस्तीत्यौडुलोमिमतमिति विशेषसद्भावात्। न चैवं परस्परविरोधः शङ्क्यः। जैमिनिमतस्य सायुज्यदशाकालीनभोगविषयत्वात्। औडुलोमिमतस्य च सायुज्यभाजामेव कादाचित्कबहिर्भोगविषयत्वात्सालोक्यादिमुक्तिविषयत्वाच्च न विरोधः।

## भावबोधः

**अनुक्तत्वादिति** ॥ 'सर्वं वा एतत्' इति श्रुतौ मुक्तस्य चिच्छरीरमात्रोक्तावपि तस्य भोगकारणत्वानुक्तेरित्यर्थः ॥ **स वा एष इति श्रुताविति** ॥ उपलक्षणं चैतत्। कथं मुक्तस्य चिन्मात्र एव देहो भवतीत्यादिन्यायविवरणोदाहृतश्रुतावित्यपि द्रष्टव्यम् ॥ **स्मृत्या दर्शयतीति** ॥ स्मृतौ 'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः' इत्यनेन जैमिनिमतस्य नश्वरदेहाभावाभ्युपगमरूपत्वेन व्यवस्थयाविरोधपरिहारप्रकारस्योक्तत्वादिति भावः। 'सायुज्यभाजां भगवत्प्रवेशो न भोगस्य गच्छामि' इति श्रुत्युक्तरीत्या तदाशासितत्वेन तथा भोगस्य बहिर्भोगापेक्षया प्राथम्यप्राधान्यबाहुल्यादिना चाभ्यर्हितत्वेनाद्ये सूत्रे तत्र प्रमाणोक्तिः। द्वितीये तदनुग्राह्यतया कादाचित्कबहिर्भोगकारणतया च ब्राह्मदेहापेक्षयाऽप्रधानजीवस्वरूपचितिमात्रदेहोक्तिः। तृतीये चिन्मात्रदेहस्य भोगकारणत्वे प्रमाणविशेषोक्तिपूर्वकं मुनिमतयोः स्वमतत्वोक्त्याऽविरोधोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**नैताविति** ॥ पूर्वयोगद्वयोक्तावित्यर्थः। उभयत्राप्यविरोधमित्यंतभाष्यं व्युत्क्रमेण व्याचष्टे ॥ **नैतयोरिति** ॥ चिन्मात्रेणेत्यनन्तरं भोगस्येति शेषमुपेत्य चिन्मात्रेण भोगस्य जैमिन्युक्तस्य भावात् प्रमाणभावादित्यर्थमुपेत्य व्याचष्टे ॥ **औडुलोमिनेति** ॥ हेतोरप्रयोजकत्वं निराह ॥ **प्रामाणिके चेति** ॥ श्रुतौ चिन्मात्रेण भोगस्योपन्यासादित्यंशं व्याचष्टे ॥ **न चेति** ॥ स वा एष एतदिति श्रुतेर्भाष्यकृतैवोक्तत्वेन सूत्रेऽनुक्तिमभिप्रेत्योक्तमनुक्तत्वादिति। प्रमाणस्येति शेषः। एवं चात्र सूत्रे

(भावदीपः)

उपन्यासादित्युक्तिर्युक्तेति भावः ॥ **अत इति** ॥ ब्राह्मदेहस्य तदन्यचिन्मात्रदेहस्य च भावादित्यर्थः ॥

## वाक्यार्थमुक्तावली

**विरुद्धत्वादिति** ॥ ननु स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्येति मर्त्यशरीराभावस्तत्रोक्तः । अत्र तु चिन्मात्रदेह उक्तः । कुतो विरोध इति चेत् मर्त्यशरीरातिरिक्तचिन्मात्रशरीरस्यैवाप्रामाणिकत्वेन शरीरं नास्ति शरीरमस्तीत्येव प्राप्तत्वाद्भाष्यकारैरुपन्यस्तप्रमाणस्य मुक्तस्य चिन्मात्रीभावविषयत्वेऽपि चिन्मात्रशरीराविषयत्वादिति भावः । सूत्रे एवंशब्दः प्रकृतचिन्मात्रविग्रहकरणकभोगपरः । अपिशब्दः पूर्वसूत्रे सामान्येन प्रवृत्तभाष्योदाहृतोद्दालकश्रुतिसमुच्चयार्थः । अन्यथा भाष्ये उद्दालकश्रुत्युदाहरणस्योत्सूत्रत्वप्रसङ्गात् । यद्वा जैमिन्युक्तमाध्यन्दिनायनश्रुत्या इहोदाहृीयमाणसौपर्णश्रुतिसमुच्चयार्थः । पूर्वभावादित्यस्य पूर्वोक्तेन ब्राह्मेण देहेनैव भोगो न मर्त्यदेहेनेत्यत्रापि भावात्प्रमाणभावादित्यर्थः । यद्वा पूर्वोक्तस्य ब्राह्मेणैव देहेन भोगस्य भावात्सत्वात् । सत्वं च प्रामाणिकत्वमिह विवक्षितमिति प्रामाणिकत्वादित्यर्थ इत्याभिप्रेत्य व्याचष्टे ॥ **नैतयोरित्यादिना** ॥ **स्मृत्येति** ॥ अपिशब्दगृहीतयेति शेषः । अत्राद्ये सायुज्यभाजामपेक्षितस्य ब्राह्मेण देहेन भोगस्य तदितरदेहाभावस्य चोक्तिः । द्वितीये तदङ्गानुगृहीतस्वाङ्गैर्भोगोक्तिः । तृतीयेऽविरोधसमर्थनमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**स्मृत्या दर्शयतीति** ॥ स्मृतौ 'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः' इत्यनेन जैमिनिमतस्य नश्वरदेहाभावावगमरूपत्वेन औडुलोमिमतस्य चिन्मातृदेहाभ्युपगमरूपत्वेन व्यवस्थयाऽविरोधप्रकारस्य उक्तत्वादिति भावः । अत्र आद्ये सूत्रे भगवत्प्रवेशेन भोगे प्रमाणोक्तिः । द्वितीये जीवस्वरूपचितिमात्रदेहोक्तिः । तृतीये मुनिमतयोः स्वमतोक्त्या अविरोधोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**वस्त्विति** ॥ एकस्मिन्नेव मुक्ते देहित्वादेहित्वरूपविरुद्धधर्मद्वयालिङ्गितत्वासम्भवादित्यर्थः ॥

(वाक्यार्थविवरणम्)

**अनुक्तत्वादिति ॥** सर्वं वा एतदिति श्रुतौ चिन्मात्रदेहोक्तावपि तेन भोगानुक्तेः चिन्मात्रदेहेन भोगे प्रमाणाभाव इत्यर्थः ॥ **तदुपन्यासादिति ॥** तेन चिन्मात्रदेहेन भोगोपन्यासादित्यर्थः ।

## वाक्यार्थमञ्जरी

**वस्तुविकल्पेति ॥** वस्तुनि मुक्ते देहवत्त्वतद्राहित्यरूपद्वैविध्यायोगात् ॥ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ॥ एवमपि चिन्मात्रदेहत्वेन भोगान् भुङ्क्ते इत्येवंप्रकारेणाप्युपन्यासात्, स वा एष इति श्रुत्युक्तत्वात्, पूर्वभावात्पूर्वस्य जैमिन्युक्तस्य देहान्तरत्यागेन ब्राह्मेण देहेन सत्वस्य भावात् ब्रह्मणीति श्रुतिसिद्धत्वेन सत्वादविरोधं जैमिन्यौडुलोमिमतयोर्मर्त्यामर्त्यदेहभावाभावाभ्युपगमेन विरोधाभावं बादरायणो मन्यत इति भावः ॥

॥ इति चितिमात्राधिकरणम् ॥ ५ ॥

## ६. सङ्कल्पाधिकरणम्

**॥ ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ॥ ८ ॥**

न तेषां भोगादिषु प्रयत्नापेक्षा ।

'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिश्रुतेः ॥

॥ इति सङ्कल्पाधिकरणम् ॥ ६ ॥

### तत्त्वप्रदीपिका

भोगस्य कर्मसाध्यत्वेन लोके दृष्टत्वान्मुक्तभोगस्य चानन्तकालीनस्यानन्तराऽन्तरा प्रयत्नमन्तरेणासिद्धिरित्यत आह– सङ्कल्पादेव च तत् श्रुतेः ॥ भोगेष्टौ भोगे तदनिष्टावुपरमे च न प्रयत्नापेक्षा सङ्कल्पादेव भोगश्चकारात्तदुपरमश्च भवति । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यारभ्य 'यं यमन्तमभिकामो भवति' 'यं यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति' इति श्रुतेः । उक्तं च सत्यकामत्वम् ।

'कामः सङ्कल्प आनन्दो मुक्तानां तारतम्यतः ।
स्वरूपभूतास्ते सर्वे निर्दोषा गुणरूपका' इति पाद्मे ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तस्य मुक्तस्य सङ्कल्पमात्रसाध्यभोगवत्त्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा संसारसमानधर्मत्वापत्तेस्साधनीयमेतत् । प्रकृतो मुक्तभोग एवात्र विषयः । किं तत्तदुपायसाध्यसाधनसाध्य उत सङ्कल्पमात्रसाध्य इति सन्देहः । लोकदृष्टिरलौकिकत्वं च सन्देहबीजम् । तत्तदुपायसाध्यसाधनसाध्य इति पूर्वः पक्षः । मुक्तस्य भगवदोकसि स्थितत्वात् । भगवदोकसि च भूम्यादिवत्तत्तदुपायसाध्यसाधनसाध्य एव भोगो भवेत् । तस्याप्योकस्त्वसाम्यात् । अन्यथा लोकविरोधापातात् । तथा च संसारसमानधर्मत्वान्मुक्तेरपुरुषार्थत्वमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **सङ्कल्पादेवेति** ॥ न मुक्तानां भोगादिषु तत्तदुपायसाध्यसाधनापेक्षा किं तु सङ्कल्पमात्रादेव तद्भोगसिद्धिः । कुतः । 'स यदि' इति श्रुतेः । श्रुतिविरोधादेवोक्तयुक्तेराभासत्वमिति

(तत्त्वप्रकाशिका)

भाव: । चशब्दो विपक्षनिवृत्त्यर्थतया व्याख्यात: । न चैवं सति लोकविरोध: । निर्दोषे भगवदोकसि तथात्वस्यैव युक्तत्वात् । अतो मुक्तभोगस्य सङ्कल्पमात्रसाध्यत्वाद्युक्तं मुक्ते: पुरुषार्थत्वमिति सिद्धम् ॥

## गुर्वर्थदीपिका

स यदि पितृलोककामो भवतीत्यत्र 'लोकृ दर्शने' इति धातो: पितृलोक: पितॄणां दर्शनमित्यर्थ: ॥

## भावबोध:

**सङ्कल्पमात्रसाध्येति** । पूर्वाधिकरणे यस्य भोगस्य कारणत्वमुक्तं तस्यात्र सांसारिकभोग-वैलक्षण्याय सङ्कल्पमात्रसाध्यत्वसमर्थनादनन्तरसङ्गतिरिति भाव: ॥ **किं तदिति** ॥ अत्र मुक्तभोग: किं तत्तदुपायसाध्यसाधनसाध्य उत सङ्कल्पमात्रसाध्य इति चिन्ता । तदर्थं तत्तदुपायसाध्यसाधन-साध्यत्वसाधकौकस्त्वयुक्तिरबाधितविषयोत बाधितविषयेति । तदर्थं मुक्तभोगानां सङ्कल्पमात्र-साध्यत्वे प्रबलप्रमाणं नास्त्युतास्तीति । तदर्थं 'स यदि पितृलोककामो भवति' इति श्रुतेर्लोक-विरोध: स्यादिति तर्कबाधो भवत्युत न भवतीति । तदर्थमयं तर्को अनाभास: उतेष्टापादन-रूपत्वेनाभास इति । भगवदोकसि स्थितत्वान्मुक्तस्य तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्य-भोगसाधनत्वमित्यत्र न्यायविवरणे तत्तदुपायसाध्यभोगसाधनं यस्मिन्नोकसीति विग्रहो द्रष्टव्य: । न तेषां भोगादिषु प्रयत्नापेक्षेति भाष्यस्योत्सूत्रितत्वपरिहारार्थमाह– **चशब्द इति** ॥ निर्दोषत्वा-त्तदोकसो मुक्तस्य च 'सङ्कल्पादेव' इति श्रुत्यनुसारेणोपपत्तेरिति न्यायविवरणतात्पर्यमाह– **निर्दोष इति** ॥

## भावदीप:

सङ्कल्पेत्यादि बहुव्रीहि: । एतेन पूर्वत्र भोगस्योपकरणमुक्तमत्र तु साधनमुच्यत इति पूर्वसङ्गतिरपि सूचिता ॥ **अन्यथेति** ॥ तत्तदुपायसाध्यभोगवत्त्व इत्यर्थ: ॥ **लोकेति** ॥ लोके भोगस्य तत्तदुपायसाध्यत्वदृष्टिरित्यर्थ: ॥ **अलौकिकत्वं चेति** ॥ कार्याख्यानादित्यत्र भाष्योक्त-

(भावदीपः)

मलौकिकं मुक्तिकार्यं यतोऽस्येति श्रुत्या मुक्तेरलौकिकत्वसिद्धेरिति भावः । भगवदोकसि स्थितत्वान्मुक्तस्य तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनत्वमित्यन्यत्रोक्तौ प्रतिज्ञाहेतू व्यनक्ति ॥ **तत्तदुपायेति** ॥ हेतोरप्रयोजकत्वशङ्कानिरासायोक्तरूपसाध्ये प्रयोजकतां व्यनक्ति ॥ **भगवदोकसि चेति** ॥ कुतो भवेदित्यत आह ॥ **तस्यापीति** ॥ हेतूच्छित्तिरेव बाधिकेति भावेन भावमाह ॥ **अन्यथेति** ॥ **तथा चेति** ॥ भोगस्य यत्नसाध्यत्वे सतीत्यर्थः ॥ तत्तदुपायेत्यन्यत्रोक्तरीत्या नेत्यादिभाष्यं व्याचष्टे ॥ **नेति** ॥ भोगादीत्यादिपदेनानिष्टोपरमादिर्ग्राह्यः । एवं ह्याकस्मिकता कार्यस्येति पृच्छति ॥ **किंत्विति** ॥ सङ्कल्पादेवेति सूत्रांशार्थमाह ॥ **सङ्कल्पेति** ॥ एवेत्यनुवादो मात्रादित्यर्थोक्तिः ।

यद्वा सङ्कल्पादित्यस्यैव सङ्कल्पमात्रादित्यर्थः । एवेत्यनेन तेषां सङ्कल्पस्य सत्यत्वेन कार्याव्यभिचारित्वरूपबलवत्त्वमुच्यते । अत्र मात्रपदेन च तत्तत्कालकृतोपायसाध्यत्वमेव निवार्यते न तु ज्ञानोत्तरकृतपूर्वतननिवृत्तकर्मसाध्यता साऽस्त्येव । तेनास्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत इति श्रुत्यविरोधः । अग्निहोत्रादि तु तत्कार्यायैवेत्यादि प्रागुक्ताविरोधश्च । श्रुत्युक्तिः प्रागुक्तभगवदोकसिस्थत्वरूपयुक्तिनिरासार्था चेत्युपेत्याह ॥ **श्रुतीति** ॥ अप्रतीतेर्नेत्यादि भाष्यं चशब्दव्याख्यानमिति दर्शयति ॥ **चशब्द इति** ॥ निपातानामनेकार्थत्वाच्चशब्दो नञर्थः सन् विपक्षनिवृत्त्यर्थः न तु प्रसिद्धोपायसाध्यो न भोग इत्यर्थे वर्तत इत्यर्थः । एवशब्दो हेतुप्राबल्यार्थ इति भावः ॥ **प्रागुक्तमनुवदति** ॥ **न चैवमिति** ॥ भोगस्य सङ्कल्पैकसाध्यत्वे इत्यर्थः । निर्दोषत्वात्तदोकस इत्यन्यत्रोक्तमाह ॥ **निर्दोष इति** ॥ **अत इति** ॥ श्रुतिबलाल्लोकविरोधस्यानुगुणत्वाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

ननु सूत्रस्थ च शब्दाऽव्याख्यानात् न्यूनतेत्यत आह – **चशब्द इति** ॥ 'न तेषां भोगादिषु प्रयत्नापेक्षेति भाष्येण' इति शेषः ।

**पूर्वपक्षस्तु** तत्तदुपाय साध्यसाधनसाध्यो ओकसि स्थितभोगत्वात् । पृथिव्याद्योकसि स्थितसंसारभोगवत्, अन्यथा लोकविरोधात् । ततश्च सङ्कल्पसाध्यत्वाभावात् मुक्तेरपुरुषार्थत्वमिति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु** सङ्कल्पसाध्य एव मुक्तभोगः नोपायसाध्यः । 'स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरः समुत्तिष्ठन्ति इति श्रुतेः । न च लोकविरोधः । निर्दोषे भगवदोकसि तथात्वस्यैव युक्तत्वात् । अतो मुक्तभोगस्य सङ्कल्पमात्रसाध्यत्वात् युक्तं मुक्तेः पुरुषार्थत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सङ्कल्पमात्रसाध्येति** ॥ एवं भगवदङ्गानुगृहीतस्वचिदङ्गैः स्वसङ्कल्पानुसारेण मुक्तानां भोग इति पूर्वाधिकरणे यथेष्टं परिवर्तत इत्यादावुक्तं तदत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ मुक्तभोगः किं तत्तदुपायसाध्यसाधनसाध्य उत सङ्कल्पमात्रसाध्य इति चिन्ता । तदर्थं तस्य भगवदोकसि स्थितस्यापि सङ्कल्पादेव भोगाङ्गीकारे लोकविरोधो भवति न वेति । सौत्रचशब्देन तेषां भोगादिषु प्रयत्नापेक्षेति व्यावर्तनीयं पूर्वपक्षमाह ॥ **तत्तदुपायेति** ॥ सिद्धान्ते प्रबलश्रुत्युपन्यासेन निरसनीयं तदोक इत्युक्तपूर्वपक्षन्यायं व्यनक्ति ॥ **मुक्तस्य भगवदोकसीत्यादिना** ॥ भगवदोकःस्थत्वमप्रयोजकमित्यतो विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ ओकःस्थितस्यापि तत्तदुपायसाध्यसाधनसाध्यभोगाभाव इत्यर्थः ॥ **न मुक्तानां भोगादिष्विति** ॥ अत्रादिपदेन भोगसाधनविषयादिपरिग्रहः । भाष्ये प्रयत्नापेक्षेत्यतः परमध्याहरति किं तु सङ्कल्पमात्रादेव तद्भोगसिद्धिरिति । सङ्कल्पमात्रमलं तस्मादेवेति योज्यम् । न तेषां भोगादिप्रयत्नापेक्षेति भाष्यस्योत्सूत्रत्वपरिहारार्थमाह ॥ **चशब्द इति** ॥ न तेषां भोगादीति भाष्ये तच्छब्देन

> मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः ।
> चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥

इति निर्दोषवैकुण्ठादिलोके चतुर्विधनाशादिदोषशून्यभगवत्सायुज्यभाजां संसारिविलक्षणानां तदन्तर्बहिर्वेच्छानुसारेण भोगभाजां मुक्तानां परामर्शेन लब्धसमस्तदोष इत्युक्तन्यायं विशदयन् लोकवैलक्षण्यस्येष्टत्वात्तर्कस्येष्टापादनमाह ॥ **निर्दोषेति** ॥ एतेन सूत्रे अवधारणेनैव विपक्षस्य व्यावर्तितत्वाच्चशब्दवैय्यर्थ्यमिति निरस्तम् । विपक्षेत्यस्य परपक्षे प्रमाणस्याप्रयोजकत्वेनाभासत्वविबोधनार्थ इत्यर्थाङ्गीकारात् ।

## तत्त्वसुबोधिनी

**सङ्कल्पमात्रसाध्येति** ॥ पूर्वाधिकरणे यस्य भोगस्य कारणमुक्तं तस्यात्र सांसारिकभोग-वैलक्ष्यण्याय सङ्कल्पमात्रसाध्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः । उक्तनियमे हेतुमाह ॥ **तस्यापीति** ॥ भगवदोकः स्थितस्यापीत्यर्थः ॥ **अन्यथेति** ॥ तत्तदुपायसाध्यसाधनसाध्यभोगाभाव इत्यर्थः । तर्हि एवं स्वरूपयुक्तेः का गतिः इत्यत आह ॥ **श्रुतिविरोधादिति** ॥ न तेषां भोगादिष्वित्युक्तप्रयत्नापेक्षोक्तिः । भाष्यस्य उत्सूत्रत्वपरिहारार्थमाह ॥ **चशब्द इति** ॥ **तथात्वे अस्यैवेति** ॥ उपभोगसाध्यत्वस्यैवेत्यर्थः ।

## वाक्यार्थविवरणम्

**तत्तदुपायेति** ॥ तत्तत्कालीनप्रयत्नरूपोपायसाध्यं यत्साधनं स्रक्चन्दनवनितादि तत्साध्य इत्यर्थः ॥ **उक्तयुक्तेरिति** ॥ भगवदोकःस्थितत्वरूपयुक्तेरित्यर्थः ॥ **विपक्षेति** ॥ न तेषां भोगादिषु प्रयत्नापेक्षेति पूर्वपक्षनिवृत्त्यर्थतया तत्प्रतिषेधकतया व्याख्यात इत्यर्थः । ननु सङ्कल्पादेवेत्यवधारणेनैव पूर्वपक्षप्रतिषेधस्य ज्ञातत्वात् चशब्दस्य तत्प्रतिषेधपरत्वं किमर्थमुच्यत इति चेन्न । एवशब्दोक्तविपक्षनिवृत्तिविवरणरूप इत्यर्थ इति केचित् । वस्तुतस्तु विपक्षशब्देन पूर्वपक्षफलं गृह्यते । यथा च एवशब्देन तेषां भोगादिषु प्रयत्नापेक्षेति पूर्वपक्षं प्रतिषिध्य चशब्देन पूर्वपक्षफलभूतं यत् संसारसमानधर्मत्वेन मुक्तेरपुरुषार्थत्वं तद्व्यावर्त्यत इति चैवशब्दयोरन्यतरवैय्यर्थ्यं नेति द्रष्टव्यम् । एवं च व्याख्यात इत्यस्य व्याख्यातव्य इत्यर्थः । ननु ओकस्त्वसाम्येऽपि तत्तदुपायसाध्यसाधनसाध्यभोगानङ्गीकारे लोकविरोधः स्यात् । भूम्यादिलोके तत्तदुपायसाध्यसाधनसाध्यभोगस्यैव दर्शनादित्युक्तमाशङ्क्य परिहरति ॥ **न चैवं सतीति** ॥ **तथात्वस्यैवेति** ॥ लोकविरुद्धत्वस्यैवेत्यर्थः ।

## वाक्यार्थमञ्जरी

**तत्तदुपायेति** ॥ तत्र साधनसंपादनोपायसाध्यानि साधनान्यन्नपानादीनि तत्साध्य इत्यर्थः । **ओकसि** गृहे ॥ ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ॥ मुक्तस्येदं मे भूयादिति सङ्कल्पादेव भोगो भवति न तु प्रयत्नेन । कुतः तच्छ्रुतेः सङ्कल्पादेवेति श्रुतौ तस्यार्थस्य श्रवणादित्यर्थः ॥ **विपक्षेति** ॥ पूर्वपक्षेत्यर्थः । व्याख्यातो न तेषामित्यादिना ॥

॥ इति सङ्कल्पाधिकरणम् ॥ ६ ॥

## ७. अनन्याधिपतित्वाधिकरणम्

**॥ ॐ अत एव चानन्याधिपतिः ॐ ॥ ९ ॥**

सत्यसङ्कल्पत्वादेव ।

'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः ।
ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ॥
ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ।
आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् ।
एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय' इति वाराहे ॥ ९ ॥

॥ इति अनन्याधिपतित्वाधिकरणम् ॥ ७ ॥

### तत्त्वप्रदीपिका

यथा लोके परतन्त्राणां न स्वस्वामिसम्बन्धनियतिः । कदाचिदन्यनियतत्वं च दृश्यते । नैवं मुक्तानामित्याह अत एव चानन्याधिपतिः ॥ अयमस्माकमेव नियम्यः स्यादिति तेषां सत्यसङ्कल्पत्वादहमियतामेव नियम्यः स्यामिति तस्यापि सत्यसङ्कल्पत्वात् पर एव ब्रह्मादीनां मनुष्यान्तानामविशेषेणाधिपतिः । अवरेषां ब्रह्माद्युपः पर्यन्ताश्च क्रमेण । एतेभ्यो नियताधिपतिभ्योऽन्याधिपतिमुक्तानां नास्ति । चकारादन्याधिपतित्वे प्रमाणाभावात् । न च बहूनामाधिपत्येऽपि तन्नियम्यस्य व्यग्रतापत्तिः । तदैकमत्यस्य प्रसाधितत्वात् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तिमतां मुक्तानां स्वाधमनियामकराहित्येन भोगसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा मुक्तेः संसारसमानधर्मत्वप्रसङ्गात्समर्थनीयमेतत् । प्रकृतो मुक्त एवात्र विषयः । कॢप्तपतिभ्योऽन्यपतियुक्तो न वेति सन्देहः । उभयथा सम्भवः सन्देहबीजम् । मुक्तस्याधमा अप्यधिपतयः सन्तीति पूर्वः पक्षः । तस्यापि परगृहगतत्वात् । यथा खलु राजगृहगतानामधमा अपि प्रतीहारादयो नियामका दृश्यन्ते । अन्यथा लोकविरोधात् । अतो मुक्तस्याधमनियम्यत्वान्मुक्तेः संसारसमानधर्मत्वमिति । सिद्धान्तयत्सूत्रमुपन्यस्य किंचिद्व्याचष्टे ॥ **अत एवेति** ॥ चशब्दो विपक्ष-

(तत्त्वप्रकाशिका)

**व्यावृत्त्यर्थः । न मुक्तः क्लृप्तपतिभ्योऽन्याधिपतियुक्तः । सत्यसङ्कल्पत्वात् । लोके स्वावरनियम्यत्वं ह्यनपेक्षितमेव भवति । तच्च मुक्तस्य सत्यसङ्कल्पत्वादेव न युज्यत इति भावः । अत्र स्मृतिं चाह ।। परम इति ।। आचार्याश्च पतय इत्यन्वयः । अतो मुक्तस्याधमाधिपतिशून्यत्वाद्युक्तं मुक्तेः संसारवैलक्षण्यमिति सिद्धम् ।।**

## गुर्वर्थदीपिका

प्रतिहारादय इत्यत्र प्रति जनान् हरन्त्यन्तःपुरमिति प्रतिहाराः द्वारपालका इत्यर्थः ।

## भावबोधः

स्वाधमनियामकराहित्येन भोगसाधनादिति ।। अनेनास्याधिकरणस्य भोगे इत्थंभावसाधनपरत्वेनास्मिन् पादेऽन्तर्भावलक्षणसङ्गतिरुक्ता भवति । अनन्तरसङ्गतिः 'अत एव' इति पूर्वोक्तसत्यसङ्कल्पत्वस्यात्र स्वाधमपतिराहित्येऽप्यतिदेशात् स्पष्टैवेति भावः ।। **क्लृप्तेति ।।** अत्र मुक्तः क्लृप्तपतिभ्योऽन्यपतियुक्तो भवत्युत न भवतीति चिन्ता । तदर्थं तत्साधकत्वेनाभिमतपरगृहगतत्वस्य सत्यसङ्कल्पत्वेन बाधो नास्त्युतास्तीति । तदर्थं सत्यसङ्कल्पत्वस्य स्वाधमनियम्यत्वाभावसाधकत्वाङ्गीकारे लोकविरोधापत्तिरूपतर्कविरोधोऽस्त्युत नास्तीति । तदर्थं लौकिकराजादीनां ईश्वरादीनां च विशेषरूपमापादकमस्त्युत नास्तीति । परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते इति न्यायविवरणं मनसि निधायाह– **मुक्तस्याधमा अपीत्यादि ।। किञ्चिद्व्याचष्टे इति ।।** 'अत एव' इत्यस्यैव सत्यसङ्कल्पत्वादेवेति व्याख्यानादिति भावः । 'अनन्यभृत्यत्वमिहोदितेभ्यस्तु अन्यस्य भृत्यत्वनिवारणाय' इत्यनुव्याख्यानं, 'एतेभ्योऽन्यपतिर्नैव मुक्तानाम्' इत्युदाहरिष्यमाणस्मृतिं च मनसि निधाय सौत्रप्रतिज्ञाभागं व्याचष्टे– न मुक्तः क्लृप्तपतिभ्य इति । क्लृप्तपतिभ्य इति अन्यपदप्रयोगसामर्थ्यलब्धम् । सर्वथा पतिनिवारणाभिप्राये सूत्रे ''पतिः'' इत्येवावक्ष्यदिति भावः । अस्मिन्नधिकरणे 'न च लोकविरोधः' 'निर्दोषभगवदोकसि तथात्वस्यैव युक्तत्वात्' इति पूर्वाधिकरणोक्तप्रकारेण निर्दोषत्वादेव मुक्तेश्वरस्य तत्रस्थानां च मुक्तान्तराणां राजदोषवद्दोषासम्भवाद्यथायोग्यमेव स्वीकारोपपत्तेरित्येतदधिकरणसिद्धान्तन्यायविवरणम् । न च लोकविरोधः । मुक्तस्वामिनो हरेस्तदोकोगतानां ब्रह्मादिमुक्तान्तराणां च

(भावबोधः)
निर्दोषत्वाद्धेतोः लौकिकराजादिवद्दोषासम्भवादुत्तममुक्तनियमनार्थं तदवरान् प्रत्यनियोजकत्वस्यैव युक्तत्वेन यथायोग्यमेवाधमोत्तमभावानतिक्रमेणैव नियम्यनियामकाभावस्य स्वीकारोपपत्तेरिति योजयितुं शक्यत्वेन टीकायां न व्याख्यातमिति ज्ञातव्यम् ॥

## भावदीपः

सौत्रैकवचनं जात्यभिप्रायमित्युपेत्य परमोऽधिपतिस्तेषामिति स्मृत्यनुरोधेनाह ॥ **मुक्तानां स्वाधमेत्यादि** ॥ प्रागभिमतहेतुनैवेति योज्यम् । एतेन भोगस्योपकरणसाधने निरूप्य तद्धोक्तुः स्वाधमानधीनत्वधर्मः पूर्वोक्तहेत्वतिदेशेनात्र साध्यत इति पूर्वसङ्गतिरपि सूचिता ॥ **उभयथेति** ॥ लोकदृष्ट्यलौकिकत्वाभ्यां उभयथा सम्भव इत्यर्थः । परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते इत्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **मुक्तस्येति** ॥ अस्येत्याद्युक्त्यनुरोधादेकवचनाद्युक्तिः ॥ **परगृहेति** ॥ परमात्मरूपान्यगृहेत्यर्थः । दृष्टान्तांशं व्यनक्ति ॥ **यथेति** ॥ **प्रतिहारादयो** द्वारपालादयः । हेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ **अत इति** ॥ परगृहगतत्वादित्यर्थः ॥ **किञ्चिदिति** ॥ हेत्वंशमात्रमित्यर्थः । समग्रसूत्रं स्वयं व्याचष्टे ॥ **चशब्द इति** ॥ परगृहगतत्वेन नावरनियतत्वं मुक्तस्य ज्ञेयमित्यर्थकश्चशब्द इत्यर्थः । अनन्याधिपतिरित्यस्यार्थो नेत्यादि ॥ **सत्येति** ॥ अहमियतामेव नियम्यः स्यामिति सत्यसङ्कल्पत्वादित्यर्थः । यथा खल्वित्यादिनोक्तलोकदृष्टिविरोधमेवकारसूचितेन हेतुबलवत्वेन निराह ॥ **लोक इति** ॥ **सत्येति** ॥ अप्रतिहतेत्यर्थः । सत्यसङ्कल्पत्वं चाविभागो वचनादित्यत्र स यदि पितृलोकेत्यादिपूर्वोक्तश्रुत्या च सिद्धमिति भावः । अप्रतीतेराह ॥ **इत्यन्वय इति** ॥ **अत इति** ॥ सत्यसङ्कल्पत्वादेवेत्यर्थः ॥

## अभिनवचन्द्रिका

सौत्रचशब्दार्थमाह – **चशब्द इति** ॥ चशब्दः पूर्वपक्षव्यावृत्त्यर्थं इत्यर्थः । तस्यैव विवरणम् – 'अनन्याधिपतिः' इति सौत्रपदमितिभावः । एतेन अत एव चेत्यनेनैव पूर्णत्वात् अनन्याधिपतिरिति व्यर्थमिति परास्तम् ॥

**पूर्वपक्षस्तु** मुक्ताः स्वावरनियम्याः सर्वाधिपतिसदननिविष्टत्वात् राजसदननिविष्टामात्यादिवत् ।

(अभिनवचन्द्रिका)
दृश्यन्ते हि अमात्या अपि राजसदननिविष्टा नीचैरपि प्रतिहारैर्नियम्यमानाः । अन्यथा लोकविरोधः स्यात् । अतो मुक्तस्याऽधमनियम्यत्वात् मुक्तेः संसारसमानधर्मत्वमिति ।

**सिद्धान्तस्तु** सर्वेषां परमात्माऽधिपतिः । प्राणादिनामपर्यन्ता देवाः क्रमेणाऽधिपतयः । यैर्ज्ञानं सुप्रतिष्ठितं त आचार्याः अपि अधिपतयः । नाऽतोऽन्यो नीचोऽधिपतिर्विद्यते । सत्यसङ्कल्पत्वात् । लोके अवरनियम्यत्वं हि अनपेक्षितमेव भवति । तच्च मुक्तस्य सत्यसङ्कल्पत्वादेव न युज्यते । उक्तं च 'परमोऽधिपतिस्तेषां विष्णुरेव न संशय' इत्यादिना । अतो मुक्तस्याऽधमाधिपतिशून्यत्वात् युक्तं मुक्तेः संसारवैलक्षण्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**भोगसाधनादिति** ।। अत एव सत्यसङ्कल्पत्वादेवेति पूर्वोक्तहेत्वतिदेशेनेत्यर्थः । तथा चानन्तरसङ्गतिरिति भावः ।। **अन्यथेति** ।। स्वाधमनियामकसद्भावे संसारसमानधर्मत्व-प्रसङ्गात्तद्भोगायोग इति भावः । एतेनास्याधिकरणस्य भोगे आक्षेपनिवर्तकत्वात्पादान्तर्भावो युक्त इत्युक्तं भवति ।। **क्लृप्तेति** ।। अत्र मुक्तः क्लृप्तपतिभ्योऽन्यपतियुक्तो भवत्युत न भवतीति चिन्ता । तदर्थं तस्य परगृहगतत्वस्याप्यन्यपतिराहित्ये लोकविरोधः स्यादिति तर्कबाधो न भवत्युत भवतीति । पूर्वपक्षन्यायं विशदयति ।। **तस्यापीति** ।। हेतोरप्रयोजकत्वं विपक्षे बाधकोक्तयाऽपा-करोति ।। **अन्यथेति** ।। **चशब्द इति** ।। राजगृहं प्रविष्टस्य प्रतिहारपालादिनियतत्ववदत्रापि तदोक इत्युक्तपूर्वपक्षन्यायं व्यनक्ति ।। **तस्यापीति** ।। मुक्तः स्वावरनियतः परगृहं गतत्वाद्राजगृह-प्रविष्टपुरुषवदिति । अस्मत्पक्षप्रतिपक्षप्रमाणस्याभासत्वेन तन्निरासार्थ इत्यर्थः । कुतस्तस्याभासत्त्व-मित्यतः प्रबलानुमानबाधितत्वादिति भावेन प्रवृत्तं अत एवानन्याधिपतिरित्यंशं व्याचष्टे ।। **न मुक्त इति** ।। सत्यसङ्कल्पत्वादिति तत्वप्रदीपोक्तरीत्याऽऽह ।। **महद्भिरेव नियम्यः स्यादिति** ।। सत्यसङ्कल्पत्वादित्यर्थः । हेतोरप्रयोजकत्वं परिहरति ।। **लोक इति** ।। **अत्र स्मृतिं चेति** ।। अनुमानत्वाविशेषादस्य कथं प्राबल्यमित्यतः प्रतिज्ञातार्थे चशब्दसमुच्चितस्मृतिं चाहेत्यर्थः । तदुक्तं तत्वप्रदीपे । चशब्दोऽनन्याधिपतित्वे परमोऽधिपतिरित्यादिप्रमाणप्रसिद्धिद्योतक इति । प्रमाणे च 'एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय' इत्युक्त्या मुक्तानां मात्सर्यादिदोषमुक्तानामिति

(वाक्यार्थमुक्तावली)

लाभात्। अस्तदोष इति सिद्धान्तन्यायोऽपि मुक्तानां मात्सर्यादिदोषशून्यत्वाद्योग्यतानुसारेणैव नियम्यनियामकभावसम्भवान्न राजगृहं गतानां प्रतिहारपालाद्यवरनियम्यत्वादवरनियम्यत्वमिति विवृतो भवति। तदिदमुक्तं टीकायां स्वावरनियम्यत्वं मुक्तस्य निवर्तत इति।

## तत्त्वसुबोधिनी

**स्वाधमनियामकराहित्येनेति** । अनेन अस्य अधिकरणस्य भोगेच्छाभावसाधनपरत्वेन अस्मिन् पादे अन्तर्भावलक्षणा सङ्गतिरुक्ता भवति। अनन्तरसङ्गतिस्तु अत एवेति। पूर्वोक्त-सत्यसङ्कल्पत्वस्यात्र स्वाधमपतिराहित्येऽतिदेशात् स्पष्टैवेति भावः ॥ **किञ्चिद्व्याचष्टे इति** ॥ अत एवेत्यस्य सत्यसङ्कल्पत्वादेवेति व्याख्यानादिति भावः। प्रतिज्ञाभागं व्याचष्टे। न मुक्तः क्लृप्तपतिभ्य इति क्लृप्तपतिभ्यः इति अन्यपदप्रयोगसामर्थ्यात् लब्धम्। सर्वथा पतिनिवारणाभिप्राये सूत्रे पतिरित्येव अवक्ष्यदिति भावः। न च लोकविरोधः। मुक्तस्वामिनो हरेः तदोकोगतानां ब्रह्मादि-मुक्तान्तराणां च निर्दोषत्वात् लौकिकराजादिवद्दोषासम्भवादिति भावः।

## वाक्यार्थविवरणम्

**प्रतिहारादय इति** ॥ द्वारपालकादय इत्यर्थः ॥ **चशब्द इति** ॥ अनन्याधिपतिरित्युक्त-विपक्षव्यावृत्तिविवरणरूप इति केचित्। वस्तुतस्तु अनन्याधिपतिपदेनैव पूर्वपक्षव्यावृत्तेर्जातत्वात्। चशब्दः पूर्वपक्षफलभूतं यत् मुक्तेः संसारसमानधर्मत्वं तद्व्यावृत्यर्थ इत्यर्थः ॥ **न मुक्त इति** ॥ अत्र च व्यतिरेके देवदत्तादिर्दृष्टान्तो द्रष्टव्यः ॥

## वाक्यार्थमञ्जरी

**प्रतिहारेति** ॥ द्वारपालका इत्यर्थः ॥ ॐ अत एव चानन्याधिपतिः ॐ ॥ मुक्तोऽनन्याधिपतिः स्वोत्तमेभ्योऽन्याधिपतिरहितः। कुतः अत एव सत्यसङ्कल्पादेवेत्यर्थः ॥

॥ इति अनन्याधिपतित्वाधिकरणम् ॥ ७ ॥

## ८. उभयविधभोगाधिकरणम्

**॥ ॐ अभावं बादरिराह ह्येवम् ॐ ॥ १० ॥**

चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बादरिः ।

अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यत' इत्येवं कौण्ठरव्यश्रुतावाह हि ॥

### तत्त्वप्रदीपिका

मुक्तानां प्राकृतदेहोऽस्ति वा न वेत्याकाङ्क्षायामुच्यते– अभावं बादरिराह ह्येवम् ॥ स्वतः प्राकृतदेहस्याभावं बादरिः । अवरेषामिच्छयाऽपि न भवतीति च । तेषामिच्छाया एवाभावात् । भोगस्याल्पीयस्त्वेन तदर्थं शरीरान्तरस्यानपेक्ष्यत्वात् । 'न प्रियाप्रिये स्पृशत' इत्यत्र प्राकृत-प्रियास्पृष्टिरभिप्रेता । 'याभ्यां ह्येष उन्मथ्यत' इति वाक्यशेषात् । तेन ह्यनित्यत्वादिनोन्माथो भवति । अन्यथा बहुप्रमाणविरोधाच्च ॥

### तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तानां मुक्तानां भोगानुपपत्तिनिवारणादस्ति शास्त्रादिसङ्गतिः । भोगानुपपत्तौ मुक्तेरपुरुषार्थत्वप्रसङ्गान्निवारणीयमेतत् । प्रकृतो मुक्तभोग एवात्र विषयः । युज्यते न वेति सन्देहः । वादिविवादः सन्देहबीजम् । न मुक्तानां भोगो युज्यत इति पूर्वः पक्षः । तथा हि । किं मुक्तानां बाह्यदेहो विद्यते न वा । आद्येऽपि तत्राऽभिमानोऽस्ति न वा । नेति पक्षे सुप्तस्येव भोगासम्भवः । अस्ति चेद् दुःखादिप्रसङ्गः । देहिनो दुःखादिनियमदर्शनात् । 'न ह वै सशरीरस्य सतः प्रियाप्रिय-योरपहतिरस्ति' इति श्रुतेश्च । द्वितीये भोगासम्भवः । न हि शरीररहितस्य भोगो दृष्टचरः । न च चिच्छरीरेण भोगोपपत्तिः । तस्य सुप्त्यादौ विद्यमानस्यापि भोगायतनत्वादर्शनात् । न च ब्राह्मेण देहेन तदुपपत्तिः । सायुज्यभाजां कथञ्चिदुपपत्तावपि तदन्येषामनुपपत्तेः । अतः कथमपि मुक्तानां निर्दुःखभोगायोगादपुरुषार्थत्वं मुक्तेरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ अभावमिति ॥** युक्त एव मुक्तानां भोगः । न चोक्तविकल्पावकाशः । चिन्मात्रदेहं विनाऽन्यदेहाभावस्याङ्गीकारात् । तदभावेऽपि भोगसम्भवादिति बादरिराचार्यो मन्यत इति भावः । मुक्तस्य देहाभावः कुत इत्यत आह ॥ **अशरीर इति** ॥

## गुर्वर्थदीपिका

तदभावेऽपि भोगसम्भवादित्यत्र सौप्तनिद्देहवदनावृतत्वेन भोगसम्भवादित्यर्थः । यद्यपि चिन्मात्रदेहेन प्राग्भोगस्साधितस्तथाऽपि सुप्तौ बाह्यदेहाभिमानाभावे चिन्मात्रदेहेनापि भोगादर्शनान्मुक्तावपि केवलं चिन्मात्रदेहेन कथं भोग इत्यभ्यधिकाशङ्कापरिहाराय ज्योतिर्मये बाह्यलीलाविग्रहदर्शनसद्भावदर्शनाय च 'अभावं बादरिराह ह्येवं' 'भावं तु जैमिनिः' इत्यधिकरणारम्भ इति ज्ञेयम् ।

## भावबोधः

**मुक्तानां भोगानुपपत्तिनिवारणादिति ॥** ननु एतदधिकरणं 'ब्राह्मेण' इत्येतदधिकरणानन्तरमेव स्यात् कुतो व्यवधानमिति चेत् । सत्यम् । तत्र सायुज्यभाजां भोगानुपपत्तिनिवारणम् । अत्र तु सर्वमुक्तानामिति विशेषज्ञापनार्थत्वात्, व्यवधानकरणस्य । अन्यथा एकविषयप्रतीतिप्रसङ्गात् । अत एव वक्ष्यते– **सायुज्यभाजां कथञ्चिदिति ॥** उक्तप्रकारेण 'त एव' इत्यस्य 'सङ्कल्पादेव' इत्यनेन सङ्गतत्वादनन्तरमेतदधिकरणमिति भावः । युज्यत इति । अत्र सर्वमुक्तानां निर्दुःखभोगो न युज्यते उत युज्यत इति चिन्ता । तदर्थं तेषां बाह्यदेहाभावो न युज्यत उत युज्यत इति चिन्ता । तदर्थं देहभावाभावपक्षयोः परस्परविरोधः उताविरोध इति । तदर्थं देहाभावभावयोः साधकबाधकाभावौ न स्त उत स्त इति । तदर्थं देहाभावे भोगो न स्यात्, देहे सति दुःखं स्यादिति बाधकतर्कयोर्मूलभूता व्याप्तिरस्ति उत नास्तीति । तदर्थं द्वितीयतर्कोपोद्बलकतयोक्ता ''न ह वै सशरीरस्य'' इति श्रुतिः किं निरवकाशोत कर्मारब्धदेहविषयतया सावकाशेति । तदर्थं मुक्तानां देहसद्भावेऽपि दुःखाभावे प्रमाणं नास्ति उतास्तीति । तदर्थं 'तीर्णो हि' इति श्रुतिः किं स्वर्गस्थविषयोत मुक्तविषयेति । देहभावे तत्कार्यदुःखादि तदभावे भोगासम्भव इति न्यायविवरणोक्तयुक्तिमाह– **तथा हीत्यादिना ॥ नेतिपक्ष इति ॥** अनेन तदभाव इति न्यायविवरणं देहाभिमानाभाव इति व्याख्यातं भवति ॥ अस्ति चेदिति । अनेन देहभाव इत्येतद्देहाभिमानभाव इति व्याख्यातं भवति **॥ द्वितीये भोगासम्भव इति ॥** अनेन देहाभाव इत्येतद्देहाभिमानाभाव इति व्याख्यातं भवति । 'ब्राह्मेण' इत्यनेन गतार्थताशङ्कापरिहारायाभ्यधिकाशङ्कामाह– **न च चिच्छरीरेणेत्यादिना ॥ कथञ्चिदुपपत्ताविति ॥** सायुज्यभाजामपि कदाचिद्बहिर्भोगाङ्गीकारेण तदोपपत्त्यभावात् कथञ्चिदित्युक्तम् ।

## भावदीपः

**भोगानुपपत्तिनिवारणादिति** ॥ प्राक्तद्देहभावाभावाभ्यां भोगायोगशङ्कायां तन्निवारणादित्यर्थः । तेन ब्राह्मेणेत्यनेनापौनरुक्त्यम् । तत्र देहसामान्यभावाभावप्रयुक्तभोगानुपपत्तिशङ्काया एव निरासादत्र पुनः स्वरूपदेहान्यदेहभावाभावप्रयुक्तभोगायोगशङ्कानिरासादिति । एतेन पूर्वक्लृप्तस्वोत्तमादन्योऽधिपतिर्नेति चिन्तायां तर्हि क्लृप्तस्वरूपदेहादन्योऽपि देहो नास्ति उतास्तीति इह चिन्तनात्पूर्वसङ्गतिरपि सिद्धा । सूत्रादौ देहाभावभावपरोक्तिरुभयथा भोगोपपत्त्यर्थमेवेति दर्शयन् विषयाद्याह ॥ **मुक्तभोग एवेति** ॥ देहभावे तत्कार्यदुःखादिस्तदभावे भोगासम्भव इत्यन्यत्रोक्तं व्यनक्ति ॥ **किमित्यादिना** ॥ देहभावे दुःखादिप्रसङ्गः कुत इत्यतो व्याप्तिदृष्टिश्रुतिभ्यामित्याह ॥ **देहिन इति** ॥ अपहतिरपगम इत्यर्थः । अष्टमे छन्दोगश्रुतेश्चेत्यर्थः । आह च तन्मात्रमित्यनेनोक्तं दोषपरिहारमाशङ्क्य निराह ॥ **न चेति** ॥ **तस्य सुप्त्यादाविति** ॥ सुप्तिप्रलययोः स्वरूपदेहभावेऽपि स्रक्चन्दनादि विषयभोगादर्शनादित्यर्थः । ब्राह्मेण जैमिनिरित्यनेन गतार्थत्वमाशङ्क्य निराह ॥ **न चेति** ॥ बहिर्भोगाभावं मत्वोक्तं **कथञ्चिदिति** ॥ **अत इति** ॥ बाह्यदेहभावाभावयोर्दोषभावादित्यर्थः ॥ उक्तशङ्कानिरासकतया भाष्यं व्याचष्टे ॥ **युक्त एवेति** ॥ **तदभावेऽपि** बाह्यदेहाभावेऽपि । स्वरूपदेहेन भोगसम्भवादित्यर्थः । न च सुप्त्यादौ व्यभिचारः । तदापि स्वरूपसुखानुभवभावात् । विषयभोगाभावस्तु विषयाभावादेवोपपन्नः । मुक्तौ तु सङ्कल्पमात्रादेव विषयलाभः श्रुत्यैवोपपादितः । विवरिष्यते चैतत्तन्वभाव इत्यत्रेति भावः ॥ **देहेति** ॥ बाह्यदेहाभाव इत्यर्थः ॥

## अभिनवचन्द्रिका

**यथा खलु द्वादशाहेति** ॥ अत्र क्रतुरित्यहीन उच्यते । अहीनत्वं च अहर्गणसाध्यक्रतुत्वम् । यथा 'द्वादशाहमृद्धिकामा उपेयुः' इत्युपेयचोदने 'य एवं विद्वांसः सत्रमुपयन्ति' इति चोपेयचोदने द्वादशाहस्य सत्रत्वं बहुकर्तृकत्वात् गम्यते । एवं तस्यैव द्वादशाहेन 'प्रजाकामं याजयेत्' इति यजति चोदनेन एककर्तृकत्वात् 'द्विरात्रेण यजति' इत्यादिनेव अहीनत्वं गम्यत इति तदुभयं द्वादशाहस्याऽविरुद्धं तथा मुक्तस्य सशरीरत्वम् अशरीरत्वं च प्रामाणिकत्वादविरुद्धमिति भावः । ननु 'भावे जाग्रद्वत्' इति सूत्रमनारम्भणीयम् । शरीरभावे, भोगासम्भवस्याऽनापादितत्वेन

(अभिनवचन्द्रिका)

तदुपपादनवैयर्थ्यादित्यत आह– **बक्ष्यमाणेति** ।। 'प्रदीपवदावेशस्तथा हि दर्शयतीति वक्ष्यमाणप्रस्तावायेत्यर्थः । ननु तत्प्रकाशयन्त इति व्यर्थमित्यत आह – **तत्प्रकाशयन्त इति** ।। सूत्रे प्रदीपदृष्टान्तग्रहणस्यापि प्राय उच्यत इत्यर्थः । अत्र गुणसूत्रम् – 'स्वाप्यय-सम्पत्योरन्यतरापेक्षमाविष्कृतं हीति । 'तीर्णो हि' इति वाक्यं सुप्तिमोक्षयोरन्यतरापेक्षम् । अन्यतरप्रतिपादकं, हि यस्मात् अत्र पिताऽपिता भवति'इत्याविष्कृतम्' इति सूत्रार्थः । श्रुतेस्तावदर्थद्वयम् एकस्यां योजनायां स्वाप्ययपरत्वं, योजनान्तरे तु संपत्तिपरत्वम् इत्यन्यतराऽ-पेक्षत्वमिति भावः । एतेन सम्पत्तिपरत्वस्यैव वक्तव्यत्वात् अन्यतरापेक्षमिति सन्दिग्धत्वकथनं अयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** न मुक्तनां भोगो युज्यते । देहभावाभावयोर्विरोधात् । तथा हि मुक्तस्य बाह्यदेहो विद्यते न वा । नाद्यः दुःप्रखसङ्गात् । द्वितीये भोगाऽसम्भवः अशरीरिणो भोगायोगात् । न च चिच्छरीरेण भोगोपपत्तिः । सुस्यादौ विद्यमानस्यापि तस्य भोगायतनत्वाऽदर्शनात् । न च ब्राह्मणदेहेन तदुपपत्तिः । परदेहस्य परं प्रति भोगायतनत्वायोगात् । अतः कथमपि मुक्तानां निर्दुःखभोगायोगात् अपुरुषार्थत्वं मुक्तेरिति ।

**सिद्धान्तस्तु** युक्त एव मुक्तानां भोगः । चिन्मात्रदेहसद्भावात् । न च तस्य सुप्तावदर्शनात् भोगायतनत्वासम्भवः । अज्ञानाद्यावृतत्वेन तदा भोगायतनत्वाभावेऽपि अज्ञाननिवृत्त्यनन्तरं तत्सम्भवात् । तर्हि प्रतिबद्धं कारणं कार्यं न जनयतीत्येतावता तदपगमेऽपि कार्यं न जनयतीति सांप्रतम् । न च दुःखप्रसङ्गः । बाह्यदेहाभावात् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति आम्नानादिति बादरिराचार्यो मन्यते । तथा युक्त एव मुक्तानां भोगः बाह्यदेहस्य सद्भावात् । न च तत्र प्रमाणाभावः । 'चिता वा चिता वा नित्येन वाऽथानन्दीभवति' इति विकल्पाम्नानात् इति जैमिनिराचार्यो मन्यते । पक्षद्वयेऽपि प्रमाणसद्भावात् मुक्तानां बाह्यदेहो विद्यते न विद्यत इति भगवान्बादरायणो मन्यते । न च शरीरभावाभावयोरसम्भवः । द्वादशाहपरिसमाप्यस्य यागस्य इच्छया शरीरभावाभावयोरुपपत्तेः । न च शरीराभावदशायां भोगाभावः, शरीराभावेऽपि स्वप्नवदुपपत्तेः । ननु शरीरदशायां जाग्रद्वत् मुक्तनां बाह्यदेहेन भोगोऽभिमतः । एवं च सति दुःखमपि प्राप्नातीति चेन्न यथा प्रदीपो दीपिकां प्रविश्य तस्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यम् ।

(अभिनवचन्द्रिका)
एवं बाह्यशरीरमनुप्रविष्टोऽपि मुक्तः तत्र सुखमेव भुङ्क्ते, न तु दुःखं 'तीर्णो हि तदा सर्वान् । शोकान् हृदयस्य भवति' इति श्रुतेः । नन्वियं श्रुतिः स्वर्गादिस्थविषयेति न मुक्तानां दुःखाभावे प्रमाणमिति चेत्, अस्य वाक्यस्य सुप्तिमुक्तिविषयत्वात् 'अत्र पिताऽपिता भवति अनन्वागतं पुण्येनाऽनन्वागतं पापेन' इत्याद्याविष्कृतत्वात् । अतो मुक्तानां निर्दुःखभोगानुभवो युक्त एवेति उपपन्नं मोक्षस्य पुरुषार्थत्वमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**भोगानुपपत्तीति ॥** सङ्कल्पादेवेति सूत्रे साक्षादुक्तहेतोरतिशक्यत्वात् तदोकस्त्वास्तदोषत्वरूप-पूर्वपक्षसिद्धान्तन्यायैक्याच्चात एवेत्यधिकरणस्य सङ्कल्पाधिकरणत्वादानन्तर्यम् । अत्र तु द्वादशाह-वदिति मुक्तसङ्कल्पानुसारेणैवोभय विधदेहानुपपत्तिनिवारणादत एवेत्यधिकरणानन्तर्यमित्यनन्तर-सङ्गतिरिति भावः ॥ **युज्यत इति ॥** मुक्तानां भोगो न युज्यत उत युज्यत इति चिन्ता । तदर्थं तेषां बाह्यदेहभावाभावो नोपपद्यत उतोपपद्यत इति । तदर्थं देहभावाभावयोः परस्परविरोध उताविरोध इति । अभावं बादरिराह ह्येवम् । तन्वभावे इति सूत्रनिरस्यं समस्तकार्यमित्युक्त-पूर्वपक्षन्यायं सम्यगस्तं निरस्तभोगलक्षणं कार्यं स्यादिति विवृणोति ॥ **नेति पक्ष इति ॥** भावं जैमिनिर्विकल्पाम्नानात् भावे जाग्रद्वदिति सूत्रनिरस्यसमस्तकार्यमित्युक्तन्यायं व्यनक्ति ॥ **नेति पक्ष इति ॥** देहोऽस्त्यभिमानो नास्तीति पक्षे सम्यगस्तं निरस्तं भोगलक्षणं कार्यं स्यादित्यर्थः । प्रदीपवदावेश इति सूत्रनिरस्यं तमेव न्यायं प्रकारान्तरेण व्यनक्ति ॥ **अस्ति चेदिति ॥** देह अभिमानश्चास्ति चेद्दुःखाज्ञानश्रमादिकं अस्तमभिमानकार्ये स्यादित्यर्थः । तर्कस्य व्याप्तिग्राहकं साक्षिप्रत्यक्षमाह ॥ **देहिन इति ॥** आगमम्प्याह ॥ **न ह वा इति ॥** अभावं बादरिः तन्वभाव इति सूत्रनिरस्यं तमेव न्यायं व्यनक्ति ॥ **द्वितीय इति ॥** यदि देह एव नास्ति तर्हि सत्वमस्तं निरस्तं कार्यं भोगलक्षणं प्रसज्येतेत्यर्थः । चितिमात्रेणेत्यनेन गतार्थतामाशङ्क्य निषेधति ॥ **न च चिच्छरीरेणेति ॥** ब्राह्मेणेत्यनेनापि गतार्थतां प्रतिषेधति ॥ **न च ब्राह्मेणेति ॥ कथञ्चि-दुपपत्तावपीति ॥** सायुज्यभाजामपि कदाचिद्बहिर्भोगाङ्गीकारेण तदा भोगोपपत्यभावात् कथञ्चि-दित्युक्तम् । सूत्रे तन्वभाव इत्यतस्तनोरित्याकृष्यते । चितिमात्रेणेत्यनुकृष्यते । विनेति शेषः । तथा च चितिमात्रदेहं विना तनोरभावं एवं एवमपि देहाभावेऽपि एवमेवं भावं मुक्तानां भोगसम्भवं च

(वाक्यार्थमुक्तावली)

बादरिराह । मुक्तस्य देहाभावः कुतः प्रमाणादित्यत उक्तमाहेति । हि यस्मादेवं मुक्तस्य शरीराभाव इत्येवं कौण्ठरव्यश्रुतिराह तस्मादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **मुक्त एवेत्यादिना** ॥ वावेत्यवधारणे । प्रियाप्रिये सुखदुःखे । उन्मथ्यते नीचोच्चतालक्षणविक्रियां लभते ॥

## तत्त्वसुबोधिनी

**मुक्तानां भोगानुपपत्तिनिवारणादिति** ॥ न चास्याधिकरणस्य ब्राह्मणेत्येतदधिकरणानन्तर्यमेव भवेत् कुतो व्यवधानमिति वाच्यम् । तत्र सायुज्यभाजां भोगानुपपत्तिनिवारणम् । अत्र तु सर्वमुक्तानामिति विशेषज्ञापनार्थत्वात् व्यवधानकरणम् । अन्यथा एकविषयत्वप्रतीतिप्रसङ्गात् । देहिनो दुःखादिनियमादित्यत्र श्रुतिमाह ॥ **न ह वा इति** ॥ चितिमात्रेण तदात्मकत्वादित्यनेन गतार्थत्वमाशङ्कते **न चेति** ॥ ब्राह्मेणेत्यनेनास्य गतार्थताशङ्कापरिहाराय अभ्यधिकाशङ्कामाह ॥ **न च ब्राह्मेण देहेनेति** ॥ **कथञ्चिदुपपत्ताविति** ॥ सायुज्यभाजामपि कथञ्चिद्बहिः भोगाङ्गीकारेण तदुपपत्यभावात् कथञ्चिदित्युक्तम् ।

## वाक्यार्थविवरणम्

**भोगानुपपत्तिरिति** ॥ भोगाङ्गीकारे या प्राप्ता अनुपपत्तिरित्यर्थः ॥ **अपहतिरिति** ॥ प्रियाप्रियाभाव इत्यर्थः ॥ **भोगायतनत्वेति** ॥ स्त्रीसम्भोगाद्यायतनत्वेत्यर्थः । सायुज्यभाजामपि कदाचिद्बहिर्निर्गत्य भोगाङ्गीकारात् । तदोपपत्त्यभावात् कथञ्चिदित्युक्तमिति मन्तव्यम् ।

## वाक्यार्थमञ्जरी

**देहिनः** देहाभिमानवतः ॥ **न ह वै सशरीरेति** ॥ शरीराभिमानवन्तं प्रियाप्रिययोः सुखदुःखयोः अपहतिरसम्बन्धो नास्तीत्यर्थः । सायुज्यभाजामपि कदाचिद्बहिर्भोगाङ्गीकारेण तदानीं ब्रह्मदेहेनोत्पत्त्यभावात् कथञ्चिदित्युक्तम् ॥ ॐ अभावं बादरिराह ह्येवं ॐ ॥ अभावं मुक्तस्य चिन्मात्रदेहादन्यदेहाभावं बादरिर्मन्यते कुतः हि यस्मादशरीरो वावेति श्रुतिरेवमाहेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ११ ॥**

(सूत्रभाष्यम्)

**'स वा एष एवंवित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽनन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' इत्यौद्दालकश्रुतौ विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥**

## तत्त्वप्रदीपिका

कदाचिन्मुक्तस्यापि कस्यचिद्भोगार्थं प्राकृतदेहस्यापि भावं जैमिनिः ॥

## तत्त्वप्रकाशिका

देहसद्भावमभ्युपगच्छत्सूत्रमुपन्यस्य व्याचष्टे ॥ **भावमिति** ॥ चिन्मात्रदेहातिरिक्तदेहोऽपि मुक्तानां विद्यते श्रुत्युक्तत्वादेवेति जैमिनिराचार्यो मन्यत इति भावः ॥

## गुर्वर्थदीपिका

नित्येन वाऽनित्येन वेत्यत्रानित्येन स्वस्य सदाऽविद्यमानेनेत्यर्थः । मौक्तसकलपदार्थानामनादिनित्यत्वेन सर्वथाऽनित्यत्वायोगादिति भावः ।

## भावदीपः

व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **चिन्मात्रेति** ॥

## वाक्यार्थमुक्तावली

चितिमात्रं देहं विना तनोर्बाह्यायाभावं जैमिनिराह विकल्पाम्नानात् चिन्मात्रदेहेनैवावतिष्ठत इत्यनुक्त्वा श्रुतौ चिता वाऽचिता वेति विकल्पाभिधानादित्यर्थमभिप्रेत्य व्याचष्टे ॥ **चिन्मात्रेति** ॥ स वा एष एवं विदपरोक्षज्ञानी मुक्तौ चिता वाऽचिता वा ज्योतिषैव प्रकाशमानेन स्वरूपेणैवाभिपश्यति **अभिशृणोति** ॥ दर्शनश्रवणोपलक्षितसर्वविषयानुभववान् भवति । तेन चानंद्येवेति शरीरस्य सद्भावात् किञ्चिदल्पमप्यनानन्दमानन्दविरुद्धं दुःखं तन्नोपस्पृशति चिद्देहस्याप्राकृतदिव्यज्योतिर्मयत्वान्नित्यत्वाच्च । अचिद्देहस्याप्राकृतत्वेनानित्यत्वेऽपि शुद्धसत्वात्मकत्वेन ज्योतीरूपत्वादित्यर्थः । अत्र नित्येन वेत्येतन्नित्येनेव चिता वेत्यस्य विशेषणम् । एवमनित्येन वेत्यत्रापि वाशब्दस्यावधारणार्थकतया अनित्येनैव चिता वेत्येतद्विशेषणत्वं बोध्यं विकल्पद्वयाभावात् ।

## वाक्यार्थमञ्जरी

कदाचिद्भोगार्थं मुक्तस्य चिन्मात्रदेहादन्यप्राकृतदेहस्य भावं सत्वं जैमिनिर्मन्यते । कुतः । चिता वा अचिता वेति श्रुतौ विकल्पाम्नानात् विकल्पेनोभयशरीरेण भोगाभिधानादित्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ १२ ॥**

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति । एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मात्रकृतश्च भवति' इति बादरायणो मन्यते ॥

## तत्त्वप्रदीपिका

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति । क्रतुरित्यहीनो विवक्ष्यते । अहीनैकाहेष्वस्य श्रेष्ठत्वादत्र क्रतुशब्दः प्रयुक्तः । तथा च श्रुतिः– 'श्रेष्ठयज्ञो वा एष यद्द्वादशाह' इति । उभयात्मकत्वं कर्तुरिच्छया, उभयथा च विधानात् । तथा च श्रुतिर्द्वादशाहमहीनात्मकं प्रस्तुत्य 'सत्रमुच्यते सर्वेऽप्यग्नीन्यजेरन्' इति । एवं मुक्तभोगोऽप्युभयविधो भवति भोक्तुरिच्छया । यदा चिन्मात्रदेहकृतस्तदा न बाह्यशरीरमपेक्ष्यम् । यदा बाह्यशरीरकृतस्तदा चिन्मात्राधिष्ठितेन तेन भोग इति विशेषः । अत इति मतद्वयोक्तप्रमाणपरामर्शार्थः ॥

## तत्त्वप्रकाशिका

नन्वेवं मतद्वयस्य परस्परविरुद्धत्वात्किं तत्स्वमतमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **द्वादशेति** ॥ मुक्तानां देहभावाभावाख्यमुभयमपि स्वमतमेव । कुतः प्रमाणवत्वात् । कथमुभयं विरुद्धं स्वमतमिति । मैवम् । यथा खलु द्वादशाहयागस्य क्रतुत्वं सत्रत्वं चाविरुद्धम् । यजमानेच्छयैकयजमानत्वे क्रतुत्वस्यानेकयजमानत्वे सत्रत्वस्य सम्भवात् । एवं मुक्तेच्छया भोगार्थं देहभावाभावयोरविरोधेनोपपत्तेरिति भगवान् बादरायणो मन्यत इति भावः ॥

## भावबोधः

प्रमाणवत्वादिति । सूत्रगत 'अतः'शब्दव्याख्यानमेतदिति ज्ञातव्यम् ।

## भावदीपः

भाष्यं सूत्रारूढं दर्शयितुं सूत्रार्थमाह ॥ **मुक्तानामिति** ॥ अत इत्यस्य भाष्येऽर्थानुक्तेः स्वयमाह ॥ **प्रमाणवत्वादिति** ॥ मतद्वयोक्तप्रमाणपरामर्श इति भावः ॥ **क्रतुत्वमिति** ॥ क्रतुरित्यहीनो विवक्ष्यते । अहीनैकाहेषु अस्य श्रेष्ठत्वात्क्रतुशब्दः प्रयुक्तः । तथा च श्रुतिः । श्रेष्ठयज्ञो वा एष यद्द्वादशाह इति तत्वप्रदीपोक्त्या अहर्गणत्वमित्यर्थः । सत्रस्यापि क्रतुत्वात्कथमेतदित्यतो व्यनक्ति ॥ **यजमानेति** ॥ क्रतुत्वस्य अहीनत्वस्येत्यर्थः ॥ **सत्रत्वस्येति** ॥ द्वादशाहमहीनात्मकं प्रस्तुत्य सत्रमुच्यते सर्वेऽप्यग्नीन्यजेरन्निति श्रवणादिति भावः ॥ **उपपत्तिरेवेति** ॥ चोऽवधारण इति भावः ।

## वाक्यार्थमुक्तावली

अत्रात इति मतद्वयोक्तप्रमाणपरामर्शः । उभयविधं मुक्तानां देहभावाभावाख्यं प्रागुक्तमुभयविधं प्रमेयं बादरायण आह । कुतः अतः उभयोरपि प्रमाणवत्वात् । कथमुभयं विरुद्धं स्वमतमिति । द्वादशाहवत् । षष्ट्यर्थे वतिः । यथा द्वादशाहाख्ययागस्य क्रतुत्वं सत्रत्वं च यजमानेच्छया एकानेकयजमानाभ्यामविरुद्धं तथा मुक्तानामिच्छया देहभावाभावावविरुद्धाविति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **मुक्तानामिति** ॥ **क्रतुत्वमिति** ॥ अत्र केनचित्प्रलपितम् । यागशब्दस्य क्रतुशब्दपर्यायत्वेन सत्रयागेऽपि क्रतुत्वस्य लाभात् क्रतुत्वं सत्रत्वं चेति कथमिच्छाभावाभावाभ्यां व्यवस्थाप्यत इति । तदयुक्तम् । द्विविधो द्वादशाहः सत्रमहीनश्चेति । एकादशाहपर्यन्तमहर्गणा अहीना एव । त्रयोदशाहादिकं सत्रमेव । मध्यमं तु यजमानेच्छया । एकयाजमानकत्वेऽहीनसंज्ञकमनेकयाजमानकत्वे सत्रसंज्ञकमिति द्वादशाहस्योभयात्मकत्वप्रसिद्धेः । सति चैवं द्वादशाहस्याहीनत्वं सत्रत्वं चेति वक्तव्ये क्रतुषु मध्ये द्वादशाहस्य श्रैष्ठ्यज्ञापनायाहीनेऽपि द्वादशाहे क्रतुविशेषे कुरुपाण्डवन्यायेन क्रतुपदप्रयोगः । तदुक्तं तत्वप्रदीपे । अत्र क्रतुरित्यहीनो विवक्ष्यते । अहीनैकाहेष्वस्य श्रैष्ठ्यादत्र क्रतुशब्दः । तथा च श्रुतिः । श्रेष्ठयज्ञो ह वा एष द्वादशाह इतीति ॥ **एकयजमानत्वेनेति** ॥ द्वादशाहेन प्रजाकामं याजयेत् यजति वदित्यादिनैककर्तृकत्वस्य द्वादशाहमुद्धिकामा उपेयुः, अत्र समूह्याग्नीन् यजेरन्नित्यादिनानेककर्तृकत्वस्य च प्रतीतेः । द्विरात्रेण यजतीत्यादाविवैकवचनेनैककर्तृकत्वेनाहीनत्वस्य सिद्धत्वात् । विद्वांसः सत्रमुपयन्तीत्यादिवदुपेयचोदने बहुवचनबलेन द्वादशाहस्यानेककर्तृकत्वावगमाच्चेति भावः ।

## तत्त्वसुबोधिनी

**प्रमाणवत्त्वादिति** ॥ सूत्रगतातःशब्दव्याख्यानमेतदिति ज्ञातव्यम् ।

## वाक्यार्थमञ्जरी

उभयविधं मुक्तानां देहभावाभावाख्यप्रागुक्तमुभयप्रकारं बादरायणः स्वमतं मन्यते । कुतः । अतः उभयोरपि प्रमाणवत्त्वात् । विरुद्धं कथं स्वमतमित्यत उक्तम् ॥ **द्वादशेति** ॥ यथा द्वादशाहाख्ययागस्य क्रतुत्वं सत्रत्वं चाविरुद्धं तथेत्यर्थः ॥ **अनुपपत्तेरिति** ॥ सदेहत्वे दुःखादेरदेहत्वे भोगासम्भवस्य चोक्तत्वादित्यर्थः ।

## सूत्रभाष्यम्

**उपपत्तिश्च**

**॥ ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ॥ १३ ॥**

**सन्ध्यं स्वप्नः । 'सन्ध्यं तृतीयं स्वप्नस्थानम्' इति श्रुतेः ॥**

## तत्त्वप्रदीपिका

उपपत्तिश्चेति सम्बन्धभाष्यम् । उपपत्तिश्चोभयत्राप्युत्तरसूत्राभ्यामुच्यते । तन्वभावे सन्ध्यवदुपपत्तेः ॥ बाह्यशरीराभावे भोगस्यासम्भवो नाऽशङ्कनीयः । स्वप्न इव भोगोपपत्तेः ॥

## तत्त्वप्रकाशिका

भवतु देहभावाभावयोरविरोधस्तथापि कथं तथात्वे भोगोपपत्तिः । अनुपपत्तेरुक्तत्वादित्यत आह ॥ **उपपत्तिश्चेति** ॥ पक्षद्वयेऽपि भोगस्योपपत्तिरेवेत्यर्थः कथमुपपत्तिरित्याशङ्कां परिहर्तुं देहाभावे भोगोपपत्तिं प्रतिपादयत्सूत्रं पठित्वा दुर्गमांशं सप्रमाणकं व्याचष्टे ॥ **तन्विति** ॥ न तावद्देहाभावे भोगानुपपत्तिः । यथा खलु स्वप्नावस्थायां बाह्यदेहाभिमानाभावेऽपि भोगस्तथा मुक्तौ देहाभावेऽपि भोगोपपत्तेः । अनभिमानस्याभावसाम्यात् । स्वाप्नार्थानामकल्पितत्वस्योक्तत्वादिति भावः ।

## भावबोधः

स्वप्नावस्थायां देहसत्त्वेन सन्ध्यवदिति कथं दृष्टान्तोक्तिरित्यत आह– **अनभिमानस्याभाव-साम्यादिति** ॥ तदभिमानाविषयस्य तत्कार्याकारित्वेन तं प्रत्यविद्यमानकल्पत्वादित्यर्थः । स्वाप्नपदार्थानां मिथ्यात्वेन तद्विषयकभोग एवासंप्रतिपन्न इत्यत आह– **स्वाप्नार्थानामिति** ॥

## भावदीपः

प्रागुक्तदोषनिवर्तकतया सूत्रं स्वयं व्याचष्टे ॥ **न तावदिति** ॥ स्वप्नदशायां तनोर्भावात्कथं संध्यवदित्युक्तिरित्यत आह ॥ **अनभिमानस्येति** ॥ कल्पितार्थानामसतां कथं भोग इत्यत आह ॥ **स्वाप्नेति** ॥ भक्तिपादे संध्ये सृष्टिरित्यत्रोक्तत्वादित्यर्थः ॥

## वाक्यार्थमुक्तावली

सप्तम्यर्थे वतिः । तन्वभाव इत्यस्य मुक्तौ शरीराभावेऽपीत्यर्थद्वयम् । भोगस्येति शेषः । उपपत्तेरिति पञ्चम्याः भोगानुपपत्तिर्नास्तीत्यध्याहृतेन सम्बन्ध इत्यभिप्रेत्य सूत्रार्थमाह ॥ **न तावदित्यादिना** ॥ स्वप्नावस्थायां देहसद्भावात्संध्यवदिति कथमुक्तमित्यत आह ॥ **अनभि-मानस्येति** ॥ यथा देहाभावे तत्प्रयुक्तभोगाभावस्तथा तदभिमानाभावेऽपि तत्प्रयुक्तभोगाभावा-दनभिमानस्य देहाभावेन साम्यादित्यर्थः । ननु सत्यभोगो देहाविनाभूतः स्वाप्नार्थानामसत्वेन तद्भोगो देहेन विनाप्युपपद्यत इत्यत आह ॥ **स्वाप्नेति** ॥

## तत्त्वसुबोधिनी

**तथात्वेति** । देहभावाभावित्व इत्यर्थः । स्वप्नावस्थायां देहसत्वेन सन्ध्यवदिति कथं दृष्टान्तोक्तिरित्यत आह ॥ **अनभिमानस्यापीति** ॥ तदभिमानाविषये अस्य तत्कार्याकारित्वेन तं प्रति अविद्यमानकल्पत्वादित्यर्थः । ननु स्वप्नदृष्टपदार्थानां मिथ्यात्वेन तद्विषयकभोगः कथं संप्रतिपन्न इत्यत आह ॥ **स्वाप्नार्थानां इति** ॥ सन्ध्ये सृष्टिराह हि इत्यत्र उक्तत्वादित्यर्थः ।

## वाक्यार्थविवरणम्

**अविरोध इति** ॥ मुक्तेच्छयेत्यर्थः ॥ **तथात्वे** ॥ देहसद्भावासद्भावाङ्गीकारे इत्यर्थः ॥ **अनुपपत्तेरिति** ॥ देहाभावे भोगासम्भवः तस्य भोगायतनत्वात् । देहसद्भावे दुःखादिप्रसङ्ग इत्यनुपपत्तेरुक्तत्वादित्यर्थः । ननु स्वप्नावस्थायां देहस्य सत्त्वेन तत्राभिमानमात्राभाव इत्येव । मुक्तौ तु देहस्याभाव इति वैषम्यात् सन्ध्यवदिति कथं स्वप्नदृष्टान्तोक्तिरित्यत आह ॥ **अनभिमानस्येति** ॥ तदभिमानाविषयस्य तत्कार्याकारित्वेन तान् प्रत्यविद्यमानकल्पत्वात् स्वप्ने विद्यमानोऽपि देहोऽकिञ्चित्कर इति अविद्यमानकल्प एवेत्यर्थः । तथा च दृष्टान्तदार्ष्टान्तिकयोर्न वैषम्यमिति भावः । ननु स्वप्नदृष्टपदार्थानां मिथ्यात्वेन तद्विषयभोग एवासम्प्रतिपन्न इति चेत्तत्राह ॥ **स्वाप्नार्थानामिति** ॥

## वाक्यार्थमञ्जरी

सन्ध्यवत्स्वप्नावस्थायामभिमानाभावेन देहाभावेन देहाभावेऽपि यथा भोगस्तथा मुक्तौ तन्वभावे बाह्यदेहाभावेऽपि भोगोपपत्तेरित्यर्थः । स्वप्नावस्थायां देहसत्वेन कथं संध्यवदिति दृष्टान्तोक्तिरित्यत आह ॥ **अनभिमानस्येति** ॥ तदभिमानाविषयस्य तत्कार्याकारित्वेन तं प्रत्यविद्यमानकल्पत्वादित्यर्थः ॥ ननु स्वप्नदृष्टपदार्थानां मिथ्यात्वेन तद्विषयकभोग एवासंप्रतिपन्न इत्यत आह ॥ **स्वाप्नार्थानामिति** ॥

## सूत्रभाष्यम्

**॥ ॐ भावे जाग्रद्वत् ॐ ॥ १४ ॥**

ब्रह्मवैवर्ते च–

**'स्वप्नस्थानां यथा भोगो विना देहेन युज्यते ।**
**एवं मुक्तावपि भवेद्विना देहेन भोजनम् ॥**
**स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।**
**स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन' इति ॥ १४ ॥**

## तत्त्वप्रदीपिका

भोगमात्रे दृष्टान्तः । अतो न दुःखाद्यनुषङ्ग आशङ्कनीयः । श्रुतिरेव 'चिता वाऽचिता वा' इति भोगं प्रकृत्य 'अथानन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' इति शरीरे सत्यसति च निर्दुःखानन्दानुभवमवधारयतीति दुःखस्पृष्टिः श्रुत्यैव बाधिता । या पुनरेषा श्रुतिः 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति साऽनिच्छया सशरीरं संसारिणमुद्दिश्याऽह । मुक्तस्त्वशरीरो ह्युच्यते । कदाचित्स्वेच्छया शरीरग्रहेऽपि तस्मिन्परमानुग्रहकृतात्स्वातन्त्र्यादनभिमानाच्च ।

सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानन्दाचित्रता ॥

इत्यादिनोक्तस्य प्रचुरविचित्रतरानन्दस्य भोगार्थं हि शरीरस्वीकारः । स्वेच्छया शरीराणि स्वीकृत्येति ह्याह । न च स्वेच्छया कश्चिद्दुःखं भुञ्जीत । अतो न दुःखसम्बन्धस्तस्येति सिद्धम् । 'अथ सोऽभयं गतो भवति' 'स दुःखाद्विमुक्त आनन्दी भवति' 'तरति शोकमात्मवित्' इति श्रुतिभ्यश्च ॥

## तत्त्वप्रकाशिका

देहसद्भावेऽपि सुतरां भोगोपपत्तिरिति भावेन सूत्रमुपन्यस्यति ॥ **भाव इति** ॥ यथा जाग्रदवस्थायां देहसद्भावे भोगसम्भवस्तथा मुक्तावपि देहसद्भावे भोगोपपत्तिरिति सूत्रार्थः । वक्ष्यमाणदूषणनिरासप्रस्तावायेदं सूत्रम् । प्रतिदृष्टान्तस्यापि वक्तुं शक्यत्वात्कुत एतदित्यतोऽत्र स्मृतिं चाह ॥ **ब्रह्मवैवर्ते चेति** ॥

## गुर्वर्थदीपिका

देहसद्भावेऽपि तदभिमानस्यापि भावादित्यत्राभिमानो नाम न मानसो दोषरूपरागविशेषः किन्तु भोगकाले भोगोपयोगितया लीलया स्वीकारमात्रम् । अतो न संसारसाम्यमिति ज्ञेयम् ।

## भावबोधः

ननु देहसद्भावाङ्गीकारे दुःखादिकमेवापादितं न भोगानुपपत्तिरुक्ता । अतः 'भावे जाग्रद्वत्' इति सूत्रं व्यर्थमित्यत आह– **वक्ष्यमाणेति** । 'प्रदीपवदावेशः' इत्यत्र वक्ष्यमाणं यद्दुःखादिप्राप्ति-

(भाववोधः)
रूपदूषणनिराकरणं तत्प्रस्तावायेत्यर्थः । देहसद्भावपक्षमप्रस्तुत्य तत्करणे तस्यैतद्विषयत्वं न ज्ञायेत । अतः प्रस्तावार्थमिदं सूत्रमिति भावः ॥

## भावदीपः

सूत्रं स्वयं व्याचष्टे ॥ **यथा जाग्रदिति** ॥ देहवत्त्वपक्षे भोगाविवादाद् व्यर्थमेतत्सूत्रमित्यत आह ॥ **वक्ष्यमाणेति** ॥ उत्तरयोगे वक्ष्यमाणं यद्दूषणनिराकरणं तत्प्रस्तावाय तत्प्रारम्भायेत्यर्थः ॥ **प्रतिदृष्टान्तस्येति** ॥ सुप्त्यादिवद्भोगाभावोऽपि किं न स्यादिति वक्तुं शक्यत्वात्तन्वभाव इत्यादिनोक्तं कुतो मानाज्ज्ञेयमित्यर्थः ॥ **अत्रेति** ॥ तन्वभाव इत्यादियोगद्वयोक्तार्थ इत्यर्थः ॥

## वाक्यार्थमुक्तावली

मुक्तावित्यर्थकस्य तन्वभावेऽपीत्यस्यानुवृत्तिः । भाव इत्यत्र तनोरिति विभज्यान्वेति । जाग्रद्वदिति सप्तम्यर्थे वतिः । भोगोपपत्तेरिति चानुवर्तत इति भावेन सूत्रार्थमाह ॥ **यथेति** ॥ ननु देहाभिमानसद्भावे दुःखादिकमेवापादितं न तु भोगानुपपत्तिरुक्ता । अत इदं सूत्रं व्यर्थमित्यत आह ॥ **वक्ष्यमाणेति** ॥ वक्ष्यमाणं यद्दूषणनिराकरणं तत्प्रस्तावायेत्यर्थः । अन्यथा प्रदीपवदित्यस्यैतद्विषयता न ज्ञायत इति भावः ।

## तत्त्वसुबोधिनी

ननु देहसद्भावाङ्गीकारे दुःखादिकमेव आपादितं न भोगानुपपत्तिरुक्ता । अतो भावे जाग्रद्वदिति सूत्रं व्यर्थमित्यत आह ॥ **वक्ष्यमाणेति** ॥ प्रदीपवदावेश इत्यत्र वक्ष्यमाणं यद् दुःखादिप्राप्तिरूपदूषणानिराकरणं तत्प्रस्तावायेत्यर्थः । देहसद्भावपक्षमप्रस्तुत्य तत्करणे तस्य तद्विषयत्वं न ज्ञायेत । अतः प्रस्तावार्थमिदं सूत्रमिति भावः । तथापि सदृष्टान्तमुक्तत्वात् कथं प्रस्तावाय इत्युक्तमित्यत आह ॥ **प्रतिदृष्टान्तस्यापीति** ॥ तथा दृष्टान्तमात्रप्रदर्शनमनुपयुक्तमिति भावः ।

## वाक्यार्थविवरणम्

ननु 'भावे जाग्रद्वत्' इति सूत्रं व्यर्थम् । देहसद्भावे दुःखादिकमेवापादितम् ।

(वाक्यार्थविवरणम्)
न भोगानुपपत्तिः । अतो जाग्रद्वत् भोगोपपादनं व्यर्थम् । दुःखादिकं च प्रदीपवदिति परिह्रियते । अत आह ॥ **वक्ष्यमाणेति** ॥

## वाक्यार्थमञ्जरी

भावे मुक्तौ शरीरसत्वे जाग्रदवस्थावत् सुतरां भोगोपपत्तिरित्यर्थः । ननु देहसत्वाङ्गीकारे दुःखादिकमेवापादितं तेन भोगानुपपत्तिरुक्ता । अतस्तदुपपत्तिकथनाय भावे जाग्रद्वदिति सूत्रं व्यर्थमित्यत आह ॥ **वक्ष्यमाणेति** ॥ प्रदीपवदावेश इत्यत्र वक्ष्यमाणं यद्दुःखादिप्राप्तिरूपदूषण-निराकरणं तत्प्रस्तावायेत्यर्थः । देहसद्भावपक्षमप्रस्तुत्य तत्करणे तस्यैतद्विषयत्वं न ज्ञायेत । अतस्तत्प्रस्तावार्थमिदं सूत्रमिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥ १५ ॥**

**शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य, भवति' इति हि दर्शयति ॥**

## तत्त्वप्रदीपिका

तथाऽपि तात्पर्याद्दृष्टान्तेन प्रमाणान्तरेण प्रख्यापयति– प्रदीपवदित्यादि सूत्रम् ॥ नित्य-शुद्धचिदानन्दज्योतिरात्मानो मुक्ता युगपन्नानाभूरिभोगेच्छया शुद्धप्रकृतिमयानि ज्योतीरूपाणि सुखैकायतनानि शरीराण्यनुविश्येच्छानुसारेण प्रविश्य पुनरात्मज्योतिषाऽतिप्रकाशयन्तः सुखमेवानु-भवन्ति । न दुःखमण्वपि । ज्ञानोत्तरपुण्यभाजो भोगबाहुल्यमिति यदुक्तं अग्निहोत्रादीत्यत्र 'न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत' इति श्रुतेः, तत्सूचयति पुण्यानेव भोगा-ननुभवन्तीति । न च तेषां शरीरधर्मसंस्पर्शः । शरीराणामेव यथायोग्यं तद्धर्मयोग इत्येतदाह– तत्प्रकाशयन्तो– **न दुःखादीनिति** ॥ ज्योतिर्मयेष्वपि तेषु शरीरेषु प्राकृतत्वसामान्यात् दुःखायतनत्वं सम्भाव्यं मन्येरन्निति दीपिकायां सम्भवदपि कार्ष्ण्यं यथा न प्रदीपो भुङ्क्ते इति । यद्यपि तेषां बहुरूपत्वेन चित्सुखात्मकैरनेकैर्देहैस्सुलभ एवातिवहुलो भोगः, तथाऽपि वश्यप्रकृतीनां

(तत्त्वप्रदीपिका)
वैचित्र्यकौतुकवता शरीरयोगेन च सुशक इति गुण एव । हृदयस्य भवति हृदयनाद्धृदयो भगवान्, तस्यैव भवति स्वदृष्ट्याऽपीत्यर्थः ॥

स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोकेः ॥

इति स्वर्गे शोकाद्यभावश्रवणात्तत्रस्थस्यैतच्छोकतरणमिति चेन्न । स्वाप्ययेत्यादिसूत्रम् ॥ सुप्तौ मोक्षे च 'तीर्णो हि' इत्यादिशोकतरणमुच्यते । 'अत्र पिताऽपिता भवति, माताऽमाता, लोकाऽलोका, देवा अदेवा, वेदा अवेदा' इत्याद्युक्त्वा 'अनन्वागतं पुण्येनानन्वागतं पापेन' इति दर्शितत्वात् । जन्ममृत्यादिदं पुण्यं वर्जितं विवक्षितं, मोक्षे ब्रह्मदर्शिकृतमल्पमपि पुण्यं भूरिभोगप्रदमनन्तकालीनं च भवति । उक्तो बृहदारण्यकभाष्ये च सूत्रार्थः 'तीर्णो हि तदा' इत्यादि श्रुत्यर्थविवेके– 'सुपुप्तिमोक्षोभयविवक्षयैव' तद्वचनमिति भगवताऽप्युक्तं 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति । उभयापेक्षमित्युक्तमोक्षस्थसुपुप्तिरित्यपि मन्दस्याऽशङ्का स्यात् । अतो मोक्षे सुप्तिरेव नास्तीति ज्ञापयितुमन्यतरापेक्षमित्युक्तम् ॥ **न त्वन्यतर एवार्थ इति** ॥ ज्ञाने विकल्पायोगादिति । अतः सुप्तौ मोक्षे वेति वाशब्दः समुच्चये ।

## तत्त्वप्रकाशिका

ननु देहसद्भावे भोगोपपत्तावपि दुःखमप्याप्यत इत्युक्तमेवेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **प्रदीपवदिति** ॥ न जडशरीरप्रवेशोऽपि दुःखानुभवप्राप्तिः किं तु साधूनेव भोगाननुभवन्ति प्रदीपवदेवेति । श्रुतिस्तु कर्मारब्धदेहविषयेति भावः । तत्प्रकाशयन्तस्तद्विवेकज्ञानवन्त इत्यर्थ इति प्रदीपदृष्टान्तग्रहणे विवक्षोच्यते । ननु देहसद्भावेऽपि कुतो मुक्तस्य दुःखाभावो दृष्टान्तमात्रस्यासाधकत्वादित्यत आह ॥ **तीर्णो हीति** ॥ देहसद्भावस्तूक्तश्रुतिसिद्धः । दुःखाभावेऽप्यस्ति श्रुतिरतो न देहमात्रं दुःखहेतुरिति सिध्यतीति भावः ॥

## भावबोधः

ननु देहे सति दुःखं स्यादिति तर्कस्योक्तरीत्याऽऽभासात्वेऽपि 'न ह वै सशरीरस्य' इति श्रुतेः का गतिरित्यत आह– **श्रुतिस्त्विति** ॥ भाष्ये तत्प्रकाशयन्त इत्येतदनुपयुक्तं किमर्थमुक्त-

(भावबोधः)

मित्यत आह– **तत्प्रकाशयन्त इतीति** ।। यथा प्रदीपो दीपिकां प्रकाशयन् तैलाद्येव भुङ्क्ते, तथा मुक्तास्तज्जडशरीरं प्रकाशयन्तः साधूनेव भोगान् अनुभवन्तीति प्रदीपवदिति वक्तुः सूत्रकारस्य विवक्षाऽनेन भाष्येणोच्यत इत्यर्थः ।।

## भावदीपः

भाष्यसूत्रे व्याचष्टे ।। **न जडेति** ।। **श्रुतिस्त्विति** ।। 'न ह वै सशरीरस्य' इति श्रुतिरित्यर्थः । अयं चैच्छिक एव देहः । तथा च न तद्विरोध इति भावः । तत्प्रकाशयन्त इत्येतदुत्सूत्रमित्यतस्तदर्थं वदन्नेव मूलमाह ।। **तत्प्रकाशयन्त इति** ।। यद्यपि देहात्मविवेकः संसारिणामस्ति । 'जातमात्रा मृगा गावो हस्तिनः पक्षिणो खगाः' । भयाभयस्वभोगादौ कारणानि विजानत इति । मम देह इति व्यक्तं ममार्थ इति च स्फुटमित्यादिना चानुभाष्यादौ तथोक्तेः । तथापि स्फुटतरतद्विवेकवन्त इत्यर्थः । दुःखाभावोपपादकत्वेनैतदुक्तिरिति भावः । ननु तीर्ण इति श्रुतौ मुक्तौ दुःखाभावश्रवणेऽपि देहिनो दुःखाभावे किमुक्तं स्यादित्यत आह ।। **देहेति** ।। चिता वाऽचिता वेति श्रुतिसिद्ध इत्यर्थः ।।

## वाक्यार्थमुक्तावली

मुक्तानां तनावित्यनुवर्तते । प्रदीपवदिति षष्ठ्यर्थे सप्तम्यर्थे च वतिः । तथा च मुक्तानां तनावावेशः प्रवेशः प्रदीपस्य प्रकर्षेण प्रकाशकस्य दीपादिरूपाग्नेः प्रदीपिकादावावेश इव । यथा प्रदीपिकाविष्टः सन् तत्स्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्याद्येवं मुक्तो जडदेहं प्रविष्टस्तत्राभिमानवत्वेऽपि न दुःखं भुङ्क्ते किं तु सुखमेव । कुतः हि यस्मात्तीर्णो हीति श्रुतिस्तथा मुक्ते दुःखाभावं दर्शयति तस्मादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ।। **न जडेत्यादिना** ।। **श्रुतिरिति** ।। न ह वै सशरीरस्येति श्रुतिरित्यर्थः । प्रदीपदृष्टान्तलब्धार्थप्रदर्शनपरं तत्प्रकाशयन्त इत्येतदनूद्य व्याचष्टे ।। **तद्विवेकेति** ।। विवेको नाम देहात्मनोरसङ्कीर्णधर्मवत्ता । तज्ज्ञानवन्त इत्यर्थः । अविवेककृतो हि दुःखादिर्विवेकिनां न सम्भवतीति भावः । ननु तीर्णो हीति श्रुतिर्न देहवतोऽपि दुःखाभावं प्रतिपादयति किं तु मुक्तस्य दुःखाभावं तच्चापादनालङ्कार एव देहित्वे दुःखापादनस्य प्रामाणिकदुःखाभावपरित्यागरूपत्वेनानिष्टत्वोपपादकत्वादित्यतो भाष्याभिप्रायमाह ।। **देहसद्भाव-**

(वाक्यार्थमुक्तावली)

**स्त्वित्यादिना ॥** ज्योतिषैव रूपेण चिता वाचित्रा वेति पठितश्रुतिसिद्ध इत्यर्थः ॥ **अत इति ॥** मुक्ते आपादकदेहसद्भावेऽपि दुःखाभावस्यापि प्रमितत्वेनापाद्याभावात्तर्कस्य पक्ष एव व्याप्ति-विकलत्वादित्यर्थः ॥ **न देहमात्रमिति ॥** न सर्वो देहो दुःखहेतुः किं तु कर्मारब्धदेह एव । मुक्तदेहस्तु न कर्मारब्ध इति न दुःखहेतुरित्यर्थः । एतेन विशेषक्लृप्तिरिति न्यायोऽपि दर्शितः ।

## तत्त्वसुबोधिनी

ननु देहे सति दुःखं स्यादिति तर्कस्य उक्तरीत्या आभासत्वेऽपि न ह वै सशरीरस्येति श्रुतेः का गतिरित्यत आह ॥ **श्रुतिस्त्विति ॥** भाष्ये तत्प्रकाशयन्त इत्यनुपयुक्तं किमर्थमुच्यते इत्यत आह ॥ **तत्प्रकाशयन्त इति ॥** यथा प्रदीपो दीपिकां प्रकाशयन् तैलाद्येव भुङ्क्ते तथा मुक्ता तज्जडदुःखशरीरं प्रकाशयन्तः साधूनेव भोगाननुभवन्तीति प्रदीपवदिति वक्तुः सूत्रकारस्य विवक्षाऽनेन भाष्येण उच्यते इत्यर्थः । ननु तीर्णो हीति श्रुतिः न देहवतोऽपि दुःखाभावं प्रतिपादयति किं तु दुःखाभावं, तच्चापादनानुकूलं भवतीत्यत आह ॥ **देहसद्भावस्त्विति ॥**

## वाक्यार्थविवरणम्

**प्रदीपवदिति ॥** वक्ष्यमाणं यद्दुःखादिप्रसक्तिरूपदूषणनिराकरणं तत्प्रस्तावायेत्यर्थः ॥ प्रस्तावः उपोद्घातः ॥ **प्रतिदृष्टान्तस्यापीति ॥** तन्वभावेऽपि मृतवद्भोगानुपपत्तिरित्यर्थः ॥ **श्रुतिश्चेति ॥** न ह वै सशरीरस्येति श्रुतिरित्यर्थः ॥ **विवक्षेति ॥** सूत्रकारस्येति शेषः । यथा प्रदीपो दीपिकां प्रविष्टस्तत्प्रकाशयंस्तैलाद्येव भुङ्क्ते तथा मुक्ता अपि जडशरीरं प्रविश्य तत्प्रकाशयन्तः साधूनेव भोगाननुभवन्तीति प्रदीपवदिति वक्तुः सूत्रकारस्य विवक्षाऽनेन भाष्येणोच्यत इत्यर्थः । भाष्ये हृदयस्यहृदयनस्य, विष्णोः शेषभूतो भृत्यो भवतीत्यर्थो द्रष्टव्यः ॥ **उक्तश्रुतीति ॥** 'चिता वा अचिता' वेत्युक्तश्रुतीत्यर्थः ॥ **न देहमात्रमिति ॥** किन्तु कर्मारब्ध एवेति भावः ।

## वाक्यार्थमञ्जरी

मुक्तानामावेशः बाह्यदेहप्रवेशः प्रदीपवत् प्रदीपस्य दीपिकाप्रवेश इव । कुतः । हि यस्मात्तीर्णो हीति श्रुतिस्तथा मुक्तौ दुःखाभावं दर्शयतीत्यर्थः । दीपिकातैलवर्तिकाश्रयदीपमात्रम् । ननु भाष्ये

(वाक्यार्थमञ्जरी)

तत्प्रकाशयन्त इत्येतदनुपयुक्तं किमर्थमुक्तमित्यत आह ॥ **तत्प्रकाशयंत इति** ॥ यथा प्रदीपो दीपिकां प्रकाशयंस्तैलाद्येव भुङ्क्ते तथा मुक्तास्तज्जडशरीरं प्रकाशयन्तः साधूनेव भोगाननुभवन्तीति प्रदीपवदिति वक्तुः सूत्रकारस्य विवक्षाऽनेन भाष्येणोच्यत इत्यर्थः । ननु तीर्णो हीति श्रुतिर्न देहवतो दुःखाभावं प्रतिपादयति किं तु मुक्तस्य दुःखाभावं तदापादनानुकूलमेवेत्यत आह ॥ **देहसद्भावस्त्वित्यादिना** ॥

## सूत्रभाष्यम्

**न च स्वर्गे लोके न भयं किञ्चनास्ति' इत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः–**

**॥ ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ॥ १६ ॥**

**सुप्तौ मोक्षे वा तदुच्यते । 'अत्र पिताऽपिता भवत्यनन्वागतं पुण्येनानन्वागतं पापेन' इत्याद्याविष्कृतत्वात् ॥ ब्रह्मवैवर्ते च–**

**'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः ।**
**भुञ्जते सुसुखान्येव न दुःखादीन्कदाचन ॥**
**तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः ।**
**सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिणः' इति ॥**

॥ इति उभयविधभोगाधिकरणम् ॥ ८ ॥

## तत्त्वप्रदीपिका

'तेनाश्लिष्टः स्वपुत्राणां दायादानां न वै पिता ।
तेषां दुःखाद्दुःखित्वादमाता लोकमान्यपि ॥
अलोकमानान्नो लोके देवोऽपि स्वाधिकारतः ।
वर्षणादेर्व्युत्थितत्वान्न देवो वेदमान्यपि ॥
अवेदमानान्नो वेदः पापी पापफलक्षयात् ।
अपापश्रमणश्चापि याति धर्मात्समुत्थितेः ॥
अयतिस्तापसश्चैवमनिष्टं पुण्यमप्यमुम् ।
नान्वेत्येवंविधो मुक्तो विष्णोः सम्प्राप्तिमात्रत' इति महामीमांसायाम् ॥

## तत्त्वप्रकाशिका

ननु 'तीर्णो हि' इत्येतत्स्वर्गादिविषयं किं न स्याद्बाधकाभावात् । तथा च न मुक्तानामदुःखित्वे प्रमाणम् । न च वाच्यम् स्वर्गे कथं दुःखाभाव इति । 'स्वर्गे लोके' इत्यादिना स्वर्गेऽपि दुःखाभावसिद्धेरित्याशङ्कां परिहरति ॥ **न चेति** ॥ कुतो न वाच्यमिति पृच्छति ॥ **यत इति** ॥ 'यतश्चोदेति सूर्यः' इतिवत् यतः शब्दः प्रश्ने । तत्परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ **स्वाप्ययेति** ॥ यत एतद्वाक्यं सुप्तिमुक्तिविषय एव पठ्यतेऽतो न वाच्यमित्यर्थः । कुतोऽस्य सुप्त्यादिविषयतेत्यत आह ॥ **अत्रेति** ॥ अपितृत्वादिपुण्यपापाद्यसङ्गत्वादिलिङ्गश्रवणादस्य सुप्त्यादिविषयत्वं स्फुटं प्रतीयते । स्वर्गस्थस्य श्राद्धादिभोक्तुस्तदसम्भवादिति भावः । अधिकरणार्थे स्मृतिमुदाहरति ॥ **ब्रह्मवैवर्ते चेति** ॥ विश्वमोक्षिणः सर्वमुक्ताः । पुण्यपापादिवर्जिताः सर्वदोषनिवृत्ता इत्यनुवादः । अतो मुक्तानां निर्दुःखभोगानुभावो युक्त एवेत्युपपन्नं मोक्षस्य पुरुषार्थत्वमिति सिद्धम् ॥

## भावबोधः

ननु 'तीर्णो हि' इति श्रुतिः न देहवतोऽपि दुःखाभावं प्रतिपादयति, किं तु मुक्तस्य दुःखाभावम् । तच्चापादनानुपयुक्तमेवेत्यतो भाष्याभिप्रायमाह– **देहसद्भावस्त्वित्यादिना** ॥ उपलक्षणं चैतत् । 'देहाभावाच्च भावाच्च' इति न्यायविवरणोदाहृतश्रुतिरप्यस्मिन्नर्थे मानम् । एतद्वाक्यमिति । अनेन सूत्रगतो 'हि'शब्दः 'अन्यतरापेक्षं हि' इत्यपि हेत्वर्थेन सम्बध्यत इत्युक्तं भवति । **सुप्तिमुक्तिविषयमेवेति** ॥ अत्र 'सुप्तिः' इति 'सम्पत्ति' शब्दार्थः 'मुक्तिः' इति 'स्वाप्यय' शब्दार्थ इति ज्ञेयम् ।

ननु सूत्रे 'अन्यतर'पदेन भाष्ये सुप्तौ मोक्षे वेति 'वा'शब्देन 'तीर्णो हि' इति वाक्यस्यैकार्थत्वमेवोक्तम् । तत्कथं सुप्तिमुक्तिविषयमित्युभयार्थत्वमुच्यते । अन्यथा सूत्रे स्वाप्ययसम्पत्त्यपेक्षमित्येव स्यात् । भाष्ये च मोक्षे चेति 'च'शब्दः स्यात्; न तु 'वा'शब्द इति चेन्न; अभिप्रायसद्भावात् । यदि स्वाप्ययसम्पत्तिरित्युच्येत तदा स्वाप्यये मोक्षे या सम्पत्तिः सुप्तिस्तदपेक्षं तद्विषयमिति प्रतीतिः स्यात् । तन्निवृत्त्यर्थं स्वाप्ययसम्पत्योर्मध्ये अन्यतरापेक्षमित्युक्तम् । न तु 'तीर्णो हि' इति वाक्यस्यैक एवार्थ इति प्रतिपादनार्थमिति । तथा सति वस्तुनि विकल्पायोगात्. 'स्वाप्ययापेक्षम्' इति वा 'सम्पत्त्यपेक्षम्' इति वा ब्रूयादिति ॥

(भावबोधः)

ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरित्येव कुतो न कृतम्? उच्यते– अनेकार्थस्यास्यैकार्थव्याख्याने रुचिरेव व्याख्यातुः प्रमाणं, न तु मुख्यामुख्यतो विशेषोऽस्तीति सूचायितुमन्यतरापेक्षमित्युक्तम् । तदिदमाह भाष्यकारः सुप्तौ मोक्षे वेति 'वा'शब्देन । तदेतत्सर्वं कर्मनिर्णयटीकायां मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरापेक्षमिति तन्मूलवाक्यव्याख्यानावसर एवोक्तमिति । पुण्यपापादिवर्जिताः सर्वदोषनिवृत्ता इत्यनुवाद इति ।

'भुञ्जते सुसुखानेव न दुःखादीन् कदाचन'

इत्यत्र गुणमात्रस्वरूपिणः 'तीर्णा हि सर्वशोकांस्ते' इत्यस्य हेतुत्वेन उपयोगवदनयोः पुनरुक्तत्वेनोपयोगाभावादिति भावः ॥

अत्राद्ये– बादर्याचार्यमतेन मुक्तानां बाह्यदेहाभावे श्रुतिरूपप्रमाणोक्तिः । द्वितीये जैमिन्याचार्यमतेन कादाचित्कबाह्यदेहसद्भावे प्रमाणोक्तिः ॥ तृतीये प्रामाणिकत्वेन तयोः स्वमतत्वप्रदर्शन्येनाविरोधोक्तिः । चतुर्थे देहाभावपक्षे देहाभिमानाभावस्यापि सिद्धत्वाद्देहाभिमानाभावे सुप्तिवद्भोगो न स्यादिति बाधकतर्कस्य स्वप्नावस्थायां व्यभिचारप्रदर्शनेन व्याप्त्यभावोक्तिः । पञ्चमे देहसद्भावपक्षेऽपि भोगोपपत्त्युक्तिः । षष्ठे– देहे सति दुःखं स्यादिति बाधकतर्कस्य व्याप्त्यभावोपपादनाय कर्मारब्धदेहस्यैव दुःखजनकत्वं न देहमात्रस्येति स्वेच्छागृहीतदेहस्य कर्मारब्धत्वाभावादेव दुःखाभाव इत्यन्यथासिद्ध्युक्तिः । सप्तमे 'तथापि दर्शयति' इत्युक्त 'तीर्णो हि' इति श्रुतेर्मुक्तविषयत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**यतश्चेति** ॥ यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति इत्यत्रेवेत्यर्थः । यत इत्यस्य यस्मादिति हेत्वर्थतया आवृत्तिं मत्वा सुप्तावित्यादिभाष्येणान्वयं चोपेत्य न चेत्यादिवाच्यमित्यन्तभाष्योक्तसाध्ये हेतुत्वेन योजयति ॥ **यत इत्यादिना** ॥ एतत्सूत्रार्थो वाजसनेयभाष्य एव तीर्णो हीति श्रुत्यर्थविवेके स्पष्टं विवृतः षष्ठेऽध्याये । आविष्कृतमिति सौत्रपदार्थमाह ॥ **स्फुटं प्रतीयत इति** ॥ विश्वमोक्षिणो जगन्मोक्षवन्त इति प्रतीतिं निराह ॥ **विश्वेति** ॥ सर्वे मुक्ता इत्यर्थः । यद्वा न केवलं प्रारब्धान्मुक्ताः । किं तु लिङ्गतोऽपि मुक्ता इत्यर्थः । अथवा कर्मक्षयोत्क्रांत्यादिचतुर्विधमोक्षवन्त

(भावदीपः)
इत्यर्थः । तेन नोत्क्रामन्तीति वक्ष्यमाणमुक्तव्यावृत्तिरिति भावः । उक्तार्थे हेतुत्वासमर्पकत्वादाह ॥ **इत्यनुवाद इति** ॥ वस्तुस्थित्युक्तिरित्यर्थः ॥ **अत इति** ॥ कर्मानारब्ध ऐच्छिकदुःखानापादकदेहवत्त्वस्य चिता वेति तीर्णो हीति वाक्यद्वयानुपपत्तिसिद्धत्वादित्यर्थः ॥

## वाक्यार्थमुक्तावली

**इत्याशङ्क्येति** ॥ इति तटस्थशङ्कामाशङ्क्येत्यर्थः । मुक्तौ देहाङ्गीकारे दुःखादिप्रसङ्गं वदता पूर्वपक्षिणा दुःखाभावप्रतिपादकश्रुतेः स्वर्गपरतया सावकाशत्वचोदनानुपपत्तेरिति बोध्यम् । सूत्रे स्वाप्ययः सुप्तिः संपत्तिर्मुक्तिः अन्यतरशब्दोऽत्रोभयपरः । हिशब्दो यस्मादित्यर्थे । तथा च हि यस्मात्प्रकृतं तीर्णो हीति वाक्यं सुप्तिमुक्त्युभयविषयमेव पठ्यते न तु स्वर्गविषयमतः स्वर्गादिस्थस्यैतदिति न वाच्यमिति सम्बन्धभाष्येणान्वय इत्याशयेन व्याचष्टे ॥ **यत एतदिति** ॥ एतेन सुप्तौ मोक्षे वा तदुच्यत इति भाष्ये सुप्तौ मोक्षे वेति विषयसप्तमी । वाशब्दश्चशब्दार्थसमुच्चये । तदिति तथा च दर्शयतीति प्रकृतं वाक्यं परामृश्यते । उच्यत इत्यस्य पठ्यत इत्यर्थ इति व्याख्यातं भवति । आविष्कृतं हीत्यस्य हि यस्मादुभयविषयत्वमस्य वाक्यस्य लिङ्गश्रवणादाविष्कृतं व्यक्तीकृतम् तस्मादन्यतरापेक्षमिति भावेन प्रवृत्तमत्रापितेत्यादिभाष्यं व्याचष्टे ॥ **अपितृत्त्वादीति** ॥ आदिपदेन माता अमाता इत्युक्तमातृत्वादेर्ग्रहणम् । पुण्यपापादीत्यादिपदेन तीर्णो हि तदा सर्वाञ्छोकानित्युक्तशोको गृह्यते । असङ्गत्वादीत्यादिपदेन हृदयस्य भवतीत्युक्तस्य हृदयनामकभगवच्छेषत्वस्य ग्रहणम् ॥ **सुप्त्यादिविषयत्वमिति** ॥ **स्वर्गस्थस्य श्राद्धादिभोक्तुरिति** ॥ स्वर्गस्थस्य पुत्रकृतश्राद्धादिभोक्तृतयाऽपितृत्वसम्भवात् पुण्येन स्वर्गतत्वादेव पुण्येनान्वागतत्वायोगाद्भाविपातशङ्कया शोकसद्भावेन सर्वशोकतरणासम्भवात् । विषयकामुकत्वेन केवलं भगवच्छेषत्वासम्भवाच्चेति भावः । नन्विदं सुप्तेऽप्यसम्भवि सुप्तस्य पितृत्वाद्यनपायादिति चेन्न । स्वपुत्राणां सुप्तिसमये दायादानेन पुत्रेष्वभिमानाभावेन चापितृत्वात् तदानीं पुण्यपापफलमनोवृत्तिसुखस्य दुःखस्य च सर्वथाभावेन पुण्यपापशून्यत्वात्तदा भाविदुःखशङ्काकलङ्काभावेन सर्वशोकतरणाद्भगवत्प्रवेशेन हृदयशेषत्वाच्च । तदुक्तं बृहद्भाष्ये ।

तेनाश्लिष्टः स्वपुत्राणां दायादानान्नैव पिता ।
तेषां दुःखाददुःखित्वान्न माता लोकमान्यपि ।

(वाक्यार्थमुक्तावली)

सूत्रे स्वाप्ययसंपत्त्यपेक्षमित्युक्ते स्वाप्यये मोक्षे या सम्पत्तिः सुप्तिस्तदपेक्षमिति प्रतीतिः स्यात्तन्निवृत्त्यर्थमन्यतरग्रहणम् । उभयापेक्षमिति वा स्वाप्ययसम्पत्त्योरपेक्षमिति वा पूर्ताविप्यर्थद्वयस्य साम्येन मुख्यत्वाद्यथा रुच्येकार्थो ग्राह्य इति द्योतनाय स्वाप्ययसम्पत्त्योरन्यतरेत्युक्तिः । उभयापेक्षमित्याद्युक्ते समुच्चयरूपेणैव ग्राह्यत्वं न तु प्रत्येकं द्वयोर्मुख्यत्वमित्यलाभात् । एतत्सूचनायैव भाष्ये सुप्तौ मोक्षे वेति वाशब्दप्रयोगः । न सर्वथाऽन्यतरशब्दस्य स्वाप्ययसम्पत्त्योरेकमात्रार्थकत्वं तथा सत्येकस्यानिर्धारितत्वाद्वस्तुनिर्विकल्पप्रसङ्गात्तस्य चायोगात् स्वाप्ययापेक्षमिति वा सम्पत्त्यपेक्षमिति वा ब्रूयादित्येतत्प्रपञ्चितं बृहद्भाष्ये कर्मनिर्णयटीकायां चेति द्रष्टव्यम् ॥ **सर्वमुक्ता इति** ॥ ननु सर्वेषां ज्योतिर्मयत्वाभावात् कथं सर्वमुक्ता इति व्याख्यानमिति चेत् । अत्र केचित् सर्वपदस्य सङ्कोचोपपत्तेरदोष इत्याहुः । अन्ये त्वेतद्वाक्यबलात्सर्वेषामस्तु ज्योतिर्मयदेहेन भोग इत्याहुः । वस्तुतस्त्वर्थान्तरोक्तं त्वन्यत्रोक्तं ज्ञेयम् । स्मृतौ सुखान्येव भुञ्जते स्वरूपसुखान्येव भुञ्जते । एवकारव्यावर्त्यं न दुःखादीनीत्यादिपदेनाज्ञानादिकं बाह्यसुखं च गृह्यते । तत्र दुःखाभावो हेतुः । तीर्णो हि सर्वशोकांस्तरत्यतस्तत्र सुखं नास्तीति भावः । बाह्यसुखाभावे शोकतरणे च हेतुः पुण्यपापादिवर्जिता इति । ननु मास्तु बाह्यसुखभोगो मा च भूद्दुःखभोगः स्वरूपसुखभोगस्तु कुत इत्यतस्तत्र हेतुर्गुणमात्रस्वरूपिण इति । नन्वेवं योजनायां सर्वदोषनिवृत्ता इति पुनरुक्तम् । पुण्यपापादीत्यनेन प्राप्तत्वादित्यत आह ॥ **पुण्यपापादिवर्जिताः सर्वदोपनिवृता इत्यनुवाद इति** ॥ पुण्यपापादिवर्जिता इत्यस्य सर्वदोषनिवृत्तास्त इत्यनुवाद इत्यर्थः । अनुवादेन गुणमात्रस्वरूपिण इति विधीयत इति भावः । अत्राद्येऽल्पाधिकारिणो बाह्यज्योतिर्मयशरीराभावादवरक्रमेण बाह्यशरीरभावस्योक्तिः । द्वितीये उत्तमाधिकारिकस्य तद्भावस्याप्युक्तिः । तृतीये प्रामाणिकत्वेनोभयाविरोधोपपादनम् । चतुर्थपञ्चमयोः पक्षद्वयेऽपि भोगानुपपत्तेः परिहारः । षष्टे बाह्यशरीरसद्भावे तदभिमानेन दुःखं स्यादिति तर्कस्य प्रमाणबलेन पक्ष एव व्याप्तिवैकल्योपपादनम् । सप्तमे तीर्णो हीति श्रुतेः स्वर्गादिपरत्वेन सावकाशत्वनिरासः इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**यत एतद्वाक्यमिति ।** अनेन सूत्रगतहिशब्दोऽन्यतरापेक्षं हीत्यपि हेत्वर्थेन सम्बध्यत इत्युक्तं भवति । सुप्तिमुक्तिविषय एवेति । सुप्तिरिति सम्पत्तिशब्दार्थो मुक्तिरिति स्वाप्ययशब्दार्थ इति

(तत्त्वसुबोधिनी)

ज्ञेयम् । न च सूत्रे अन्यतरपदेन भाष्ये सुप्तौ मोक्षे वेति वाशब्देन तीर्णो हीत्यस्यैकार्थत्वमेवोक्तम् । तत्कथमुभयार्थत्वमुच्यते । तथात्वे स्वाप्ययसम्पत्त्यपेक्षमित्येव स्यात् । भाष्ये चैवशब्दः स्यान्न तु वा शब्द इति वाच्यम् । यदि स्वाप्ययसम्पत्त्यपेक्षमित्युच्यते तदा मोक्षे सम्पत्तेः सुप्तेः तदपेक्षं तद्विषयमिति प्रतीतिः स्यात् । तन्निवृत्त्यर्थं स्वाप्ययसम्पत्त्योः मध्येऽन्यतरापेक्षमित्युक्तम् । न तु तीर्णो हि इत्यस्यैक एवार्थ इति प्रतिपादनार्थम् । तथा सति वस्तुविकल्पायोगात् स्वाप्ययापेक्षमिति वा सम्पत्त्यपेक्षमिति वा ब्रूयात् । न च सम्बन्धषष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्यान्योरित्येव कुतो न कृतमिति वाच्यम् । अनेकार्थस्य एकार्थव्याख्याने रुचिरेव व्याख्यातुः प्रमाणम् । न तु मुख्यामुख्यताविशेषोऽस्तीति सूचयितुमन्यतरापेक्षमित्युक्तमिति भावः ।

**पुण्यपापादिवर्जिता इति** । 'भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन' इत्यत्र गुणमात्रस्वरूपिणः तीर्णो हि सर्वशोकांस्ते इत्यस्य हेतुत्वेनोपयोगवदनयोः पुनरुक्तत्वेन प्रयोगा-भावादिति भावः । अत्राद्यसूत्रे बाह्यदेहाभावे श्रुतिरूपप्रमाणोक्तिः । द्वितीये बाह्यदेहसद्भावे प्रमाणोक्तिः । तृतीये तयोः स्वमतत्वप्रदर्शनेनाविरोधोक्तिः । चतुर्थे तर्कस्य व्याप्यभावोक्तिः । पञ्चमे देहसद्भावपक्षेऽपि भोगोपपत्त्युक्तिः । षष्ठे देहसत्त्वेऽपि दुःखाभावोक्तिः । सप्तमे तीर्णो हीति श्रुतेः मुक्तविषयत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**प्रश्न इति** । तथा च यत इत्यस्य कुत इत्यर्थः ॥ **सुप्तिमुक्तीति** ॥ स्वाप्ययसम्पत्त्योरित्यनयोः सुप्तौ मोक्षे वेति क्रमेण न व्याख्यातम्, किन्तु सम्पत्तिशब्दार्थः सुप्तिः । सता सौम्य तदा सम्पन्नो भवतीति श्रुतेः । स्वाप्ययशब्दार्थो मोक्ष इति व्यत्ययेनेति ज्ञातव्यम् ॥ **श्राद्धादिभोक्तुरिति** ॥ पुत्रकृतश्राद्धादिजनितपुण्यफलभोक्तुरपितृत्वाद्यसम्भवादित्यर्थः । विश्वशब्दः सर्वार्थः । तथा च विश्वे च ते मोक्षिणश्च विश्वमोक्षिण इत्यभिप्रेत्याह ॥ **सर्वमुक्ता इति** ॥ पुनरुक्तिपरिहारायाह ॥ **पुण्यपापादिवर्जिता इति** ॥ पुण्यपापादिवर्जितास्ते निवृत्तसर्वदोषाः । निवृत्तसर्वदोषास्ते गुणमात्रस्वरूपिण इत्यर्थः ।

## वाक्यार्थमञ्जरी

स्वाप्ययः सुप्तिः सम्पत्तिर्मुक्तिः अन्यतरशब्दः उभयपरः । तथा च तीर्णो हीति वाक्यं स्वाप्ययसम्पत्योरन्यतरापेक्षं सुप्तिमुक्तिरूपोभयपरम् । कुतः हि यस्मादस्य वाक्यस्य तदुभय-विषयत्वमाविष्कृतं स्पष्टीकृतमित्यर्थः ॥ **श्राद्धादिभोक्तुरिति** ॥ पुत्रकृतश्राद्धेन सुखभोक्तुरित्यर्थः । अपितृत्वे असङ्गित्वे च पित्रुद्देश्येन कृतगयाश्राद्धाभोगायोगादिति भावः । पुण्यपापवर्जिताः सर्वदोषनिवृत्ता इति ॥ **अनुवाद इति** ॥ भुञ्जते च सुखान्येव न दुःखादीन् कदाचनेत्यत्र गुणमात्रस्वरूपिणः तीर्णा हि सर्वशोकांस्त इति अस्य हेतुत्वेनोपयोगाभावादिति भावः ।

॥ इति उभयविधभोगाधिकरणम् ॥ ८ ॥

## ९. सर्वकामाधिकरणम्

### ॥ ॐ जगद्व्यापारवर्जम् ॐ ॥ १७ ॥

'सर्वान्कामानाप्त्वाऽमृतः समभवत्' इत्युच्यते। तत्र सृष्ट्यादिभ्योऽन्यान्व्यापारानाप्नोति ॥

### तत्त्वप्रदीपिका

ननु हन्तैवं परमगतिं प्राप्तानां सत्यसङ्कल्पानां यथेष्टभोगभोगिनां किमपि नाशक्यमुपलभामहे। 'सर्वान्कामानाप्त्वाऽमृतः समभवत्' इति च श्रुतिः। अतः सृष्ट्यादीनपि प्राप्नोतीत्यत आह– **जगव्द्यापारवर्जम्** ॥ 'सर्वान्कामानाप्त्वा' इति हि श्रुतावुच्यते। तत्र सृष्ट्यादिभ्योऽन्यान्कामानाप्नोतीत्यर्थः।

### तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तस्य मुक्तस्य भोगेयत्तासमर्थनादस्ति शास्त्रादिसङ्गतिः। अन्यथा भगवतः सर्वोत्तमत्वाभावप्रसङ्गात्समर्थनीयमेतत्। प्रकृता मुक्ता एवात्र विषयः। जगत्सृष्ट्यादिव्यापारानाप्नुवन्ति न वेति सन्देहः। तस्य ब्रह्मलक्षणत्वेनोक्तिर्मुक्तस्य सत्यकामत्वं च सन्देहबीजम्। आप्नुवन्तीति पूर्वः पक्षः। सर्वान्कामानाप्त्वेति श्रुतेः। सृष्ट्यादिव्यापारस्यापि काम्यत्वात्। न च सर्वशब्दस्य सङ्कोचः। मुक्तस्य सत्यकामत्वेन कामितसमस्तप्राप्त्युपपत्तेः सङ्कोचे कारणाभावात्। अन्यथोक्तसत्यकामत्वव्याघातात्। अतो मुक्तानां जगज्जन्मादिकर्तृत्वादयुक्तं लक्षणसूत्रमिति। सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **जगदिति** ॥ न मुक्तानां जगद् व्यापारः किं तु तद्व्यतिरिक्तकामावाप्तिरेव। 'सर्वान्कामान्' इति सर्वकामावाप्तिरुच्यत इति चेत्। सत्यम्। तत्रापि जगद्व्यापारवर्जमेव सर्वान्कामानाप्नोतीत्यर्थोपपत्तेरिति भावः।

### भावबोधः

**भोगेयत्तासमर्थनादिति** ॥ पूर्वाधिकरणे कारणनिर्णयेन परिहृतानुपपत्तिकस्य भोगस्य अत्र इयत्तासमर्थनादनन्तरसङ्गतिरिति भावः ॥ **जगदिति** ॥ अत्र सर्वे मुक्ता जगद्व्यापारादिसर्वभोगानाप्नुवन्ति उत नाप्नुवन्तीति चिन्ता। तदर्थं 'सर्वान् कामान्' इति श्रुतिगत'सर्व'शब्दः

(भावबोधः)

किमसङ्कुचितवृत्तिरुत सङ्कुचितवृत्तिरिति । तदर्थं 'अस्माच्छरीरभेदात्' इत्यनेनावगतस्य 'सर्वान्' इति श्रुतेर्जीवप्रकरणत्वस्य च सर्वशब्दसङ्कोचकत्वं न सम्भवतीति । तदर्थं सर्वजीवानां सर्व-कामावाप्तिसामर्थ्यमस्त्युत नास्तीति । तदर्थं 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतिः किं सर्वमुक्तजीवविषया उत मुक्तहिरण्यगर्भमात्रविषयेति । तन्मात्रविषयत्वपक्षेऽपि किं मुक्तविरिञ्चस्य संसार्यादिसर्वजीवनियामकत्वतत्पूज्यत्वादिकं उत स्वसहमुक्तमात्रनियामकत्वतत्पूज्यत्वादिकमिति । तदर्थमत्र प्रमाणमस्त्युत नास्तीति । सर्वान् कामानाप्त्वाऽमृतः समभवदिति भाष्योक्तयुक्तिमाह– सर्वान् कामानिति । सङ्कल्पादेव समस्तसम्भवात् सृष्ट्यादिकार्यसम्भव इति न्यायविवरणोक्त-युक्तिमाह– **मुक्तस्य सत्यकामत्वेनेति ॥ तत्रापीति ॥** सर्वशब्दविशेषितकामशब्दोक्तेषु विषयेष्वपीत्यर्थः । अनेन भाष्यगततत्रेतिपदमुक्ततात्पर्यं भवति ।

## भावदीपः

**भोगेयत्तेति ॥** भोगस्य मर्यादित्यर्थः । एवं भोगेऽनुपपत्तिनिरासेन समर्थिते सत्यत्र तदियत्ता-चिन्तनमवसरप्राप्तमिति भावः । अन्यथा निरङ्कुशत्व इत्यर्थः । उक्तिर्जन्मादिसूत्र इत्यर्थः । सङ्कल्पादेव समस्तसम्भवात्सृष्ट्यादिकार्यसम्भव इत्यन्यत्रोक्तप्रतिज्ञामुक्त्वा भाष्यसूचितहेतुं तावदाह ॥ **आप्नुवन्तीति ॥** श्रुतेर्निरवकाशतोपपादकत्वेन न्यायविवरणोक्तहेतुं व्यनक्ति ॥ **न च सर्वेति ॥** अथाप्यस्तु सङ्कोच इत्यत आह ॥ **सङ्कोच इति ॥** प्रकरणादि तु न कारणं बद्धस्यासामर्थ्येऽपि मुक्तस्य जगद्व्यापारसामर्थ्यसम्भवात् । मुक्तस्यापि जीवत्वेन बद्धवदसामर्थ्ये बाधकमाह ॥ **अन्यथेति ॥ अत इति ॥** सत्यकामत्वयुक्त्या निरवकाशश्रुतिबलादित्यर्थः ॥ **पूर्वपक्षं निराह ॥ नेति ॥** तस्य पर्यवसितार्थपरतया सृष्ट्यादिभ्योऽन्यानाप्नोतीति भाष्यं व्याचष्टे ॥ **किं त्विति ॥** शङ्कोत्तरत्वेनापि समग्रभाष्यं व्यनक्ति ॥ **सर्वानिति ॥ तत्रापीति ॥** सत्यकामत्वयुक्त्यनुसङ्गृहीत-श्रुतावपीत्यर्थः ॥ शेषं मत्वाह ॥ **इत्यर्थोपपत्तेरिति ॥**

## अभिनवचन्द्रिका

**भोगेयत्तासमर्थनादिति ॥** न मुक्तनां निरुपचरितसर्वकामावाप्तिः अपि तु स्वयोग्यसर्वकामा-वाप्तिरिति समर्थनादित्यर्थः ॥ **भगवत इति ॥** उपलक्षणमेतत् । मुक्तेषु तारतम्याभावप्रसङ्गात्

(अभिनवचन्द्रिका)

इत्यपि ग्राह्यम् ॥ **सृष्ट्यादिव्यापारानिति** ॥ इदं तु संदेहप्रदर्शनमुदाहरणमात्रम् । मुक्ताः स्वोत्तमैश्वर्यं लभन्ते न वेत्यपि ग्राह्यम् ॥ **सिद्धान्तयत्सूत्रमिति** ॥ 'सर्वान्कामानाप्त्वा' इति श्रुत्यर्थकथनेन मुक्तस्य जगद्व्यापारप्राप्तेः निष्प्रामाणिकत्वसूचनमुखेन सिद्धान्तं सूचयत्सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । एतेन सूत्रे सिद्धान्तहेत्वनभिधानात् सूत्रस्य सिद्धान्तप्रापकत्वाभिधानमयुक्तमिति परास्तम् । सूत्रे प्रतिज्ञाऽभावात् प्रतिज्ञामध्याहरति – **न मुक्तानामिति** ॥ प्रतिज्ञया सूत्रं सङ्गमयितुं शङ्कते – **सर्वान्कामानिति** ॥ **सत्यं तत्रापीति** ॥ सत्यं सर्वकामावाप्तिः श्रुत्योच्यत इति तत्रापि तथापि सा श्रुतिर्नास्माकं बाधिका । तस्याः श्रुतेः जगद्व्यापारवर्जमेव सर्वान् कामानाप्त्वेत्यर्थोपपत्तेरिति भावः । कुतः श्रुतेः **सङ्कोच इति** ॥ 'सर्वान् कामानाप्त्वा' इति श्रुतेः कुतो जीवपरत्वम् । जीवपरत्वेऽपि कुतः श्रुत्यर्थसंकोच इति तटस्थ आक्षिपतीत्यर्थः । परमसाध्यं निर्दिशति ॥ **युक्त एवेति** ॥ जीवपरत्वेऽपि कुतः श्रुत्यर्थसंकोच इति द्वितीयाक्षेपं परिहरति – **जीवानां चेति** ॥ प्रकरणात् श्रुत्युक्तो जीवः । असन्निहितत्वात्तु श्रुत्यर्थसंकोच इति सूत्रयोजना द्रष्टव्या । एतेन असन्निहितत्वादित्येतावतैव पूर्णत्वात् सूत्रे प्रकरणादिति व्यर्थं समुच्चयायोग इति च परास्तम् ॥ **ता वा एता इति** ॥ तावा एताः = प्रसिध्दाः चतस्रः = 'भूर्भुवःस्वर्महरिति चतुर्विध-व्याहृतिप्रतिपाद्याः अनिरुध्दाद्याः भगवन्मूर्तयः, प्रत्येकं अनिरुध्दादिभेदेन चतुर्धा । या एताः चतस्रः = अनिरुध्दाद्याः चतस्रः = प्रत्येकमनिरुध्दादिभेदेन चतस्रः व्याहृतिप्रतिपाद्यः, ता एताः षोडश भगवन्मूर्तीः, यो वेद स ब्रह्म वेदेत्यर्थः ॥ **अमुक्तज्ञानिनामिति** ॥ अमुक्तस्वरूपं साकल्येन पश्यतां ज्ञानिनाममुक्तनिष्ठतया जगदैश्वर्याऽदर्शनात् नायं श्रुत्यर्थ इत्यर्थः । किमेतच्छ्रुतिबलेनाऽशेषमुक्तानां परमेश्वरवत् जगदैश्वर्यमुच्यते, उत हिरण्यगर्भस्यैवेति विकल्पं मनसि कृत्वा पक्षद्वयप्रतिषेधं युगपत्प्रतिजानीते – **नैतच्छ्रुतिबलेनेति** ॥ एतच्छ्रुतिबलेन हिरण्यगर्भस्य वा, अशेषमुक्तानां वा जगदैश्वर्यं न सिध्यतीत्यर्थः । प्रतिज्ञाद्वये युगपत् हेतुमाह– **मुक्त-हिरण्यगर्भस्यैवेति** ॥ अत्रायं विवेकः – हिरण्यगर्भमात्रविषयत्वाच्छ्रुतेः नाऽनया सर्वेषां जगदैश्वर्यसिद्धिः । हिरण्यगर्भस्यापि मण्डलाधिपत्यप्रतिपादकत्वात् नाऽनया सर्वैश्वर्यसिद्धिरिति । **आधिकारिकपदमिति** ॥ श्रुत्यन्तरसिद्धस्य स्वावरनियामकत्वस्य सूचनायाऽऽधिकारिकपदमित्यर्थः ।

**ननु मुक्तानामिति** ॥ मुक्तेषु तारतम्यसद्भाव एव सर्वमिदमुपपन्नं । भवेत् तदेव कुत इत्यतः प्रमाणोदाहरणेन तारतम्योक्तिपूर्वकं हिरण्यगर्भस्य सर्वनियामकत्वं देवानां स्वावरनियामकत्वं

(अभिनवचन्द्रिका)

चाहाऽऽचार्यो भाष्यकार इत्यर्थः । आत्मत्वोपासकानां श्वेतद्वीपगमनोक्तिरयुक्ता । 'योग्यत्वं चात्र विवक्षितम्' इति गीताभाष्ये न सर्वेषां मुक्तानां श्वेतद्वीपावाप्तिः, किं तु अत्र श्वेतद्वीपावाप्तौ योग्यत्वं च विवक्षितमिति अभिधानादित्यत आह – **योग्यत्वं चेति** ॥ गीताभाष्ये निवासार्थमेव योग्यत्वमुक्तं 'न तु दर्शनार्थमुक्तमिति न तद्विरोध इति भावः ॥ **पृथिमीमारभ्येति** ॥ पृथिवीमारभ्य केचिदत्रैव मुच्यन्ते' इत्युक्तक्रमेण स्थितेषु यावत्सुस्थानेषु नारायणोऽस्ति तावत्सर्वस्थानेषु सालोक्याद्यस्त्येवेत्यर्थः । ननु नारायणावस्थानं न सालोक्यादिप्रयोजकं नरकादावपि तत्प्रसङ्गादित्यत आह– **ईश्वरस्येति** ॥ मुक्तप्राप्यत्वरूपविशेषस्य उक्तस्थानेष्वेवावस्थितेरत्रैव सालोक्यादीति भावः । अत एव मूले क्षीरसागर इति यावत्सु स्थानेषु नारायाणोऽस्ति तावत्सु सालोक्याद्यस्तीत्युक्तम् । अन्यथा क्षीरसागर इति पदं व्यर्थं स्यात् चकारेणेति ॥ 'प्रत्यक्षोपदेशात्' नेति नकारः चकारेणाऽनुषज्यत इत्यर्थः ।

ननु किं चकारं प्रयुज्य तेन नकारानुकर्षणेन । नकार एव किं न प्रयुज्यते । न च सूत्रलाघवं भवति । चकारप्रयोगे वा नकारप्रयोगे वा साम्यात् । प्रत्युत चकारप्रयोगे प्रतिपत्तिगौरवमिति चेन्न । अनुवृत्यैव लभ्यस्य नकारस्य प्रयोगायोगात् । न च चकारवैयर्थ्यम् । चकाराप्रयोगे उत्तरसूत्रेषु नकारानुवृत्तिर्विज्ञायेत । तन्मा विज्ञायीति चकारप्रयोगः । 'चानुकृष्टं न सर्वत्र' इति नियमात् चकारप्रयोगे उत्तरसूत्रेष्वनुवृत्त्यभावो विज्ञायते । यद्यपि उत्तरत्र नञोऽन्वयानुपपत्त्यापि अनुवृत्त्यभावो विज्ञातु शंक्यः, तथापि अन्तरङ्गज्ञापकाभाव एव बहिरङ्गमन्वेषणीयम् । इह तु शिष्यहितैषिणा सूत्रकृता अन्तरङ्गज्ञापकमुक्तम् । मानवमावर्तमिति पदद्वयेनोक्तमर्थं तद्वाचकप्रसिद्धपदस्य व्युत्पत्तिप्रदर्शनमुखेन ज्ञापयति – **मानवा यत्रेति** ॥ एतेन मानवावर्तमिति समस्तपदस्य मूलेऽभावात् तद्व्युत्पत्तिप्रदर्शनमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** मुक्ता अपि पारमेश्वरं जगद्व्यापारमाप्नुवन्ति । 'सर्वान्कामानाप्नोति' इति श्रुतेः । न च सर्वशब्दसंकोचः । बाधकाभावात् । अन्यथा सत्यकामत्वव्याघातः । कामिताऽप्राप्तौ दुःखप्रसङ्गश्च । अतो मुक्तानां जगज्जन्मादिकर्तृत्वात् अयुक्तं लक्षणसूत्रमिति ।

**सिद्धान्तस्तु** न मुक्तनां सर्वकामावाप्तिः । प्रमाणाभावात् । न च 'सर्वान्कामानाप्त्वा' इति श्रुतिस्तत्र प्रमाणमिति वाच्यम् । योग्यसर्वकामाऽवाप्तेरेव श्रुत्यर्थत्वात् । ननु 'सर्वान् कामानाप्त्वा'

(अभिनवचन्द्रिका)

इति श्रुतेः ईश्वरपरत्वेन जीवपरत्वाभावात् नानया श्रुत्या मुक्तस्य जगद्व्यापारसिद्धिरित्येवोत्तरं युक्तमिति चेत् उच्यते सङ्कोचेनैवोत्तरं युक्तं, श्रुतेर्जीवपरत्वात् तत्कुत इति चेत्, 'शरीरभेदादुत्क्रम्य' इति जीवप्रकरणात् । अस्तु श्रुतेः जीवपरत्वं, सङ्कोचः कुत इति चेत् जीवस्य तादृक्-सामर्थ्यविधुरत्वात् । ननु अस्त्येव मुक्तानां जगदैश्वर्यं, 'सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रत्यक्षोपदेशादिति चेन्न । किमनया श्रुत्या सर्वमुक्तानां जगदैश्वर्यं सिध्यतीत्युच्यते, उत चतुर्मुखस्य । नाद्यः श्रुतेश्चतुर्मुखविषयत्वात् । नापि द्वितीयः चतुर्मुखस्य मुक्ताऽऽधिकारिक-मण्डलाधिपत्यस्यैवाऽभिधानेन सर्वाधिपत्यानभिधानात् । ननु ब्रह्मादिदेवानां मुक्तनियामकत्वमात्रमेव कुतोऽङ्गीक्रियते संसारिनियामकत्वमपि किं न स्यात् इति चेत्, न 'इमं मानवमावर्तं नावर्तन्त' इति निषेधात् । अतो मुक्तानां जगद्व्यापाराभावात् युक्तं लक्षणसूत्रमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

यदि मुक्तानां सत्यकामत्वाविच्छया चिता वाचिता वा भोगस्तत एव सृष्ट्यादि-व्यापारोऽप्यस्त्वित्यत्याक्षेपोत्थानादनन्तरसङ्गतिः ॥ **जगदिति** ॥ अत्र मुक्ताः जगत्सृष्ट्यादि-व्यापारानाप्नुवंत्युत नेति चिन्ता । तदर्थं तेषां सत्यकामत्वप्रतिपादकश्रुतौ सर्वशब्दस्य सङ्कोचे कारणं नास्त्युतास्तीति । सर्वान्कामानाप्त्वाऽमृत इति भाष्यसूचितं समस्तकार्यमिति पूर्वाधिकरण-सम्बन्धिनमेव पूर्वपक्षन्यायं प्रदर्शयिष्यन् न्यायार्थतया साध्यमाह ॥ **आप्नुवन्तीति** ॥ मुक्ताः समस्तं कार्यं सृष्टादिव्यापारमाप्नुवन्तीत्यर्थः । कुत इत्यतः समस्तकाम्यप्राप्त्याख्यकार्यश्रुतेरिति भावेनाह ॥ **सर्वानिति** ॥ ननु भवेच्छ्रुतिबलात्समस्तकामाप्तिः सृष्ट्यादिव्यापारावाप्तिस्तु कुतः समस्तस्य सृष्ट्यादिरूपव्यापाराख्यकार्यस्यापि समस्तकाम्यान्तर्भावादिति भावेनाह ॥ **सृष्ट्यादीति** ॥ कुतो न सङ्कोच इत्यतो मुक्तस्य समस्तकामितवत्वेन कामनायोग्यसृष्ट्यादिसमस्तकार्यप्राप्त्युपपत्तेरिति भावेनाह ॥ **मुक्तस्येति** ॥ विपक्षे बाधकपरत्वेनापि न्यायं विवृणोति ॥ **अन्यथेति** ॥ एतेन सम्यगस्तं निरस्तं व्याहतं कार्ये सत्यकामत्वाख्यं प्रसज्येतेति विवृतं भवति । सूत्रे मुक्तः जगद्व्यापारवर्जं सर्वकामानाप्नोतीत्यध्याहारं च मत्वा प्रवृत्तं सृष्ट्यादिभ्योऽन्यानाप्नोतीति भाष्यांशं तावद्व्याचष्टे ॥ **न मुक्तानामिति** ॥ तर्हि श्रुतिविरोध इत्याशङ्क्य तत्सावकाशत्वप्रतिपादनपरत्वेन सूत्रं व्याकुर्वन् कामानित्यादि समग्रभाष्यं व्याचष्टे ॥ **सर्वानित्यादिना** ॥ आप्नोतीत्यतः परं

(वाक्यार्थमुक्तावली)

इत्यर्थोपपत्तेरिति शेषः । ततश्च यद्यपि सर्वान् कामानाप्त्वाऽमृतः समभवदित्युच्यते । तथापि तत्र श्रुतावपि सृष्ट्यादिभ्योऽन्यानाप्नोतीत्यर्थोपपत्तेरिति भाष्यार्थः । सूत्रस्यापि जगद्व्यापारवर्जं सर्वान् कामानाप्त्वेति श्रुत्यर्थ इत्यध्याहारेणार्थ इति भावः ।

## तत्त्वसुबोधिनी

भोगपक्षेऽपि भोगोपपत्युक्तिमत्तासमर्थनादिति । पूर्वाधिकरणे कारणनिर्णयेन परिहृतानुपपत्तिकस्य भोगस्यात्रेयत्तासमर्थनादनन्तरसङ्गतिरिति भावः । सर्वान् कामानाप्त्वाऽमृतः समभावदिति भाष्योक्तयुक्तिमाह ॥ **सर्वान् कामनिति** ॥ सङ्कल्पादेव समस्तसम्भवादिति न्यायविवरणोक्तां युक्तिमाह ॥ **मुक्तस्येति** ॥ प्रकरणादसन्निहितत्वाच्चेति सूत्रनिरसनीयमाह ॥ **सङ्कोच इति** ॥ तत्रापीति सर्वशब्दविशेषितकामशब्दोक्तेषु विषयेष्वपि ।

## वाक्यार्थविवरणम्

**भोगेयत्तेति** ॥ भोगे इयत्ता मर्यादित्यर्थः ॥

## वाक्यार्थमञ्जरी

इयत्ता मर्यादा कामान् काम्यान् ॥ **अन्यथेति** ॥ काम्यस्यापि सृष्ट्यादिव्यापारस्य लाभ इत्यर्थः ॥ ॐ जगद्व्यापारवर्जं ॐ ॥ मुक्तः जगत्सृष्ट्यादिव्यापारवर्जतदतिरिक्तानेव कामानाप्नोतीत्यर्थः ।

## सूत्रभाष्यम्

कुतः?–

**॥ ॐ प्रकरणादसन्निहितत्वाच्च ॐ ॥ १८ ॥**

**जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च । वाराहे च–**

**'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।**
**मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुञ्जते ॥**

(सूत्रभाष्यम्)

**तद्योग्यता नैव तेषां कदाचित्क्वापि विद्यते ।**
**न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत्' इति ॥**

## तत्त्वप्रदीपिका

कुतः 'सर्वान्कामान्' इति श्रुतेरयमर्थः स्यादित्यत आह– **प्रकरणादसन्निहितत्वाच्च ॥** 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्वं उत्क्रम्य' इति जीवप्रकरणं ह्येतत् । न च तस्य तादृक् सामर्थ्यमस्ति । न च मुक्तो जगत्सृष्ट्यादीन्कामयति । विविदिषाकाल एवैतद्विरक्तिसंस्कारपाटवसम्भवात् ।

## तत्त्वप्रकाशिका

कुतः श्रुतेः सङ्कोच इत्याक्षिपति ॥ **कुत इति** ॥ तत्परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ **प्रकरणादिति** ॥ युक्त एव सर्वश्रुतेः सङ्कोचः । अत्र जीवस्योच्यमानत्वादस्य जीवप्रकरणत्वेन तदवगमाच्छरीरभेदादूर्ध्वमुत्क्रम्येति श्रवणाज्जीवानां च जगद्व्यापारशक्तिरहितत्वाद्बाधकवशा-त्सामान्यश्रुतेः सङ्कोचस्य न्यायप्राप्तत्वादिति भावः । तदयं प्रयोगः । न मुक्तो जगद्व्यापारशक्तिमान् । जीवत्वात् । सम्प्रतिपन्नवदिति । संसारिणां जगद्व्यापारशक्त्यभावेऽपि सत्यकामानां मुक्तानां तत्सम्भव इत्यत आह ॥ **वाराहे चेति** ॥

## भावबोधः

'प्रकरणादसन्निहितत्वाच्च' इति सूत्रनिरसनीयमाह– **सङ्कोच इति** । अस्य जीवप्रकरणत्वं कुतो ज्ञायत इत्यत आह– **शरीरभेदादिति** ॥ असत्वकामत्वस्योपाधित्वशङ्कायां तन्निरासाय पक्षे साध्यग्राहिकां स्मृतिमवतारयति ॥ **संसारिणामिति** ॥ उपलक्षणं चैतत् । 'व्यापारो जगतो विष्णौ मुक्तानां दुःखभोगगः' इति न्यायविवरणोदाहृतश्रुतिरस्मिन्नर्थे मानमिति बोध्यम् ।

## भावदीपः

पूर्वभाष्येणान्वयं सूचयन् हेतुं स्वयमध्याहृत्य तदुपपादकत्वेन जीवेत्यादिभाष्यं व्यनक्ति ॥ **युक्त एवेति** ॥ **सर्वेति** ॥ सर्वानिति श्रुतेः ॥ **अत्रेति** ॥ श्रुतावित्यर्थः । इति श्रवणात् ऐतरेय इत्यर्थः । तस्य शरीरभेदादूर्ध्वमुत्क्रम्येति पाठेऽपि अनुपयोगादूर्ध्वपदानुक्तिः ॥ **सामान्येति** ॥ सर्वानिति

(भावदीपः)

श्रुतेः । प्रकरणादिति हेतोः सामर्थ्यवैधुर्यरूपसाध्ये साक्षादनन्वयादुत्तरोपयोगायाह ॥ **तदयं प्रयोग इति** ॥ जीवनकरणं हेतुरिति भावः । सम्प्रतिपन्नो बद्धजीवः । हेतोरप्रयोजकत्वशङ्कानिरासकतया स्मृतिमवतारयति ॥ **संसारिणामिति** ॥ **इत्यत आहेति** ॥ विपक्षे स्मृतिविरोध इति भावः ।

## वाक्यार्थमुक्तावली

**कुत इति** ॥ कुतो बाधकादित्यर्थः । सर्वान् कामानाप्त्वाऽमृत इत्युक्तो न जगद्व्यापारशक्तिमान् जीवत्वादित्यनुमानं बाधकमिति मनसि निधाय यत्र जीवत्वं तत्र जगद्व्यापारशक्तिविदूरत्वं यथा संसारीति । संसारिणां ब्रह्मादीनामतीतानागतजगद्व्यापृतिशक्तिरस्ति । 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव' इति श्रुतेरित्यर्थमभिप्रेत्य व्याप्तिकथनाय जीवानामसन्निहितत्वाज्जगद्व्यापारशक्तिविदूरत्वादित्युक्तम् । अप्रयोजकत्वमाशङ्क्य यदि मुक्तो जगद्व्यापारशक्तिमांत्स्यात्तर्हि जीवो न स्यात् । न चेष्टापत्तिः प्रकरणाज्जीवत्वावगमादिति भावेन प्रकरणादित्युक्तम् । अप्रयोजकत्वशङ्कापरिहारेण व्याप्तिकथनस्य समुच्चयार्थं चशब्दः । जगद्व्यापारवर्जमेव सर्वान् कामानाप्त्वेति श्रुत्यर्थ इति प्रतिज्ञांशस्यात्रानुवृत्तेश्चेति भावेन व्याचष्टे ॥ **युक्त एवेत्यादिना** ॥ जीवप्रकरणत्वं कुत इत्यत उक्तं ॥ **शरीरेति** ॥ स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्येति जीवलिङ्गश्रवणादित्यर्थः । ततश्चायं सूत्रार्थः । युक्त एव जगद्व्यापारवर्जं सर्वान् कामानाप्त्वेति सङ्कोचः । अत्रोक्तस्य प्रकरणाज्जीवत्वाज्जीवानां च तादृशशक्तिविदूरत्वाच्चेति अनुमानस्यासत्यकामत्वमुपाधिरित्याशङ्क्य तन्निरासाय पक्षे साध्यग्राहिकां सत्यकामत्वेऽपि स्वयोग्यविषय एव कामो नायोग्य इति विशेषक्लृप्त्याख्यसिद्धान्तन्यायस्फोरिकां चशब्दसूचितां स्मृतिमवतारयति ॥ **संसारिणामिति** ॥

## तत्त्वसुबोधिनी

अत्र जीवस्योच्यमानत्वं कुत इत्यत आह ॥ **अस्येति** ॥ अस्य जीवप्रकरणत्वात् । कुतो ज्ञायत इत्यत आह ॥ **जीवानामिति** ॥ असत्यकामत्वस्योपाधित्वशङ्कायां तन्निरासपक्षे साध्यग्राहिकां स्मृतिमवतारयति ॥ **संसारिणामिति** ॥

## वाक्यार्थविवरणम्

**सम्प्रतिपन्नवदिति** ॥ संसारिजीववदित्यर्थः ॥ **संसारिणामिति** ॥ तथा चोक्तानुमाने संसारित्वमुपाधिरिति भावः ॥ **इत्यत आहेति** ॥ आगमेन पक्ष एव साध्यनिश्चयेन तत्रैव साध्यव्यापकत्वभङ्गान्न तस्य उपाधित्वमित्याहेत्यर्थः ।

## वाक्यार्थमञ्जरी

अस्य जीवप्रकरणत्वाज्जीवानां च जगद्व्यापारे असन्निहितत्वात् सामर्थ्यरहितत्वाच्चेत्यर्थः । सर्वश्रुतेः सर्वशब्दस्य अस्य जीवप्रकरणत्वं कुतो ज्ञायत इत्यत आह ॥ **शरीरभेदादिति** ॥ शिरोमध्यविदारणाद्देहादुत्क्रम्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॐ ॥ १९ ॥**

**'ता यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते ।**

**गारुडे च–**

**'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।**
**केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥**
**अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।**
**केचित्स्वर्गे महर्लोके जने तपसि चापरे ॥**
**केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।**
**तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ॥**
**सालोक्यं च सरूपत्वं सामीप्यं योगमेव च ।**
**इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे ॥**
**पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः ।**
**मानुषा वर्णभेदेन तथैवाऽऽश्रमभेदतः ॥**

(भावदीपः)

श्रुतेः । प्रकरणादिति हेतोः सामर्थ्यवैधुर्यरूपसाध्ये साक्षादनन्वयादुत्तरोपयोगायाह ॥ **तदयं प्रयोग इति** ॥ जीवनकरणं हेतुरिति भावः । सम्प्रतिपन्नो बद्धजीवः । हेतोरप्रयोजकत्वशङ्कानिरासकतया स्मृतिमवतारयति ॥ **संसारिणामिति** ॥ **इत्यत आहेति** ॥ विपक्षे स्मृतिविरोध इति भावः ।

## वाक्यार्थमुक्तावली

**कुत इति** ॥ कुतो बाधकादित्यर्थः । सर्वान् कामानाप्त्वाऽमृत इत्युक्तो न जगद्व्यापारशक्तिमान् जीवत्वादित्यनुमानं बाधकमिति मनसि निधाय यत्र जीवत्वं तत्र जगद्व्यापारशक्तिविदूरत्वं यथा संसारीति । संसारिणां ब्रह्मादीनामतीतानागतजगद्व्यापृतिशक्तिरस्ति । 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव' इति श्रुतेरित्यर्थमभिप्रेत्य व्याप्तिकथनाय जीवानामसन्निहितत्वाज्जगद्व्यापारशक्तिविदूरत्वादित्युक्तम् । अप्रयोजकत्वमाशङ्क्य यदि मुक्तो जगद्व्यापारशक्तिमांत्स्यात्तर्हि जीवो न स्यात् । न चेष्टापत्तिः प्रकरणाज्जीवत्वावगमादिति भावेन प्रकरणादित्युक्तम् । अप्रयोजकत्वशङ्कापरिहारेण व्याप्तिकथनस्य समुच्चयार्थं चशब्दः । जगद्व्यापारवर्जमेव सर्वान् कामानाप्त्वेति श्रुत्यर्थ इति प्रतिज्ञांशस्यात्रानुवृत्तेश्चेति भावेन व्याचष्टे ॥ **युक्त एवेत्यादिना** ॥ जीवप्रकरणत्वं कुत इत्यत उक्तं ॥ **शरीरेति** ॥ स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्येति जीवलिङ्गश्रवणादित्यर्थः । ततश्चायं सूत्रार्थः । युक्त एव जगद्व्यापारवर्जं सर्वान् कामानाप्त्वेति सङ्कोचः । अत्रोक्तस्य प्रकरणाज्जीवत्वाज्जीवानां च तादृशशक्तिविदूरत्वाच्चेति अनुमानस्यासत्यकामत्वमुपाधिरित्याशङ्क्य तन्निरासाय पक्षे साध्यग्राहिकां सत्यकामत्वेऽपि स्वयोग्यविषय एव कामो नायोग्य इति विशेषक्लृप्त्याख्यसिद्धान्तन्यायस्फोरिकां चशब्दसूचितां स्मृतिमवतारयति ॥ **संसारिणामिति** ॥

## तत्त्वसुबोधिनी

अत्र जीवस्योच्यमानत्वं कुत इत्यत आह ॥ **अस्येति** ॥ अस्य जीवप्रकरणत्वात् । कुतो ज्ञायत इत्यत आह ॥ **जीवानामिति** ॥ असत्यकामत्वस्योपाधित्वशङ्कायां तन्निरासपक्षे साध्यग्राहिकां स्मृतिमवतारयति ॥ **संसारिणामिति** ॥

## वाक्यार्थविवरणम्

**सम्प्रतिपन्नवदिति** ॥ संसारिजीववदित्यर्थः ॥ **संसारिणामिति** ॥ तथा चोक्तानुमाने संसारित्वमुपाधिरिति भावः ॥ **इत्यत आहेति** ॥ आगमेन पक्ष एव साध्यनिश्चयेन तत्रैव साध्यव्यापकत्वभङ्गान्न तस्य उपाधित्वमित्याहेत्यर्थः ।

## वाक्यार्थमञ्जरी

अस्य जीवप्रकरणत्वाज्जीवानां च जगद्व्यापारे असन्निहितत्वात् सामर्थ्यरहितत्वाच्चेत्यर्थः । सर्वश्रुतेः सर्वशब्दस्य अस्य जीवप्रकरणत्वं कुतो ज्ञायत इत्यत आह ॥ **शरीरभेदादिति** ॥ शिरोमध्यविदारणाद्देहादुत्क्रम्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॐ ॥ १९ ॥**

**'ता यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते ।**

गारुडे च–

'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥
अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ॥
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।
तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ॥
सालोक्यं च सरूपत्वं सामीप्यं योगमेव च ।
इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे ॥
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः ।
मानुषा वर्णभेदेन तथैवाऽऽश्रमभेदतः ॥

(सूत्रभाष्यम्)

क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ॥
रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः ।
नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च ।
सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ॥
पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः ।
स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता ॥
सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।
चिद्रूपान्प्राकृतांश्चापि विना भोगांस्तु कांश्चन ।
भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृता' इति ॥

## तत्त्वप्रदीपिका

प्रत्यक्षेत्यादिसूत्रम् ॥ 'तावा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति' इति ब्रह्मविदो मुक्तस्य प्रत्यक्षमेव सर्वदेवपूज्यत्वोपदेशात् जगदैश्वर्यमस्ति, कुतस्तस्य सृष्ट्यादिकं न स्यादिति चेन्न । मोक्षाधिकारिणां पदस्थानां च सतां मुक्तानां मण्डलस्याधिपतिर्ब्रह्मा हि तत्रोच्यते । न मुक्तमात्रम् । तेषां मोक्षेऽपि नियमनाधिकारो ब्रह्मणः । तस्माच्चाऽधिकारिका उच्यन्ते । तत्र तत्र स्थित्वा तद्भोगांश्च भुङ्क्ते इति तत्स्थ इति सूत्रितम् । अत्र हि श्रुतौ 'भूर्भुवःस्वरिति वा एतास्तिस्रो व्याहृतयः तासामुह स्मै तां चतुर्थीं माहाचमस्यः प्रवेदयते मह इति' इत्युपक्रम्य भूर्लोकादिषोडस्थानस्थः तत्तन्नामकश्च नामप्रवृत्तिहेतुत्वान्नारायणो माहाचमस्यनाम्ना ब्रह्मणा विज्ञायत इत्युच्यते । स एव तद्विद्वां 'स्तायो वेद स वेद ब्रह्मा' इति परामृश्यते । उक्तं च व्याहृतितत्वे–

'लोकज्योतिः प्राणवेदेष्वेकः स पुरुषोत्तमः ।
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः ॥
महाचमसनामाऽसौ यस्मादतिचमत्कृतिः ।
माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः ॥
एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः ।
स एव ब्रह्मवित्तस्मात्पूज्यते मुक्तिगोऽपि सन् ॥
सर्वदेवैरतितरां यः सम्यक् षोडशात्मवित्' इति ॥

(तत्त्वप्रदीपिका)

'भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः ।
सुवः सुबहुरूपत्वान्महः पूर्णत्वतो विभुः ॥
तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् ।
स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः ॥
तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः ।
वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः ॥
स एव सर्ववेदेक्तो सर्वविद्यासु चेश्वरः ।
प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः ॥
इतिहासपुराणं च पञ्चरात्रं च सर्वशः ।
सम्यग्व्याहरणाद्विष्णोः श्रुता व्याहृतयस्त्विति ॥
सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु ।
विशेषेणाऽहरन्तीमं विष्णुमित्यथवा स्मृता' इति व्याहृतिसारे ॥

'केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन' इति, सृष्टौ सकृत् श्वेतद्वीपगमनात्परमस्मा-देशान्नोत्क्रामन्तीत्यर्थः । अन्यथा 'बहुनाऽत्र किमुक्तेन' इत्यादि वचनविरोधात् । तदोकोग्र-ज्वलन्मित्यादिना ज्ञानिनो देहदेशनिर्गमस्योक्तत्वाच्च । स्वजगद्व्यापृतिः स्वप्रतिबिम्बमुक्तजीवेषु व्यापारः ॥

## तत्त्वप्रकाशिका

मुक्तस्य जगदैश्वर्याभावमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **प्रत्यक्षेति** ॥ अस्त्येव मुक्तानां जगदैश्वर्यम् । 'ता वा एताश्चतस्रश्चतुर्धा चतस्रश्चतस्रो व्याहृतयः ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इति स्फुटं मुक्तस्याखिलदेवतापूज्यत्वादिश्रवणात् । न च तदमुक्तविषयम् । अमुक्तज्ञानिनां तददर्शनादिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ नैतच्छ्रुतिबलेनाशेषमुक्तानां जगद्विषयैश्वर्यसिद्धिः । मुक्तहिरण्यगर्भस्यैव मुक्ताधिकारिकदेवता-पूज्यत्वाभिधायकत्वात् । 'माहाचमस्य प्रवेदयत' इत्युपक्रमादिति भावः । अन्यदेवानामपि मुक्तस्वावरप्रेरणाधिकारित्वमस्तीति सूचनायाधिकारिकपदम् । ननु मुक्तानां देवानां स्वावरमुक्त-नियामकत्वं हिरण्यगर्भस्याशेषमुक्तनियामकत्वमित्येतत्कुत इति तत्राह ॥ **गारुडे चेति** ॥ न चानेनानन्दादयः प्रधानस्येत्युक्तिविरोधः । तदुपासनस्य सम्पूर्णमोक्षार्थत्वात् । अत्र 'नोत्क्रामन्ति'

(तत्त्वप्रकाशिका)

**इति सम्पूर्णमोक्षाभावोक्तेः । न च 'बहुनात्र किमुक्तेन' इत्युक्तिविरोधः । सकृच्छ्वेतद्वीप-गमनाभ्युपगमात् ।**

**'श्वेतं द्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः ।**
**अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु' । इति वचनात् ।**

**योग्यत्वं चात्र विवक्षितमित्येतदपि तत्रावस्थानायेति गमयितव्यम् । भूम्यादिषु मुक्तस्थितौ न मोक्षोऽयं स्यात् । सालोक्यादिचातुर्विध्यानन्तर्भावादित्यत आह ॥ सालोक्यं चेति ॥ पृथ्वीमारभ्योक्तक्रमेण यावन्नारायणस्तावत्सर्वस्थानेष्वपि सालोक्याद्यस्त्येव । ईश्वरस्य सर्वत्रावस्थितेरिति भावः । मानुषा इत्यादि तेषां तारतम्यकथनम् ॥**

## गुर्वर्थदीपिका

माहाचमस्यः प्रवेदयत इत्युपक्रमादिति वदता महाचमसविद्याधिकारित्वं चतुर्मुखस्यैवेति सूचितम् । किं च 'सर्वेऽस्मै देवा बलिमावहन्ति' इत्यत्रोक्तं सर्वदेवपूज्यत्वं न सर्वदेवावराणां ऋष्यादीनां नापि सर्वदेवानां घटते । नीचानामुच्चपूज्यत्वायोगादात्माश्रयाच्च । अस्मा इत्येकवचनायोगाच्च । अतः परिशेषाच्चतुर्मुख एवेति सिद्ध्यति । टीकाकृता आदिपदसङ्गृहीतश्रुतौ ऋतस्य परमात्मनो नाभौ प्रथमजोऽहमस्मीति चतुर्मुखलिङ्गाच्चेत्यपि द्रष्टव्यम् । पूज्यत्वादिश्रवणादित्यत्रादिपदेन 'अहमस्मि प्रथमजा ऋतस्य' इति वक्ष्यमाणं सर्वदेवेभ्यः प्रथमोत्पन्नत्वं सर्व-भुवनाभिभावकत्वं च गृह्यते । अस्यापि मुक्तविषयत्वादिति शङ्कितुराशयः । मुक्तहिरण्यगर्भस्यैवेत्यत्र मुक्तहिरण्यगर्भस्य सकलमुक्तोपास्यत्ववज्जगत्स्रष्टृत्वादिकमपि तस्यैव स्यादिति न शङ्कनीयम् । स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि । मुक्तानां नैव कामः स्यादिति सृष्ट्यादिव्यापारस्य निषिद्धत्वेनानिषिद्धश्रौतमात्राङ्गीकारेऽपि निषिद्धाश्रौतस्वीकारस्य तन्न्यायेनाप्यप्राप्तेः ।

आधिकारिकमण्डलाधिपतिरिति वदता भाष्यकारेण अधिकारिमण्डलसम्बन्धी आधिकारिक-मण्डलः । सम्बन्धश्च स्वामिभृत्यभावरूप इति सूचितम् । नोत्क्रामन्ति कदाचनेत्यस्येतर-मुक्तवदेकवारं ब्रह्मनाड्योत्क्रमणेन मुक्तौ सत्यां पुनः स्वयोग्यस्थानस्थित्यनन्तरं नोत्क्रामन्ति नोर्ध्वं गच्छन्तीत्यर्थः । अत एव अत्रैव च स्थितिस्तेषामित्युक्तम् । अन्यथा लिङ्गशरीरभङ्गाभावा-

(गुर्वर्थदीपिका)

न्मुक्तिरेव न स्यादित्यर्थः । न चानेनेत्यत्रानेन परं देवमात्मेत्येवोपास्यात्रैव मुच्यन्त इत्यनेन आनन्दादयः प्रधानस्येत्युक्तविरोधः । तत्र चतुर्गुणत्वोपास्तेः कथितत्वादत्रैकगुणोपास्तेरेव कथितत्वाद्विरोध इति शङ्काग्रन्थार्थः । समाधानं तु मानुषेष्वपि गुणचतुष्टयोपासकाः सर्वत्र सञ्चारयोग्यत्वात्सम्पूर्णमुक्ताः । आत्मत्वमात्रोपासकास्तु नोत्क्रामन्ति कदाचेनेत्युक्त्या मेरुसर्पणासमर्थत्वादसम्पूर्णमुक्ता इति । वस्तुतस्तु शङ्कैवेयमुक्तविस्मरणशीलस्य मन्दस्यैव । प्राप्तेस्तु समञ्जसमिति प्रागुक्तसूत्रार्थविमर्शे सत्यात्मेत्येवोपासनेऽपि स्वयोग्यगुणचतुष्टयलाभेन विरोधस्यैवाभावात् । समाधानमप्यस्तु वा ज्ञाततेतिवत्प्रौढवादेनैव नाभ्युपगमवादेन । आनन्दादिगुणचतुष्टयाभावे मुक्तावानन्दाभावप्रसङ्गात् 'सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः । यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः' इत्यधिकारिभेदेनोपासनात्रैविध्यं विभजतो ग्रन्थकारस्य आत्मत्वाख्यैकगुणोपास्तेरसम्मतत्वाच्चेति विवेको द्रष्टव्यः । न चायोग्यं विमुक्तोऽपीत्यनेन योग्यमेव कामयत इति सूचितम् । तस्य तात्पर्यमाह ॥ **योग्यत्वं चात्र विवक्षितमिति** ॥ सालोक्याद्यस्त्येवेत्यत्र सर्वगतभगवन्मूर्त्या सह स्थितत्वमात्रेण सालोक्यादिकमिव सालोक्यादिकम् । मुख्यं तु सालोक्यादिकं वैकुण्ठश्वेतद्वीपानन्तासनाख्यभगवल्लोकस्थितमूर्तिविशेषापेक्षयैव 'आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्र' इति श्रुतेरिति ज्ञेयम् ।

## भावबोधः

**स्फुटमिति** ॥ अनेन सूत्रभाष्यगतं 'प्रत्यक्ष'पदमुक्ततात्पर्यं भवति । 'ता यो वेद' इति श्रुतौ तच्छब्दपरामृष्टं दर्शयितुं 'ता वा एताः' इति पूर्ववाक्योदाहरणमिति ज्ञातव्यम् । 'महाचमस्य' इत्युपक्रमादिति ।

'महाचमसनामासौ यस्मादतिचमत्कृतिः ।
महाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः ॥'

इति प्रमाणात् महाचमस्यशब्दस्य हिरण्यगर्भवाचकत्वादिति भावः । सूचनायाधिकारिकपदमिति । मुक्तदेवेषु नियामकत्वार्थकाधिकारिकपदप्रयोगेण स्वावरनियामकत्वं सूचितमिति भावः ॥ **गारुडे चेति** ॥ उपलक्षणं चैतत् ।

(भावबोधः)

'मुक्तानां न जगद्यत्नस्तथापि विबुधाः सदा ।
मुक्तानां तु नियन्तारस्तेषां ब्रह्मास्य वै हरिः ॥'

इति न्यायविवरणोदाहृतमप्यत्र मानम् ॥ **न चानेनेति** ॥ 'आत्मेत्येव परं देवम्' इत्यात्ममात्रोपासनप्रतिपादकेनेत्यर्थः । 'महाज्ञाना गच्छन्ति क्षीरसागरम्' इत्युक्त्या तदतिरिक्तानां क्षीरसागरस्थश्वेतद्वीपगमनं नास्तीत्यायातम् । तत्र विरोधमाशङ्क्य परिहरति– **न च बहुनात्रेति** ॥ सर्वमुक्तानां श्वेतद्वीपगमनाङ्गीकारे गीताभाष्यविरोधं तदभिप्रायकथनेन परिहरति– **योग्यत्वं चेति** ॥ 'अत्रैव च स्थितिस्तेषाम्' इत्यवस्थानस्यैव प्रकृतत्वादिति भावः । अत एव गीताभाष्यटीकायाम् 'निवासः' इति शेषपूरणेनैतद्व्याख्यातम् ॥ **उक्तक्रमेणेति** ॥ 'अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन' इत्याद्युक्तक्रमेणेत्यर्थः ॥

अत्राद्ये– जगद्व्यापारादिव्यतिरिक्ततत्तद्योग्यकतिपयकामावाप्तिप्रतिज्ञा । तदुपपादनाय द्वितीये– 'सर्व'शब्दस्य सङ्कुचितार्थे हेतूक्तिः । तृतीये– जगद्व्यापाराभावाक्षेपसमाधानम् । चतुर्थे– तत्सूत्रोक्तविरिञ्चोपलक्षितदेवादीनां भोगमर्यादोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ ता यो वेदेति तच्छब्दार्थव्यक्त्यर्थं पूर्वशेषमाह ॥ **ता वा इति** ॥ चतस्रः भूर्भुवः सुवर्महरिति चतस्रो व्याहृतयो व्याहृतिशब्दवाच्या अनिरुद्धादि-भगवद्रूपविशेषाः चतुर्धा प्रत्येकमनिरुद्धादिभेदेन चतुर्धा भवन्ति । एवं चतस्रः चतस्रः षोडशरूप-विशेषाः व्याहृतिशब्दिता इत्यर्थः । प्रत्यक्षेत्यस्य स्फुटमित्यर्थः । श्रुतेः सावकाशत्वं निराह ॥ **न चेति** ॥ नेत्यादिभाष्यं व्याचष्टे ॥ **नैतदिति** ॥ **इत्युपक्रमादिति** ॥

लोकज्योतिः प्राणवेदेष्वेकः स पुरुषोत्तमः ।
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः ।
महाचमसनामासौ यस्मादतिचमत्कृतिः ।
माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः ॥

इति तैत्तिरीयभाष्योक्तस्मृत्या चतुर्मुखोपक्रमादित्यर्थः । वक्ष्यमाणस्मृत्युपयोगायाह ॥ **अन्य-**

(भावदीपः)

**देवानामित्यादि** ॥ अधिकारे नियुक्ता आधिकारिकाः । तत्र नियुक्त इति ठक् ॥ **अनेनेति** ॥ आत्मत्वमात्रोपासनकथनेनेत्यर्थः । तदुपासनस्य चतुर्गुणोपासनस्येत्यर्थः ॥ **सम्पूर्णेति** ॥ चतुर्विधेत्यर्थः ।

अत्र नोत्क्रामन्तीत्यस्य विवरणम् ।
केचित्तु मानुषामुक्तिमनुत्क्रम्यैव देहतः ।
देहपाते तु देहस्य दोषान् भुक्त्वैव सर्वशः ।
मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान् ।
देहे जीर्णे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया ।
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ॥

इति बृहद्भाष्योक्तदिशा ध्येयम् । तत्वप्रदीपे तु नोत्क्रामन्तीत्यस्य सृष्टौ सकृच्छ्वेतद्वीपगमनात्परस्माद्देशान्नोत्क्रामन्तीत्यर्थः । अन्यथा बहुनात्रेति वचनविरोधात् । तदोकोग्रज्वलनमित्यादिना ज्ञानिनो देहदेशनिर्गमनस्योक्तत्वाच्चेत्युक्तम् । अत्रैव मुच्यन्त इत्याद्युक्त्या योग्यत्वं चात्र विवक्षितमिति द्वितीयगीताभाष्योक्त्या अत्रापि महाज्ञाना गच्छन्ति क्षीरसागरमिति महाज्ञानवत्त्वरूपयोग्यत्वस्य क्षीराब्धिप्राप्तिहेतुत्वोक्त्या च सर्वेषां श्वेतद्वीपगत्यप्राप्तेराह ॥ **न च बहुनेति** ॥ बहुनात्र किमुक्तेन यावच्छ्वेतं न गच्छति । योगी तावन्न मुक्तः स्यादिति द्वितीये गीताभाष्योक्तिविरोध इत्यर्थः ॥ **इति वचनादिति** ॥ द्वितीये छान्दोग्यभाष्योक्तादिति ज्ञेयम् । यत्तु द्वितीये गीताभाष्ये ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात्तत्र यान्ति योग्यत्वं चात्र विवक्षितमित्युक्तम् । कथं सर्वेषां श्वेतद्वीपगमनं युक्तं स्यादित्यत आह ॥ **योग्यत्वं चेति** ॥ महाज्ञानत्वलक्षणं योग्यत्वं चात्र क्षीराब्धौ निवासे विवक्षितम् । न तु गतिमात्रमित्यविरोध इत्यर्थः । गच्छन्तीत्युपलक्षणम् । तिष्ठन्तीत्यपि स्मृतौ बोध्यमिति भावः । इमामारभ्येत्यस्यार्थः पृथिवीमारभ्येति ॥ **उक्तेति** ॥ अन्तरिक्षे तु केचनेत्युक्तप्रकारेणेत्यर्थः ॥ **सालोक्यादीति** ॥ समानलोकस्थत्वं सालोक्यम् । सारूप्यं च श्यामावदाताः शतपत्रलोचनाः पिशङ्गवासाः सुरुचः सुपेशसः । चतुर्भुजा इत्यादिभागवताद्युक्तरूपम् । सायुज्यं च भुञ्जते पुरुषं प्राप्य यथा चैव ग्रहादयः । तथा मुक्तावुत्तमायां बाह्यान् भोगांस्तु भुञ्जत इति गीताभाष्याद्युक्तरूपं ज्ञेयम् । सामीप्यं तु व्यक्तम् ।

## वाक्यार्थमुक्तावली

नेति वक्ष्यमाणं पूर्वपक्षांशोऽप्याकृष्यते । जगद्व्यापारवर्जं सर्वान् कामानाप्त्वेति न किंत्वस्त्येव मुक्तानां जगदैश्वर्यं प्रत्यक्षोपदेशात् । प्रत्यक्षं स्पष्टं मुक्तस्याखिलदेवतापूज्यत्वोपदेशादिति चेन्न । 'सर्वेऽस्मै देवा बलिमावहन्ति' इत्यत्राधिकारिकमण्डलस्थत्वोक्तेः मुक्तावपि स्वावरनियमने अधिकृताः आधिकारिकाः मुक्ताधिकारस्था देवास्तेषां मण्डलं स्थापयतीति वा मण्डले नियामकतया तिष्ठतीति वाऽधिकारिकमण्डलस्थस्तदधिपतिर्मुक्तो ब्रह्मा तस्य च मुक्ताधिकारिकत्व-देवतापूज्यत्वोक्तेरिति सूत्रार्थं हृदि निधायाह ॥ **अस्त्येवेत्यादिना** ॥ तावा एता इति श्रुतेरयमर्थः । व्याहृतय इति प्रथमं सम्बध्यते । ता वा एताश्चतस्रो व्याहृतयः व्याहृतिप्रतिपाद्यास्तन्नामिकाश्चतस्रो वासुदेवादिमूर्तयः प्रत्येकं चतुर्धा व्यस्ताश्चतस्रश्चतस्रः षोडशमूर्तीः यो वेद स एव ब्रह्म वेद । अस्मै षोडशात्मविदे सर्वे देवाः बलिमावहन्तीति ॥ **महाचमस्य इति** ॥

महाचमसनामासौ यस्मादतिचमत्कृतिः ।
महाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः ॥

इति प्रमाणान्महाचमस्यशब्दस्य हिरण्यगर्भवाचित्वादिति भावः । सूत्रे मुक्तदेव मण्डल-स्थोक्तेरित्यनुक्त्वा आधिकारिकपदप्रयोगनियामकमाह ॥ **अन्यथेति** ॥ नन्वात्मेत्येवेत्येकगुणो-पासनेन कथं मुक्तिरुच्यते । आनन्दादयः प्रधानस्येति मोक्षार्थमानन्दादीनामुपास्यत्वस्योक्त-त्वादित्याशङ्क्य निराकरोति ॥ **न चेति** ॥ न चैवं देवानामप्युपास्त्यभावप्रसङ्ग इति वाच्यम् । तेषामप्यंशेनोपास्त्यादिसद्भावात् । देवतापदप्राप्तेरव्यवहितपूर्वजन्मन्युत्क्रान्त्यादिसद्भावादिति दिक् । अत्र केचिदाचक्षते । आत्मेत्युपलक्षणम् । आनन्दादयो ग्राह्याः । टीका तु प्रौढवादेन प्रवृत्तेति । ननु–

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ॥

इत्युक्तत्वात् अत्रैव च स्थितिः महाज्ञाना गच्छन्ति क्षीरसागरमिति कथमुच्यत इत्या-शङ्क्यापाकरोति ॥ **न चेति** ॥ सकृच्छ्वेतद्वीपं गत्वा धरादिकं प्रत्यागमनानन्तरमत्रैव स्थितिरित्यर्थ इति भावः । तर्हि गीताभाष्यविरोध इत्यत आह ॥ **योग्यत्वं चेति** ॥ अत एव गीताभाष्यटीकायां

(वाक्यार्थमुक्तावली)
निवास इति शेषव्याख्यानम् ॥ **पृथिवीमारभ्येति** ॥ इमां पृथिवीमारभ्य केचिदत्रैव मुच्यतेऽन्तरिक्षे स्वर्गे महर्लोके जने तपसि सत्ये सुक्षीरसागरे शोभनक्षीरसमुद्रे चेत्युक्तक्रमेण यावत् यावत्सु स्थानेषु नारायणस्तिष्ठति । यद्वा यावत्सु स्थानेषु नारायण इति । अस्मिन्पक्षे क्षीरसागर इति पदम् । तावत्सु सर्वेष्वपि स्थानेषु सालोक्याद्यस्तीति भावः ॥ **तारतम्यकथनमिति** ॥ ज्ञानाधिक्यात्समीपगा इत्युक्ततारतम्यकथनमित्यर्थः । यद्वा वक्ष्यमाणपूज्यपूजकभावोपपादनाय तारतम्यकथनमित्यर्थः । स्वजगद्व्यावृत्तिः स्वप्रतिबिंबभूतजीवेषु व्यापार इति तत्वप्रदीपे । कांश्चन भोगान्विना स्वोत्तमैकभोगान्विनेत्यर्थः ।

## तत्त्वसुबोधिनी

ननु 'ता वा एता' इति वाक्यं मुक्तस्याखिलपूज्यत्वप्रवियादमिति तु मुक्तानां जगदैश्वर्यमित्यत आशङ्क्य निषेधति ॥ **न च तदिति** ॥ **स्फुटमिति** ॥ अनेन सूत्रभाष्यगमने प्रत्यक्षमुक्ततात्पर्यक ता यो वेदेति श्रुतौ तच्छब्दापसमृष्टतर्षयितुं पूर्ववाक्योदाहरणमिति ज्ञातव्यम् ॥ **माहाचमस्येत्युपक्रमादिति** ॥ 'महाचमसनामासौ यस्मादतिचमत्कृतिः । महाचमस्य तद्ज्ञानी ब्रह्मा सम्प्रकीर्तितः' इति प्रमाणात् महाचमस्यशब्दस्य हिरण्यगर्भवाचकत्वादिति भावः ॥ **सूचनायाधिकारिकपदमिति** ॥ मुक्तदेवेषु नियामकत्वार्थकाधिकारिकपदप्रयोगेण स्वाक्रनियामकत्वं सूचितमिति भावः ॥ **न चानेनेति** ॥ आत्मेत्येव परं देवं इति आत्मत्वमात्रोपासनाप्रतिपादकेनेत्यर्थः । महाज्ञाना गच्छन्ति क्षीरसागरमित्युक्त्या तदतिरिक्तानां क्षीरसागरस्यैतद्वीपगमनं नास्तीत्यायातम् । तच्च विरुद्धम् । बहुनात्र किमुक्तेनेत्यत्र सर्वेषामपि ज्ञानिनां श्वेतद्वीपगमनस्योक्तत्वादित्यांशक्य निषेधति ॥ **न च बहुनात्रेति** ॥ तत्र सर्वमुक्तानां श्वेतद्वीपगमनाङ्गीकारे योग्यत्वं चात्र विवक्षितमिति गीताभाष्य विरोधः । तत्र हि न सर्वज्ञानिनां श्वेतद्वीपगमनं किं तु योग्यानामेवेत्यर्थस्याभिप्रेतत्वात् सम्पूर्णमोक्षशून्यानां च योग्यताया अभावान्न तत्र गमनमित्यतः तदभिप्रायकथनेन तद्विरोधं परिहरति । योग्यत्वं चात्र विवक्षितमिति एतदपि तत्रावस्थानायेति गमयितव्यमिति इत्येतदपि वाक्यं तत्र श्वेतद्वीपे अवस्थानमयोग्यत्वं विवक्षितमित्येवम् अर्थपरतया ज्ञातव्यम् । न तु तत्र गमनार्थं योग्यत्वं विवक्षितमित्यर्थपरतया अत्रैवावस्थितिः । तेषामित्यवस्थानस्यैव प्रकृतत्वात् तथा च न तद्विरोध इत्यर्थः । अत एव गीताभाष्यटीकायां निवास इति शेषपूरणेनैतद्वाक्यं व्याख्याति ॥

(तत्त्वसुबोधिनी)

**उत्तक्रमेणेति** ॥ अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचनेत्युक्तक्रमेणेत्यर्थः । सजगद्व्यापृतिरित्यस्यां स्मृतौ पूर्ववदित्यस्य मुक्तानां पूर्ववत् संसारावस्थायां स्वावरनियामकत्वात् जगद्व्यापृतिः समुदीरिता इत्यर्थः । तद्रूपानित्यस्य तद्रूपान् आनन्दादिभोगान् विना प्राकृतानपि भोगान्विना कांश्चनाल्पान् स्वयोग्यभोगान् भुञ्जत इत्यर्थः ।

## वाक्यार्थविवरणम्

**बलिं** पूजाम् । **तददर्शनादिति** ॥ अखिलदेवतापूज्यत्वादर्शनादित्यर्थः ॥ **मुक्ताधि-कारिकेति** ॥ मुक्ता या आधिकारिकदेवता इति विग्रहः ॥ **महाचमस्य इति** ॥ महाचमस्य ब्रह्मण एवोपक्रमादित्यर्थः ।

> महाचमसनामासौ यस्मादतिचमत्कृतिः ।
> महाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः ॥

इति वचनादिति भावः । महाचमस्यः अतिचमत्कारेणातिशीघ्रं कर्तेत्यर्थो द्रष्टव्यः ॥ **आधिकारिकपदमिति** ॥ मुक्तदेवेषु नियामकत्वार्थकमाधिकारिकपदमित्यर्थः ॥ **उक्तिविरोध इति** ॥ तथा च 'आत्मेत्येव परं देवमुपास्य' इत्युक्तं तदयुक्तमिति भावः ॥ **तदुपासनस्येति** ॥ तत्सूत्रोक्तचतुर्गुणोपासनस्येत्यर्थः ॥ **सम्पूर्णेति** ॥ कर्मक्षयोत्क्रान्तिमार्गभोगरूपचतुर्विध-मोक्षार्थत्वादित्यर्थः ॥ **अत्रेति** ॥ आत्मत्वमात्रोपासकानां नोत्क्रामन्तीत्युत्क्रमणाभावोक्त्या सम्पूर्णमोक्षाभावोक्तेरित्यर्थः । तथा च केचिदत्रैव मुच्यन्ते । चरमदेहपातानन्तरमत्रैव स्थिता भवन्ति ॥ अयमेव तेषां सान्तानिको लोक इति भावः ॥ **अत्रैव चेति** ॥ लिङ्गशरीरभङ्गानन्तरमप्यस्यां भूम्यामेव मेर्वादिदिव्यस्थाने स्थितिः । आनन्दाननुभवन्तः सन्तोऽत्रैव स्थिता भवन्ति । न वैकुण्ठश्वेतद्वीपादावित्यर्थः । ननु 'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ॥ योगी तावन्न मुक्तः स्यात्' इति सर्वेषामपि मुक्तानां श्वेतद्वीपगमनोक्तेरत्रैव स्थित्यङ्गीकारे तद्विरोध इत्याशङ्क्य निषेधति ॥ **न च बहुनाऽत्रेति** ॥ तत्र प्रमाणमाह ॥ **श्वेतद्वीपमिति** ॥

ननु सकृच्छ्वेतद्वीपगमनमप्यनुपपन्नम् । गीताभाष्ये योग्यत्वं चात्र विवक्षितमिति श्वेतद्वीपगमने योग्यताऽपेक्षितेत्युक्तत्वेन कथं सर्वेषां सकृच्छ्वेतद्वीपगमनाङ्गीकारे तद्विरोधः न स्यादित्यत आह ॥

(वाक्यार्थविवरणम्)

**योग्यत्वं चात्रेति ॥ अवस्थानायेति ॥** सर्वेषां श्वेतद्वीपस्थनारायणदर्शनानन्तरं तत्रावस्थाने योग्यताऽपेक्षिता, न तत्र गमन इत्यर्थः । महाज्ञाना गच्छन्ति क्षीरसागरमित्यस्यापि तत्रावस्थान एव तात्पर्यं द्रष्टव्यम् ॥ **तथा चायं सङ्ग्रहः** ॥ चतुर्मुखेन सह सर्वेषां विरजास्नानेन लिङ्गशरीर-भङ्गानन्तरं परमात्मानं प्रविश्य प्रलये बहुतरस्वरूपानन्दमेवानुभवन्तः स्थिताः । प्रलयानन्तरं सृष्टिकाले श्वेतद्वीपप्रादुर्भावानन्तरं भगवदुदराद्बहिर्निर्गत्य श्वेतद्वीपं गत्वा तत्रत्य श्रीनारायण-दर्शनेनापगतेच्छावरकाः सन्तो योग्याश्चेत्तत्रैवावस्थिता भवन्ति । न चेत्ततो निर्गत्य भूम्यादिलोकेषु मोदन्त इति । तथा च 'यावच्छ्वेतं न गच्छति । योगी तावन्न मुक्तः स्यादित्यस्य भगवदिच्छा-रूपावरकान्न मुक्तः स्यादित्यर्थो द्रष्टव्यः । प्रमाणे योगः सायुज्यम् । यावदित्यस्य यस्मादित्यर्थः । यद्वा अव्ययानामनेकार्थत्वात् यावदित्यस्य पर्यन्तमित्यर्थः । तथा च **सुक्षीरसागरम्** समीचीनक्षीरसमुद्रपर्यन्तमित्यर्थः । **देवा** इत्यस्य देवगन्धर्वा इत्यर्थः । कांश्चन भोगान्विना चिद्रूपान् प्राकृतांश्चापि भुञ्जत इत्यन्वयः । अप्रयोजकतामाशङ्क्य हेतूच्छित्तिं बाधकमाह ॥ **अन्यथेति** ॥ भोगविशेषस्यानन्दवृद्ध्यादौ मानवमावर्तमिति छान्दसो मुमागम इति ध्येयम् ॥

## वाक्यार्थमञ्जरी

ता यो वेदेति श्रुतौ प्रत्यक्षं स्पष्टं मुक्तस्य सर्वदेवपूज्यत्वोपदेशात्तस्य जगदैश्वर्यमस्तीति चेन्न । आधिकारिकाणां स्वयोग्याधिकारनियुक्तानां देवानां मण्डले समुदाये नियामकतया स्थितस्य चतुर्मुखस्य तत्रोक्तेर्नाशेषमुक्तानां जगदैश्वर्यमित्यर्थः ॥ **तावा इति** ॥ ता एताश्चतस्रः-भूर्भुवस्वर्महरिति चतस्रो व्याहृतयो व्याहृतिशब्दवाच्या अनिरुद्धादिभगवद्रूपविशेषाश्चतुर्धा प्रत्येक-मनिरुद्धादिभेदेन चतुर्धा भवन्ति । एवं चतस्रश्चतस्रः षोडशरूपविशेषाः व्याहृतिशब्दवाच्या भवन्ति । ताः व्याहृतयोऽधिकारी वेद । अस्मै ज्ञानिने सर्वे देवा बलिं पूजां कुर्वन्तीत्यर्थः ॥ **महाचमस्य इति** ॥ महाचमस्यश्चतुर्मुखः प्रवेदयते जानातीत्यर्थः ।

महाचमसनामासौ यस्मादतिचमत्कृतिः ।
महाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः ॥

इति प्रमाणबलादित्यर्थः । सूत्रे वेदेत्यनुक्त्वाऽधिकारिकेतिपदप्रयोगे किं बीजमित्यत आह ॥ **अन्यदेवतानामिति** ॥ मुक्तेषु चतुर्मुखान्यदेवेषु नियामकत्वार्थकाधिकारिकपदप्रयोगे तेषां

(वाक्यार्थमञ्जरी)

स्वावरनियामकत्वं सूचितमिति भावः ॥ **न चानेनेति** ॥ **आत्मेत्येव परं देवमिति** ॥ आत्मत्व-मात्रोपासनप्रतिपादकेनेत्यर्थः ॥ **सम्पूर्णमोक्षाभावेति** ॥ चतुर्विधमोक्षमध्ये उत्क्रान्त्यभावोक्ते-रित्यर्थः। एतद्विवरणं तु–

केचित्तु मानुषा मुक्तिमनुक्रम्यैव देहतः ।
देहपाते तु देहस्य दोषान् भुक्त्वैव सर्वशः ।
मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान् ।
देहे जीर्णे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया ।
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ॥

इति बृहद्भाष्योक्तदिशा ज्ञेयम् । महाज्ञाना गच्छन्ति क्षीरसागरमित्युक्त्या तदतिरिक्तानां क्षीरसागरस्थश्वेतद्वीपगमनं नास्तीति प्राप्तम् । तत्र विरोधमाशङ्क्य परिहरति ॥ **न चेति** ॥ 'बहुनात्र किमुक्तेन यावच्छ्वेतं न गच्छति । योगी तावन्न मुक्तः स्यात्' इत्यनेनेत्यर्थः । ननु योग्यत्वं चात्र विवक्षितमिति गीताभाष्ये श्वेतद्वीपगमने योग्यताविशेषस्य प्रयोजकत्वोक्त्या सर्वेषां श्वेतद्वीपगमननिषेधात् कथं सर्वेषां सकृच्छ्वेतद्वीपगमनाङ्गीकार इत्यत आह ॥ **योग्यत्वं चात्रेति** ॥ नात्र श्वेतद्वीपगमने योग्यताविशेषापेक्षोच्यते किंतु तद्वास एव । अत्रैव च स्थितिस्तेषामित्यव-स्थानस्यैव प्रकृतत्वादिति भावः ॥ **सालोक्यादीति** ॥ भगवता समानलोकस्थितत्वं सालोक्यम् । चतुर्भुजादिसमानरूपवत्वं सारूप्यम् । समीपस्थत्वं सामीप्यं भगवद्देहेन भोगः सायुज्यमेतदनन्त-र्भावादित्यर्थः ॥ **उक्तक्रमेणेति** ॥ अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचनेत्युक्तक्रमेणेत्यर्थः । ईश्वरस्य सर्वत्रावस्थितेरिति । तथा च तल्लोकस्थरूपविशेषेण सालोक्यादिकमक्षतमिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ विकारावर्ति च तथा हि दर्शयति ॐ ॥ २० ॥

**विकारावर्तिव्यापारो मुक्तानां न विद्यते । 'इमं मानवमावर्तं नाऽवर्तन्त' इति श्रुतिः । वाराहे च–**

(सूत्रभाष्यम्)

'स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् ।
बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत् ॥
सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः ।
न विकाराधिकारस्तु मुक्तानामन्य एव तु ।
विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना' इति ॥

॥ इति सर्वकामाधिकरणम् ॥ ९ ॥

## तत्त्वप्रदीपिका

न चैवं मुक्तेश्वरत्वे विद्यमानेऽप्यमुक्तेश्वरत्वं मुक्तानामित्याह– विकारावर्ति च तथा हि दर्शयति ॥ प्रकृतिविकारशरीराद्यभिमानिषु जन्ममृत्यादिविकारवत्सु संसारिषु व्यापारो मुक्तानां न विद्यते । जन्ममृतिगत्यादिः संसार 'आवर्तः' ॥

## तत्त्वप्रकाशिका

ननु ब्रह्मादिमुक्तानां मुक्तजगद्व्यापार एव कुतः । अमुक्तविषयेऽपि किं न स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **विकारेति** ॥ चशब्देन नेत्यनुपज्यते । विकारावर्ति संसारमावर्तयतीति तद्विषयव्यापरणम् । मानवा यत्रावर्तन्ते स मानवावर्तः संसारस्तन्नावर्तते नावर्तयन्ति न प्रवर्तयन्तीत्यर्थः । मुक्तदेवानाममुक्तविषयव्यापाराभावे संसारावस्थानमेव न स्यात् प्रवर्तकाभावादित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं चाह ॥ **वाराहे चेति** ॥ अतो मुक्तानां जगद्व्यापाराभावाद्युक्तं लक्षणसूत्रमिति सिद्धम् ॥

## भावदीपः

भाष्यमुत्सूत्रत्वभ्रमं निरस्यन् व्याचष्टे ॥ **चशब्देनेति** ॥ विकारावर्तीति नपुंसकसूत्रपदारूढतया भाष्यार्थं दर्शयति ॥ **विकारवर्तीत्यादिना** ॥ श्रौतपदार्थमाह ॥ **मानवा इति** ॥ **अत इति** ॥ सर्वान्कामानाप्त्वेति श्रुतेः । जीवपरत्वेन तेषामसामर्थ्याद् बलिवाक्यस्य चतुर्मुखपरत्वेन मुक्तानां जगद्व्यापृतौ मानाभावादित्यर्थः ॥

## वाक्यार्थमुक्तावली

विकारं चैतन्ये विक्रियाकारणत्वाद्विविधाकारत्वाद्वा विकारं संसारमावर्तयति पुनः पुनरुत्पादनादिनाऽऽवर्तयतीति विकारावर्ति तद्विषयं व्यापरणं मुक्तानां नास्ति हि यस्मात्तथा दर्शयति श्रुतिरिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **चशब्देनेत्यादिना** ॥ **स्मृतिं चेति** ॥ चशब्दसूचितामिति ग्राह्यम् । तत्वप्रदीपे तु प्रकृतिविकारशरीराद्यभिमानिषु जन्ममृत्यादिविकारवत्सु संसारिषु मुक्तानां व्यापरणमवृत्तीत्यर्थ उक्तः । अत्राद्ये मुक्तानां जगद्व्यापाराभावं प्रतिज्ञाय सर्वान्कामानाप्त्वेति श्रुतेर्जगद्व्यापारातिरिक्तकामविषयत्वोक्तिः । द्वितीये श्रुतौ सर्वशब्दसङ्कोचे कल्पकप्रमाणोक्तिः । तृतीये सङ्कोचकल्पकानुमानस्य श्रुतिविरोधमाशङ्क्य श्रुतेः सावकाशत्वोक्तिः । चतुर्थे सर्वेऽस्मै देवा इति श्रुतेः मुक्तास्सर्वे बलिमावहन्तीति कुतः अमुक्ता अपीत्यर्थः किं न स्यात्तन्यायेन सर्वेषामपि मुक्तानाममुक्ताधिपत्यं किं न स्यादित्याशङ्क्य तत्र स्पष्टप्रमाणोक्तिरिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

अत्राद्यसूत्रे जगद्व्यापारवर्जतत्तद्योग्यकतिपयकामावाप्तिप्रतिज्ञा । द्वितीये सर्वशब्दस्य सङ्कोचे हेतूक्तिः । तृतीये जगद्व्यापाराभावाक्षेपसमाधानम् । चतुर्थे भोगमर्यादोक्तिः । इति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

विकारं संसारमावर्तयतीति विकारावर्ति संसारविषयव्यापरणं मुक्तानां नास्ति कुतः हि यस्मादिममिति श्रुतिस्तथा हेत्यर्थः । **व्यापरणं** व्यापारः ॥

**॥ इति सर्वकामाधिकरणम् ॥ ९ ॥**

## १०. स्थित्यधिकरणम्

**॥ ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ॥ २१ ॥**

'एतत्साम गायन्नास्त' इत्युच्यते । तत्रानन्दादीनां वृद्धिर्ह्रासश्च न विद्यते । किन्त्वेकप्रकारेणैव सर्वदा स्थितिः । 'स एष एतस्मिन्ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवाऽऽत्मानं तस्यैवं दर्शतो नापत्तिर्न विपत्तिः' इत्याह जाबालश्रुतौ ।

'यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न हीयते यत्र गत्वा यत्र गत्वा न वर्धत' इति मोक्षधर्मे ॥

विद्वत्प्रत्यक्षात्कारणाभावलिङ्गाच्च । ब्रह्मवैवर्ते च–

'न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् ।
विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोऽनुमा ॥
हरेरुपासना चात्र सदैव सुखरूपिणी ।
न तु साधनभूता सा सिद्धिरेवात्र सा यत' इति ॥ २१ ॥

### तत्त्वप्रदीपिका

अथैवं परमगतिं गतानां परमेश्वरप्रसादोत्कर्षभाजनभूतानां सत्यसङ्कल्पानामुत्तरोत्तरमानन्दादिगुणवृद्धिः स्यात् । न हि कश्चित्स्वानन्दं वर्धयितुं नेच्छतीत्यत आह– स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ 'एतमानन्दमयमात्मानमुपसंक्रम्य, इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् । एतत्सामगायन्नास्त' इत्युच्यते । तत्र कामरूपत्वादिभावेऽपि नानन्दादीनां वृद्धिर्ह्रासो वा । न हि कस्यचित्स्वानन्दह्रासेच्छा । नापि वृद्धीच्छा, तत्रावृद्धिश्रुतेः सत्यकामत्वश्रुतेश्च । इच्छायां चावृद्धौ परमगतित्वस्य प्रसादोत्कर्षपात्रत्वस्य च मानसिद्धस्यायुक्तत्वापत्तेः । स्वरूपेण जन्मादिरहितस्यापि शरीरेण जन्माद्यस्ति संसारे, तदपि न मुक्तावित्याह– 'न जायत' इत्यादिना । न चानन्दादिवृद्धिह्रासावित्याह– 'न हीयते न वर्धत' इति । आपत्तिरविद्यमानस्यागमः । विपत्तिर्विद्यमानस्य विगमः । विद्वत्प्रत्यक्षं नाम प्रमाणं प्रमाणसिद्धमित्याह– ब्रह्मवैवर्ते चेति । वृद्धौ कारणाभावोऽसिद्धः । मुक्तानां पुनरुपासनादित्यत आह– 'हरेरुपासना चात्र सदैव सुखरूपिणि' इत्यादि ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मप्राप्तानां मुक्तानां भोगादिना वृद्धिह्रासनिरासादस्ति शास्त्रादिसङ्गतिः । वृद्धिह्रासवत्त्वे संसारसमानधर्मत्वापत्तेः कर्तव्य एव तन्निरासः । प्रकृतमुक्त एव विषयः । वृद्धिह्रासवान्न वेति सन्देहः । लोकदर्शनमलौकिकत्वं च सन्देहबीजम् । अस्त्येव मुक्तस्यानन्दादिवृद्ध्यादीति पूर्वः पक्षः । 'एतत्सामगायन्नास्ते' इत्यादिना तस्याप्युपासनादिश्रवणात् । अन्यथा तद्वैयर्थ्यात् । भोगानां वृद्धिह्रासवत्त्वाच्च । कारणानुगुणत्वात्कार्यस्य । किं च मुक्तस्य वशित्वेन कामिताशेषप्राप्तेर्युक्ता सुखादिवृद्धिः । न च न कामयत इति वाच्यम् । आनन्दादिवृद्धेरिष्टत्वेनाकामनानुपपत्तेः । अतो मुक्तानामपि वृद्ध्यादिसद्भावात्संसारसमानधर्मत्वेन मुक्तेरपुरुषार्थत्वमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्थितिमिति** ॥ यद्यपि 'एतत्साम गायन्नास्ते' इत्यादिना मुक्तस्य भगवदुपासनमुच्यते तथापि न तस्यानन्दादिवृद्धिह्रासौ विद्येते किं त्वेकप्रकारेणैवावस्थानम् । कुतः । 'स एषः' इत्यादिश्रुतौ वृद्ध्याद्यभावमुक्त्वोपासनसद्भावमाशङ्क्य 'दर्शन्नेवात्मानम्' इत्युपासनवतोऽप्यापत्ति-विपत्तिशब्दोदितवृद्धिह्रासनिषेधान्महतां प्रत्यक्षेण च वृद्ध्याद्यभावस्य सिद्धत्वात् । 'मुक्तो न वृद्ध्यादिमान् तत्कारणशून्यत्वात्' । इत्यनुमानसिद्धत्वाच्चेत्यर्थः । दर्शन् पश्यन्नुपासीन इत्यर्थः । परप्रत्यक्षस्याप्रत्यक्षत्वात्कथं तेनास्माकमर्थसिद्धिरित्यत उक्तार्थे स्मृतिं चाह ॥ **ब्रह्मवैवर्ते चेति** ॥ भगवदुपासनस्य कारणस्य सद्भावात्कथं कारणाभाव इत्यत आह ॥ **हरेरिति** ॥ मुक्तिगतोपासनस्य फलत्वान्न सुखसाधनत्वमित्यर्थः ।

## गुर्वर्थदीपिका

दर्शन्पश्यन्नुपासीन इत्यत्र 'पूर्वं देवेभ्योऽमृतस्य ना भा इ' इति श्रुतौ तवेत्यनुक्त्वा परोक्ष-व्यपदेशाद्ध्यानकालीनं सामगानमिति भावेनोपासीन इत्युक्तम् । मुक्तिगतोपासनस्य फलत्वादित्यत्र मत्तवदानन्दोद्रेकेन क्रियमाणत्वेन फलरूपत्वादित्यर्थः । न हि मदिरामत्तो द्रव्यप्राप्त्यर्थं गायति किं तु सुखोद्रेकेनैव तद्वदिति भावः ।

## भावबोधः

भोगादिना वृद्धिह्रासनिरासादिति । पूर्वाधिकरणे यद्भोगादेस्तारतम्यमुक्तं तन्न सम्भवति । तथा सति तत्तारतम्यानुसारेण तस्य भोगादेरानन्दादिवृद्धिह्रासकारणत्वं स्यादित्याक्षेपस्यात्र समाधाना-

(भावबोधः)

दनन्तरसङ्गतिरिति भावः ॥ **वृद्धीति** ॥ अत्र मुक्ता वृद्धिह्रासवन्तो न वेति चिन्ता । तदर्थं तत्कर्तृकमुपासनभोगादिकं साधनरूपं उत फलरूपमिति । तदर्थं वृद्धिह्रासराहित्ये तदुपासनादेः फलरूपत्वे च प्रमाणं नास्त्युतास्तीति । 'एतत् साम गायन्नास्ते' इत्युच्यत इति भाष्योक्त-युक्तिमाह– एतत् साम गायन्नास्त इत्यादिनेति । 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रनिरसनीय-युक्तिमाह– **भोगानामिति** ॥ वशित्वान्मुक्तस्यापि वृद्धिरिति न्यायविवरणोक्तयुक्तिमाह– **किं चेति** ॥ श्रुतौ दर्शनमेवोच्यते न तु उपासनमित्यत आह– **उपासीन इत्यर्थ इति** ॥ **हरेरितीति** ॥ उपलक्षणं चैतत् । कृतकृत्यत्वेनेत्यादिन्यायविवरणोक्तयुक्तिरभ्यासपाटवादिति, तदुदाहृतस्मृति-सिद्धास्मिन्नर्थे प्रमाणत्वेन द्रष्टव्या ।

## भावदीपः

**भोगादिनेति** ॥ विषयानुभवतदुपारमाभ्यामानन्दवृद्धिह्रासनिरासादित्यर्थः । एतेन पूर्वत्र विषयभोगेयत्तोक्ताविह तदभिव्यंग्यस्वरूपानन्दस्य यथास्थितिरूपेयत्तानिरूपणात्पूर्व सङ्गतिरपि सूचिता । वशित्वान्मुक्तस्यापि वृद्धिरित्यन्यत्रोक्तं वृद्धिरित्येतदुपलक्षणं मत्वा भाष्यदिशा प्रतिज्ञाहेतू व्यनक्ति ॥ **अस्त्येवेति** ॥ उपासनादीत्यादिपदेन ऋचां त्वः पोषमास्ते, कृष्णो मुक्तैरिज्यते इत्यादिकर्मग्रहः । विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ भोगेति सूत्रव्यावर्त्यहेतुमाह ॥ **भोगा-नामिति** ॥ अन्यत्रोक्तहेतुं व्यनक्ति ॥ **किं चेति** ॥ **वशित्वेनेति** ॥ 'अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतय' इत्युक्ताष्टभूतिषु मध्ये वशित्वरूप-गुणवत्त्वेनेत्यर्थः । ननु वशित्वं चाप्यलोलतेत्येकादशस्कन्धतात्पर्योक्तेः सुखप्राप्तिदुःखनिवृत्त्यो-रज्ञाननिवृत्त्यैव प्राप्यत्वाच्च न कामयत इत्याशङ्क्य निराह ॥ **न चेति** ॥ **अत इति** ॥ उपासनादिमत्त्वाद्वृद्ध्याद्युपेतभोगवत्वाद्वशित्वाच्चेत्युक्तहेतुभ्य इत्यर्थः ॥

तत्रेत्यस्य तथापीत्यर्थमुपेत्यैतदित्यादिभाष्यं व्याचष्टे ॥ **यद्यपीत्यादिना** ॥ **श्रुताविति** ॥ वृद्धिह्रासनिषेधादित्यन्वयः । श्रुतावित्युपलक्षणम् । श्रुतौ मोक्षधर्मे च वृद्धिह्रासनिषेधादिति भाष्ये शेष इति सूचितम् । श्रुतावुपासाऽप्रतीतेराह ॥ **दर्शनेति** ॥ स्वरूपप्रज्ञस्यानारतभगवद्दर्शनस्यैव मुक्तानामुपासनत्वादिति भावः । अप्रत्यक्षत्वात्प्रत्यक्षाविषयत्वादित्यर्थः । सुखरूपत्वोक्त्या कथमुक्तशङ्कानिरास इत्यत आह ॥ **मुक्तिगतेति** ॥

## अभिनवचन्द्रिका

**अस्त्ये वेति ॥** ननु ह्रासस्य संसारसमानधर्मत्वापादकत्वात् स एव पूर्वपक्षिणा वक्तव्यः, निराकर्तव्यश्च सिद्धान्तिना' न तु पूर्वपक्षिणा आनन्दादीनां वृद्धिर्वक्तव्या, तस्याः संसार-समानधर्मतानापादकत्वेन मुक्तेरपुरुषार्थत्वानापादकत्वात् इति चेत् उच्यते मुक्त्यनन्तरमपि उपासनादिना वृध्यङ्गीकारे अधमोऽपि मुक्तो जीवः दीर्घेण कालेनाऽनुष्ठितया भगवदुपासनया उत्तमानपि अतिक्रमेत् । ततश्च उत्तमानामधमनियम्यत्वं प्रसज्येत । तच्चानिष्टमिति ह्रासवत् वृद्धिरपि पूर्वपक्षिणा वक्तव्या निराकर्तव्या च सिद्धान्तिना । अथवा मुक्तवृद्धेः । ततः पूर्वं कृतकृत्यता-विरोधित्वेन संसारसमानधर्मताऽऽपादकत्वात् ह्रासवत् वृद्धिरपि पूर्वपक्षिणा वक्तव्या निराकर्तव्या च सिद्धान्तिनेति द्रष्टव्यम् । वृद्धौ ह्रासे च हेतुमाह– **उपासनादिश्रवणादिति ॥** उपासना हि वृद्धिहेतुरिति प्रसिद्धैव । भगवदुपासनयाऽऽनन्दवृद्धेरभिहितत्वात् । उपासनैव तध्द्रासहेतुश्च भवति उत्तमातिक्रमप्रयत्नत्वात् । तद्यथा स्वोच्चदारपरिग्रहश्चेन्द्रसुग्रीवयोः तात्कालिकेष्टहेतुरपि बलवदनिष्टहेतुरपि भवति । एवं मुक्तोपासनापि तात्कालिकवृद्धिहेतुरपि उत्तमातिक्रमप्रयत्नरूपत्वात् पश्चाद्भाव्यानन्दादिह्रासहेतुरपि भवतीति भावः । आस्तां तावदुपासना । मुक्तानां तावत् 'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' इति विकल्पेन उत्कृष्टापकृष्टभोगसाधनावाप्तिः श्रूयते । तयैव वृद्धिसिद्धिरित्याह – **भोगानामिति ॥** भुज्यन्ते एभिरिति भोगाः भोगसाधानानि । तेषां मध्ये केषाञ्चिदुत्कृष्टत्वात् केषाञ्चिदपकृष्टत्वादित्यर्थः । भोगसाधनस्त्र्यादितारतम्येऽपि आनन्दादितारतम्यं कुत इत्यत आह – **कारणानुगुणत्वादिति ॥** वृद्धिसिद्धौ पूर्वोक्तरीत्या ह्रासः स्वयमेव सिध्यतीति वृद्धिसिध्यर्थं हेतुमाह – **मुक्तस्य वशित्वेनेति ॥** अत्र गुणसूत्रम् – 'भोगमात्रसाम्यलिङ्गाच्च' इति भोगमात्रेऽपि उत्कृष्टापकृष्टभोगसद्भावेऽपि मुक्तस्य साम्यलिङ्गात् न मुक्तस्य वृद्धिह्रासौ युक्ताविति सूत्रयोजना ॥ **एवं चेति ॥ भोगमात्रस्य**=स्त्र्यादिसर्वभोगस्य, **विशेषे**=तारतम्ये सत्यपि, यच्छ्रुत्युक्तं मुक्तानां साम्यं तदेव भोगविशेषः । तद्वृध्यादौ न कारणमित्यस्मिन्नर्थे लिङ्गम् । अन्यथा भोगविशेषस्य वृध्यादिकारणत्वाङ्गीकारे साम्यानुपपत्तिः स्यादिति भावः ॥

**पूर्वपक्षस्तु** मुक्तानामप्यानन्दादीनां वृद्धिह्रासौ विद्येते । 'एतत्सामगायन्नास्त' इत्यादिना तस्याप्युपासनादिश्रवणात् । किं च भोगानां 'स्त्रीभिर्वा यानैर्वा' इत्यादिना वृद्धिह्रासौ दृश्येते ।

(अभिनवचन्द्रिका)

कारणानुगुणत्वात्कार्यस्य । आनन्दीदानामपि तावङ्गीकर्तव्यौ । अतो मुक्तानामपि वृध्यादिसद्भावात् संसारसमानधर्मत्वेन मुक्तेरपुरुषार्थत्वमिति ।

**सिद्धान्तस्तु** न मुक्ताऽऽनन्दादीनां वृद्धिह्रासौ । 'स एष एतस्मिन्त्रह्मणि' इति जाबलश्रुतेः । महतां प्रत्यक्षात् कारणाभावलिङ्गाच्च । ननु न मुक्तानन्दादिवृद्धौ ह्रासे च कारणाभावः । कदाचित् भोगवृद्धेः कदाचित्तदभावस्य प्रमितत्वादिति चेन्न 'एतमानन्दमयमात्मानमनुविश्य' इति श्रुतौ भोगानां वृद्धौ ह्रासेऽपि मुक्तानन्दसाम्याऽभिधानेन मुक्तभोगानां वृद्धिह्रासयोः तदानन्दवृद्धिह्रासौ प्रति अकारणत्वात् । ननु माभूत् ह्रासः, वृद्धिस्तु भविष्यति । तस्य सत्यकामत्वेन कामिताऽशेषप्राप्त्या वृद्धिसम्भवात् । न च नासौ कामयत इति युक्तम् । आनन्दवृद्धेरिष्टत्वेन कामनानङ्गीकाराऽयोगात् इति चेन्न योग्यस्य प्राप्तत्वात् । अयोग्यकामनायाश्च 'न चायोग्यं विमुक्तोऽपि' इत्यनेन निषिद्धत्वेन कामनाङ्गीकारस्यायुक्तत्वात् । 'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् । कादाचित्कविशेषस्तु नैव तेषां निषिध्यत' इति वचनात् कादाचित्कविशेष-स्त्वभ्युपगन्तव्यः । अतो मुक्तानां वृध्याद्यभावेन न संसारसमानधर्मत्वं मुक्तिरिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

**भोगादिनेति** ॥ आदिपदेनोपासनं कामनं च गृह्यते । मास्तु मुक्तस्यामुक्ताधिपत्यकामना तत्प्रयुक्तानन्दवैचित्र्यलाभः । आनन्दकामनस्य सत्वात्सत्यकामत्वात्तत्साधनभोगोपासनयोः सत्वाच्च तद्भावकाले आनन्दवृद्धिस्तदभावकाले ह्रासश्च भवत् इच्छया भोगवैचित्र्यं च । सयुजःपरमात्मानं प्रविश्य च बहिर्गता इत्याद्युक्तम् । अन्यथा तद्वैय्यर्थ्यप्रसङ्गादित्याक्षेपोत्थानादनन्तरसङ्गतिः ॥ **वृद्धीति** ॥ मुक्तः किमानन्दवृद्धिह्रासवान् भवत्युत न भवतीति चिन्ता । तदर्थं तत्कारण-त्वेनाभिमतानामुपासनाभोगकामनानामन्यथासिद्धत्वमुतोपासनायाः फलरूपत्वं भोगस्य क्रीडामात्रत्वं कामनायास्तु क्लृप्तातिरिक्तविषये अभाव एवेति । एतत्साम गायन्नास्त इत्युच्यत इति भाष्योक्त-युक्तिमाह ॥ **एतत्सामेति** ॥ भोगमात्रसूत्रनिरसनीययुक्तिमाह ॥ **भोगानामिति** ॥ यथाकामं चरति यथाकाममित्यादौ योग्यकाममनतिक्रम्य मखादिकं करोतीत्युक्त्या निरस्यं वशितेत्युक्तन्यायं व्यनक्ति ॥ **किं चेति** ॥ **वशित्वेनेति** ॥ इच्छयैव वशीकृताखिलकाम्यत्वेनेत्यर्थः ।

(वाक्यार्थमुक्तावली)

यद्वा वशित्वं नामाष्टैश्वर्यमध्ये एकमैश्वर्यम् । सूत्रे एवं चेति शब्दोऽप्यर्थे । एवमपीत्यर्थ इत्युक्तस्योपासनाद्युक्तावपीति यावत् । चशब्दोऽवधारणे च, एवमेव एकप्रकारेणैवेत्यर्थः । स्थिति-मिति प्रथमान्तं तावद्विपरिणम्यते । तथा च मुक्तस्योपासनादिश्रवणेऽपि एकप्रकारेणैव स्थितिरिति सूत्रार्थमभिप्रेत्यैतत्साम गायन्नास्त इत्यादिभाष्यं प्रवृत्तम् । तत्र यद्यपीति आदावध्याहार्यम् । तन्नेत्यस्य तथापीत्यर्थः । एकप्रकारेणेत्यतः पूर्वं किं त्वित्यध्याहार्यमिति भावेन व्याचष्टे ॥ **यद्यपीति** ॥ स्थितिमाहेत्यस्य जाबालश्रुतावेवमेव वृद्ध्याद्यभावमेवोक्त्वा एवमेवोपासनमाशङ्क्यो-पासनसद्भावमेवाशङ्क्य एवमप्युपासनसद्भावेऽप्येवमेव वृध्यादिराहित्येनैव स्थितिमाहेति सूत्र-खण्डार्थमभिप्रेत्य प्रवृत्तं स एष इत्यादिभाष्यं व्याचष्टे ॥ **श्रुताविति** ॥ वृद्ध्याद्यभावमुक्त्वेत्यनेन स्थित एव भवतीत्यन्तस्य तात्पर्यमुक्तं भवति । उपासनासद्भावमाशङ्क्य दर्शन्नेवात्मानमितीति । दर्शन्नेव ब्रह्मदर्शन्नेवात्मानमित्यंशेनोपासनासद्भावमाशङ्क्येति योजना । तथा च यद्यपि ब्रह्मपूर्णं दर्शन्नुपासीनः आत्मानं स्वामित्वादिगुणविशिष्टं चोपासीनो वर्तत इत्युपासनसद्भावमाशङ्क्येत्यर्थः ॥ **उपासनवतोऽपीति** ॥ तथापि तस्यैवं दर्शयतः उपासीनस्यापि नापत्तिर्न विपत्तिरिति वृद्धिह्रासनिषेधादित्यर्थः । भाष्ये श्रुत्यर्थे मोक्षधर्मवाक्यस्य पठितत्वेऽपि टीकायां स्फुटत्वान्नावतारि-तम् । एवं चैवमेव प्रत्यक्षानुमाने दर्शयतः प्रमापयत इति सूत्रखण्डस्यार्थपरं विद्वदित्यादि व्याचष्टे ॥ **महतामिति** ॥ कारणाभावतोऽनुमेत्यत्रेत्थम्भूतलक्षणार्थात्तृतीयान्तात्तसिः । कारणाभावरूपानुमा चास्तीत्यर्थः । यद्वा कारणाभावलिङ्गतोऽनुमाऽनुमितिश्चैतद्विषयेऽस्तीत्यर्थः । हरेरुपासनेत्यस्य अत्र मुक्तौ सदा हरेरुपासना चशब्दाद्भक्तिश्च सुखरूपिण्येव न तु साधनभूता । यतः तत्र फलावस्थायां विद्यमाना सा सिद्धिः फलरूपैवात इत्यर्थः । अनेनैव भाष्येण कृतनिः श्रमश्चेत्युक्तन्यायोऽपि विवृतो भवति । कृतकृत्यत्वेन निःश्रमत्वात् । उपासना भक्तिश्च सुखरूपैव मुक्तानां न तु साधनमिति ।

## तत्त्वसुबोधिनी

**भोगादिना वृद्धिह्रासनिरासादिति** ॥ पूर्वाधिकरणे यद्भोगादेः तारतम्यमुक्तं तत्तारतम्यानु-सारेण तस्य भोगादेः आनन्दादिवृद्धिह्रासकारणत्वं स्यादित्याक्षेपसमाधानादनन्तरसङ्गतिरिति भावः । एतत्साम गायन्नास्त इत्युच्यते इति भाष्योक्तयुक्तिमाह ॥ **एतत्सामेति** ॥ अन्यथा

(तत्त्वसुबोधिनी)

तद्वैय्यर्थ्यादिति । आनन्दादिवृद्ध्याद्यभावे उपासनादिवैय्यर्थ्यादित्यर्थः । अस्तु उपासनादिश्रवणं तथापि आनन्दादिवृद्ध्यादि कुत इत्यत आह ॥ **भोगानामिति** ॥ उपासनादिरूपभोगानामित्यर्थः । अस्तु उपासनादिरूपभोगानां वृद्ध्यादिमत्वं तथापि आनन्दवृद्ध्यादि कुत इत्यत आह ॥ **कारणानुगुणत्वाचेति** ॥ तथा च उपासनादिरूपभोगलक्षणकारणस्य वृद्धिह्रासवत्वात् तत्कार्यस्यानन्दादेरपि वृद्ध्यादिमत्वम् । अन्यथा तयोः वैरूप्यं स्यादित्यर्थः । श्रुतौ दर्शनमेव उच्यते न तूपासनमित्यत आह ॥ **उपासन इत्यर्थ इति** ॥

## वाक्यार्थविवरणम्

**भोगानामिति** ॥ आनन्दवृद्ध्यादिकारणानामित्यर्थः ॥ **वशित्वेनेति** ॥ स्वेच्छाधीनत्वेनेत्यर्थः ॥

## वाक्यार्थमञ्जरी

**वृद्धिह्रासेति** ॥ आनन्दवृद्धिह्रासेत्यर्थः ॥ **एवमग्रेऽपि** ॥ **एतदिति** ॥ एतत् हावित्यादिना वक्ष्यमाणं साम गायन्नास्त इत्यर्थः ॥ **अन्यथेति** ॥ उपासनादिना आनन्दादिवृद्ध्यनङ्गीकार इत्यर्थः । भोगानां तादृशत्वेऽप्यानन्दादेस्तादृशत्वं कुत इत्यत आह ॥ **कारणेति** ॥

ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ॥ ब्रह्मणीति श्रुतिर्मुक्तानां स्थितिमेकप्रकारेणावस्थानमाह महतां प्रत्यक्षम् । मुक्तो न वृद्धिमान् तद्धेतुशून्यत्वादित्यनुमानमेवं एकप्रकारेणावस्थानं च दर्शयत इत्यर्थः ॥ **उपासनसद्भावमिति** ॥ उपासनासद्भावेनानन्दादिवृद्धिसद्भावमाशङ्क्येत्यर्थः । श्रुतौ दर्शनमेवोच्यते न तूपासनमित्यत आह ॥ **उपासन इति** ॥

## सूत्रभाष्यम्

**॥ ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ॥ २२ ॥**

**न च भोगविशेषादिविरोधः । 'एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिवति यथाकामं रमते यथाकाममुपरमत' इति भोगमात्रसाम्यलिङ्गात् ।**

(सूत्रभाष्यम्)

'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निषिध्यत' इति कौर्मे ॥

'प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् ।
नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ॥
कुत एव तु दुःखं स्यात्सुखमेव सदोदितम् ।
भोगानां तु विशेषे तु वैचित्र्यं लभ्यते क्वचित्' इति नारायणतन्त्रे ॥

॥ इति स्थित्यधिकरणम् ॥ १० ॥

## तत्त्वप्रदीपिका

भोगाद्भोगान्तरप्राप्तावधिकभोगे न्यूनभोगे च कथं वृद्धिह्रासाभाव इत्यत आह– भोगमात्रसाम्यलिङ्गाच्च ॥ नोक्तविरोधः । 'न ह्रसते न वर्धत' इत्युक्त्वा 'यथाकामं रमते यथाकाममुपरमत' इत्यभीष्टसुखभोगत्वस्य सर्वदा समत्वे हि लिङ्गम् । न हि भवति सुखमुपरमेच्छायामनुपरमेऽपि, न च सर्वभोगोपरमः कदाचिदपि, स्वरूपानन्दभोगस्य नित्यं सिद्धत्वादिष्टत्वाच्च । पिबति रमत उपरमत इति विशेषदर्शनान्मात्रपदोक्तिः । एवंभूतो विशेषो न निषिध्यते । ईश्वरज्ञानादावपि सृष्टिप्रलयादावभ्युपेयत्वात् ॥

## तत्त्वप्रकाशिका

न मुक्तानां वृद्ध्यादौ कारणाभावो भोगविशेषसद्भावात् । कारणाभावाभ्युपगमे च प्रामाणिकभोगविशेषविरोधादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **भोगेति** ॥ न मुक्तस्य वृध्यादिकारणाभावाभ्युपगमे भोगविशेषश्रुत्यादिविरोधः । मुक्तभोगविशेषस्यानन्दादि वृद्ध्याद्यकारणत्वात् । कुतः । 'एतमानन्दमयम्' इति श्रुतौ मुक्तस्य वृध्याद्यभावमुक्त्वा भोगभावाभावावुच्येते । इदं च भोगमात्रस्य विशेषे सत्यपि मुक्तस्य साम्यमेव । न भोगविशेषः तद्वृद्ध्यादौ कारणमित्यत्र लिङ्गमन्यथानुपपत्तिरिति भावः । ननु यदि भोगो न वृद्धिहेतुस्तर्हि व्यर्थोऽसौ किमिति तैः क्रियत इत्यत्र क्रीडयेति परिहारे स्थिते विशेषं चाह ॥ **अवृद्धीति** ॥ एतदेवं स्मृत्यन्तरेण विवृणोति ॥ **प्रवाहत इति** ॥ न च वशित्वाद् वृद्धिरिति वाच्यम् । सा किं योग्यस्यायोग्यस्य वा । नाद्यः । तस्य प्राप्तत्वात् । न द्वितीयः । 'न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत्' । इत्ययोग्यकामनिषेधात् । अतो मुक्तानां वृध्याद्यभावेन न संसारसमानधर्मता मुक्तेरिति सिद्धम् ॥

## गुर्वर्थदीपिका

भोगविशेषसद्भावादित्यत्र प्राक् स्वस्वरूपानन्दमात्रमनुभूय तिष्ठतस्ततोऽधिकानन्दकारणीभूत-स्रक्चन्दनवनितादिभोगविशेषाणां मध्ये मध्ये सद्भावादित्यर्थः । वैचित्र्यं लभ्यते क्वचिदित्यस्य स्वेनानुभूयमानबहुतरानन्दराशिष्वेकस्मिन्नानन्देऽत्यन्तमासक्तचित्तस्य शक्त्यात्मना प्रागपि स्थिते कस्मिंश्चिदानन्दांशे वनितादिभोगविशेषेण व्यक्त्याख्यं वैचित्र्यं लभ्यत इत्यर्थः ।

## भावबोधः

**भोगभावाभावावुच्येत इति** । 'यथाकामं रमते' इत्यादिना भोगसद्भावस्य ''यथाकाम-मुपरमते'' इत्यनेन भोगाभावस्याभिधानादिति भावः । विशेषं चाहेति । अयं च विशेषो मुक्त-विरिश्चेतरेषां मुक्तानामिति बोध्यम् । स्मृतिगत'मुक्तानाम्' इत्यस्यापि तदितरमुक्तपरत्वात् । यथोक्तमनुव्याख्याने–

'मुक्तानां तु तदन्येषां समुद्रतरलोपमा' इति ।

व्याख्यातं च तत्सुधायां ब्रह्मण इति विशिष्याभिधाने को हेतुरित्यत आह– **मुक्तानां त्विति** ॥ विशेषबलेन न वृद्धिह्रासवतीत्यर्थः । यथोक्तमवृद्धिह्रासरूपवत्त्वमित्यादीति ॥ **एतेदेवेति** ॥ अवृद्धिह्रासरूपत्वमित्येतदेवेत्यर्थः । 'न हीयते यत्र गत्वा' इति श्रुतिविरोध-परिहारार्थमिति भावः । अत्राद्ये– उपासनावतोऽपि मुक्तस्य वृद्ध्याद्यभावविषयकश्रुत्याद्युक्त्या सार्वकालिकतदुपासनस्य वृद्ध्याद्यकारणत्वोक्तिः । द्वितीये– कादाचित्कतद्विषयभोगविशेषस्य वृद्ध्याद्यकारणत्वोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

शङ्कते ॥ **नेति** ॥ **प्रामाणिकेति** ॥ स्त्रीभिर्वा यानैर्वेत्यादिप्रमाणसिद्धेत्यर्थः । भाष्यं व्याचष्टे ॥ **न मुक्तस्येति** ॥ स्वयं हेतुमाह ॥ **मुक्तभोगेति** ॥ तदुपपादकत्वेन भाष्यशेषं व्यनक्ति ॥ **कुत इति** ॥ अक्षरार्थमाह ॥ **भोगमात्रस्येति** ॥ प्रागुक्तशङ्कामनूद्य निराह ॥ **न च वशित्वादिति** ॥ **निषेधादिति** ॥ जगद्व्यापारवर्जमित्यत्र भाष्योक्तस्मृतौ ॥ **अत इति** ॥ स्मृतिप्रत्यक्षानुमानबला-द्भोगविशेषस्य फलरूपतया वृद्ध्यादौ कारणाभावाच्चेत्यर्थः ॥

## वाक्यार्थमुक्तावली

सूत्रे चशब्दः शङ्काव्यावर्तक इति भावेन भाष्ये न च भोगविशेषादिविरोध इत्युक्तं, तद्व्याचष्टे ॥ **न मुक्तस्येति** ॥ भाष्ये भोगविशेषपदेन तत्तारतम्यमादिपदेन भोगाभाव उच्यते तस्य ह्रासकारणत्वादिति भावेन टीकायां वृद्ध्यादिकारणभावाभ्युपगम इत्यादिप्रयोगः उत न भोगविशेषाविरोध इत्यतो भोगमात्रसाम्यादिति बुद्ध्या सूत्रं विभज्य व्याचष्टे ॥ **मुक्तभोगस्येति** ॥ एतेन भोगमात्रस्य विशेषे सत्यपि मुक्तस्यानन्दवृद्ध्यादिकं विना साम्यादेकप्रकारत्वादित्यर्थ उक्तो भवति ॥ **कुत इति** ॥ भोगमात्रस्य विशेषे सत्यपि तस्य वृद्ध्याद्यकारणत्वेन मुक्तस्यैकप्रकारत्वमेवेत्येतत्कुतः प्रमाणादित्यर्थः । तदुत्तरत्वेन भोगमात्रसाम्यलिङ्गादित्येतद्व्याकुर्वदेतमित्यादिभाष्यं व्याचष्टे ॥ **एतमानन्दमिति** ॥ **भोगभावाभावाविति** ॥ यथाकामं चरतीत्यादिना भोगसद्भावः यथाकाममुपरमत इति तदभावश्चोच्यत इत्यर्थः ॥ **अन्यथानुपपत्तेरिति** ॥ भोगादेरकारणत्वं विना तस्मिन्सति कार्याभावस्यानुपपत्तेरित्यर्थः ॥ **विशेषं चेति** ॥ चशब्दसूचितं विशेषं चेत्यर्थः ॥ **कादाचित्कविशेष इति** ॥ चतुर्मुखादीनां मुक्तौ तत्तत्कालीनभोगबाहुल्येनानन्दे कश्चिद्विशेषोऽस्ति। न च मुक्तानां तु तदन्येषामित्यनुव्याख्याने चतुर्मुखातिरिक्तानामेव विशेषस्योक्तत्वात्तद्विरोधः तत्र चतुर्मुखस्य सर्वज्ञत्वेन तज्ज्ञाने विशेषाभावस्योक्तत्वात् । दक्षिणानामपि सुखविशेषस्योक्तत्वेन चतुर्मुखे सुखविशेषस्य सुतरां सिद्धत्वात् । यदा ज्ञाने विशेषोऽस्तीत्यत्रेदं सामान्यवाक्यं प्रमाणीक्रियते तदा मुक्तानामित्यस्य चतुर्मुखातिरिक्तानामित्यर्थः । अत एव न सुधाविरोधोऽपीति ज्ञेयम् । भावबोधे त्वयं विशेषो मुक्तविरिञ्चेतरेषां मुक्तानामिति ज्ञेयम् । स्मृतिगतमुक्तानामित्यस्यापि तदितरमुक्तपरत्वात् । यथोक्तमनुव्याख्याने । मुक्तानां तु तदन्येषां समुद्रतरलोपमेति । व्याख्यातं च सुधायाम् । ब्रह्मण इति विशिष्याभिधाने को विशेष इत्यत आह ॥ **मुक्तानामिति** ॥ विशेषबलेन वृद्धिह्रासवतीत्यर्थः । यथोक्तमवृद्धिह्रासरूपत्वमित्यादीति व्याख्यातम् ॥ **एतदेवेति** ॥ न हीयते यत्र गत्वेत्यादेः का गतिरित्यतो यदुक्तं मुक्तानां प्रायिकत्वमित्येतदेवेत्यर्थः ॥ **प्रवाहत इति** ॥ यथाकृतमालाप्रवाहस्य समग्रस्यापि कदाचिद्वृद्धिः कदाचिद्ध्रासः । एवं मुक्तानन्दस्यापि समग्रस्य कदाचिद्वृद्धिः कदाचिद्ध्रासो वा नास्तीत्यर्थः ॥ **भोगानां त्विति** ॥ भोगानां विशेषेषु सत्स्वानन्दे किञ्चित्तारतम्यमस्तीत्यर्थः । सुखमेव सदोदितमित्येतन्मनसि निधायाह ॥ **न द्वितीय इति** ॥ अत्राद्ये मुक्तानां प्रमाणत्रयेण वृद्धिह्रासनिषेधः ।

(वाक्यार्थमुक्तावली)
द्वितीये कारणाभावलिङ्गस्यासिद्धिमाशङ्क्य भोगविशेषस्य प्रवाहतो वृद्धिह्रासाकारणत्वसमर्थनमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**भोगविशेषसद्भावादिति ।** भोगविशेषरूपकारणसद्भावादित्यर्थः । आनन्दादिवृद्ध्याद्यकारणत्वात् आनन्दादिवृद्ध्यादि प्रति अकारणत्वात् ॥ **भोगभावाभावाविति** ॥ यथाकामं रमते इत्यादिना भोगसद्भावस्य यथाकामं उपरमते इत्यनेन भोगाभावस्याभिधानादिति भावः ॥ **इदं चेति** ॥ मुक्तभोगभावाभाववचनमित्यर्थः । **अन्यथानुपपत्तेरिति** । वृद्ध्याभावोक्तिः अन्यथेत्यर्थः ॥ **विशेषं चाहेति** ॥ अयं च विशेषः मुक्तविरिञ्चेतरेषां मुक्तानामिति बोध्यम् । स्मृतिगतमुक्तानामित्यस्यापि तदितरमुक्तपरत्वात् । अत एव सुधायामुक्तम् । ननु तदन्येषां इत्यनुव्याख्यानावसरे ब्रह्मण इति विशिष्याभिधाने को हेतुरित्यत आह ॥ **मुक्तानां त्विति** ॥ विशेषबलेन न वृद्धिह्रासवतीत्यर्थः । यथोक्तं अत वृद्धिह्रासरूपत्वमित्याद्युक्तमिति भावः ॥ **एतदेवेति** ॥ अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकमित्येतदेवेत्यर्थः । न हीयते यत्र गत्वेति श्रुतिविरोधपरिहारार्थमिति भावः ।। अत्राद्ये सूत्रे सार्वकालिकतद्गुणोपासनस्य वृद्ध्याद्यकारणत्वोक्तिः । द्वितीये कादाचित्कभोगविशेषस्य वृद्ध्याद्यकारणत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**इदञ्चेति** ॥ श्रुत्युक्तमित्यर्थः ॥ तद्वृद्ध्यादौ आनन्दवृद्ध्यादौ न कारणमित्यन्वयः । कारणत्वे श्रुत्युक्तस्य साम्यस्यानुपपत्तेरित्यर्थः ॥ **विशेषं चाहेति** ॥ अयं च विशेषो मुक्तविरिञ्चेतरेषां 'मुक्तानामेव । यथोक्तमनुव्याख्याने 'मुक्तानां तु तदन्येषां समुद्रतरलोपमा' इति ॥ **प्रमाणे कादाचित्कविशेष इति** ॥ समुद्रतरलवद्भिद्यमानस्यैव वृद्धिह्रासरूप इत्यर्थः ॥ **एतदेवेति** ॥ अवृद्धिह्रासरूपत्वमित्युक्तमेवेत्यर्थः ॥ **वशित्वादिति** ॥ वशित्वेन कामिताशेषप्राप्तेरित्यर्थः । भगवदधीनत्वेन वशित्वमेव नास्तीत्यपि द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

भोगमात्रस्य साम्ये मुक्तभोगस्यानन्दवृद्ध्याद्यकारणत्वे लिङ्गाच्च लिङ्गसद्भावाच्चेत्यर्थः ॥ **विशेषं चाहेति** ॥ अयं च विशेषो मुक्तविरिञ्चेतरेषां मुक्तानामिति बोध्यम् । स्मृतिगत-मुक्तानामित्यस्यापि तदितरमुक्तपरत्वात् यथोक्तमनुव्याख्याने 'मुक्तानां तदन्येषां समुद्रतरलोपमा' इति । व्याख्यातं चैतत्सुधायाम् । ब्रह्मण इति विशिष्याभिधाने को हेतुरित्यत आह ॥ **मुक्तानां त्विति** ॥ विशेषबलेन वृद्धिऱ्हासवतीत्यर्थः । यथोक्तमवृद्धिऱ्हासरूपत्वमित्यादीति ॥ **एतदेवेति** ॥ अवृद्धिऱ्हासरूपत्वमित्येतदेवेत्यर्थः ॥

॥ इति स्थित्यधिकरणम् ॥ १० ॥

## ११. अनावृत्त्यधिकरणम्

**॥ ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ ॥ २३ ॥**

'न च पुनरावर्तते न च पुनरावर्तते,' 'सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्' इत्यादिश्रुतिभ्यः ॥

॥ इति अनावृत्त्यधिकरणम् ॥ ११ ॥

ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥
नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥
इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥

### तत्त्वप्रदीपिका

स्थानान्तरेभ्य इव तस्माद्यदा कदाचिदपि नैवावृत्तिः शङ्कनीयेत्याह– अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते । न च पुनरावर्तते न च पुनरावर्तते,' 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्वं उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्' 'यो वा एतामेवं वेदापहत्य पाप्मानमन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति' इत्यादिश्रुतिभ्यः । अत्र सम्भवो भोगः । श्रीमन्महैतरेयोपनिषद्भाष्ये च– ''स्वरानन्दो विष्णुरत्रग इति स्वर्गलोको विष्णुलोकः । अमृतः सन्सर्वान्कामानाप्त्वा तानेव सर्वान्कामान्समभवत् अनुभवति । अपेक्षितवस्तुस्वीकार आप्तिः । सम्भवो भोगः । 'तां समभवत्ततो मनुष्या अजायन्त'

(तत्त्वप्रदीपिका)

इत्यादिवत् । मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः । मुख्य एव चार्थः स्वीकार्यः । अमुक्तानां विष्णुलोकगमनेऽपि न सर्वकामावाप्तिः । जयविजयादीनामप्रियदर्शनात् । अतोऽमृतः सन्सर्वान्कामानाप्त्वेत्यर्थः ।

'मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः ।
सर्वानपि निरातङ्कः सर्वदा च हरेर्वशः' इति सत्तत्वे ॥

'अनारब्धफलानां च प्रारब्धानां च सर्वशः ।
कर्मणां दाह एवायं मुक्तिरित्यभिधीयते ॥
स तु मुक्तस्ततो देहादुद्गच्छति परात्मना ।
प्रेरितो विष्णुलोकश्च प्राप्य भोगानवाप्य च ॥
भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित् ।
विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिला' इति ब्रह्माण्डे ॥

ऐतरेयसंहितायां च–

'प्रकृष्टज्ञानरूपस्य प्रसादात्परमात्मनः ।
अस्माल्लोकात्समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम् ॥
अमृतः सन्विष्णुलोके भोगन्सम्प्राप्य पुष्कलान् ।
भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम्' इति ॥ इत्यनावृत्त्यधिकरणम्

इदानीं परिसमापितभाष्यो भगवान्भगवत्तमवेदव्यासशिष्यप्रकरपुरस्सरः सकलसुमनो-मनोवारिजप्रबोधप्रभाकरः समस्तवेदार्थमीमांसकवरचूडामणिः प्रतिवादिवारणपतिदर्पविदारण-सिंहराजः परमात्मतत्वविज्ञानगुरुपरमाचार्य आत्मनः स्वरूपं ज्ञानाधिकारिणां त्रिज्ञापयन् स्वकृतं च भगवति नारायणे समर्पयन्नाह–

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेतदमुना भाष्यं कृतं केशवे ॥

तस्य वायोर्यदेतत्तृतीयं रूपं अमुना रूपेण केशवे भगवति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्राणां

(तत्त्वप्रदीपिका)

भाष्यं कृतम् । यस्य वेदवचने त्रीणि रूपाण्युदितानि । अलं दिव्यानि अत्यन्तं प्रकाशवन्ति स्तुत्यानि देवसेव्यानि च । बट् तद्दर्शतमित्यादिनाऽर्थसङ्ग्रहणात्मकेन तद्वेदवाक्यं लक्षयति । तत्सहसो देवस्य वायोः स्वरूपं महाबलं ज्ञानात्मकं ततम् । इत्थं वक्ष्यमाणप्रकारेण वपुषेऽवतारायाधायि भगवदिच्छया स्वबुद्ध्या च । यतो भारतिज्ञानात्मकत्वाद्भर्गाख्यं ब्रह्माभिव्यक्तमभूत् । अथवा यतो देवात्स्वयमजनि तस्य विष्णोर्देवस्य भर्तृ गन्तृ च । तत्र प्रथममृतस्य शश्वदेकप्रकारस्य रामस्याऽज्ञाप्रणेतृ यद्रूपं तस्य समीपमेकान्ततः प्राप्नोति साधयति च तत्कार्यम् । सदा च नित्यप्रत्यक्षस्य तस्य समीपगत एव ह्ययं मतिशब्दितो हनुमान् । अद्यापि हि सिद्धगन्धर्वपरिगीतसततरमणात्मकसकलसज्जनमनोरमणरामाभिधेयरमारमणगुणगणामृतरसास्वादमहोत्सव समुद्भूतहर्षाश्रुगद्गदपुलकाकुलितः किम्पुरुषे खण्डे तिष्ठतीति वदन्ति ॥

तस्यैव क्षितिभारभूतप्रभूतबलदुर्दमदुष्टजनसंहरणकृतावतारस्य कृष्णस्य सहकारि पृतनाक्षयकारि पृक्षो द्वितीयं वपुः ॥

तृतीयं मध्व इत्युच्यते । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इत्युक्तम् । अतः श्रीमदानन्दतीर्थभगवत्पादाचार्य इत्यर्थः । यस्यास्खलितानवरतवेदशास्त्रव्याख्यानश्रवणकौतुकसमुत्खातदुःखसङ्घातो निखिलपण्डितवर्गो महामृतसमुद्रावगाहीव बहुलमाह्लादमाप्नोति । एतदिति सन्निहितत्वात् । अमुनैतेन विष्ण्वाख्यपरब्रह्मप्रतिपादकं श्रीमद्भाष्यं कृतमित्यर्थः ॥

प्रारब्धशास्त्रपरिसमाप्तिस्तत्प्रसादादेवेति प्रकटयन्नन्तेऽपि देवतागुरुप्रणतिमाचरति–

ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥
ज्ञानानन्दादिभिर्भक्तप्रबोधानन्दनादिभिः ।
गुणैरगण्यैः पूर्णाय नमो नारायणाय ते ॥
दुःखाज्ञानादिरहिता सुखज्ञानादयो गुणाः ।
सदा यस्यापरिमिताः तं नतोऽस्मि गुरोर्गुरुम् ॥
देशे काले च सर्वस्मिन्सर्वावस्थासु सर्वतः ।
यः प्रियोऽभ्यधिको विष्णुर्गुरोस्तं प्रणतोऽस्म्यहम् ॥
प्रणमत पदपद्मं व्यासदेवस्य विष्णो
र्विधिमुखविबुधश्रीमौलिसङ्क्रान्तरेणुः ।

गुरुरयममितार्थं यत्प्रसादैकबन्धु
र्व्यधित परमविद्याभाष्यमीरोत्तमांशः ॥ १ ॥

त्रिजगति विलसन्तस्सन्ततध्वान्तमन्त
र्द्युमणय इव दूराद्दारयन्तः समन्तात् ।
निखिलनिगमभर्तुः सूत्रकर्तुः परेशः
पदकमलपरागाः पान्तु नः पावयन्तः ॥ २ ॥

यद्वाक्प्रसारपरमामृतपानतृप्ताः
सन्तः सदा सकलदुःखरुजोऽतितीर्य ।
नित्यानुभूतिमदपारसुखैकरूपाः
क्रीडन्ति तं परमकारुणिकं नताः स्मः ॥ ३ ॥

श्रीमन्महागुरुपदाम्बुजरेणुपुञ्जैः
मूर्ध्नाऽभिषेकमधिगम्य धृतानुभावः ।
तत्वे सुदुर्ग इह भाष्यवरस्य टीका
माज्ञाबलादकृषि लेशत एष तेषाम् ॥ ४ ॥

सद्युक्तिरत्नरुचिरामधिरुह्य भाष्य
निःश्रेणिमुल्बणतमस्तरणैकहेतुम् ।
लब्ध्वाऽनुभाष्यमणिदण्डकरावलम्बं
भाष्यानुभाष्यमुखतत्कृतिरत्नदीपैः ॥ ५ ॥

प्राप्य प्रकाशितमहं परमाख्यविद्या
प्रासादवर्यसदनस्य पदारविन्दम् ।
सम्प्रीतये भगवतः परमस्य भक्त्या
सत्तत्वदीपमिममत्र समर्पयामि ॥ ६ ॥

तत्वाशेषविशेषदीपकतमेष्वेतेषु दीपेष्वयं
तेभ्यः सम्भृत आत्मभातवपुपः स्यात्प्रीतयेऽप्यल्पकः ।
पूर्णानन्दभुगीश्वरः सुरगणैः सम्पद्गिराऽराधित
स्तुष्येत्तुष्यति चाल्पयोपहृतया भक्त्या पयोविप्रुषा ॥ ७ ॥

(तत्त्वप्रदीपिका)

निःश्रेणितां निलयतां मणिदीपतां च
दीपान्तरप्रभवकारणतां च याता ।
हस्तावलम्बपदतां च तदेवमेपा
कृत्स्ना कृतिर्गुणनिधेरिह भाष्यकर्तुः ॥ ८ ॥

सर्वानुवादमिह नाकरवं प्रतीकं
नाप्यग्रहीषमलसः प्रतिभाष्यमेपः ।
तस्यापि मेऽत्र भवतश्चरणाश्रितस्य
ह्याज्ञाकृतिः सुकृतिरस्तु गुरोः कृपालोः ॥ ९ ॥

नमस्तस्मै नमस्तस्मै समस्तस्वामिनेऽस्तु ते ।
नमस्तस्मै च यस्तस्मै नमस्कर्ता गुरुस्सदा ॥ १० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां त्रिविक्रमार्यकृतौ तत्त्वदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्म प्राप्य भोगान् भुञ्जानस्य मुक्तस्यापुनरावृत्तिसमर्थनादस्ति शास्त्रादिसङ्गतिः । प्रकृतो मुक्त एवात्र विषयः । किं तस्य पुनरावृत्तिरस्ति न वेति सन्देहः । उभयथा सम्भवः सन्देहबीजम् । अस्ति मुक्तस्य पुनरावृत्तिरिति पूर्वः पक्षः । स्वर्गादिगतानां पुनरावृत्तिदर्शनात् । न च स्वर्गादिगतानां युगमन्वन्तरादिमात्रवासित्वाद्युक्ता पुनरावृत्तिर्न मुक्तस्य तस्य समस्तकालवासित्वादिति वाच्यम् । समस्तस्यापि कदाचित्समाप्तिसम्भवात् । न च कालस्यानन्तत्वात्तत्समाप्त्ययोगः । भारतयुद्धे त्रयोदश्या एव पञ्चदशीत्वदर्शनात् । तत्र तिथित्रयस्य युगपत्समाप्तिवदनन्तत्वेऽपि कालस्य समस्तस्यापि युगपत्समाप्तिसम्भवात् । अतो मुक्तौ पुनरावृत्तिसद्भावादपुरुषार्थता मुक्तेरिति । सिद्धान्तयत्सूत्रमुपन्यस्य तदुपात्तश्रुतीरेवोदाहरति ॥ **अनावृत्तिरिति** ॥ न मुक्तस्य पुनरावृत्तिः । 'न च पुनरावर्तत' इति श्रुतेः । किं च मुक्तस्य सर्वकामावाप्तिः श्रूयते ॥ **सर्वान्कामानिति** ॥ ततश्च न तस्य पुनरावृत्तिः । न हि कश्चित्पुमान्पुनरावृत्तिकामोऽस्तीति भावः । समस्तकालसमाप्तिस्तु व्याहतत्वादुपेक्षणीयैव । समस्तशास्त्रावधारणार्था सूत्रस्यैव द्विरुक्तिः । अतो मुक्तानां पुनरावृत्त्यभावाद्युक्तं मुक्तेः पुरुषार्थत्वमिति सिद्धम् ॥

(तत्त्वप्रकाशिका)

तदेवं विरक्तिभक्त्युपास्तिजनितभगवत्साक्षात्कारोदिततत्प्रसादादशेषपुरुपार्थप्रवरकैवल्यसिद्धे-रशेषगुणपूर्णतया निर्दोपतया च भगवान्नारायणो जिज्ञास्य इत्यशेषमतिमङ्गलम् ।

अथायं भाष्यकारो यं गुणगणार्णवतया प्रतिपादितवान्यच्छिष्यतया चैतादृशीमतिविशदां संविदं लब्धवान्यस्मिंश्चात्मनो निरुपाधिकप्रीतिस्तमेव देवतात्वेन गुरुत्वेन चान्तेऽपि नमति ॥ **ज्ञानेति** ॥

अथ स्वभाषितभाष्यस्याप्तिमूलत्वसमर्थनाय श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्नाह ॥ **यस्येति** ॥ तस्य वायोर्देवस्य बळित्थेत्यादिवेदवचने क्रीडादिगुणयुक्तानि त्रीणि रूपाण्युदितानि तस्य यत्तृतीयं रूपं तेनेदं भाष्यं हरिविपयतया कृतमित्यन्वयः । कीदृशं चास्य मूलरूपं कानि च त्रीणि रूपाणि कीदृशानीति तत्राह ॥ **अलमिति** ॥ यदस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं भर्गो जगद्धरणगमनगुणं महन्महनीयं तदित्थंभूतमेव रूपत्रयावताराय भगवता निहितं प्रेरितमवतीर्णं च । तत्र प्रथमं हनुमदाख्यं वपुः रामस्य वचांसि सीतां प्रति नीतवत् । रामविपयवचांसि मूलरामायण-रूपाणि शिष्येषु नीतवत् । रामवचसि यो नयो न्यायः आज्ञारूपस्तद्युक्तं वा । द्वितीयं वपुर्भीमनामकं कुरु पृतनाक्षयकरम् । तृतीयं तु वपुरानन्दरूपस्य हरेः प्रतिपादकशास्त्रनिर्मातृ-मध्वाभिधमिति । अतः परमाप्ततमप्रणीतत्वादिदं भाष्यं सकलसुजनैरादरेणाङ्गीकार्यमिति भावः ॥

उत्पत्तिस्थितिसंहृतिप्रभृतयो भावा भवन्त्याज्ञया
पद्मापद्मभवादिसर्वजगतो व्यस्तास्समस्ताः सदा ।
यस्यागण्यगुणाकरस्य करुणापीयूषवारां निधेः ।
सोऽयं दूरनिरस्तदोषनिकरः प्रीतोऽस्तु नारायणः ॥ १ ॥

अगाधबोधैर्विवृतातिभावभाष्यानुवादेन न मेऽपराधः ।
न हीन्दिराराध्यपदो मुकुन्दो दूर्वाङ्कुरैर्मन्दधनैरपूज्यः ॥ २ ॥

मध्वदुग्धाब्धिसम्भूतभाष्येन्दूदितकौमुदी ।
भूयात्सत्कुमुदानन्ददात्री तत्त्वप्रकाशिका ॥ ३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ चतुर्थाध्यायः सम्पूर्णः ॥

## गुर्वर्थदीपिका

'चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ॥

इति भारतश्लोकस्यायमर्थः । तिथिक्षये पञ्चदशीं पञ्चदशादिनयोग्याममावास्यां चतुर्दशीं चतुर्दशादिनसम्बन्धिनीं भूतपूर्वां जानामि । प्रतिपदमारभ्य क्षये सति त्रयोदश्याख्यतिथेर्लोपो भवति तदा द्वादश्यनन्तरं चतुर्दश्येव भवति । चतुर्दशादिने अमावास्या भवतीति पूर्वं दृष्टमस्तीति । एवं तिथिवृद्धौ पञ्चदशीममावास्यां षोडशीं षोडशादिने जातामपि भूतपूर्वामभिजानामि । इमामवस्थां नाभिजानामि । काऽसावित्यत आह ॥ **अमावास्यां त्रयोदशीमिति** ॥ अमावास्यां त्रयोदशीं त्रयोदशादिने जातां नाभिजानामि । दुर्योधनपातसमये औत्पत्तिकातिक्षयसामर्थ्यादमावास्यां त्रयोदश्येव जातेति भारतश्लोकोक्ततात्पर्यमभिप्रेत्याह ॥ **भारतयुद्धेति** ॥ समस्तकालसमाप्तिस्तु व्याहतत्वादित्यत्र समस्तकालसमाप्तिः कदेत्युक्ते पुनः कालस्यैव वक्तव्यत्वादित्यर्थः ।

मूलरूपे देवस्येति विशेषणादित्थमेव च वपुषे धायीत्युक्त्याऽवताराणामपि देवत्वमस्तीति भावेनोक्तम् ॥ **भाष्ये दिव्यानि रूपाणीति** ॥ दिव्यानि देवपदयोग्यगुणवन्तीत्यस्य पदस्यार्थमभिप्रेत्याह ॥ **क्रीडादीति** ॥ रामवचोनयमित्यस्य रामस्य वचांसि नयतीति रामवचोनयमित्यर्थमभिप्रेत्याह ॥ **रामस्येति** ॥ रामस्य वचसो नयो न्यायो यस्येति समासान्तरमभिप्रेत्याह ॥ **रामवचसि यो नय इति** ॥ पृत् पृतना'क्षि क्षय' इति धातोः कर्त्रर्थेऽसुन् प्रत्यये कृते क्षः क्षयकर इत्यर्थो लभ्यते । पृतनायाः क्षः पृक्षः निरुक्तत्वात्तकारलोप इत्यभिप्रेत्याह । कुरुपृतनाक्षयकरमिति । 'मदी हर्षे' इति धातोरुपदेशेऽजनुनासिक इदितीकारस्येत्संज्ञया लोपे सति 'तृतीयोऽतिशय' इति वचनाद्दकारस्य च धकारे कृते अतिशयितानन्दरूपो भगवान् मध्वित्युच्यते । 'वा गतिगन्धनयोः' इति धातोः आतोऽनुपसर्गे कः' इति करणार्थे कप्रत्यये कृते गत्यर्थानां च ज्ञानार्थत्वात्तस्य वं ज्ञानसाधनं शास्त्रं यस्य स मध्व इत्यभिप्रेत्याह ॥ **आनन्दरूपस्येति** ॥ व्यस्तास्समस्तास्सदेत्यत्र व्यस्ताः विस्तारवन्तः समस्ताः संकुचिता इत्यर्थः । स्वरूपोत्पत्तिधर्मोत्पत्तिदेहोत्पत्तिपराधीनविशेषावाप्तिरूपोत्पत्तिरिति चतुर्विधा उत्पत्तयः । स्वरूपनाशधर्मनाशदेहनाशापूर्णत्वादिरूपचतुर्विधा नाशाश्च घटादिषु व्यस्ताः । लक्ष्म्यादिषु समस्ता इति विवेकः । प्रभृतिपदगृहीतौ बन्धमोक्षौ च बन्धस्य नित्यमुक्तायां लक्ष्म्यामभावान्मोक्षस्य चायोग्येऽभावात्संकुचिताविति ज्ञेयम् ।

(गुर्वर्थदीपिका)

नमामि लक्ष्मीरमणं नमामि हयकन्धरम् ।
नमामि वेदव्यासं च नमामि सुखसन्मुनिम् ॥ १ ॥

सूत्रे भाष्ये च टीकायां सूत्रोक्तश्रौतवाचि च ।
यथाशक्तिविमर्शेन प्रीयतां मे रमापतिः ॥ २ ॥

एवं गुरूणां सर्वेषां भावस्यैवं प्रकाशिका ।
वादिराजाख्ययतिना कृता गुर्वर्थदीपिका ॥ ३ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीवादिराजतीर्थपूज्यचरणविरचितायां तत्वप्रकाशिका टिप्पण्यां गुर्वर्थदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥**

## भावबोधः

**भोगान् भुञ्जानस्येति ॥** 'भोगमात्रसाम्यलिङ्गाच्च' इत्यन्तेन सर्वानुपपत्तिपरिहारेण समर्थितान् भोगान् भुञ्जानस्यात्रापुनरावृत्तिसमर्थनादनन्तरसङ्गतिरिति भावः **॥ किमिति ॥** अत्र मुक्तस्य पुनरावृत्तिरस्त्युत नास्तीति चिन्ता । तदर्थं मुक्तस्य स्वर्गादिगतसमानयोगक्षेमत्वमस्त्युत नास्तीति । तदर्थं युगमन्वन्तराद्यवच्छिन्नकालस्येव समस्तकालस्यापि समाप्तिरस्त्युत नास्तीति । तदर्थं भारतयुद्धे युगपत्तिथित्रयक्षयवत् समस्तकालसमाप्तिः किं सम्भावितोतासम्भावितेति । अनन्तत्वेऽपि कालस्य त्रयोदशीपञ्चदशीत्ववत् कदाचित् समस्तस्यापि समाप्तिसम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **अस्ति मुक्तस्येत्यादिना ॥** 'सर्वान् कामान्' इति श्रुतेरपुनरावृत्त्यप्रतिपादकत्वात्तदुदाहरणमसङ्गतमित्यतः सत्यकामादिमाहात्म्यात्,

'अशेषकामसत्यत्वान्मुक्तानां न पुनर्भवः
यस्मात् स कामयेदेव नित्यमात्मा पुनर्भवम् ॥'

इति च श्रुतिरिति न्यायविवरणानुसारेण तात्पर्यमाह– **किं च मुक्तस्येति ॥ व्याहतत्वादिति ॥** समस्तकालसमाप्तेः क्वचित् काल एव वक्तव्यत्वेन व्याहतत्वादित्यर्थः । गुरव इत्यस्य तात्पर्यं **यच्छिष्यतयेत्यादि ॥** ज्ञानदातुरेव गुरुत्वमिति सुप्रसिद्धमिति भावः । 'सर्वथा' इत्यस्य तात्पर्यं **निरुपाधिकेति ॥ स्वस्य परमाप्तत्वं दर्शयन्निति ॥** 'दर्शतम्' इत्यनेन वाक्यार्थयथार्थ-

(भावबोधः)

ज्ञानस्य, विप्रलम्भकत्वे ज्ञानोपदेशाय प्रेरणायोगात् 'निहितम्' इत्यनेनाविप्रलम्भकत्वस्य, 'कृतमिदं भाष्यम्' इत्यनेन विवक्षाकरणपाटवयोरुक्तत्वादिति भावः । 'दिव्यानि' इत्यस्यार्थमाह– **क्रीडादिगुणयुक्तानीति ॥ हरिविषयतयेति ॥** अनेन 'हरौ' इति विषयसप्तमीत्युक्तं भवति ।

'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' इति प्रमाणानुसारेण 'रामवचो नयम्' इत्येतत् द्वेधा व्याचष्टे– **रामवचांसीत्यादिना ॥** अत्राद्ये– कर्तरि षष्ठी । द्वितीये– कर्मणि षष्ठी । अत एव रामविषयवचांसीत्युक्तम् । अनेन वचांसि नयतीति वचोनयमिति व्युत्पत्तिर्दर्शिता भवति । 'साधको रामवाक्यानाम्' इति अर्थत्रयानुगुणप्रमाणानुसारेण प्रकारान्तरेण व्याचष्टे– **रामवचसि यो नय इति ॥** अनेन रामवचसि नयो यस्येति बहुव्रीहिरित्युक्तं भवति । 'भीमस्तु बहुभुक् पृक्षो' 'पृतनाक्षयकारी च द्वितीयस्तु' इति प्रमाणानुसारेण 'पृक्षो द्वितीयं वपुः' इत्येतद्व्याचष्टे । द्वितीयं वपुरित्यादिना । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' ॥ इति प्रमाणानुसारेण मध्वशब्दार्थ-माह– **आनन्दरूपस्य हरेरिति ॥**

रघुवर्यगुरुप्रोक्तो भावो जयमुनेर्मया ।
लिखितो मन्दबोधार्थं प्रीयतां श्रीपतिस्ततः ॥

**॥ इति श्री रघूत्तमतीर्थकृत तत्वप्रकाशिकाव्याख्याने भावबोधे
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## भावदीपः

**अपुनरावृत्तीति ॥** गर्भप्रवेशजन्ममृत्याद्यभावेत्यर्थः । वैकुण्ठादिस्थानात्स्वच्छन्देन सर्वत्र स्वयोग्यस्थलसञ्चारस्याप्रतिहतेः । यं यमन्तमभिकामो भवतीत्यादेः । एतेन या पूर्वत्र मुक्तानामेकरूपा स्थितिरुक्ता सात्र शाश्वतीत्युच्यत इति पूर्वसङ्गतिरपि सूचिता । अन्यथा संसारसमानधर्मतापत्तेरिति फलस्य पूर्वत्रैव स्फुटत्वादुपसंहारे कीर्तनाच्चात्रानुक्तिः ॥ **उभयथा सम्भव इति ॥** लोकदृष्टिरलौकिकत्वमिति भावः । मुक्तस्यापि पुनरावृत्त्याशङ्केत्यन्यत्रोक्त-प्रतिज्ञामाह ॥ **अस्तीति** ॥ स्वयं हेतुमाह ॥ **स्वर्गेति** ॥ हेतोरप्रयोजकत्वमाशङ्कते ॥ **न चेति** ॥ कदाचित्समस्तस्यापि सम्भवादित्यन्यत्रोक्तहेतुं शेषोक्त्यात्र योजयति ॥ **समस्तस्यापीति** ॥

(भावदीपः)

अनन्तत्वात्कालस्य त्रयोदशी पञ्चदशीवदित्यन्यत्रोक्तशङ्कागर्भदृष्टान्तांशं व्यनक्ति ॥ **न चेति** ॥ **भारतेति** ॥

चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ॥

इत्यादिना कदाप्यननुभूतापि त्रयोदशी पञ्चदशीत्वेनाद्य दुर्योधनपातसमये महोत्पातसूचिका जातेति श्रवणादिति भावः ॥ **अत इति** ॥ समस्तस्यापि कालस्य समाप्तिसम्भवादित्यर्थः ॥ सूत्रार्थमाह ॥ **न मुक्तस्येति** ॥ स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते । न च पुनरिति पूर्वत्र मुक्तस्य प्रकृतत्वादिति भावः । सत्यकामत्वादिमाहात्म्यादित्यन्यत्रोक्त्यनुरोधेनोत्तरश्रुत्युक्तेरुपयोगमाह ॥ **किं चेति** ॥ एतेन सूत्रे शब्दादित्यस्य न केवलमनावृत्तिबोधकशब्दादित्यर्थः । किंतु सर्वकामावाप्तिशब्दादित्यप्यर्थः सूचितो भवति ॥ **व्याहतत्वादिति** ॥ कदा समाप्तिरित्युक्ते कदाचिदित्यादेर्वाच्यत्वादिति भावः ॥ **अत इति** ॥ शब्दादित्यर्थः । युक्तं मुक्तेः पुरुषार्थत्वमिति फलोक्तिः ।

फलोक्त्या समस्तशास्त्रार्थमुपसंहरति ॥ **तदिति** ॥ विरक्तीत्याद्युक्त्या ह्युपासनाध्यायार्थः । कैवल्यसिद्धेरिति चतुर्थाध्यायार्थः । अशेषेत्यादिस्तु पूर्वाध्यायद्वयार्थः । भगवान्नारायणो जिज्ञास्य इति फलोक्तिः । एतेनाद्यसूत्रार्थ एव शास्त्रेण समर्थित इत्युक्तं भवति । एतेनैव निर्विशेषं चैतन्यं जिज्ञास्यमित्यस्मिन् शास्त्रे निरूप्यत इत्यादिवचनं नादरणीयमिति सूचितम् । इतिशब्दो हेत्वर्थः । इति कृत्वा निरूपितमखिलमपि प्रमेयमत्यन्तमङ्गलम् । वक्तृश्रोतॄणां कामिताशेषयोग्यपुरुषार्थप्रदमिति ॥

भाष्योक्तविशेषणत्रयस्य कृत्यं सूचयन्नवतारयति ॥ **अथेति** ॥ भाष्यसमाप्त्यनन्तरमित्यर्थः । अनेन नमनस्यावसरप्राप्तिमाह ॥ **गुणेति** ॥ अत्र गुणपदेन विधिमुखवेद्यनिषेधमुखवेद्याः सर्वेऽपि कल्याणधर्माः गृह्यन्ते । न त्वाद्यपद्य इव विधिमुखमात्रवेद्या इति भावेन गुणार्णवतयेत्येवोक्तम् । न तु निर्दोषतयेत्यपि । एतादृशीं भाष्यकरणसमर्थाम् । यस्येत्यादिपद्यं भगवता स्वयमेवान्यत्र बहुषु स्थलेषु प्रमाणोक्त्या विवृतत्वात्तदनुरोधेन व्याचष्टे ॥ **यस्येति** ॥ पद्यतात्पर्यार्थं वदन्नधिकारि-

(भावदीपः)

फलयोरुक्त्योपसंहरति ॥ **अत इति** ॥ वाय्ववतारस्य श्रुतिसिद्धत्वादित्यर्थः । भाष्योक्तगुण-पूर्णत्वस्यासम्भावितत्व शङ्कानिरासाय तदुपपादकतया जन्मादिसूत्रोक्तजगज्जन्मादिकर्तृत्वेनोप-श्लोकयन् जन्मादिकृतौ दयैव हेतुः न तु फलान्तरं येन पूर्णता न स्यादित्यपि सूचयन् गुणपदेन भाष्यश्लोके दोषाभावा अपि ग्राह्या इत्यपि दर्शयन् तत्प्रीतिमाशास्ते ॥ **उत्पत्तीति** ॥ भावाः धर्माः । जन्मादिसूत्रे अस्येति पदमसङ्कुचितसर्वपरं वियदधिकरणन्यायादिति भावेनोक्तम् ॥ **पद्मेति** ॥

भाष्यं चात्यर्थविस्तरमित्युक्तेरिह चाशेषार्थानां टीकायामनुक्तेर्लेशेनार्थोक्त्या प्राप्तापराधशङ्कां भाष्ये गाम्भीर्याभावशङ्कां च निरस्यति ॥ **अगाधबोधेति** ॥ लेशेनार्थोक्तावपि नात्र ग्रन्थे अनादरो युक्तः ॥ २ ॥ मदीयव्याख्या चन्द्रिका चन्द्रेणेव भाष्यपदवाक्यशक्तितात्पर्यार्थवर्णनरूपतया भाष्येणैकग्रन्थतामापन्नेवात्यन्तसंश्लिष्टा । अतः सर्वैरादरणीयेति भावेनाह ॥ **मध्वेति** ॥ अत एव सर्वसंश्लेषः ॥

सर्वेन्द्रियप्रेरकेण श्रीप्राणपतिनेरितः ।
यदवोचमहं तेन प्रीणातु करुणाकरः ॥ १ ॥

**॥ इति श्रीमद्भाष्यटीकाभावदीपे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## अभिनवचन्द्रिका

**पूर्वपक्षस्तु** मुक्तः पुनरावृत्तिमान् । स्वस्थानं विहायाऽन्यत्र गतत्वात् । स्वर्गादिगतत्ववत् । न च स्वर्गं गतस्य युगमन्वन्तरादिमात्रवासित्वात् युक्ता पुनरावृत्तिः । न तु मुक्तस्य । तस्याऽनन्त-कालवासित्वादिति वाच्यम् । अनन्तस्यापि कालस्य भारतयुद्धे त्रयोदश्याः पञ्चदशीत्ववत् एकैकस्याः तिथेः अनेकतिथ्यात्मकत्वेन समाप्तिसम्भवात् । अतः पुनरावृत्तिसद्भावात् न पुरुषार्थता मुक्तेरिति ।

**सिद्धान्तस्तु** न मुक्तः पुनरावृत्तिमान् । 'न च पुनरावर्तते न च पुनरावर्तते' इति शब्दात् । किञ्च सत्यकामस्य मुक्तस्य न मुक्तेः परावृत्तिः युक्ता । कामनाविरहात् अनन्तकालस्थायित्वाच्च न परावृत्तिः । न च अनन्तस्यापि कालस्य समाप्त्यनन्तरं परावृत्तिरस्त्विति वाच्यम् । अनन्तकालस्य

(अभिनवचन्द्रिका)

समाप्तिमभिधाय अनन्तरमिति पुनः कालसद्भावोक्तेर्व्याहतत्वात् । अतो मुक्तानां पुनरावृत्त्यभावात् युक्तं मुक्तेः पुरुषार्थत्वमिति सिद्धम् । इत्यशेषमतिमङ्गलम् ।

**बलित्थेत्यादिवेदवचन इति ॥** अयमत्र सूक्तार्थः 'बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतोऽजनि' । **सहसः** सहोरूपस्य देवस्य क्रीडादिगुणसंपन्नस्य वायोः मूलरूपं **बट्** बलात्मकं, **दर्शतं** ज्ञानरूपं, **भर्गः** भरणगमनगुणं, **तत्** मूलरूपम्, **इत्था** इत्थंभूतमेव मूलरूपवदेव **वपुषे** रूपत्रयावताराय यतः यस्मात् भगवता, **धायि** निहितं भागवता प्रेरितमित्यर्थः, तस्मात् अजनि । (१)

प्रथमावतारस्वरूपमाह – यदीमुपह्वरते साधते मति ऋतस्य धेना अनयन्तसस्रुतः', **यदीम्** यदेव, **मतिः** हनुमदाख्यप्रथमरूपम् । **उपह्वरते** रामस्य समीपे तिष्ठति, **साधते** रामस्य कार्याणि साधयति । **तेन** हनुमता, **ऋतस्य** सत्यरूपस्य रामस्य **सस्रुतः** अमृतस्रावयुक्ताः, **धेना** वाचः, **अनयन्त** सीतां प्रतीति शेषः । (२)

द्वितीयावतारस्वरूपमाह – 'पृक्षो वपुःपितुमान्नित्य आशये द्वितीय मा सप्तशिवासु मातृषु' । **द्वितीयं वपुः** भीमाख्यं, **पृक्षः** पृतनाक्षयकरि, पृतनायाः पृत् क्षि क्षये इत्यस्मात् डसूप्रत्यये पृक्ष इति रूपम् । **पितुमान्** अन्नवान्, बहुभुगिति भावः । **नित्यः** नित्यम्, **सप्तशिवासु** परममङ्गलरूपासु । सप्तसु मातृषु प्रमाणभूतासु, ऋगादिषु । **आशये** शेते, तद्विचारयतीति भावः । अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तो भवति । (३)

तृतीयावतारस्वरूपमाह – 'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः' । **अस्य वृषभस्य** श्रेष्ठस्य वायोः **तृतीयं** वपुः, **दोहसे** ज्ञानदोहाय, **दशप्रमतिम्** पूर्णप्रज्ञानामकम्, **योषणः** नार्यः, गुरुत्वाद्बहुवचनम्, **जनयन्त** अजनयन्त । (४)

'निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः' **बुध्नात्** ज्ञानरूपात्, **यदीम्** यस्मादेव । **महिषस्य** महितषड्गुणस्य हरेः, **वर्पसः** वरणीयत्वात्, पालकत्वात् वपोर्नामकान् गुणान् । **ईशानासः** रुद्राद्या देवाः । **अन्ये सूरयः** ज्ञानिनश्च, **शवसा** सुखेन, **निर् क्रन्त** ज्ञातवन्तः । **एतत्** तृतीयं वपुरिति पूर्वेण सम्बन्धः । (५)

(अभिनवचन्द्रिका)

'यदी मनु प्रदिवो मध्व आधवे गुह्मसन्तं मातरिश्वामथायति । य एव प्रदिवा = प्रकृष्टप्रकाशरूपः, **मध्व** आनन्दतीर्थाख्यः । **मातरिश्वा** वायुः । **गुहासन्तम्** जीवेश्वरैक्यं वदद्भिः गूहितं भगवन्तम् । **आधवे** आसमन्तात् पतित्वविषये, **मथायति** मथ्नाति । शास्त्रेण विचार्य पतित्वं निश्चाययतीति भावः । (६)

'प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो । वीरुधो दंसु रोहति । **यत्** रूपत्रयम्, **पितुः** परमात् उत्तमाद्विष्णोः **प्रणीयते** प्रकर्षेण प्रेर्यते, **पृक्षुधः** प्रश्नरूपान्, **वीरुधः** स्तम्बादीन्, **दंसु** दन्तेषु, **पर्यारोहति** चर्वितवत् । शकलीकरोतीत्यर्थः । (७)

'उभायदस्य जनुषं यदिन्वत आदिद्यविष्ठोऽभवद्घृणाशुचिः । **यत्** यस्मात्, **जनुषं** जन्म, अवतारम्, **उभा** उभौ लक्ष्मीनारायणौ । **इन्वतः** प्रेरयतः । तस्मात्, **घृणाशुचिः** कृपयाशुद्धः, **सआदित्** आभ्यांलक्ष्मीनारायणाभ्यामेव, **यविष्ठः** अवरः, अभवदित्यर्थः । (८)

गर्भसंबन्धनिमित्तदुःखलेशोऽपि नास्तीत्याह – 'आदिन्मातॄराविश द्यास्वाशुचि रहिंस्यमान उर्विया विवावृधे' । यतो वायुः, **आदित्** प्रकृतलक्ष्मीनारायणप्रेरणयैव (णादेव) मातॄः **आविशत्** न पुनरस्य गर्भवासादिनिमित्तं (किं) कर्माऽस्तीति भावः । **यासु मातृषु, आ** समन्तात्, शुचिः, शुचित्वमेवाह – उर्वियेति ॥ **उर्विया** उत्कृष्टया गर्भवासपीडया, **अहिंस्यमानः विवावृधे** विशेषेणाऽभि वृद्धोऽभूदित्यर्थः । (९)

'सप्तशिवासु मातृ'ष्वित्युक्तं तत्र विशेषमाह – 'अनुयत्पूर्वा अरूहत्सनाजुवो निनव्यसी ष्ववरासु धावते' । **सनाजुवः** सनातनं जुषन्ते प्रतिपादयन्तीति सनाजुवः । **पूर्वा** ऋगाद्याः । आरुहदिति यत् तत् **अनु** क्रमादेव, उपक्रमाद्यनुसारेणैवेत्यर्थः । **नव्यसीषु** पौरुषेयत्वेन नूतनासु, **अवरासु** तिसृषु इतिहासपुराणपञ्चरात्राख्यासु मातृषु निधावते उपक्रमादिपर्यालोचनां विनैव शीघ्रमेव अर्थं विचारयतीत्यर्थ इति । (१०)

स्वप्रतिपादितगुणादिविशिष्टतया सङ्कीर्तनपूर्वकं तत्प्रीत्तिं प्रार्थयते – **उत्पत्तीति** ॥ ननु – सर्वज्ञकल्पपद्मनाभतीर्थादिभिर्व्याख्यातभाष्यव्याख्यानाय स्वप्रवृत्तिरपहासहेतुरित्याशङ्कामपाकरोति – **अगाधबोधैरिति** ॥ स्वग्रन्थस्य प्रचयं प्रार्थयते – **मध्वेति** ॥

(अभिनवचन्द्रिका)

**सद्यो मोक्षं सतां रामचन्द्रोऽभिनवचन्द्रिका ।**
**हस्तप्राप्तमिवाऽऽतेने चतुर्थाध्यायसङ्गता ॥ १ ॥**

॥ इति श्रीसत्यनिधितीर्थ श्रीचरणचरणाराधक श्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां चतुर्थाध्यायः ॥

**॥ समाप्तश्चायं ग्रन्थः ॥**

## वाक्यार्थमुक्तावली

**अपुनरावृत्तिसमर्थनादिति ॥** असमर्थने स्थितिमाहेत्यव्यवहितनये न जायते न म्रीयत इत्युक्तं जननादिराहित्यं न स्यादिति समर्थनीय एव । असावित्यध्याहार्यम् अन्यथा श्रुत्यादिसङ्गतेरवर्णनेन न्यूनत्वप्रसङ्गात् । प्रत्यधिकरणं शास्त्रादिसङ्गतिरित्यनन्तरमन्यथेत्यादिना तत्प्रदर्शनात् । एतेनानन्तरसङ्गतिरपि द्रष्टव्या ॥ **किं तस्येति ॥** मुक्तस्य स्वर्गतस्येव पुनरावृत्तिरस्ति न वेति चिन्ता । तदर्थं स्वर्गादिगतस्येव पुनरावृत्तौ बीजमस्ति न वेति । तदर्थं बीजाभिमतं समस्तकालव्यापनमव्याहतमुत व्याहतमिति । सिद्धान्ते ब्रह्मलोकमभिसंपद्य न च पुनरावर्तत इति ब्रह्मलोकत्वरूपस्य स्वर्गवैलक्षण्योक्त्या व्यवच्छेद्यां युक्तिमाह ॥ **स्वर्गादीति ॥** तद्दर्शनादित्यतः परं तद्दृष्टान्तेन ब्रह्मलोकत्वेन हेतुना विप्रतिपन्नवैकुण्ठादेरपि पुनरावृत्तित्वसाधनसम्भवादिति द्रष्टव्यम् । स य एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुषिरं स्वर्गे सर्वान्कामानिति भाष्योपात्तश्रुतिपूर्वशेषे शरीरसाहित्यस्योक्तत्वात् । इत्यादिश्रुतिभ्य इत्यादिपदविवक्षिततया तत्वप्रदीपोपात्तायां यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठतीति श्रुतावपहत्य पाप्मानमिति पापाभावस्यानन्ते स्वर्ग इति मुक्तिकालस्य पर्यवसानाभावस्य चोक्तत्वात्तद्व्यवच्छेद्यं विश्वसम्भावनेति पूर्वपक्षन्यायं व्यनक्ति ॥ **न चेत्यादिना ॥ सबीजत्वादिति ॥** पुनरावृत्तौ बीजभूतस्य लिङ्गशरीरस्य पुण्यादिकर्मणो युगमन्वंतरादिरूपस्वर्गकालपर्यवसानस्य सत्वादिति भावः ॥ **निर्बीजत्वेनेति ॥** लिङ्गशरीराभावात् कर्मसम्बन्धाभावान्मुक्तिकालपर्यवसानस्याभावादित्यर्थः । कुतो न वाच्यमित्यत आह ॥ **अनन्तत्वादिति ॥** कालस्य तत्र समस्तस्याप्यघटितस्य कदाचित्सम्भवाद्भारतयुद्धे त्रयोदश्या एव पञ्चदशीत्वस्य कदाप्यनुपलब्धस्य दर्शनादिति । अस्यार्थः । कालस्यानन्तत्वात्तत्रानन्तकालमध्ये अघटितस्यापि समस्तस्य निर्बीजत्वेऽपि पुनरावृत्तिरूपकार्योत्पादस्य सम्भवात् ।

(वाक्यार्थमुक्तावली)

यद्वा मुक्तस्याघटितस्याशरीरसम्बन्धस्य कर्मसम्बन्धस्य च सम्भवात् । यद्वा समस्तस्याप्यनन्तस्यापि समापयितुमघटितस्यापि कालस्य कदाचिदपि समाप्तिसम्भवादित्यर्थः । कालोऽनन्त इत्येतावता कथमघटितसम्भावनेत्यत उक्तं ॥ **भारतयुद्धेति** ॥ भारतयुद्धे कदाप्यनुपलब्धस्य त्रयोदश्या एव पञ्चदशीत्वस्य दर्शनात् । तद्वत्प्रकृतेऽप्युक्तस्य सर्वस्योपपत्तेरिति भावः । यद्वा

चतुर्दशीं पञ्चदशीं भूतपूर्वां त्रयोदशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ॥

इति गदापर्वोक्तरीत्या भारतयुद्धे तिथित्रयस्य युगपत्समाप्तिवदनंतत्वेऽपि कालस्य युगपत्समापनसम्भवादित्यर्थः । अत्र टीकाकोशेषु कचिद्दर्शनादित्यनन्तरं तत्र तिथित्रयस्य युगपत्समाप्तिवदनंतत्वेऽपि कालस्यापि युगपत्समाप्तिसम्भवादिति पाठः । ननु स्वर्गादिगतानां शरीरित्वाद्युक्ता पुनरावृत्तिः न मुक्तस्य समस्तकालवासित्वादिति न वाच्यम् । समस्तस्यापि कदाचित्समाप्तिसम्भवात् । न च कालस्यानन्तत्वात्समाप्त्ययोगः । भारतयुद्धे त्रयोदश्या एव पञ्चदशीत्वस्य दर्शनात् । तत्र तिथित्रयस्य युगपत्समाप्तिवदनंतत्वेऽपि कालस्य युगपत्समाप्ति सम्भवादित्यपि कचित्पाठः । सूत्रे प्रकृतत्वान्मुक्तस्येत्यन्वेति । तथा च मुक्तस्यानावृत्तिर्न पुनस्संसारं प्रत्यावृत्तिः ॥ **न च पुनरावर्तत इति** (श्रुतेरिति) ॥ **सूत्रार्थमाह** ॥ **न मुक्तस्येति** ॥ एवं श्रुत्याऽपुनरावृत्तिं प्रसाध्य माहात्म्यमित्युक्तसिद्धान्तन्यायेनापि साधयितुं सत्यकामादिमाहात्म्यस्यासिद्धिं परिहर्तुं शब्दादित्यंशं प्रकारान्तरेण व्याकुर्वत्सर्वान् कामानिति भाष्यं व्याचष्टे ॥ **किञ्चेति** ॥ अपि च मुक्तस्य निर्बीजत्वान्न पुनरावृत्तिः । न च निर्बीजं कार्यमुत्पद्यते । व्याहतत्वात् । नापि शरीरं कर्मसम्बन्धो वा पुनस्सम्भाव्यते मुक्तत्वव्याहतेः । मुक्तिकालपर्यवसानाभावाच्च न पुनरावृत्तिः अनन्तत्वात् । अनन्तस्यापि कालस्य समाप्तिस्तु विशेषाकारेण व्याहतैव । समस्तस्यापि कालस्य कदा समाप्तिरिति पृष्टे कचित्काल इति व्याहतेः स्फुटप्रतिभासत्वादिति । तदेतत्सर्वं हृदि निधायाह ॥ **समस्तेति** ॥ **सूत्रस्यैवेति** ॥ न पुनः पूर्वाध्यायेष्विव पदानामित्यर्थः । सूत्रद्विरुक्तिमनुरुध्य समस्तशास्त्रार्थमवधारयन्नुपसंहरति ॥ **तदेवमिति** ॥ **अशेषमतिमङ्गलमिति** ॥ जिज्ञासायाः कर्तव्यत्वात्तन्निबन्धनात्मकमिदमशेषं चतुरध्यायात्मकं शास्त्रमतिमङ्गलं प्रशस्ततरमुपादेयतरमित्यर्थः । इत्यस्मत्कृतं भाष्यप्रकरणं अशेषमोक्षयोग्यमतीनां मङ्गलमुद्दिश्य भूयादित्याशीर्वादो वा ।

(वाक्यार्थमुक्तावली)

आशीर्वादस्यापि मङ्गलत्वात् । अधिकृतत्वोपपादनाय ज्ञानानन्दायेत्यस्य तात्पर्यमाह ॥ **यं गुणेति** ॥ विशिष्टत्वोपपादनाय गुरव इत्यस्य तात्पर्यमाह ॥ **यच्छिष्यतयेति** ॥ इष्टत्वोपपादनायातिप्रियायेत्यस्य तात्पर्यमाह ॥ **यस्मिन्निति** ॥ **आप्तिमूलत्वेति** ॥ विवक्षितार्थतत्वज्ञानं विप्रलिप्सा । करणपाटवं अविप्रलिप्सा चेतीयमाप्तिर्नाम । तत्र दर्शतमित्यनेन तत्वज्ञानस्य । मध्व इति शास्त्रनिर्माणेन विवक्षाकरणपाटवयोः । भगवता योग्यजनतत्त्वज्ञानायेत्थमेव निहितमित्यनेनाविप्रलिप्सायाश्चोक्तत्वादिति भावः । दिव्यानीत्यस्यार्थमाह ॥ **क्रीडादीति** ॥ **हरिविषयतयेति** ॥ अनेन हराविति विषयसप्तमीत्युक्तं भवति ।

रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हीति प्रमाणानुसारेण रामवचोनयमित्येतद्व्याचष्टे ॥ **रामस्य वचांसीत्यादिना** ॥ आद्ये कर्तरि षष्ठी । द्वितीये कर्मणि षष्ठी । साधको रामवाक्यानामित्यर्थत्रयानुगुणप्रमाणानुसारेण व्याचष्टे ॥ **रामवचसि यो नय आज्ञारूपस्तद्युक्तमिति** ॥ भगवदाज्ञाधुरंधरमित्यर्थः । पृशब्दो पृतनावाची तस्याः क्षयकारी पृक्षः । पृतना क्षयकारी चेति वचनादिति भावेनाह ॥ **कुरुपृतनेति** ॥ मधु सुखप्रदं तीर्थं शास्त्रं येन स मध्व इति मनसि निधाय मध्वित्यानंद उद्दिष्टो वेति तीर्थमुदाहृतमिति प्रमाणानुसारेण व्याचष्टे ॥ **तृतीयं त्वित्यादिना** ॥ यद्यपि तत्वप्रदीपिकाचार्यैर्यस्य त्रीणीति श्लोकावानन्दायेति श्लोकः पठित्वा व्याख्यातस्तथापि टीकाकारैः स्वाचार्योपदेशानुसारेणैव पाठमनुसृत्य व्याख्यातं बोध्यम् । अथ भगवान् टीकाकृन्मुनिर्भगवत्तमवेदव्यासशिष्यप्रकरपुरःसरेण सकलसुमनोमनोवारिजप्रबोधदिवाकरेणानन्ताम्नायार्थमीमांसकवरचूडामणिना परमात्मतत्वविज्ञानगुरुपरंपराचार्यवर्येण फणिपतीशद्विजनाय केन्द्रगुर्वादिसुरकरलालितचरणयुगलेन पूर्णप्रमतिगुरुराजेन प्रणीतमनन्तार्थं भाष्यवरं यथाचार्याभिप्रायं व्याख्यायान्तेऽपि भाष्योक्तगुणविशिष्टतया स्तुवन् ग्रन्थप्रणयनफलवत्वेन तत्प्रीतिमेवाशास्ते ॥ **उत्पत्तीति** ॥ व्यस्ताः पद्मायां विशकलिताः तस्याः स्थितिनियमनज्ञानमात्रभाक्त्वात् । पद्मभवादिसर्वजीवेषु समस्ताः तेषां सृष्टाद्यष्टकभाक्त्वादित्यादि द्रष्टव्यम् । अगाधबोधैः श्रीमत्पद्मनाभतीर्थश्रीपादप्रमुखैः विततो विस्तारितोऽतिभावो यस्य तद्विततातिभावम् । तच्च तद्भाष्यं च तदनुवादेनेत्यर्थः । विवृतातिभावमिति क्वचित्पाठः । तत्र विवृतातिभावं यत्तद्भाष्यानुवादेनेत्यर्थः । प्रदानवदेव हीति सूत्रे गुरुप्रदानपूर्विकैव विद्याफलाय भवतीत्युक्तेस्तदनुसारेण प्रश्नं कुर्वन् तेषां फलं प्रार्थयते ॥ **मध्वेति** ॥ तत्वप्रकाशिका सत्कुमुदानन्ददात्री भूयादित्यशेषमतिमङ्गलम् ॥

(वाक्यार्थमुक्तावली)

श्रीमध्वहृत्पङ्कजकीर्णकास्य कृष्णे रमालालितपादपद्मे ।
स्वानन्दसान्द्रे रचितां मयेमां मुक्तावलीं मे गुरवोऽर्पयन्तु ॥ १ ॥

श्रीविठ्ठलार्यपुत्रेण श्रीमत्तीर्थार्यसेविना ।
श्रीनिवासेन वाक्यार्थमुक्तावलिरियं कृता ॥ २ ॥

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां चतुर्थाध्यायस्य चतुर्थः पादः ॥**

## तत्त्वसुबोधिनी

**भोगान् भुंजानस्येति ॥** भोगमात्रसाम्यलिङ्गाच्च इत्यनेन सर्वानुपपत्तिपरिहारेण समर्थितान् भोगान् भुञ्जानस्यात्र पुनः आवृत्तिसमर्थनादनन्तरसङ्गतिरिति भावः । त्रयोदश्या एव पञ्चदशीत्वस्येति । तिथित्रयपक्षेण त्रयोदश्या एव पञ्चदशीत्वमिति भावः । सर्वान् कामान् आप्त्वा इति श्रुतेः अपुनरावृत्त्यप्रतिपादकत्वात् तदुदाहरणमसङ्गतमित्यतः तात्पर्यमाह ॥ **किं च मुक्तस्येति ॥ व्याहतत्वादिति ॥** समस्तकालसमाप्तेः क्वचित्काल एव वक्तव्यत्वेन व्याहतत्वादित्यर्थः । गुरव इत्यस्य तात्पर्यं यच्छिष्यतयेत्यादि । ज्ञानदातुरेव गुरुत्वमिति सुप्रसिद्धमिति भावः । सर्वथेत्यस्य तात्पर्यं निरुपाधिकेति स्वस्य परमाप्तत्वमिति । दर्शितमित्यनेन वाक्यार्थयथार्थज्ञानस्य विप्रलंभकत्वे ज्ञानोपदेशाय प्रेरणयायोगान्निहितमित्यनेनाविप्रलंभत्वस्य कृतमिदं भाष्यं इत्यनेन विवक्षाकरणपाटवयोरुक्तत्वादिति भावः । दिव्यानीत्यस्यार्थमाह ॥ **क्रीडादिगुणफलानीति ॥ हरिविषयतयेति ॥** अनेन हराविति विषयसप्तमीत्युक्तं भवति । रामस्य स्वृतरूपस्य वा चस्तेनानयन्त हीति प्रमाणानुसारेण रामवचोनयं इत्येतत् द्वेधा व्याचष्टे । द्वितीये कर्मणि षष्ठी । अत एव रामविषयवचांसि इत्युक्तम् । अनेन वचांसि नयतीति वचोनयमिति व्युत्पत्तिदर्शिता । साधकोरामवाक्यानाम् इति अर्थत्रयानुगुणप्रमाणानुसारेण प्रकारान्तरेण व्याचष्टे **रामवचसि यो नय इति ॥** अनेन रामवचसि नयो यस्येति बहुव्रीहिरित्युक्तं भवति । 'भीमस्तु बहुभुक् पृक्षो पृतनाक्षयकरी च 'द्वितीयस्तु' इति प्रमाणानुसारेण पृक्षो द्वितीयं वपुः इत्येतत् व्याचष्टे ॥ **द्वितीयं वपुरित्यादिना ॥** मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतमिति प्रमाणानुसारेण मध्वशब्दार्थमाह ॥ **आनन्दरूपस्य हरेरिति ॥** ग्रन्थप्रतिपादितगुणत्वेन भगवन्तं स्तुवन्नेव भगवत्प्रीतिं प्रार्थयते । उत्पत्तीति इति अशेषमतिमङ्गलम् ।

(तत्त्वसुबोधिनी)

नरसिंहपदद्वन्द्वं सम्प्रणम्य गुरूनपि ।
तत्प्रसादबलेनैव भावोऽयं वर्णितो मया ॥ १ ॥

तेन प्रसन्नो भवतु भक्ताभीष्टप्रदो हरिः ।
अवद्यगंधविधुरः पूर्णो निजसुखादिभिः ॥ २ ॥

आनन्दाचार्यपितृभ्यः दत्वा तत्वप्रकाशिकाम् ।
श्रीनिवासोऽकरोत् टीकां नाम्ना तत्वसुबोधिनीम् ॥

**॥ इति श्रीमद्रघूत्तमतीर्थपूज्यपादशिष्यानन्दाचार्यसूनुश्रीनिवासाचार्यकृतौ तत्वसुबोधिन्यां चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**॥ समाप्तश्चायं चतुर्थाध्यायः ॥**

## वाक्यार्थविवरणम्

**व्याहतत्वादिति** ॥ समस्तकालसमाप्तिः कदेति पृष्टे कचित्कालविशेषे समाप्तिरिति समस्तकालसमाप्त्यधिकरणतया कालस्यैव वक्तव्यत्वात् व्याहतिरित्यर्थः ॥

गुरव इत्युक्तत्वात् तत्तात्पर्यमाह ॥ **यच्छिष्यतयेति** ॥ सर्वथा इत्यस्य तात्पर्यम् ॥ **निरुपाधिकेति** ॥ **परमाप्तत्वं दर्शयन्निति** ॥ दर्शितमित्यनेन विवक्षितार्थतत्त्वज्ञानमुक्तम् । **महनीयं** पूज्यम् । निहितमित्यनेन भगवत्प्रेरणया अवतीर्णत्वोक्त्याऽविप्रलम्भकत्वम् । कृतमिदं भाष्यमित्यनेन विवक्षाकरणपाटवे उक्ते इति ज्ञातव्यम् । हराविति विषयसप्तमीत्यभिप्रेत्य हरिविषयतयेत्युक्तम् । रामस्येति कर्तरि षष्ठी । रामकर्तृकाणि वचांसि तदुक्तवचनानीत्यर्थः । तथा च रामवचांसि नयतीति योजनाद्वयेऽपि व्युत्पत्तिर्द्रष्टव्या ॥ **आज्ञारूपा इति** ॥ इदं कुर्विति श्रीरामेण विनियुक्ते सति इयं रामाज्ञेति स्वीकरोतीत्यर्थः । तथा च रामवचसि नयो यस्येति बहुव्रीहिरिति द्रष्टव्यम् ॥

'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थस्स्यात्तृतीया मारुतीतनुः' ॥

(वाक्यार्थविवरणम्)

इति प्रमाणानुसारेण मध्वशब्दार्थमाह ॥ **आनन्दरूपस्येति** ॥ तथा च मधु– आनन्दरूपहरिप्रतिपादकं, वशब्दोक्तं तीर्थं निर्मातृतया यस्येति मध्व इत्यर्थः । अत्र मधुव इति भाव्ये उकारलोपश्छन्दसो द्रष्टव्यः ॥ भूर्भुवसुवरिति यजुश्शाखिनः पठन्ति । ऋक्शाखिनस्तु स्वरिति पठन्ति ॥ तत्र उकारलोपश्छान्दसः । तद्वदिति द्रष्टव्यम् । व्यस्ताः विस्तृताः । समस्ताः संकुचिताः ॥ **करुणापीयूषवारां निधेरिति** ॥ करुणामृतसमुद्रस्येत्यर्थः । स्वकृतग्रन्थस्य नाम प्रदर्शयन्नाह ॥ **मध्वेति** ॥ इन्दुकौमुदी ज्योत्स्ना यथा तत्त्वानां घटादिपदार्थानां प्रकाशिका, इयमपि भाष्येन्दूदितकौमुदी परापरतत्त्वप्रकाशिका भूयादित्यशेषमतिमङ्गलम् ।

यादवाचार्यशिष्येण श्रीनिवासेन धीमता ।
तत्त्वप्रकाशिकादुत्थवाक्यभावः प्रकाशितः ॥

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते तत्वप्रकाशिकावाक्यार्थविवरणे चतुर्थाध्यास्य चतुर्थः पादः ॥**

## वाक्यार्थमञ्जरी

मुक्तानामनावृत्तिः न तु स्वर्गिवत्पुनरावृत्तिः । कुतः न च पुनरावर्तत इति शब्दात् श्रुतेरित्यर्थः ॥ सर्वान् कामानित्यस्याः श्रुतेरपुनरावृत्तिप्रतिपादकत्वाभावात्तदुदाहरणमसङ्गतमित्यतस्तात्पर्यमाह ॥ **किं चेति** ॥ **व्याहतत्वादिति** ॥ समस्तकालसमाप्तेः कचित्काल एव वक्तव्यत्वेन व्याहतत्वादित्यर्थः ॥ **सूत्रस्यैवेति** ॥ न त्वध्यायमात्रावधारणायैते सर्वे व्याख्याता व्याख्याता इत्यादिवत्सूत्रावयवस्येत्यर्थः ॥ शास्त्रार्थमुपसंहरति ॥ **तदेवमिति** ॥ अत्र साक्षात्कारेत्यने न तृतीयस्य, सिद्धिरित्यनेन चतुर्थाध्यायस्य, गुणपूर्णतयेति प्रथमस्य निर्दोषतयेति द्वितीयस्य चार्थ उपसंहृतः । तत्र विरक्तीत्यथशब्दस्य सिद्धेरित्यन्तेनातः शब्दस्याशेषगुणेति नारायण इति च ब्रह्मशब्दस्य चार्थोपसंहार इति विवेकः । अशेषमिति स्वरवर्णपदाद्यात्मकं सर्वमपि शास्त्रं भक्त्या पठतामत्यन्तं मङ्गलं मोक्षादिसाधनं भवतीत्यर्थः । विशेषणत्रयतात्पर्यं वदन्नेवाह ॥ **अथेति** ॥ गुरव इत्यस्य तात्पर्यं यच्छिष्यतयेत्यादि । ज्ञानदातुरेव गुरुत्वं सुप्रसिद्धमिति भावः । सर्वथेत्यस्य तात्पर्यं निरुपाधिकेति ॥ **परमाप्तत्वं दर्शयन्निति** ॥ दर्शितमित्यनेन वाक्यार्थतात्पर्यज्ञानस्य विप्रलंभकत्वे ज्ञानोपदेशाय प्रेरणायोगो, निहितमित्यनेन विप्रलंभकत्वस्य, कृतमिदं भाष्यमित्यनेन विवक्षाकरण-

(वाक्यार्थमञ्जरी)

पाटवयोरुक्तत्वादिति भावः । व्यवहितत्वादन्वयप्रदर्शनपूर्वकं व्याचष्टे ॥ **यस्येत्यादिना** ॥ दिव्यानीत्यस्यार्थः क्रीडादिगुणयुक्तानीति । हराविति सप्तमीत्याशयेनोक्तं हरिविषयतयेति । तच्छब्दार्थो मूलरूपमिति । बडित्यस्यार्थो बलात्मकमिति । इत्थंभूतमेव बलाद्यात्मकमेव रूपत्रयावतारप्रेरितमित्यनेनावतारणामपि बलाद्यात्मकत्वमभिप्रेति । रामवच इत्यत्र कर्तरि षष्ठीमभिप्रेत्याह ॥ **रामस्य वचांसीति** ॥ कर्मणि षष्ठीमभिप्रेत्याह ॥ **रामविषयकवचांसीति** ॥ पक्षद्वये वचांसि नयतीति वचोनयमिति व्युत्पत्तिर्दर्शिता । रामवचांसि यो नयति । अनेन रामवचांसि नयो यस्य तदिति बहुव्रीहिरित्युक्तम् । साधको रामावाक्यानामित्यर्थत्रयानुगुणप्रमाणसद्भावात् रामस्यामृतस्वरूपस्य वचस्तेनानयंत हीत्याद्यद्वितीययोर्विशेषप्रमाणप्रमितत्वाच्चेति भावः । पृक्षशब्दार्थमाह ॥ **कुरुपृतनेति** ॥ कुरुसैन्येत्यर्थः । पृतनाक्षयकारित्वात्पृक्ष इत्युच्यते बुधैरिति प्रमाणादिति भावः । 'मध्वित्यानन्द उद्दिष्टो वेति ज्ञानमुदाहृतम्' इति प्रमाणानुसारेण मध्वशब्दार्थमाह ॥ **आनन्दरूपस्येति** ॥ मधुव इति वक्तव्ये उकारलोपान्मध्व इति साधु । यथा ॐ सुवरिति वक्तव्ये स्वरिति ऋग्वेदिनां पाठः । अथायं समापितव्याख्यानो जयतीर्थमुनिर्मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राण्यायुष्मत्पुरुषकाणि भवन्तीत्युक्त्या अन्तेऽपि मङ्गलमाचरन् स्वीकृतमुख्यफलत्वेन भगवत्प्रीतिमाशास्ते ॥ **उत्पत्तीति** ॥ यस्य गुणगणाकरस्य करुणाख्यपीयूषेण वारां निधेः समुद्रस्याज्ञया रमाब्रह्मादिसर्वजगत उत्पत्तिस्थितिसंहृतिमुखाः अष्टभावा धर्माः कचिव्द्यस्ताः विस्तृताः कचित्समस्ताः । निरस्ताशेषदोषनिकरो येनासौ नारायणः अनेन भाष्यव्याख्यानेन प्रीतः सन्तुष्टोऽस्त्वित्यर्थः । नन्वानन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोऽत्रेति तत्वनिर्णयांते स्वेनोक्तत्वात्कथमिदं भाष्यव्याख्यानमित्याशङ्कां परिहरन् व्याख्यानप्रसक्तिं स्वाहंकारं प्रशमयति ॥ **अगाधबोधैरिति** ॥ देवादिभिर्विवृतोऽत्यन्तभावो यस्य तस्य । भाष्यानुवादेनानुसृत्यवादेन व्याख्यानेनेति यावत् । अत्र दृष्टान्तमाह ॥ **न हीति** ॥ मन्दधनैः दरिद्रैः स्वकृतग्रन्थस्य तत्वप्रकाशिकानामकरणे प्राप्तकौमुदीसाम्यमुपपादयन्नवान्तरप्रयोजनं चाह ॥ **मध्वेति** ॥ विष्ण्वाद्यखिलतत्वप्रकाशकरी मध्वाख्यदुग्धाब्धिव्याख्येंदूदिता ग्रन्थाख्यकौमुदी सज्जनाख्यकुमुदानामानन्ददायिनी भूयादित्यशेषमतिमङ्गलम् ॥

सम्पूर्णगुणनिर्दोषरूपिणे मुक्तिदायिने ।
वेदगम्याय रामाय नमः श्रीपतये सदा ॥ १ ॥

(वाक्यार्थमञ्जरी)

तत्वप्रकाशिकासंस्थवाक्यार्थमणिमञ्जरी ।
प्रियतां हृदये धृत्वा सदये मध्ववल्लभः ॥ २ ॥

तत्वप्रकाशिकाव्याख्यालब्धपुण्यमनुत्तमम् ।
प्राप्यास्मद्गुरवः प्रीताः क्रियासुः करुणां मयि ॥ ३ ॥

इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां
चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥

॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ इति चतुर्थाध्यायः समाप्तः ॥

## परिशिष्टम् I

श्री धीरेन्द्रयतिविरचितः विषयवाक्यसङ्ग्रहः

### ॥ अथ चतुर्थोऽध्यायः ॥

#### प्रथमः पादः

श्रोतव्य इत्यादिवाक्यमावृत्तेरसकृन्नये ।
आत्मानमेवेति वच आत्मेति त्विति सन्नये ॥ १ ॥

न प्रतीके न हीत्यत्र नाम ब्रह्मेति च स्मृतम् ।
ब्रह्मदृष्टिनये ब्रह्म पूर्णमित्यादिकं वचः ॥ २ ॥

चक्षोः सूर्योऽजायतेति ह्यादित्यादिमते नये ।
उपविश्यासनेत्याद्यमासीनः सम्भवादिति ॥ ३ ॥

सर्वदैनमुपासीतेत्यादि प्राणनयेऽपि हि ।
विद्वानतिमृत्युमेतीत्याद्यं कर्मक्षये नये ॥ ४ ॥

#### द्वितीयः पादः

वाङ्मनसि दर्शनादित्यत्र वाङ्मनसीति वाक् ।
तन्मनः प्राण इत्यत्र मनः प्राणेति वाङ्गतम् ॥ १ ॥

प्राणः परमन्वित्येतत्सोऽध्यक्षे तदितीर्यते ।
भूतेष्वित्यत्र वागग्नौ सर्वे देवा इतीरितम् ॥ २ ॥

सर्वे देवा इति वचो नैकस्मिन्निति सन्नये ।
महतोऽव्ययमित्याद्यं समनेत्यादिके नये ॥ ३ ॥

अविभागनये सत्यकाम इत्यादिकं मतम् ।
शतं चैका चेति वाक्यं तदोकोग्रादिके नये ॥ ४ ॥

योगिनः प्रतिस्मर्येतेत्याद्येऽसौ विषयस्त्विति ॥

### अथ तृतीयः पादः

अर्चिरादिनये चैव तेऽर्चिषं त्विति वाग्भवेत् ।
वायुशब्दादिति नये स वायुमिति निश्चयः ॥ १ ॥

तडितोऽधीत्यधिकृतेर्वत्सरात्तडितं त्विति ।
द्वितीयां गतिं वायुमित्याद्यातिवाहिकलैङ्गिके ॥ २ ॥

कार्यं बादरिरित्यत्र स एनानिति चोदितम् ॥

### अथ चतुर्थः पादः

सम्पद्येत्यत्र चात्मानमभिसम्पद्यतेत्यदः ।
स तत्र पर्येतीत्येतन्मुक्तमित्यादिके नये ॥ १ ॥

परञ्ज्योतिरुपेत्यैतदात्मप्रकरणादिके नये ।
अविभागेनेति नये सर्वान् कामानितीरितम् ॥ २ ॥

ब्राह्मेण जैमिनिनये तानेवैतद्वदंत्विति ।
सङ्कल्पादेव चेत्यत्राथसदैवमितीरितम् ॥ ३ ॥

अत एव चानन्यनये विमुक्तश्चेति मुक्तिवाक् ।
अभावं बादरिरिति नये कामानितीरितम् ॥ ४ ॥

सर्वान् कामानवाप्नोति जगद्व्यापारवर्जने ।
स्थितिमाहेत्यत्र चैतत्साम गायन्नितीरितम् ॥ ५ ॥

अनावृत्तिनये पूर्वं विमुक्तिप्रतिपादकम् ।
टीकादौ विषयोक्तान्यन्विष्टानि यथामति ॥ ६ ॥

॥ इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे चतुर्थाध्यायस्य तुरीयः पादः ॥

# परिशिष्टम् II

## श्री विजयीन्द्रविरचितः

## ब्रह्मसूत्रन्यायसङ्ग्रहः

### चतुर्थोऽध्यायः

कर्मक्षयो देवलयान्योत्क्रान्ती गम्ययुक्सृतिः ।
भोगश्चोक्ता मोक्षभेदास्तुर्येऽघ्रिषु जनिक्रमात् ॥ १ ॥

मोक्षांतरङ्गता ज्ञप्त्या आदावत्र निगद्यते ।
आवश्यकं नित्यमपि यत्कार्यं ज्ञानसाधनम् ॥ २ ॥

प्रायिकत्वात्प्रधानत्वान्मोक्षाध्यायादिताऽनयोः ।
श्रुत्याद्यावर्त्यमभ्यासात्स्वामित्वोपासनं सदा ॥ ३ ॥

न ब्रह्मतान्यदेवेषु ध्येयोत्कर्षाच्च सात्मनि ।
स्वोत्पादकाङ्गता देवैरासीनेनैव सम्भवात् ॥ ४ ॥

आमुक्त्यावश्यकं ध्यानमारब्धान्यक्षयाद्यतः ।
चतुर्थाद्ये नया अष्टौ तद्वितीये तु ते दश ॥ ५ ॥

दृष्ट्यादेर्वाङ्मनोलीना मनः प्राणे तदुत्तरात् ।
प्राणः परस्मिन् श्रुत्यादेर्भूतेष्वन्ये श्रुतेस्सुराः ॥ ६ ॥

नाग्नावेव श्रुतेः सर्वे न मुक्तत्वाच्छ्रियो लयः ।
प्राणद्वारेशलीनास्ते सत्येच्छाश्चेशयन्त्रिताः ॥ ७ ॥

ज्ञान्युत्क्रान्तिर्नाड्यवत्स्याद्भावि विद्यागतिस्मृती ।
मार्गोऽर्चिरादिरेवैकोऽर्चिषा वायुमहस्ततः ॥ ८ ॥

तटितो वरुणः पश्चात्प्राक्प्राणो ह्यातिवाहिकः ।
मुख्यवायुर्नयेद्ब्रह्माऽप्रतीकालंबनात्पुरा ॥ ९ ॥

नयास्तुर्यतृतीये पडेकादश तदुत्तरे ।
मुक्तो भुंक्तेऽविहायेशं जक्षन्नान्यो ह्यसम्भवात् ॥ १० ॥

ज्योतिः प्रकरणाच्चेशः सुखभुक्तैकभुक्सयुक् ।
सयुजो ब्रह्मचिद्देहसङ्कल्पादेव भोगिनः ॥ ११ ॥

नोत्तमान्याधिपतयो मुक्ताः स्वेच्छात्तविग्रहाः ।
न जगद्व्यापृतिजुषो न वृद्धिह्रासभागिनः ॥ १२ ॥

नावर्तंते विमुक्तास्ते सत्यसङ्कल्पतादितः ।
चतुरध्यायगा न्याया धीगाः मेशाबुधामगाः ॥ १३ ॥

अर्काद्रीन्द्रारिरुद्रार्कधीयोतिजगती नखाः ।
नखरम्भेशाष्टदशारीशास्सर्वाङ्घ्रिगा नयाः ॥ १४ ॥

योगीरागगवीधीराजालमेघागमागिरः ।
धीरारवाजितपणाधियो रुद्रास्तयोगिरः ॥ १५ ॥

शंबयोधीमयोध्यायसूत्राणां नाधियोनदाः ।
श्रीरुद्रा ब्रह्ममीमांसान्यायाः सूत्राणि भूषणम् ॥ १६ ॥

श्रीमदानन्दतीर्थेड्यश्रीशप्रीत्या अकार्ययम् ।
विजयीन्द्रेण यतिना सूत्राणां न्यायसङ्ग्रहः ॥ १७ ॥

॥ इति श्रीमद्विजयीन्द्रयतिविरचिते ब्रह्मसूत्रन्यायसङ्ग्रहे चतुर्थोऽध्यायः ॥ ४ ॥

## श्रीमद्ब्रह्मसूत्राणि

| अध्यायाः, | सूत्राणि, | प्रथमपादे, | द्वितीय | तृतीय | चतुर्थ |
|---|---|---|---|---|---|
| प्रथमाध्याये, | १३५, | ३१, | ३२, | ४३, | २९ |
| द्वितीयाध्याये, | १५९, | ३८, | ४५, | ५३, | २३ |
| तृतीयाध्याये, | १९०, | २९, | ४२, | ६८, | ५१ |
| चतुर्थाध्याये, | ८०, | १९, | २२, | १६, | २३, |

सर्वसूत्राणि, ५६४

## श्रीमद्ब्रह्मसूत्राधिकरणानि

| अध्यायाः, | नयाः, | प्रथमपादे, | द्वितीय | तृतीय | चतुर्थ |
|---|---|---|---|---|---|
| प्रथमाध्याये, | ३९, | १२, | ७, | १४, | ६ |
| द्वितीयाध्याये, | ५५, | ११, | १२, | १९, | १३ |
| तृतीयाध्याये, | ९३, | २०, | २०, | ४२, | ११ |
| चतुर्थाध्याये, | ३५, | ८, | १०, | ६, | ११ |

सर्वे न्यायाः २२२.

## प्रमाणवचनानि

### चतुर्थाध्यायस्य प्रथमः पादः

#### आवृत्त्यधिकरणम्

| | | | |
|---|---|---|---|
| १. | आत्मा वा अरे | (बृ.उ. ४-४-५) | १ |
| २. | स य एषोऽणिम | (छां.उ. ६-८-७) | १ |
| ३. | स तपोऽतप्यत | (तै.उ. ३-१-२) | १२ |
| ४. | नित्यशः श्रवणम् | (बृहत्तन्त्र) | १२ |

#### आत्मोपगमाधिकरणम्

| | | | |
|---|---|---|---|
| ५. | आत्मेत्युपासनं कार्यम् | (भविष्यत्पर्व) | १६ |
| ६. | आत्मा विष्णुरिति | (ब्राह्म) | १६ |

#### नप्रतीकाधिकरणम्

| | | | |
|---|---|---|---|
| ७. | नाम ब्रह्म | (छां.उ. ७-१-५) | २१ |
| ८. | नामादि प्राणपर्यन्तम् | (ब्रह्मतर्क) | २१ |

## ब्रह्मदृष्ट्यधिकरणम्



## आदित्यादिमत्याधिकरणम्



## आसनाधिकरणम्



## प्रायणाधिकरणम्



## तदधिगमाधिकरणम्

## अथ द्वितीयः पादः

### वाङ्मनसाधिकरणम्



### मनोऽधिकरणम्



### अध्यक्षाधिकरणम्



### भूताधिकरणम्



### अनेकलयाधिकरणम्

## समनाधिकरणम्



## पराधिकरणम्



## अविभागाधिकरणम्



## हृदयाग्रज्वलनाधिकरणम्

## प्रतिस्मरणाधिकरणम्



## अथ चतुर्थाध्यायस्य तृतीयः पादः

## अर्चिराद्यधिकरणम्



## वायुगत्यधिकरणम्



## तटिदधिकरणम्



## आविवाहिकाधिकरणम्

## वैद्युताधिकरणम्



## कार्याधिकरणम्



# अथ चतुर्थाध्यायस्य चतुर्थः पादः

## सम्पद्याधिकरणम्



## मुक्ताधिकरणम्

## आत्माधिकरणम्



## अविभागाधिकरणम्



## चितिमात्राधिकरणम्



## सङ्कल्पाधिकरणम्



## अनन्याधिपतित्वाधिकरणम्



## उभयविधभोगाधिकरणम्

## सर्वकामाधिकरणम्



## स्थित्यधिकरणम्



## अनावृत्त्यधिकरणम्

## Brahmasūtra Bhāṣya of Śrī Ānandatīrtha

Brahmasūtras constitute the central text of Vedānta Philosophy. The philosophical thoughts of Vedas, Upaniṣads, Bhagavadgita and the allied sacred literature are systematised in these Sūtras.

In spite of such a systematic presentation of Vedānta thought a number of schools have developed within Vedānta Philosophy. This is partly due to the influence of the other systems of philosophy such as Sānkhya, Vaiśeṣika, Buddhism etc. and also due to different theologies such as Vaiṣṇavism and Śaivism prevailent in India.

All these schools claim that they faithfully represent the Vedānta thought enshrined in Vedānta Sūtras. Consiquently, these schools not only present their doctrines by interpreting these sūtras but review the interpretations of the other schools and doctrines. This has given rise to a rich interpretational and polemical literature of Vedānta thought. The commentators have developed new dimensions of epistemology, logic, hermeneutics and the canons of interpretation.

In the Dvaita school of Vedānta propounded by Śrī Ānandatīrtha alias Śrī Madhvāchārya such a rich literature of commentaries on Brahmasūtras is developed. Śrī Padmanābhatīrtha, Śrī Trivikrama Paṇḍitāchārya, Śrī Jayatīrtha, Śrī Vyāsatīrtha, Śrī Raghūttamatīrtha, Śrī Rāghavendratīrtha Śrī Satyanāthatīrtha and a host of other distinguished sholars have commented upon Śrī Madhvāchārya's Brahmasūtrabhāṣya. Śrī Madhvāchārya has developed Mono-theism and realism as the philosophy of Brahmasūtras. He rejects the concepts of adhyāsa, Vivartavāda, Mithyātva and Nirguṇa Brahman. These have no room in Brahmasūtras. In his Bhāṣya he profusely quotes the source passages on which Brahmasūtras are built. There are sixteen commentaries on his bhāṣya and Śrī Jayatīrtha's commentory on it. In this volume eleven 11 commentaries are included to enable the scholars to have an idea of the historical development of the interpretation and the review of the other schools. It is hoped that this volume will inspire the young scholars to probe deeper into Vedānta thought.